THE

# SUKRANITISARA,

OR,

THE ELEMENTS OF POLITY

BY

SUKRACHARYA

EDITED WITH A COMMENTARY

BY

PANDIT JIBANANDA VIDYASAGARA B. A.
Superintendent Free Sanskrit College.




CALCUTTA

PRINTED AT THE SARASWATI PRESS.

1882.

To be had from Pandit Jibananda Vidyasagara B. A.
Superintendent Free Sanskrit College, Calcutta.

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ आशुबोध व्याकरणम् २।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः १०
४ सिद्धान्तकौमुदी सरला सहिता ११
५ सिद्धान्तविन्दुसार (वेदान्त) ॥
६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ॥।
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥/
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥
१३ रत्नावली नाटिका सटीक ॥।
१४ मालविकाग्निमित्र सटीक १॥
१५ धनञ्जय विजय सटीक ।
१६ महावीरचरितनाटक १॥
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ॥।
१९ लीलावती ॥।
२० बीजगणित १
२१ शिशुपालबध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥
२३ कुमारसम्भव पूर्व्वखण्ड सटीक ॥।
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ॥।
२६ वाचस्पत्यम् (बृहदभिधान) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति /
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति
३० सर्व्वदर्शनसंग्रहः
३१ भामिनीविलास सटीक
३२ हितोपदेश सटीक
३३ भाषापरिच्छेदमुक्तावलीसहित
३४ बहुविवाहवाद
३५ दशकुमारचरित सटीक
३६ परिभाषेन्दुशेखर
३७ कविकल्पद्रुम धातुपाठः
३८ चक्रदत्त (वैद्यक)
३९ उणादिसूत्र सटीक
४० मेदिनीकोष
४१ पञ्चतन्त्रम्
४२ विद्वन्मोदतरङ्गिणी (चम्पूका
४३ माधवचम्पू
४४ तर्कसंग्रह
४५ प्रसन्नराघव नाटक
४६ विवेकचूड़ामणि
४७ काव्यसंग्रह (सम्पूर्ण)
४८ लिङ्गानुशासन सटीक
४९ ऋतुसंहार सटीक
५० विक्रमोर्वशी (सटीक)
५१ वसन्ततिलक भाण
५२ गायत्री व्याख्या
५३ सांख्यदर्शन (भाष्यसहित)
५४ भोजप्रबन्ध
५५ नलोदय सटीक
५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य)
५७ छान्दोग्य सटीक सभाष्य

# शुक्रनीतिसारः।

श्रीमत्शुक्राचार्य्यविरचितः।

श्रीजीवानन्दविद्यासागरभट्टाचार्य्य-
विरचितटीकासमेतः।



कलिकाता राजधान्याम्।

सरस्वती यन्त्रे

मुद्रितः।

इं १८८२।

# THIS WORK

IS DEDICATED TO

HIS HIGHNESS SREE MAHARAJAH MEERZA
ANANDA GAZAPATTI RAJ
MUNEEA SULTAN BAHADOOR

OF

VIZIANAGARAM

IN

ACKNOWLEDGMENT OF THE
DEEP INTEREST SHEWN BY HIS HIGHNESS
FOR THE ADVANCEMENT OF SANSKRIT LEARNING

AND

OF THE LIBERAL PATRONAGE AFFORDED TO THE
CAUSE OF SANSKRIT LANGUAGE BY THE
ANCESTERS OF HIS HIGHNESS,

WITH DEEP REGARD AND ESTIMATION

BY

*JIBANANDA VIDYASAGARA B. A.*
*the Commentator.*

## सूचीपत्रम् ।

चतुर्थाध्यायस्य चतुर्थप्रकरणम् ।



पञ्चमप्रकरणम् ।



षष्ठप्रकरणम्

## सप्तमप्रकरणम् ।

# शुक्रनीतौ

## प्रथमोऽध्यायः ।

प्रणम्य जगदाधारं सर्गस्थित्यन्तकारणम् ।
संपूज्य भार्गवः पृष्टो वन्दितः पूजितस्तुतः ॥ १ ॥
पूर्वदेवैर्यथान्यायं नीतिसारमुवाच तान् ।
शतलक्षश्लोकमितं नीतिशास्त्रमथोक्तवान् ॥ २ ॥
स्वयम्भूर्भगवान् लोकहितार्थं संग्रहेण वै ।
तत्सारन्तु वशिष्ठाद्यैरस्माभिर्वृद्धिहेतवे ॥ ३ ॥

---

हेरम्बचरणद्वन्द्वं प्रणम्य विघ्नशान्तये ।
विवृणोमि शुक्रनीतिं यथामति सतां मुदे ॥

ग्रन्थारम्भे विघ्नविघाताय शास्त्रप्रचारपरिसमाप्तिकामो ग्रन्थकृत् जगदीश्वरप्रणामरूपमङ्गलमाचरन् शिष्यानाह प्रणम्येत्यादि । सर्गस्थित्यन्तकारणं सृष्टिस्थितिसंहारकर्त्तारं जगतामाधारं जगदीशं प्रणम्य संपूज्य च पूर्वदेवैः असुरैः यथान्यायं वन्दितः प्रणतः पूजितः स्तुतः पृष्टः वन्दनपूजनस्तवनानन्तरं जिज्ञासितः भार्गवः तान् असुरान् प्रथमं नीतिसारं संक्षिप्तनीतिम् उवाच । पूर्वं भगवान् स्वयम्भूः विधाता लोकहितार्थं लोकानां हिताय शतलक्षश्लोकमितं नीतिशास्त्रम् उक्तवान् अथ अनन्तरं वशिष्ठाद्यैः अस्माभिः वृद्धिहेतवे अभ्युदयाय अल्पायुर्भूभृदाद्यर्थम् अदीर्घजीविराजादिप्रयोजनार्थं संग्रहेण वै संक्षेपार्थमेव तत्सारं तस्य नीतिशास्त्रस्य ब्रह्मप्रोक्तस्य सारं तर्कैः युक्तिभिः विस्तृतं युक्तियुक्तं यथा तथा संक्षिप्तं सङ्कलितम् । अन्यानि शास्त्राणि क्रियैक-

अल्पायुर्भूभृदाद्यर्थं संक्षिप्तं तर्कविस्तृतम् ।
क्रियैकदेशबोधीनि शास्त्राण्यन्यानि सन्ति हि ॥ ४ ॥
सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम् ।
धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः ॥ ५ ॥
अतः सदा नीतिशास्त्रमभ्यसेद् यत्नतो नृपः ।
यद्विज्ञानात् नृपाद्याश्च शत्रुजिल्लोकरञ्जकाः ॥ ६ ॥
सुनीतिकुशला नित्यं प्रभवन्ति च भूमिपाः ।
शब्दार्थानां न किं ज्ञानं विना व्याकरणं भवेत् ? ॥ ७ ॥

---

देशबोधीनि एकदेशक्रियाप्रतिपादकानि विशेषार्थसाधकानीत्यर्थः न तु साधारणानीत्यर्थः सन्ति हि हिशब्दोऽवधारणे । किन्तु यतः यस्मात् कारणात् नीतिशास्त्रं सर्वेषां जनानाम् उपजीवकं जीवनोपयोगि, लोकानां स्थितिकृत् मर्यादाविधायकं धर्मार्थकाममूलं त्रिवर्गहेतुभूतं तथा मोक्षप्रदं निर्वाणदायकञ्च अतः नृपः यत्नतः सदा नीतिशास्त्रम् अभ्यसेत् नीतिशास्त्रमनुसृत्य व्यवहरेदिति भावः । यस्य नीतिशास्त्रस्य विज्ञानात् विशेषावबोधात् नृपाद्याः राजप्रकृतयः राजा प्रजाश्च शत्रुजितः शत्रुजयिनः तथा लोकरञ्जकाः लोकानामानन्दविधायिनो भवन्तीति शेषः । एतेन ग्रन्थस्य प्रयोजनं चतुर्वर्गप्राप्तिरूपम् अभिधेयं सर्वविषयसमाचारज्ञानं सम्बन्धश्च साक्षात् परम्परया वा ज्ञाप्यज्ञापकत्वादिरूपो यथायथमूहनीयः उक्तञ्च ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

सुनीतिकुशला इति । भूमिपाः राजानश्च नित्यं सुनीतौ कुशलाः प्रभवन्ति अस्य नीतिशास्त्रस्य ज्ञानादिति भावः । ननु व्याकरणमनधीत्य कथं शब्दज्ञानं लभते च कथं नीतिज्ञानमश्नुवीत इत्याशङ्क्याह शब्दार्थानामिति । व्याकरणं विना शब्दार्थानां ज्ञानं किं न भवेत् अपि तु भवेदेव व्याकरणस्य शब्दसाधन एव प्रयोजकत्वादिति भावः ॥ ७ ॥

प्राकृतानां पदार्थानां न्यायतर्कैर्विना न किम् ? ।
विधिक्रियाव्यवस्थानां च किं मीमांसया विना ? ॥ ८ ॥
देहावधिनश्वरत्वं वेदान्तैर्न विना हि किम् ? ।
स्वस्वाभिमतबोधीनि शास्त्राण्येतानि सन्ति हि ॥ ९ ॥
तत्तन्मतानुगैः सर्वैर्विधृतानि जनैः सदा ।
बुद्धिकौशलमेतद्धि तैः किं स्याद् व्यवहारिणाम् ? ॥१०॥
सर्वलोकव्यवहारस्थितिर्नीत्या विना न हि ।
यथाऽशनैर्विना देहस्थितिर्न स्याद्धि देहिनाम् ॥ ११ ॥

---

प्राकृतानामिति। न्यायतर्कैः नैयायिकयुक्तिविज्ञानैः विना प्राकृतानां प्रकृतिसिद्धानां स्वाभाविकानामित्यर्थः पदार्थानां ज्ञानं किं न भवेत् ? अपि तु भवेदेव, तथा मीमांसया मीमांसकनिबन्धज्ञानेन विना विधिक्रियाव्यवस्थानां कार्य्यानुष्ठाननियमानां ज्ञानञ्च किं न भवेत् ? अपि तु भवेदेव, नीतिज्ञानं न न्यायमीमांसाशास्त्रानुशीलनाधीनमिति भावः ॥८॥

देहेति। वेदान्तैः विना वेदान्तज्ञानमृते देहावधि नश्वरत्वं देहपर्य्यन्तञ्च नश्वरत्वं न तु देहिन इत्यर्थः किं न विज्ञायते ? इति शेषः, वेदान्तमते सर्वं वस्तु नश्वरं केवलमात्मा नित्य इति ज्ञानसापेक्षं न नीतिशास्त्रमिति भावः। एतानि पूर्वोक्तानि व्याकरणादीनि शास्त्राणि स्वस्वाभिमतबोधीनि निजनिजमतप्रतिपादकानि सन्ति, तानि च तत्तन्मतानुगैः तत्तन्मतानुसारिभिः सर्वैर्जनैः सदा विधृतानि स्वीकृतानि, तैः शास्त्रैः व्यवहारिणां लौकिकाचारपरायणानाम् एतत् बुद्धिकौशलं प्रज्ञाचातुर्य्यं किं स्यात् ? नैवेत्यर्थः तत्तच्छास्त्रानुशीलनेन तत्तद्विषयविज्ञानमेव भवेत् न तु लोकाचारज्ञानम् एतत् तु केवलं नीतिशास्त्रादेवेति फलितार्थः ॥ ९ ॥ १० ॥

सर्वेति। देहिनां प्राणिनाम् अशनैः भोजनैः विना यथा देहस्थितिः न स्यात् तथा नीत्या विना सर्वेषां लोकानां व्यवहारस्थितिः आचाररक्षा न हि भवेदित्यर्थः ॥ ११ ॥

वृष्टिशीतोष्णनक्षत्रगतिरूपस्वभावतः ।
इष्टानिष्टाधिकन्यूनाचारैः कालस्तु भिद्यते ॥ २१ ॥
आचारप्रेरको राजा ह्येतत् कालस्य कारणम् ।
यदि कालः प्रमाणं हि कस्माद्धर्मोऽस्ति कर्तृषु ॥ २२ ॥
राजदण्डभयाल्लोकः स्वस्वधर्मपरो भवेत् ।
यो हि स्वधर्मनिरतः स तेजस्वी भवेदिह ॥ २३ ॥

---

लोकप्रियः भवतीत्यर्थः अतः नृपः स्वप्राणनात् तपोबलात् तपसा च ऐहिकेनेति शेषः इमां महीं धत्ते रक्षति ऐहिकं तपश्चात्र नीतिपथ्या-लोचनमिति भावः ॥ २० ॥

वृष्टीति । वृष्टिः वर्षर्तुः शीतः शिशिरर्तुः उष्णः ग्रीष्मर्तुः तथा नक्षत्राणि ज्योतींषि तेषां गतेर्नियमात् रूपस्वभावतः स्वरूपप्रकृतेः हेतोः इष्टा अभिमताः अनिष्टाः अनभिमताः अधिका अत्यभिमताः अत्यनभिमताश्च तथा न्यूना अल्पाः सर्वतोमुखीना ये आचाराः व्यव-हाराः तैः करणभूतैः कालस्तु भिद्यते तुशब्दोऽवधारणे । राज्ञ आचारेणैव कालभेदो भवतीति भावः । उक्तञ्च मनुना, "कलिः प्रसुप्तो भवति स जाग्रद् द्वापरं युगम् । कर्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥" इति ॥ २१ ॥

उक्तमर्थं विशदयति आचारेति । राजा आचारप्रेरकः सदा-चारनियामकः हिशब्दोऽवधारणे एतत् हि राजाचार इत्यर्थः विधेय-प्राधान्यात् नपुंसकनिर्देशः, कालस्य सत्यादियुगरूपस्य कारणं हेतुः, अतः यदि कालः प्रमाणं काल एव आचारप्रवर्त्तक इत्यर्थः तदा कर्तृषु कार्य्यकारकेषु कस्मात् धर्मः शुभाशुभरूपः अस्ति वर्त्तते कर्तुः स्वातन्त्र्याभावाच्च शुभाशुभफलभोक्तृत्वमनुचितमिति भावः ॥ २२ ॥

राजेति । लोकः राजदण्डभयात् स्वस्वधर्मपरः निजनिजधर्म-प्रतिपालको भवेत् यः स्वधर्मनिरतः निजधर्मपालनरतः स इह जगति तेजस्वी भवेत् ॥ २२ ॥

विना स्वधर्म्मान्न सुखं स्वधर्म्मो हि परं तपः।
तपः स्वधर्म्मरूपं यत् वर्द्धितं येन वै सदा॥ २४॥
देवास्तु किङ्करास्तस्य किं पुनर्मनुजा भुवि ?।
सुदण्डैर्धर्म्मनिरताः प्रजाः कुर्य्यान्महाभयैः॥ २५॥
नृपः स्वधर्म्मनिरतो भूत्वा तेजःक्षयोऽन्यथा।
अभिषिक्तोऽनभिषिक्तो नृपत्वन्तु यदाप्नुयात्॥ २६॥
बुद्ध्या बलेन शौर्य्येण ततो नीत्यानुपालयन्।
प्रजाः सर्व्वाः प्रतिदिनमच्छिद्रो दण्डधृक् सदा॥ २७॥
नित्यबुद्धिमतोऽप्यर्थः स्वल्पकोऽपि विवर्द्धते।
तिर्य्यञ्चोऽपि वशं यान्ति शौर्य्यनीतिबलैर्धनैः॥ २८॥

---

विनेत्यादि। स्वधर्मात् विना सुखं न भवति, हि यतः स्वधर्मः परं महत् तपः, येन सदा स्वधर्मरूपं निजधर्मपालनरूपं तपः वर्द्धितं सम्यक् कृतं तस्य तु देवाः किङ्कराः, भुवि पृथिव्यां मनुजाः मानवाः किं पुनः ?। अतः राजा अभिषिक्तः अनभिषिक्तो वा बुद्ध्या बलेन शौर्य्येण पराक्रमेण वा यदा नृपत्वम् आप्नुयात् लभेत, तदा स्वधर्मनिरतः अच्छिद्रः निर्दोषः तथा दण्डधृक् दण्डधरः सन् सर्वाः प्रजाः नीत्या अनुपालयन् महाभयैः अतिभयङ्करैः सुदण्डैः शोभनदण्डविधानैः प्रजाः सदा धर्मनिरताः स्वस्वधर्मपालनतत्पराः कुर्यात्। अन्यथा तथा स्वधर्मपालने इत्यर्थः तेजः क्षयः प्रतापहानिः राज्ञ इति शेषः यस्य प्रजा न सुशासनवर्त्तिन्यः तस्य तेजः क्वेति भावः॥ २४॥ २५॥ २६॥ २७॥

नित्येति। नित्यबुद्धिमतः सततं बुद्ध्या कार्य्यं पश्यत इत्यर्थः स्वल्पकः सामान्योऽपि अर्थः विवर्द्धते वृद्धिं गच्छति। शौर्य्यनीत्योः पराक्रमबुद्ध्योः बलैः तिर्य्यञ्चः पशुपक्ष्यादयः अपि वशं यान्ति किं पुनः मनुष्या इति भावः॥ २८॥

सात्त्विकं तामसञ्चैव राजसं त्रिविधं तपः ।
यादृक् तपति कोऽप्यत्र तादृग् भवति सो नृपः ॥ २९ ॥
यो हि स्वधर्मनिरतः प्रजानां परिपालकः ।
यष्टा च सर्वयज्ञानां जेता शत्रुगणस्य च ॥ ३० ॥
दानशीलः क्षमी शूरो निःस्पृहो विषयेष्वपि ।
विरक्तः सात्त्विकः सो हि नृपोऽन्ते मोक्षमाप्नियात् ॥ ३१ ॥
विपरीतस्तामसः स्यात् सोऽन्ते नरकभाजनः ।
निर्घृणश्च मदोन्मत्तो हिंसकः सत्यवर्जितः ॥ ३२ ॥
राजसो दाम्भिको लोभी विषयी वञ्चकः शठः ।
मनसान्यच्च वचसा कर्मणा कलहप्रियः ॥ ३३ ॥

---

सात्त्विकमिति । तपः त्रिविधं सात्त्विकं सत्त्वगुणकृतं राजसं रजोगुणकृतं तथा तामसं तमोगुणकृतं, यः अत्र इह अस्मिन् लोके यादृक् तपति तपश्चरति च तादृक् तादृशतपोबलसम्पन्नः नृपः राजा भवति राजत्वस्य तपःसाध्यत्वादिति भावः ॥ २९ ॥

य इति । दानशील इति । यो नृपः हिशब्दोऽवधारणे, स्वधर्मनिरतः राजधर्मपालनपरः प्रजानां परिपालकः सर्वतो रक्षिता सर्वयज्ञानाम् अश्वमेधादीनां यष्टा याज्ञिकः शत्रुगणस्य च शत्रुसमूहस्य नेता शास्ता, दानशीलः बहुदानशीलः क्षमी क्षमावान् शूरः वीर्यसम्पन्नः विषयेष्वपि ऐश्वर्येषु अपि निःस्पृहः विरक्तश्च सः सात्त्विकः सत्त्वगुणावलम्बी, सः अन्ते परिणामे मोक्षं निर्वाणमाप्नियात् प्राप्नुयात् ॥ ३० ॥ ३१ ॥

विपरीत इति । यः नृपः विपरीतः पूर्वोक्तधर्मबहिर्भूतः निर्घृणः निर्दयः मदेन मद्यपानजनितेन विकारेण गर्वेण वा उन्मत्तः, हिंसकः तथा सत्यवर्जितः अलीकरतः सः तामसः तमोगुणावलम्बी सः अन्ते नरकभाजनः निरयगामी भवतीति शेषः ॥ ३२ ॥

राजस इति । नीचप्रिय इति । यश्च दाम्भिकः दम्भमयः लोभी

न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न ।
न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः ॥ ३८ ॥
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं नु ब्राह्मणाः ? ।
न वर्णतो न जनकाद् ब्राह्मतेजः प्रपद्यते ॥ ३९ ॥
ज्ञानकर्मोपासनाभिर्देवताराधने रतः ।
शान्तो दान्तो दयालुश्च ब्राह्मणश्च गुणैः कृतः ॥ ४० ॥
लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी ।
दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते ॥ ४१ ॥

---

यत् तदपि कर्म एव, कोऽपि जनः किं क्षणमपि अक्रियः कर्मशून्यः अस्ति नैवेत्यर्थः, सर्वमेव कर्मायत्तमिति भावः ॥ ३७ ॥

नेति । अत्र संसारे जात्या कश्चित् ब्राह्मणः क्षत्रियश्च न विद्यते इति शेषः तथा वैश्यः न, शूद्रश्च न, म्लेच्छश्च न अस्तीति शेषः, तर्हि किमित्याह भेदिता इति गुणकर्मभिः गुणैः तत्तज्जातिनिष्ठैः गुणैः धर्मैः कर्मभिश्च भेदिता एते इति शेषः गुणकर्मप्रभेदेन केऽपि ब्राह्मणाः केऽपि क्षत्रियाः केऽपि वैश्याः अपरे शूद्राः अन्ये म्लेच्छाश्चेति संज्ञया निर्दिश्यन्ते इत्यर्थः ॥ ३८ ॥

ब्रह्मण इति । सर्वे ते पूर्वोक्ताः ब्राह्मणाः ब्रह्मणः विधातुः समुत्पन्नाः, अतः ब्राह्मणाः किं नैवेत्यर्थः नुशब्दो वितर्के । वर्णतः आदिमवर्णतया ब्राह्मतेजः न प्रपद्यते न प्राप्यते तथा जनकात् जनकसम्बन्धात् ब्रह्मजातत्वादित्यर्थः वा ब्राह्मतेजः न प्रपद्यते न प्राप्यते ॥ ३९ ॥

अतो ब्राह्मणः कथं जायते इत्याह ज्ञानेति । यः ज्ञानस्य कर्मणाञ्च उपासनाभिः अनुशीलनानुष्ठानतपोभिः गुणैः उपलक्षितः, देवताराधने रतः शान्तः जितेन्द्रियः दान्तः विनयरतः तथा दयालुः स ब्राह्मणः कृतः विधात्रेति शेषः ॥ ४० ॥

लोकेति । यः लोकरक्षणे प्रजापालने दक्षः निपुणः शूरः

क्रयविक्रयकुशला ये नित्यं पण्यजीविनः ।
पशुरक्षाः कृषिकरास्ते वैश्याः कीर्त्तिता भुवि ॥ ४२ ॥
द्विजसेवार्चनरताः शूराः शान्ता जितेन्द्रियाः ।
सीरकाष्ठतृणवहास्ते नीचाः शूद्रसंज्ञकाः ॥ ४३ ॥
त्यक्तस्वधर्माचरणा निर्घृणाः परपीडकाः ।
चण्डाश्च हिंसका नित्यं म्लेच्छास्ते ह्यविवेकिनः ॥ ४४ ॥
प्राक्कर्मफलभोगार्हा बुद्धिः सञ्जायते नृणाम् ।
पापकर्मणि पुण्ये वा कर्त्तुं शक्तो न चान्यथा ॥ ४५ ॥

---

बलवान् दान्तः निगृहीतेन्द्रियः पराक्रमी तथा दुष्टानां निग्रहे समर्थः स क्षत्रियः उच्यते इति त्वम् अवधारय ॥ ४१ ॥

क्रयेति । ये नित्यं क्रयविक्रयकुशलाः सन्तः पण्यजीविनः वाणिज्याजीविन इत्यर्थः तथा पशुरक्षाः पशुपालनरताः कृषिकराश्च ते भुवि पृथिव्यां वैश्याः कीर्त्तिताः ॥ ४२ ॥

द्विजेति । ये द्विजानां ब्राह्मणक्षत्रियवैश्यानां सेवायां परिचर्य्यायाम् अर्च्चने च पूजने च रताः शूराः बलवन्तः कार्य्यक्षमा इत्यर्थः शान्ताः सुशीलाः जितेन्द्रियाः वशीकृतेन्द्रियाः सीरं लाङ्गलं काष्ठं तृणञ्च वहन्तीति तथोक्ताः अतएव नीचाः क्षुद्रकर्म्मरताः, ते शूद्रसंज्ञकाः शूद्रा इत्यभिहिता इत्यर्थः ॥ ४२ ॥

त्यक्तेति । ये च त्यक्तस्वधर्माचरणाः धर्माचारवर्ज्जिता इत्यर्थः निर्घृणाः निर्दयाः परपीडकाः चण्डाः उग्राः नित्यं सततं हिंसकाः हिंसाशीलाः तथा अविवेकिनः विवेकरहिताः यथेच्छाचारिण इत्यर्थः ते म्लेच्छाः इति त्वम् अवधारय ॥ ४४ ॥

पापेति । येषां मनुष्याणां प्राक् कर्म्मफलभोगार्हा प्राक्तन शुभाशुभकर्म्मफलभोगविषयिणी बुद्धिः संजायते, अन्यथा पापकर्म्मणि पुण्यं वा कर्त्तुं न च शक्तः न शक्नोतीत्यर्थः । प्राक्तन कर्म्मवशेनैव कोऽपि पापकर्म्मणि कोऽपि वा पुण्यकर्म्मणि प्रवर्त्तते इति फलितार्थः ॥ ४५ ॥

बुद्धिरुत्पद्यते तादृक् यादृक् कर्मफलोदयः ।
सहायास्तादृशा एव यादृशी भवितव्यता ॥ ४६ ॥
प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् ।
तर्ह्युपदेशा व्यर्थाः स्युः कार्य्याकार्य्यप्रबोधकाः ॥ ४७ ॥
धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् ।
अशक्ताः पौरुषं कर्त्तुं क्लीवा दैवमुपासते ॥ ४८ ॥
दैवे पुरुषकारे च खलु सर्वं प्रतिष्ठितम् ।
पूर्वजन्मकृतं कर्मेहार्जितं तद् द्विधाकृतम् ॥ ४९ ॥
बलवान् प्रतिकारी स्यात् दुर्बलस्य सदैव हि ।
स बलाबलयोर्ज्ञानफलप्राप्त्यान्यथा न हि ॥ ५० ॥

---

बुद्धिरिति। यादृक् कर्मफलस्य उदयः, तादृक् बुद्धिः उत्पद्यते, भवितव्यता नियतिः यादृशी, तादृशा एव सहायाः भवन्तीति शेषः ॥ ४६ ॥

प्रागिति। प्राक्कर्मवशतः प्राक्तनकर्मबलात् सर्वं शुभाशुभं भवत्येव इति निश्चितं यदीत्यध्याहार्य्यं तदा कार्य्याकार्य्यप्रबोधकाः कर्त्तव्याकर्त्तव्यप्रतिपादकाः उपदेशाः व्यर्थाः निष्फलाः स्युः भवेयुः केवलप्राक्तनाङ्गीकारे पुरुषकारो व्यर्थ इति भावः ॥ ४७ ॥

धीमन्त इति। वन्द्यचरिताः महनीयचरित्राः धीमन्तः बुद्धिमन्तः पौरुषं पुरुषकारं महत् मन्यन्ते न तु दैवं, क्लीवाः कापुरुषास्तु पौरुषं कर्त्तुम् अशक्ताः सन्तः दैवं प्राक्तनभाग्यम् उपासते आश्रयन्ति ॥ ४८ ॥

दैव इति। सर्वं शुभाशुभं दैवे पुरुषकारे च प्रतिष्ठितं खलु निश्चितं सर्वमेव दैवाधीनं परं पुरुषकारस्तमपेक्षते इति भावः तत् फलोत्पत्तिसाधनं द्विधाकृतं द्वैविध्येन व्यवस्थापितम् एकं पूर्वजन्मार्जितं कर्म दैवमित्यर्थः, अपरम् इहार्जितम् ऐहिकं पौरुषमित्यर्थः ॥ ४९ ॥

बलवानिति। बलवान् प्रबलः जनः सदैव दुर्बलस्य प्रतिकारी अपकारी अथवा उपकारी स्यात् हिशब्दः पादपूरणार्थः। स बला-

फलोपलब्धिः प्रत्यक्षहेतुना नैव दृश्यते ।
प्राक्कर्महेतुकी सा तु नान्यथैवेति निश्चयः ॥ ५१ ॥
यज्जायतेऽल्पक्रियया नृणां वापि महत् फलम् ।
तदपि प्राक्तनादेव केचित् प्रागिह कर्मजम् ॥ ५२ ॥
वदन्तीहैव क्रियया जायते पौरुषं नृणाम् ।
सस्नेहवर्त्तिदीपस्य रक्षा वातात् प्रयत्नतः ॥ ५३ ॥
अवश्यम्भाविभावानां प्रतीकारो न चेद् यदि ।
दुष्टानां क्षपणं श्रेयो यावद् बुद्धिबलोदयम् ॥ ५४ ॥

---

बन्धयोः स्नानस्य फलस्य प्राप्त्या तत् करोतीति शेषः । अन्यथा न हि बन्धाबन्धयोः स्वपरनिष्ठयोः स्नानेन फलप्राप्त्या च तस्य दुर्बलप्रतीकार इति भावः ॥ ५० ॥

फलोपलब्धिरिति । प्रत्यक्षहेतुना दृश्यमानकारणेन फलोपलब्धिः फललाभः नैव दृश्यते, सा तु फलोपलब्धिः प्राक्कर्महेतुकी प्राक्तनकर्माधीना, अन्यथा नैव इति निश्चयः ॥ ५१ ॥

यदिति । वापि अथवा अल्पक्रियया अल्पेन पुरुषकारेण नृणां यत् महत् फलं जायते तदपि प्राक्तनात् पूर्वजन्मकृतात् कर्मण एव भवतीति शेषः, केचित् तत् प्रागिहकर्मजं प्राक्कर्मैहिककर्मभ्यां जातं वदन्तीति उत्तरश्लोकीयक्रियापदेनान्वयः ॥ ५२ ॥

वदन्तीति । इहैव क्रियया नृणां पौरुषं जायते, तथाहि प्रयत्नतः पुरुषकारात् सस्नेहवर्त्तिदीपस्य तैलाक्तदशान्वितस्य दीपस्य वातात् रक्षा भवतीति शेषः इत्यपि वदन्ति केचिदिति पूर्वेणान्वयः ॥ ५२ ॥

अवश्यमिति । अवश्यं भाविनां भावानां विषयाणां यदि प्रतीकारो न वै नैव भवतीति शेषः वैशब्दः अवधारणे, तदा यावद्बुद्धिबलोदयं बुद्धिबलानुसारेणेत्यर्थः दुष्टानाम् अपकारिणां रोगादीनां शत्रूणां क्षपणम् अपनिवारणं श्रेयः शुभावहं भवतु इति शेषः ॥ ५४ ॥

भवतीष्टं सत्क्रिययानिष्टं तद्विपरीतया ।
शास्त्रतः सदसज्ज्ञात्वा त्यक्त्वासत् सत् समाचरेत् ॥ ५९ ॥
कालस्य कारणं राजा सदसत्कर्मणस्त्वतः ।
स्वक्रूरोद्यतदण्डाभ्यां स्वधर्मे स्थापयेत् प्रजाः ॥ ६० ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
सप्ताङ्गमुच्यते राज्यं तत्र मूर्द्धा नृपः स्मृतः ॥ ६१ ॥
दृगमात्यः सुहृच्छ्रोत्रं मुखं कोशो बलं मनः ।
हस्तौ पादौ दुर्गराष्ट्रौ राज्याङ्गानि स्मृतानि हि ॥ ६२ ॥

---

भवतीति । सत्क्रियया इष्टं भवति तद्विपरीतया असत्क्रिययेत्यर्थः अनिष्टं भवति । अतः शास्त्रतः सदसत् ज्ञात्वा असत् त्यक्त्वा सत् कार्य्यं समाचरेत् ॥ ५९ ॥

कालस्येति । सतोऽसतः कालस्य कारणं राजा एवं । यदा राजा सम्यक् कार्य्यं पश्यति स कालः सत्ययुगं, यदा कामाद्यतः पश्यति तदा त्रेतायुगं, यदा न कार्य्यं पश्यति तदा द्वापरयुगं, यदा निद्राति तदा कलियुगमिति । अतः सदसत्कर्मणः कारणं स एव नृपः अपराधेभ्यो राज एव लोकानां सदसत्कर्मप्रवर्त्तकत्वादिति भावः । तस्मात् राजा स्वकार्य्ये उद्यतम् उद्योगः भावे क्तप्रत्ययः, दण्डश्च ताभ्यां प्रजाः स्वधर्मे स्थापयेत् ॥ ६० ॥

स्वामीति । राज्यं सप्ताङ्गं सप्तावयवम् उच्यते स्वामी राजा, अमात्यः मन्त्री, सुहृद् मित्रं कोषः धनं राष्ट्रं राज्यस्थप्रजावर्गः, दुर्गं ग्राम दुर्गमं गुप्तिस्थानं तथा बलं सैन्यम् । तत्र तेषु सप्तसु मध्ये नृपः मूर्द्धा उत्तमाङ्गं स्मृतः ॥ ६१ ॥

दृगिति । अमात्यः दृक् चक्षुः, सुहृद्, श्रोत्रं कर्णेन्द्रियं कोषः मुखं बलं मनः, दुर्गं हस्तौ राष्ट्रं पादौ एतानि राज्याङ्गानि स्मृतानि कीर्त्तितानि हिशब्दः अवधारणे ॥ ६२ ॥

अङ्गानां क्रमशो वक्ष्ये गुणान् भूतिप्रदान् सदा ।
यैर्गुणैस्तु सुसंयुक्ता ह्यृद्धिमन्तो भवन्ति हि ॥ ६२ ॥
राजास्य जगतो हेतुर्वृद्धैर्वृद्धाभिसम्मतः ।
नयनानन्दजनकः शशाङ्क इव तोयधेः ॥ ६४ ॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ६५ ॥
न तिष्ठन्ति स्वस्वधर्मे विना पालेन वै प्रजाः ।
प्रजया तु विना स्वामी पृथिव्यां नैव शोभते ॥ ६६ ॥
न्यायप्रवृत्तो नृपतिरात्मानमथच प्रजाः ।
त्रिवर्गेणोपसन्धत्ते निहन्ति ध्रुवमन्यथा ॥ ६७ ॥

---

अङ्गानामिति । क्रमशः अङ्गानां सदा भूतिप्रदान् शुभावहान् गुणान् वक्ष्ये यैः गुणैः सुसंयुक्ता राजानः ऋद्धिमन्तः उन्नतिशालिनः भवन्ति हि हिशब्दः अवधारणे ॥ ६२ ॥

राजेति । वृद्धाभिसम्मतः वृद्धप्राचीनजनमतानुवर्त्ती राजा तोयधेः समुद्रस्य शशाङ्कः चन्द्र इव नयनानन्दजनकः लोकानामिति शेषः तथा अस्य जगतः वृद्धौ अभ्युदयाय हेतुः ॥ ६४ ॥

यदीति । यदि नरपतिः सम्यक् नेता नायकः कार्य्यदर्शीति यावत् न स्यात् ततः तदा प्रजा जलधौ समुद्रे अकर्णधारा नाविकरहिता नौः अर्णवतरिरिव इह जगति विप्लवेन विपद्यते ॥ ६५ ॥

नेति । प्रजाः पालेन रक्षकेण विना स्वस्वधर्मे न तिष्ठन्ति वैशब्दोऽवधारणे, तथा स्वामी प्रजया विना पृथिव्यां न शोभते राजप्रजयोः परस्परसापेक्ष्यं प्रयोजनीयमिति भावः ॥ ६६ ॥

न्यायेति । नृपतिः न्यायप्रवृत्तः न्यायपरायणः सन् आत्मानं प्रजाश्च त्रयाणां धर्मार्थकामानां वर्गैः उपसन्धत्ते योजयति, अन्यथा अन्यायप्रवृत्तश्चेत् आत्मानं प्रजाश्च ध्रुवं निश्चितं निहन्ति नाशयति ॥ ६७ ॥

धर्म्मं द्वैतवने राजा विधाय बुभुजे भुवम् ।
अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥ ६८ ॥
वेणो नष्टस्त्वधर्मेण पृथुर्वृद्धस्तु धर्मतः ।
तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः ॥ ६९ ॥
यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसाम् ।
अंशभूतो धर्मलोपी प्रजापीडाकरो भवेत् ॥ ७० ॥
अराजके हि सर्वस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ॥ ७१ ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चापि मात्रा निर्हृत्य शाश्वतीः ॥ ७२ ॥
जङ्गमस्थावराणाञ्च ह्वीशः स्वतपसा भवेत् ।
भागभाग्रक्षणे दक्षो यथेन्द्रो नृपतिस्तथा ॥ ७३ ॥

---

धर्म्ममिति । राजा युधिष्ठिर इत्यर्थः द्वैतवने धर्म्मं विधाय भुवं बुभुजे नहुषः अधर्मात् रसातलं प्रतिपेदे च एवमन्ह्योऽवधारणे ॥ ६८ ॥

वेण इति । वेणो नाम नृपतिः अधर्मेण नष्टः, पृथुर्वैण्यपुत्रः धर्मतः धर्मेण वृद्धः वृद्धिं गतः, तस्मात् पार्थिवः धर्मं पुरस्कृत्य आश्रित्य अर्थाय अर्थलाभाय यतेत यत्नं कुर्य्यात् ॥ ६९ ॥

य इति । यः राजा धर्मपरः स देवांशः, अन्यः रक्षसाम् अंशभूतः नृपः धर्मलोपी प्रजानां पीडाकरश्च भवेत् ॥ ७० ॥

अराजक इति । इन्द्रेति । सर्वस्मिन् जगति अराजके सति एव भयात् सर्वतः समन्ततः विद्रुते प्रधाविते सति प्रभुर्ब्रह्मा अस्य सर्वस्य जगतः रक्षार्थम् इन्द्रस्य अनिलस्य यमस्य अर्कस्य अग्नेः वरुणस्य चन्द्रस्य कुबेरस्य च अष्टानामेतेषां देवानां शाश्वतीः चिरन्तनीः तेजस्विनीरित्यर्थः मात्राः; अंशान् निर्हृत्य संगृह्य राजानमसृजत् सृष्टवान् ॥ ७१ ॥ ७२ ॥

जङ्गमेति । यथा इन्द्रः स्वतपसा निजेन तपोबलेन जङ्गमस्थावराणां चराचराणां जगताम् ईशः अधिपतिः सन् भागभाक् तथा रक्षणे

वायुर्गन्धस्य सदसत्कर्मणः प्रेरको नृपः ।
धर्मप्रवर्त्तको धर्मनाशकस्तमसो रविः ॥ ७४ ॥
दुष्कर्मदण्डको राजा यमः स्याद् दण्डकृद् यमः ।
अग्निः शुचिस्तथा राजा रक्षार्थं सर्वभागभुक् ॥ ७५ ॥
पुष्यत्यपां रसैः सर्वं वरुणः स्वधनैर्नृपः ।
करैश्चन्द्रो ह्लादयति राजा स्वगुणकर्मभिः ॥ ७६ ॥
कोशानां रक्षणे दक्षः स्यान्निधीनां धनाधिपः ।
चन्द्रोऽंशेन विना सर्वैरंशैर्नो भाति भूपतिः ॥ ७७ ॥
पितामाता गुरुर्भ्राता बन्धुर्वैश्रवणो यमः ।
नित्यं सप्तगुणैरेषां युक्तो राजा न चान्यथा ॥ ७८ ॥

---

इव: रक्षाक्षमश्च: नृपतिः भागभाक् करग्राही भवेत् ॥ ७३ ॥

वायुरिति । वायुः गन्धस्य प्रेरकः, नृपस्तु सदसत्कर्मणः प्रेरकः धर्मप्रवर्त्तकः तथा तमसः रविरिव अधर्मस्य नाशकः ॥ ७४ ॥

दुष्कर्मेति । दुष्कर्मणां पापिनां दण्डकः दण्डयिता राजा यमः स्यात् यथा यमः दण्डकृत् । अग्निः शुचिः पवित्रः सन् यथा सर्वेषां देवानां भागम् अग्नौ हुतमिति भावः भुङ्क्ते इति सर्वभागभुक् तथा शुचिः राजा रक्षार्थं सर्वेषां जनानां प्रजानामित्यर्थः भागभुक् करग्राहीत्यर्थः ॥ ७५ ॥

पुष्यतीति । वरुणः अपां रसैः जलरसैः सर्वं जगत् पुष्यति, नृपः स्वधनैः सर्वं पुष्णाति, चन्द्रः करैः किरणैः सर्वं ह्लादयति प्रीणयति, राजा स्वस्य गुणैः दयादाक्षिण्यादिभिः कर्मभिः रक्षासंग्रामादिभिश्च सर्वं रञ्जयति ॥ ७६ ॥

कोशानामिति । कोशानां धनानां रक्षणे सञ्चये दक्षः पटुः राजा निधीनां धनाधिपः कुबेर इव प्रभूतधनशाली स्यात् । कोशानां सञ्चये [illegible] । चन्द्रः अंशेन विना न भाति । भूपतिस्तु सर्वैः अंशैः धनकोशैः विना नो भाति न शोभते ॥ ७७ ॥

गुणसाधनसंदक्षः स्वप्रजायाः पिता यथा ।
क्षमयित्र्यपराधानां माता पुष्टिविधायिनी ॥ ७९ ॥
हितोपदेष्टा शिष्यस्य सुविद्याध्यापको गुरुः ।
स्वभागोद्धारकृद्भ्राता यथाशास्त्रं पितुर्धनात् ॥ ८० ॥
आत्मस्त्रीधनगुह्यानां गोप्ता बन्धुस्तु मित्रवत् ।
धनदस्तु कुबेरः स्याद्यमः स्याच्च सुदण्डकृत् ॥ ८१ ॥
प्रवृत्तिमति संराज्ञि निवसन्ति गुणा अमी ।
एते सप्त गुणा राज्ञा न हातव्याः कदाचन ॥ ८२ ॥

---

पितेति । पिता जनकः माता जननी गुरुः आचार्यः भ्राता सोदरः बन्धुः सुहृत् वैश्रवणः धनपतिः यमः दण्डधरः एषां सप्तगुणैः राजा नित्यं युक्तः भवेत् अन्यथा एषां गुणैर्विहीन इत्यर्थः न च रक्षको भवेत् ॥ ७८ ॥

गुणेति । राजा पिता यथा जनक इव स्वप्रजायाः गुणसाधने गुणोपार्जने संदक्षः सम्यक् तत्परः भवेदिति शेषः । तथा पुष्टिविधायिनी पोषणकारिणी अपराधानां दोषाणां क्षमयित्री माता यथा जननीव प्रजानां पोषकः क्षमाशीलश्च भवेत् ॥ ७९ ॥

हितेति । सुविद्याध्यापकः शोभनविद्याशिक्षकः गुरुर्यथा शिष्यस्य उपदेष्टा, तथा राजा प्रजानां विद्यादाता उपदेष्टा च भवेत् । भ्राता यथा पितुर्धनात् स्वस्य भागस्य उद्धारं करोतीति स्वभागोद्धारकृत् तथा राजा प्रजाभ्यः स्वभागमुद्धरेदिति भावः ॥ ८० ॥

आत्मेति । राजा मित्रवत् आत्मनः स्त्रीणां धनानां तथा गुह्यानां विषयाणां गोप्ता रक्षिता अत एव बन्धुः, धनदः अतएव कुबेरः, तथा सुदण्डकृत् यथान्यायं दण्डयिता अतएव यमः स्यात् ॥ ८१ ॥

प्रवृत्तीति । प्रवृत्तिमति प्रकृष्टाभ्युदययात्रिणि संराज्ञि शोभने राजनि अमी पूर्वोक्ताः पित्रादिगुणाः निवसन्ति, अतः राज्ञा कदाचन एते सप्त गुणाः न हातव्याः न त्यक्तव्याः ॥ ८२ ॥

क्षमते योऽपराधं स: शक्त: सुदमने क्षमी ।
क्षमया तु विना भूपो न भात्यखिलसद्गुणै: ॥ ८३ ॥
स्वान् दुर्गुणान् परित्यज्य ह्यतिवादांस्तितिक्षते ।
दानैर्मानैश्च सत्कारै :स्वप्रजारञ्जक: सदा ॥ ८४ ॥
दान्त: शूरश्च शस्त्रास्त्रकुशलोऽरिनिषूदन: ।
अस्वतन्त्रश्च मेधावी ज्ञानविज्ञानसंयुत: ॥ ८५ ॥
नीचहीनो दीर्घदर्शी वृद्धसेवी सुनीतियुक् ।
गुणिजुष्टस्तु यो राजा स ज्ञेयो देवतांशक: ॥ ८६ ॥
विपरीतस्तु रक्षोंऽश: स वै नरकभाजन: ।
नृपांशसदृशो नित्यं तत्सहायगण: किल ॥ ८७ ॥

---

क्षमते इति । य: शक्त: समर्थ: सन् अपराधं क्षमते, स सुदमने प्रजानां सुशासने क्षमी सक्षम:। क्षमया तु विना भूप: अखिलै: समस्तै: सद्गुणै: उपलक्षितोऽपीत्यर्थ: न भाति न शोभते ॥ ८३ ॥

स्वानित्यादि। य: स्वान् निजान् दुर्गुणान् दोषान् परित्यज्य अतिवादान् निन्दावादान् तितिक्षते सहते किञ्च सदा दानै: मानै: सत्कारै: समादरविशेषैश्च स्वप्रजानां रञ्जक: प्रीतिजनक:, दान्त: इन्द्रियदमनशील: शूर: बलवान् शस्त्रास्त्रकुशल: संग्रामविदित्यर्थ: अरिनिषूदन: शत्रुतापन: अस्वतन्त्र: अस्वेच्छाचारी नीतिशास्त्रानुवर्त्तीत्यर्थ: मेधावी बुद्धिमान् ज्ञानविज्ञानाभ्यां सामान्यविशेषरूपाभ्यां संयुत: नीचहीन: हीनसंसर्गरहित: दीर्घदर्शी बहुदर्शी वृद्धसेवी अभिज्ञजनमतानुवर्त्ती सुनीतियुक् सुनयसम्पन्न: तथा गुणिभि: विद्वद्भि: जुष्ट: सेवित: भवति स राजा देवांशक: देवांशेनावतीर्ण इत्यर्थ: ज्ञेय: ॥ ८४ । ८५ ॥ ८६ ॥

विपरीत इति। उक्तविपरीतस्तु नृप: रक्षोंऽश: राक्षसांशेनावतीर्ण:, स वै सएव नरकभाजन: निरयभागी भवति। तस्य राज्ञ: सहायगण: सहचरवर्ग: नृपांशसदृश: राजांशसमान:, यादृशो राजा तादृश

तत्कृतं मन्यते राजा सन्तुष्यति च मोदते ।
तेषामाचरणैर्नित्यं नान्यथा नियतेर्बलात् ॥ ८८ ॥
अवश्यमेव भोक्तव्यं कृतकर्मफलं नरैः ।
प्रतिकारैर्विना नैव प्रतिकारे कृते सति ॥ ८९ ॥
तथा भोगाय भवति चिकित्सितगदो यथा ।
उपदिष्टेऽनिष्टहेतौ तत् तत् कर्त्तुं यतेत कः ॥ ९० ॥
रज्यते सत्फले स्वान्तं दुष्फले न हि कस्यचित् ।
सदसद्बोधकान्येव दृष्ट्वा शास्त्राणि चाचरेत् ॥ ९१ ॥

---

एव तत्पार्श्वचर इत्यर्थः यस्य दैवस्य यद्रूपं यथा मुखवदाननम् । तद्वदेव हि तत्कृतिरिति भावः ॥ ८७ ॥

तदिति । राजा नित्यं सततं तत्कृतं तेषां पार्श्वचराणां कृतं कार्य्यं मन्यते अनुमोदते, तथा नियतेः अदृष्टस्य बलात् प्रभावात् तेषाम् आचरणैः व्यवहारैः सन्तुष्यति सन्तोषं लभते, अन्यथा न मोदते न हृष्यति ॥ ८८ ॥

अवश्यमिति । नरैः मानवैः प्रतिकारैः विना, शान्तिकर्म्मादिभिः विना, कृतकर्मफलम् अवश्यमेव निश्चितमेव भोक्तव्यं, प्रतिकारे शान्तौ कृते सति नैव भोक्तव्यमिति ॥ ८९ ॥

तथेति । चिकित्सितगदः प्रतिहतरोगः यथा भोगाय भवति शक्नोति, तथा प्रतिहतकर्मफलः राजा भोगाय भवति, अनिष्टहेतौ उपदिष्टे उपदेशेन सम्यक् विदिते सति कः तत् तत् अनिष्टं कर्त्तुं यतेत न कोऽपीत्यर्थः ॥ ९० ॥

रज्यते इति । सत्फले सुन्दरे फले सति स्वान्तं मनः रज्यते हृष्यति, दुष्फले मन्दफले सति कस्यचिदपि न हि नैव । सदसद्बोधकानि हिताहितप्रतिपादकानि शास्त्राणि दृष्ट्वा आचरेत् यथा दुष्फलं न स्यात् तथा व्यवहरेदित्यर्थः ॥ ९१ ॥

एकस्यैव हि योऽशक्तो मनसः सन्निबर्हणे ।
महीं सागरपर्य्यन्तां स कथं ह्यवजेष्यति ? ॥ १०० ॥
क्रियावसानविरसैर्विषयैरपहारिभिः ।
गच्छत्याक्षिप्तहृदयः करीव नृपतिर्ग्रहम् ॥ १०१ ॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।
एकैकस्त्वलमेतेषां विनाशप्रतिपत्तये ॥ १०२ ॥
शुचिर्दर्भाङ्कुराहारो विदूरभ्रमणे क्षमः ।
लुब्धकोद्गीतमोहेन मृगो मृगयते वधम् ॥ १०३ ॥

---

एकस्येति । यः नृपः एकस्यैव मनसः सन्निबर्हणे वशीकरणे अशक्तः असमर्थः, सः सागरपर्य्यन्तां ससागरां महीं कथम् अवजेष्यति ? वशीकरिष्यति न कथमपीत्यर्थः सर्वथा मनएव आदौ वशीकर्त्तव्यमिति भावः ॥ १०० ॥

क्रियेति । नृपतिः क्रियायाः अवसानविरसैः परिणामासुखकरैः अपहारिभिः आपातमनोहारिभिः विषयैः आक्षिप्तम् आकृष्टं हृदयं यस्य तथाभूतः सन् करीव गज इव ग्रहं बन्धनं गच्छति प्राप्नोति । राज्ञा विषयासक्तेन न भाव्यमिति भावः ॥ १०१ ॥

शब्द इति । शब्दः श्रवणेन्द्रियभोग्य इत्यर्थः स्पर्शः त्वगिन्द्रियभोग्य इत्यर्थः, रूपं दर्शनेन्द्रियगोचरं, रसः रसनेन्द्रियविषयः पञ्चमः गन्धः घ्राणेन्द्रियगम्यश्च एतेषाम् एकैकस्तु एकैकोऽपीत्यर्थः विनाशप्रतिपत्तये आत्मनाशोत्पत्तये अलं समर्थः ॥ १०२ ॥

शब्दमुदाहरति शुचिरिति । शुचिः पवित्रः निर्दोषो वा, दर्भाङ्कुरं कुशाङ्कुरं एव आहारो यस्य सः तथा विदूरभ्रमणे अतिदूरभ्रमणे क्षमोऽपि मृगः लुब्धकस्य व्याधस्य उद्गीतेन उच्चैर्गानेन यः मोहः मुग्धता तेन गानश्रवणासक्ततया इत्यर्थः वधम् आत्मविनाशं मृगयते अन्विच्छति प्राप्नोतीत्यर्थः ॥ १०३ ॥

द्यूतं स्त्री मद्यमेवैतत् वितयं बहुनर्थकृत् ।
अयुक्तं युक्तियुक्तं हि धनपुत्रमतिप्रदम् ॥ १०९ ॥
नलधर्मप्रभृतयः सुद्यूतेन विनाशिताः ।
सकापट्यं धनायालं द्यूतं भवति तद्विदाम् ॥ ११० ॥
स्त्रीणां नामापि संह्लादि विकरोत्येव मानसम् ।
किं पुनर्दर्शनं तासां विलासोल्लासितभ्रुवाम् ॥ १११ ॥
रहःप्रचारकुशला मृदुगद्गदभाषिणी ।
कं न नारी वशीकुर्य्यान्नरं रक्तान्तलोचना ॥ ११२ ॥

---

व्यसनिनः भोग्यवस्तूनि एकैकशः विनिघ्नन्ति नाशयन्ति विविधाः पञ्च शब्दादय इत्यर्थः किं पुनः, कथं न नाशयन्ति हि अवश्यमेव नाशयन्तीत्यर्थः । हिशब्दः अवधारणे ॥ १०८ ॥

यथाक्रमेण व्यसनदोषं वर्णयिष्यन्, प्रथमं द्यूतादिनिन्दामाह द्यूतमिति । द्यूतं देवनं स्त्री तथा मद्यम् अयुक्तम् अनुचितम् अयथावैधिकमित्यर्थः एतत् त्रितयं बहूनाम् अनर्थानां कृत् कारकं, युक्तियुक्तं न्यायतः सेवितं धनं पुत्रं मतिञ्च यथाक्रमेण प्रददातीति तयोर्थः ॥ १०९ ॥

तत्र द्यूतस्य दोषमाह नलेति । नलः तथा धर्मः धर्मराजः युधिष्ठिरः प्रभृतिर्येषां ते सुद्यूतेन पक्षकदेवनेन न तु कापट्यरूपयुक्तियुक्तेनेत्यर्थः विनाशिताः राज्यात् च्याविताः, अतः तद्विदां द्यूताभिज्ञानां सकापट्यं द्यूतं धनाय अलं समर्थं दुर्द्यूतदेवनेन धनं लभ्यते सुद्यूतेन तु धर्मनाश इति भावः ॥ ११० ॥

स्त्रीदोषमाह स्त्रीणामिति । स्त्रीणां नामापि नामोच्चारणमपि संह्लादि आनन्दजनकं सत् मानसं विकरोत्येव, विलासेन उल्लासितौ भ्रुवौ यासां तासां स्त्रीणां दर्शनं किं पुनः, मानसं विकरोतीति किं वक्तव्यमित्यर्थः ॥ १११ ॥

रह इति । रहसि एकान्ते यः प्रचारः व्यवहारः तत्र कुशलाः

मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना ।
जितेन्द्रियस्य का वार्त्ता किं पुनश्चाजितात्मनाम् ॥११३॥
व्यायच्छन्तश्च बहवः स्त्रीषु नाशं गता ह्यमी ।
इन्द्रदण्डक्यनहुषरावणाद्याः सदा ह्यतः ॥ ११४ ॥
अतत्पर नरस्यैव स्त्री सुखाय भवेत् सदा ।
साहायिनी गृहस्थत्वे तां विनान्या न विद्यते ॥११५॥
अतिमद्यं हि पिबतो बुद्धिलोपो भवेत् किल ।
प्रतिभां बुद्धिवैशद्यं धैर्यं चित्तविनिश्चयम् ॥ ११६ ॥
तनोति मात्रया पीतं मद्यमन्यद् विनाशकृत् ।
कामक्रोधौ मद्यतमौ नियोक्तव्यौ यथोचितम् ॥ ११७ ॥

---

निपुणाः बहुगर्ह्यभाषिणी तथा रत्यन्ते शोचने दक्षाः अङ्गना नारी कं नरं न वशीकुर्यात्, अपितु सर्वमेवेत्यर्थः ॥ ११२ ॥

मुनेरिति । अङ्गना प्रयत्नाकुवती नारी जितेन्द्रियस्य मुनेरपि मनः अवश्यं सरागं कुरुते का वार्त्ता किं वक्तव्यम्, अजितात्मनाम् अजितेन्द्रियाणां किं पुनः ॥ ११२ ॥

व्यायच्छन्त इति । अतः कारणात् सदा स्त्रीषु व्यायच्छन्तः आसक्तिं कुर्वन्तः अमी इन्द्रदण्डक्यनहुषरावणाद्याः बहवः राजानः नाशं गताः हि । हिशब्दः अवधारणे ॥ ११४ ॥

अतत्परस्येति । अतत्परस्य अनासक्तस्य स्त्री सदा सुखाय भवेत् यतः तां विना अन्या गृहस्थत्वे गार्हस्थ्यकार्ये सन्तानोत्पादनपालन-पाचनादिरूपे साहायिनी साहाय्यकारिणी न विद्यते ॥ ११५ ॥

मद्यमुदाहरति अतिमद्यमिति । तनोतीति । अतिमद्यं पिबतः जनस्य बुद्धिलोपः भवेत् किल किलेति प्रसिद्धौ । हिशब्दः अवधारणे । मात्रया परिमाणेन पीतं मद्यं प्रतिभां बुद्धितैक्ष्ण्यं बुद्धिवैशद्यं निर्मलतां धैर्यं धीरतां चित्तस्य विनिश्चयं स्थिरतां च तनोति, पूर्वं [illegible]

कामः प्रजापालने च क्रोधः शत्रुविवर्द्धने ।
सेनासंधारणे लोभो योज्यो राज्ञा जयार्थिना ॥ ११८ ॥
परस्त्रीसङ्गमे कामो लोभो नान्यधनेषु च ।
स्वप्रजादण्डने क्रोधो नैव धार्यो नृपैः कदा ॥ ११९ ॥
किमुच्यते कुटुम्बीति परस्त्रीसङ्गमान्नरः ।
स्वप्रजादण्डनाच्छूरो धनिकोऽन्यधनैश्च किम् ? ॥१२०॥
अरक्षितारं नृपतिं ब्राह्मणं चातपस्विनम् ।
धनिकं चाप्रदातारं देवा घ्नन्ति त्यजन्त्यधः ॥ १२१ ॥

---

मतिप्रद्युम्नम् इह तु तद्विपरीतमिति बोद्धव्यम् । अन्यत् अपरिमित-मित्यर्थः सर्वं विनाशकत् विनाशकमित्यर्थः । कामक्रोधौ महत्तमौ शास्त्र-ख्यापिताविति मह्यौ चरणे यमत्वयः । अतिशयेन महान्तौ महत्तमौ अति-शत्रू इत्यर्थः किन्तु यथोचितं नियोक्तव्यौ व्यवहार्यौ न तु अयथो-चितमिति भावः ॥ १२६ ॥ ११७ ॥

काम इति । राज्ञा प्रजापालने चन्नादरक्षणे वा अधिकृतजन-पालने कामः योज्यः प्रयोक्तव्यः, तथा जयार्थिना सता शत्रुनिबर्हणे शत्रुपराजये क्रोधः सेनानां सत्कारणे संरक्षणे लोभश्च योज्यः नियोक्तव्य इत्यर्थः ॥ ११८ ॥

परस्त्रीति । नृपैः कदापि परस्त्रीसङ्गमे कामः, अन्यधनेषु परधनेषु लोभः तथा स्वप्रजानां दण्डने क्रोधः नैव धार्यः नैव कर्त्तव्यः ॥ ११९ ॥

किमिति । नरः परस्त्रीसङ्गमात् किं कुटुम्बी गृही उच्यते ? नैवेत्यर्थः तथा स्वप्रजादण्डनात् शूरः बलवान् वा अन्यधनैः परधनैः कृत्वैरिति शेषः धनिकः धनवान् किं उच्यते ? नैवेत्यर्थः ॥ १२० ॥

अरक्षितारमिति । देवाः अरक्षितारं प्रजापालनपराङ्मुखं नृप-तिम्, अतपस्विनं तपोविरहितं ब्राह्मणं, तथा अप्रदातारं कृपणं धनिकं देवाः घ्नन्ति नाशयन्ति अधः त्यजन्ति कुर्वन्ति च ॥ १२१ ॥

स्वामित्वं चैव दातृत्वं धनिकत्वं तपःफलम् ।
एनसः फलमर्थित्वं दासत्वं च दरिद्रता ॥ १२२ ॥
दृष्ट्वा शास्त्राण्यतोऽऽत्मानं सन्नियम्य यथोचितम् ।
कुर्य्यान्नृपः स्ववृत्तं तु परत्रेह सुखाय च ॥ १२३ ॥
दुष्टनिग्रहणं दानं प्रजायाः परिपालनम् ।
यजनं राजसूयादेः कोषाणां न्यायतोऽर्जनम् ॥ १२४ ॥
करदीकरणं राज्ञां रिपूणां परिमर्दनम् ।
भूमेरुपार्जनं भूयो राजवृत्तं तु चाष्टधा ॥ १२५ ॥
न वर्धितं बलं यैस्तु न भूपाः करदीकृताः ।
न प्रजाः पालिताः सम्यक् ते वै षण्ढतिला नृपाः ॥ १२६ ॥

---

स्वामित्वमिति । स्वामित्वम् आधिपत्यं दातृत्वं दानशीलत्वं तथा धनिकत्वं धनवत्त्वं तपसः फलं तपोबलेनैवैतानि लभ्यन्ते इति भावः । तथा अर्थित्वं याचकत्वं दासत्वं दासवृत्तिः दरिद्रता निर्धनता च एनसः पापस्य फलं पापेनैवैतानि सम्पद्यन्तीति भावः ॥ १२२ ॥

दृष्ट्वेति । अतः कारणात् नृपः शास्त्राणि दृष्ट्वा समालोच्य आत्मानं सन्नियम्य वशीकृत्य परत्र इह च सुखाय यथोचितं स्ववृत्तं स्वकर्त्तव्यं कार्य्यं कुर्य्यात् ॥ १२३ ॥

किं तत् स्ववृत्तमित्याह दुष्टेति । करदीकरणमिति । राजवृत्तम् अष्टधा यथा दुष्टानां निग्रहणं, दानं प्रजायाः परिपालनं, राजसूयादेः यज्ञस्य यजनं, कोषाणां धनानां न्यायतः यथान्यायं अर्जनं, राज्ञां करदीकरणं करदानेन अधीनीकरणं, रिपूणां शत्रूणां परिमर्दनं पराजयकं तथा भूमेः भूयः प्राचुर्य्येण उपार्जनम् ॥ १२४ ॥ १२५ ॥

नेति । यैः बलं सैन्यं न वर्द्धितं, भूपाः नृपाः न करदीकृताः करदानेन न वशीकृताः तथा सम्यक् प्रजाः न पालिताः, ते नृपाः षण्ढतिलाः नपुंसकतिलाः फलशून्या इत्यर्थः ॥ १२६ ॥

प्रजा सूद्विजते यस्माद् यत्कर्म परिनिन्दति ।
त्यज्यते धनिकैर्यस्तु गुणिभिस्तु नृपाधमः ॥ १२७ ॥
नटगायकगणिकामल्लषण्ढाल्पजातिषु ।
योऽतिसक्तो नृपो निन्द्यः स हि शत्रुमुखे स्थितः ॥ १२८ ॥
बुद्धिमन्तं सदा द्वेष्टि मोदते वञ्चकैः सह ।
स्वं दुर्गुणं नैव वेत्ति स्वात्मनाशाय स नृपः ॥ १२९ ॥
नापराधं हि क्षमते प्रदण्डो धनहारकः ।
स्वदुर्गुणश्रवणतो लोकानां परिपीडकः ॥ १३० ॥

---

प्रजेति । प्रजा यस्मात् सूद्विजते अतिशयेन उद्वेगं प्राप्नोति, यत्कर्म यस्य कर्म परिनिन्दति च तथा गुणिभिर्गुणवद्भिः विद्वद्भिरित्यर्थः धनिभिश्च यः त्यज्यते यत्संगमः न क्रियते इत्यर्थः स नृपाधमः ॥ १२७ ॥

नटेति । यः नृपः, नटाः ताण्डवव्यवसायिनः, गायकाः सङ्गीतजीविनः गणिकाः वेश्याः मल्लाः व्यायामिनः षण्डाः क्लीवाः तथा अल्पा क्षुद्रा जातिर्येषां तादृशाः नीचजातय इत्यर्थः, तेषु अतिसक्तः अत्यासक्तः स निन्द्यः निन्दनीयः ननु हि निश्चयेन शत्रूणां मुखे स्थितः तिष्ठतीत्यर्थः वर्त्तमाने क्तप्रत्ययः ॥ १२८ ॥

बुद्धिमन्तमिति । यः नृपः सदा बुद्धिमन्तं सुधियं द्वेष्टि, वञ्चकैः धूर्त्तैः सह मोदते आमोदं करोति, तथा स्वं दुर्गुणं दोषं नैव वेत्ति नावबुध्यते, स स्वात्मनाशाय निजदेहनाशाय भवतीत्यर्थः सः अचिरात् विनश्यति इति भावः ॥ १२९ ॥

नेत्यादि । यदा धनहारकः परधनलुब्धः लोकानां प्रजानां परिपीडकः तथा प्रदण्डः तीव्रदण्डः नृपः स्वदुर्गुणानां श्रवणतः श्रवणात् अपराधं प्रजानामिति शेषः न क्षमते तदा लोकः क्षुभ्यतीति विरज्यते अतः कारणात् नृपः यतः अकस्मात् अपरिमात् विद्यते तत् स्वत्वं नृपादैः गुणवद्भिः आश्रिता के अमात्यादयः तद्विदः तज्ज्ञाः सन्तः

नृपो यत्र तत्र लोकः क्षुभ्यते भिद्यते यतः ।
गूढचारैः श्रावयित्वा स्ववृत्तं दूषयन्ति के ॥ १३१ ॥
भूषयन्ति च कैर्भावैरमात्याद्याश्च तद्विदः ।
मयि कीदृक् च संप्रीतिः केषामप्रीतिरेव वा ॥ १३२ ॥
ममागुणैर्गुणैर्वापि गूढं संश्रुत्य चाखिलम् ।
चारैः स्वदुर्गुणं ज्ञात्वा लोकतः सर्वदा नृपः ॥ १३३ ॥
सुकीर्त्यै संत्यजेन्नित्यं नावमन्येत वै प्रजाः ।
लोको निन्दन्ति राजंस्त्वां चारैः संश्रावितो यदि ॥१३४॥
कोपं करोति दौरात्म्यादात्मदुर्गुणलोपकः ।
सीता साध्व्यपि रामेण त्यक्ता लोकापवादतः ॥ १३५ ॥

---

दूषयन्ति दूषितं कुर्वन्ति तदिति शेषः वा कैः भावैः भूषयन्ति प्रशंसन्ति, तथा मम अगुणैः वा गुणैः केषां जनानां मयि कीदृक् संप्रीतिः अनुरागः केषां वा अप्रीतिरननुरागः, एतत् अखिलं समग्रं चारैः गूढपुरुषैः संश्रुत्य सम्यगाकर्ण्य लोकतः लोकपरम्परातश्च सर्वदा ज्ञात्वा राजा सुकीर्त्यै सुयशसे नित्यं सततं स्वदुर्गुणं निजदोषं त्यजेत्, प्रजाः नैव अवमन्येत । हे राजन् ! लोकस्त्वां निन्दति इति चारैः संश्रावितः सन् यदि दौरात्म्यात् कोपं करोति तदा असौ नृपः आत्मनः दुर्गुणानां दोषाणां लोपकः लोपकारी अस्वीकारीत्यर्थः आत्मनो दोषाच्छादने-नातिविरागभाजनं प्रजानामिति भावः। सति दोषे का कथा, अपि सीता अदुष्टापि लोकापवादो निराकरणीय इत्याह सीतेति । रामेण साध्वी लोकापवादतः त्यक्ता । यस्मिन्नपि रामेण कश्चित् कदाचित् रक्षके अपवादकारिण्यभिलषितः अल्पोऽपि दण्डः न कृतः न कृत इत्यर्थः यतः राजा रामः ज्ञानेन शास्त्राभ्यासेन विज्ञानेन विशेषज्ञानेन च सम्यक् युक्तः, तथा दत्तम् अभयं येन स दत्ताभयः अपवादश्रवणेन स्वदोषसंशोधनसमर्थः अपवादिष्वपि अभयं दत्तवानित्यर्थः । पुरा किल तां पत्नीं ज्ञाना॰

शक्तेनापि हि न च्युतो दण्डोऽन्यो रजके क्वचित् ।
ज्ञानविज्ञानसम्पन्नः राजादत्ताभयोऽपि च ॥ १२६ ॥
समक्षं वक्ति न भयाद्राज्ञो गुर्वपि दूषणम् ।
स्तुतिप्रिया हि वै देवा विष्णुमुख्या इति श्रुतिः ॥१२७॥
किं पुनर्मनुजा नित्यं निन्दाजः क्रोध इत्यतः ।
राजा सुभागदण्डी स्यात् सुक्षमी रञ्जकः सदा ॥१२८॥
यौवनं जीवितं चित्तं छाया लक्ष्मीश्च स्वामिता ।
चञ्चलानि षडेतानि ज्ञात्वा धर्मरतो भवेत् ॥ १२९ ॥
अदानेनापमानेन छलाच्च कटुवाक्यतः ।

---

न्तरादागतां नाहं त्वां ग्रहीष्यामि अहं रामो न यः राक्षसगृहस्थितां सीतां परिजग्राहेति कथयतः कस्यचिद्रजकस्य मुखात् गूढचारेण सीतापवादं श्रुत्वा रामाय कथितं रामश्च तच्छ्रवणात् सीतापरित्यक्तेति वार्त्ता-त्वानुसन्धेया ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥

समक्षमिति । किमिति । लोकः राज्ञः गुरु महदपि दूषणं भयात् समक्षं न वक्ति, हि यतः विष्णुमुख्याः नारायणप्रभृतयः देवा वै अपि स्तुतिप्रियाः स्तवसन्तुष्टा भवन्तीति शेषः इति श्रुतिः वेदवचनम् । मनुजाः मानवाः किं पुनः, स्तवेनैव सर्वे सन्तुष्यन्ति दोषवादेन नेति फलितार्थः इत्यतः अस्मात् कारणात् नित्यं सततं क्रोधः निन्दाजः निन्दया जायते इत्यर्थः अतः निन्दा नैव कर्त्तव्येति भावः । राजा सदा शोभनः सुनियतत्वात् सुन्दरः भागः विभागः यत्र तत् सुव्यवस्थमिति यावत् यथा तथा दण्डयतीति तथोक्तः, सुक्षमी अतिक्षमावान् तथा रञ्जकः लोकानामिति शेषः स्यात् भवेत् ॥ १२७ ॥ १२८ ॥

यौवनमिति । यौवनं तारुण्यं जीवितं जीवनं चित्तं मनः छाया अनातपं लक्ष्मीः श्रीः तथा स्वामिता ऐश्वर्य्यम् एतानि षट् चञ्चलानि अस्थिराणि ज्ञात्वा धर्मरतः धर्मनिष्ठः भवेत् ॥ १२९ ॥

अदानेनेति । प्रजा राज्ञः अदानेन अयथोचितदानेन दान-

राज्ञः प्रबलदण्डेन नृपं मुष्णाति वै प्रजा ॥ १४० ॥
विपरीतगुणैरेभिः सान्वयारज्यते प्रजा ।
एकस्तनोति दुष्कीर्त्तिं दुर्गुणः सकलो नु किम् ॥ १४१ ॥
मृगयाक्षास्तथा पानं गर्हितानि महीभुजाम् ।
दृष्टास्तेभ्यस्तु विपदो पाण्डुनैषधवृष्णिषु ॥ १४२ ॥
कामक्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥ १४३ ॥
दण्डक्यो नृपतिः कामात् क्रोधाच्च जनमेजयः ।
लोभादैलस्तु राजर्षिर्मोहाद् वातापिरासुरः ॥ १४४ ॥

---

राहित्येन वा अपमानेन अवमाननया, लेशात् कापट्यात्, कटुवाक्यतः दुर्वचसा तथा प्रबलदण्डेन गुरुतरदण्डविधानेन नृपं मुष्णाति त्यजति ॥ १४० ॥

विपरीतेति । एभिः विपरीतैः गुणैः पूर्वोक्तैः अदानादिभिर्दुर्गुणैरित्यर्थः सान्वया सपुत्रपौत्रादिः प्रजा आरज्यते विरज्यते इत्यर्थः । अथवा एभिर्विपरीतगुणैः दानमानादिभिः रज्यते अनुरागमाप्नोतीत्यर्थः । एको दुर्गुणः दोषः दुष्कीर्त्तिं तनोति, नु भोः सकलः बहवः दुर्गुणाः किं वक्तव्यम् इत्यर्थः ॥ १४१ ॥

मृगयेति । मृगया, अक्षाः द्यूतानि, तथा पानं मद्यपानम् एतानि महीभुजां राज्ञां गर्हितानि निन्दितानि, तेभ्यः त्रिभ्यः पाण्डुनैषधवृष्णिषु पाण्डवनलयादवेषु विपदः दृष्टाः ॥ १४२ ॥

काम इति । कामः विषयाभिलाषः क्रोधः, मोहः लोभः मानः तथा मदः गर्वः एनं षड्वर्गम् उत्सृजेत् त्यजेत् राजेति शेषः, अस्मिन् षड्वर्गे कामादिके त्यक्ते सति नृपः सुखी भवति ॥ १४३ ॥

दण्डक्य इति । पौरव इति । एते दण्डक्यादयः राजानः अमुं षड्वर्गं यथारूपं षड्वर्गं कामादिकम् आश्रिताः सन्तः विनाशं प्रयाताः गताः । तथाहि दण्डक्यः नृपतिः कामात्, जनमेजयः

पौलस्त्यो राक्षसो मानान्मदाद् दम्भोद्भवो नृपः ।
प्रयाता निधनं ह्येते अनुषड्वर्गमाश्रिताः ॥ १४५ ॥
अनुषड्वर्गमुत्सृज्य जामदग्न्यः प्रतापवान् ।
अम्बरीषो महाभागो बुभुजाते चिरं महीम् ॥ १४६ ॥
वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् ।
निगृहीतेन्द्रियग्रामः कुर्वीत गुरुसेवनम् ॥ १४७ ॥
शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिः सतां भवति सम्मतः ॥ १४८ ॥
प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्य्येषु प्रवर्त्तते ।
श्रुत्वा खल्वा लोकतत्त्वं मनसा साधुनिश्चितम् ॥ १४९ ॥

---

क्रोधात् ऐलः इलातनयः राजर्षिः लोभात् आसुरः असुर एव आसुरः स्वार्थे अण्प्रत्ययः । वातापिः मोहात् अज्ञानात्, पौलस्त्यः पुलस्त्यतनयः राक्षसः रावणः मानात् तथा दम्भोद्भवः दम्भपुत्रः नृपः मदात् गर्वात् निधनं प्रयाता इत्यनेनान्वयः । एतेषामिति वृत्तानि पुराणेषु अनुसन्धेयानि ॥ १४४ ॥ १४५ ॥

अनुषड्वर्गमिति । प्रतापवान् जमदग्नेरपत्यं पुमान् जामदग्न्यः परशुरामः तथा महाभागः अम्बरीषः अनुषड्वर्गम् उत्सृज्य त्यक्त्वा चिरं महीं पृथ्वीं बुभुजाते भुक्तवन्तौ ॥ १४६ ॥

वर्द्धयन्निति । इह जगति सद्भिः साधुभिः सेवितौ अनुष्ठितौ धर्मार्थौ आदरात् यत्नात् निगृहीतेन्द्रियग्रामः जितेन्द्रियः सन् वर्द्धयन् सेवमानः गुरूणां वृद्धानां सेवनं कुर्वीत ॥ १४७ ॥

शास्त्रायेति । शास्त्राय शास्त्रज्ञानाय गुरुसंयोगः वृद्धसेवनं, विनयवृद्धये शास्त्रं शास्त्रानुशीलनं प्रभवतीति शेषः, विद्याविनीतः शास्त्रविद् विनीतश्च नृपतिः सतां साधूनां सम्मतः प्रियो भवति ॥ १४८ ॥

प्रेर्यमाण इति । वर्द्धिति । यः महीपतिः असद्वृत्तैः दुर्वृत्तैः

यत् कर्म धर्मसंज्ञं तद् व्यवस्यति च पण्डितः।
आददानप्रतिदानकलासम्यक् महीपतिः ॥ १५० ॥
जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः।
भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्त्तयश्च नभःस्पृशः ॥ १५१ ॥
आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता अभ्यसेद् नृपतिः सदा ॥ १५२ ॥
आन्वीक्षिक्यां तर्कशास्त्रं वेदान्ताद्यं प्रतिष्ठितम्।
त्रय्यां धर्मो ह्यधर्मश्च कामोऽकामः प्रतिष्ठितः ॥ १५३ ॥
अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ।

---

युक्तैः पौर्व्वापर्य्योऽपि अकार्य्येषु अकृत्य कार्य्येषु न प्रवर्त्तते तथा श्रुत्या वेदेन स्मृत्या धर्मसंहितया लोकतः आचारेण समयात् च साधु निश्चितं सुनिश्चितं यत् धर्मसंज्ञं कर्म धर्मकार्य्यं तत् व्यवस्यति सेवते च, यश्च आददानप्रतिदानयोः ग्रहणप्रत्यर्पणयोः आङ्पूर्वकात् दाधातोः भावे ल्युट्प्रत्ययः। कलासु विभागेषु कुत्र किं दानं कर्त्तव्यं कुतो वा किं ग्रहीतव्यमित्येवं रूपासु सम्यक् सुविचक्षणः स पण्डितः ॥ १४९ ॥ १५० ॥

जितेन्द्रियस्येति। जितेन्द्रियस्य नीतिशास्त्रानुसारिणः नृपतेः लक्ष्म्यः श्रियः सम्पद इत्यर्थः उज्ज्वलिता उन्नताः तथा कीर्त्तयश्च नभःस्पृशः आकाशस्पर्शिन्यः सुदूरव्यापिन्य इत्यर्थः भवन्ति ॥ १५१ ॥

आन्वीक्षिकीति। आन्वीक्षिकी, त्रयी, वार्त्ता, दण्डनीतिश्च एषा चतुर्विधा शाश्वती चिरन्तनी विद्या इति शेषः, राजा सदा एतावतश्च एव विद्याः अभ्यसेत् शिक्षेत ॥ १५२ ॥

आन्वीक्षिक्यामिति। आन्वीक्षिक्यां विद्यायां वेदान्ताद्यं वेदान्तप्रभृति तर्कशास्त्रं न्यायशास्त्रं प्रतिष्ठितं समर्पितं, त्रय्याम् ऋग्यजुःसामरूपायां श्रुतौ इत्यर्थः धर्मः अधर्मश्च कामः अकामश्च प्रतिष्ठितः समर्पितः ॥ १५२ ॥

वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ॥ १५४ ॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रपुराणानि त्रयीदं सर्वमुच्यते ॥ १५५ ॥
कुसीदकृषिवाणिज्यं गोरक्षा वार्त्तयोच्यते ।
सम्पन्नो वार्त्तया साधुर्न वृत्तेर्भयमृच्छति ॥ १५६ ॥
दमो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः ।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥ १५७ ॥

---

अर्थेति । वार्त्तायां अर्थानर्थौ अर्थश्च अनर्थश्च अर्थोपार्जनानर्थनिवारणोपायावित्यर्थः, दण्डनीत्याम् नयश्च नयश्च नयमार्गेण प्रवर्त्तनम् अनये दण्डनमित्येवंरूपौ इत्यर्थः प्रतिष्ठिताविति शेषः । वर्णाः ब्राह्मणादयः सर्वाश्रमाः सर्वे आश्रमाः ब्रह्मचारिप्रभृतयश्च आसु चतसृषु विद्यासु प्रतिष्ठिताः नियतं स्थिता इत्यर्थः ॥ १५४ ॥

अङ्गानीति । अङ्गानि शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषाणि चत्वारः वेदाः ऋग्यजुःसामाथर्वाख्याः, मीमांसा, न्यायविस्तरः तर्कप्रपञ्चः, धर्मशास्त्राणि मन्वादिप्रणीतानि, पुराणानि ब्राह्मादीनि इदं सर्वं त्रयी उच्यते त्रयीमध्ये न अङ्गानि शास्त्राणि बोद्धव्यानीत्यर्थः ॥ १५५ ॥

कुसीदेति । वार्त्तया पूर्वोक्तया अर्थानर्थवाच्यया कुसीदं वृद्धिव्यवहारः कृषिः वाणिज्यं तथा गोरक्षा गवां रक्षा उपलक्षणमेतत् पशुपालनमित्यर्थः उच्यते, साधुर्जनः वार्त्तया विद्यया सम्पन्नः युक्तः वृत्तेः जीविकाया भयं न ऋच्छति न प्राप्नोति सुखेन जीवनं यापयतीति भावः ॥ १५६ ॥

दम इति । दण्डः दमः दुष्टदमनमित्यर्थः इति ख्यातः प्रसिद्धः तस्मात् महीपतिः दण्डः दमनकारित्वात् दण्ड इति कार्यकारणयोरभेदोपचारः । तस्य महीपतेः नीतिः दण्डनीतिः, नयनात् दुष्टादुष्टनिर्णयात् नीतिः उच्यते कथ्यते ॥ १५७ ॥

आन्वीक्षिक्यात्मविज्ञानाद्धर्षशोकौ व्युदस्यति ।
उभौ लोकाववाप्नोति त्रय्यां तिष्ठन् यथाविधि ॥१५८॥
आनृशंस्यं परो धर्मः सर्वप्राणभृतां यतः ।
तस्माद्राजानृशंस्येन पालयेत् कृपणं जनम् ॥ १५९ ॥
न हि स्वसुखमन्विच्छन् पीडयेत् कृपणं जनम् ।
कृपणः पीड्यमानः स्वमन्युना हन्ति पार्थिवम् ॥ १६० ॥
सुजनैः सङ्गतं कुर्य्याद्धर्माय च सुखाय च ।
सेव्यमानस्तु सुजनैर्महानतिविराजते ॥ १६१ ॥
हिमांशुमाली च यथा नवोत्फुल्लोत्पलं सरः ।
आनन्दयति चेतांसि तथा सुजनचेष्टितम् ॥ १६२ ॥

---

आन्वीक्षिक्येति । आन्वीक्षिक्या विद्यया आत्मविज्ञानात् आत्मावबोधात् हर्षशोकौ व्युदस्यति त्यजति जन इति शेषः, आत्मज्ञाने सति शुभाशुभहर्षशोकौ भवत इति भावः । तथा त्रय्यां विद्यायां यथाविधि तिष्ठन् यथाविधि त्रयीमनुवर्त्तमानः उभौ लोकौ ऐहिकपारत्रिकञ्च प्राप्नोति ॥ १५८ ॥

आनृशंस्यमिति । यतः सर्व्वेषां प्राणभृतां देहिनाम् आनृशंस्यं दया परमः धर्मः उक्त इति शेषः, तस्मात् राजा आनृशंस्येन अनुकम्पया कृपणं दीनं जनं पालयेत् ॥१५९ ॥

न हीति । स्वं निजं सुखम् अन्विच्छन् कृपणं दीनं जनं न हि पीडयेत्, पीड्यमानः कृपणः दीनः स्वमन्युना निजेन मन्युना पार्थिवं राजानं हन्ति नाशयति ॥ १६० ॥

सुजनैरिति । महान् जनः धर्माय सुखाय च सुजनैः साधुभिः सङ्गतं संसर्गं कुर्य्यात्, सुजनैः सेव्यमानस्तु अतिविराजते, अधिकं शोभते ॥ १६१ ॥

ग्रीष्मसूर्यांशुसन्तप्तमुद्वेजनमनाश्रयम् ।
मरुस्थलमिवात्यर्थं त्यजेद् दुर्जनसङ्गतम् ॥ १६३ ॥
निश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः ।
वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः ॥ १६४ ॥
क्रियतेऽभ्यर्हणीयाय सुजनाय यथाञ्जलिः ।
ततः साधुतरः कार्यो दुर्जनाय हितार्थिना ॥ १६५ ॥
नित्यं मनोऽपहारिण्या वाचा प्रह्लादयेज्जगत् ।
उद्वेजयति भूतानि क्रूरवाग् धनदोऽपि सन् ॥ १६६ ॥

---

हिमांश्विति । हिमांशुमाली चन्द्रः यथा समानि उत्फुल्लानि उत्पलानि कुमुदानि यस्मिन् तादृशं सरः आनन्दयति शोभयति, तथा सज्जनानां साधूनां चेष्टितम् आचरितं चेतांसि मनांसि आनन्दयति ॥ १६२ ॥

ग्रीष्मेति । ग्रीष्मे निदाघे ये सूर्यांशवः रविकिरणाः तैः सन्तप्तम् उद्वेजनं भीतिजनकम् अनाश्रयम् आश्रयरहितम् अनावृतमित्यर्थः मरुस्थलमिव मरुभूमिमिव उद्वेगम् अतिभयङ्करं दुर्जनसङ्गतम् असाधुसङ्गं त्यजेत् ॥ १६३ ॥

निश्वासेति । निश्वासेन उद्गीर्णः यः हुतभुक् अग्निः तस्य धूमेन धूम्रीकृतानि कृष्णीकृतानि आननानि मुखानि येषां तादृशैः आशीविषैः भुजङ्गैः वरं सङ्गं कुर्यात् दुर्जनैः न त्वेव यतः विषधरसङ्गादपि दुर्जनसङ्गो भयावह इति भावः ॥ १६४ ॥

क्रियते इति । अभ्यर्हणीयाय पूज्याय सुजनाय यथा अञ्जलिः क्रियते, यथा बद्धाञ्जलिना सुजनः सेव्य इत्यर्थः, हितार्थिना जनेन दुर्जनाय ततः तस्मादपि साधुतरः अञ्जलिः कार्यः समधिकबद्धाञ्जलिना दुर्जनः सेव्य इत्यर्थः, चाटुवचनैः परितोष्य दुर्जनः परिहर्त्तव्य इति भावः ॥ १६५ ॥

नित्यमिति । मनोहारिण्या मधुरया वाचा नित्यं सततं जगत्

हृदि विद्ध इवात्यर्थं यया संतप्यते जनः ।
पीड़ितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ १६७ ॥
प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु च ।
शिखीव केकामधुरां वाचं ब्रूते जनप्रियः ॥ १६८ ॥
मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।
हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥ १६९ ॥
ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृतम् ।
श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥ १७० ॥

---

प्रह्लादयेत् सन्तोषयेत्, क्रूरा कर्कशा वाक् यस्य तादृशः जनः घनदः सर्वदोऽपि सर्वभूतानि प्राणिनः उद्वेजयति तापयति ॥ १६६ ॥

हृदीति । जनः यया वाचा हृदि विद्ध इव अत्यर्थम् अतिमात्रं सन्तप्यते, मेधावी बुद्धिमान् जनः पीड़ितोऽपि परैरभिद्रुतोऽपि तां वाचं निठुरां वाणीं न उदीरयेत् न कथयेत् ॥ १६७ ॥

प्रियमेवेति । सत्सु सज्जनेषु द्विषत्सु शत्रुषु अपि प्रियमेव न तु अप्रियम् एवकारोऽन्यव्यवच्छेदकः । नित्यं सततम् अभिधातव्यं वक्तव्यम् । जनप्रियः लोकः शिखी मयूरः केकामिव मधुरां वाचं ब्रूते कथयति ॥ १६८ ॥

मदेति । विपश्चितां विदुषां वाचः यथा हरन्ति मन इति शेषः, मदरक्तस्य हंसस्य कोकिलस्य तथा शिखण्डिनः मयूरस्य वाचः तथा न ॥ १६९ ॥

ये इति । ये जनाः प्रियं सत्कृतं प्रशंसावादरूपं सत्कारम् इच्छन्ति प्रियाणि वचनानि प्रभाषन्ते वदन्ति प्रियवादिनः प्रियसत्काराकाङ्क्षी इति भावः, ते नरविग्रहाः मानवदेहधारिणः श्रीमन्तः वन्द्यं चरितं येषां तादृशाः महनीयचरिता देवाः सन्त्यपि इति शेषः ॥ १७० ॥

न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानञ्च मधुरा च वाक् ॥ १७१ ॥
श्रुतिरास्तिक्यपूतात्मा पूजयेद् देवतां सदा ।
देवतावद् गुरुजनमात्मवच्च सुहृज्जनान् ॥ १७२ ॥
प्रणिपातेन हि गुरून् सतोऽनूचानवेष्टिताः ।
कुर्वीताभिमुखान् देवान् भूत्यै सुकृतकर्मणा ॥ १७३ ॥
सद्भावेन हरेन्मित्रं सद्भावेन च बान्धवान् ।
स्त्रीभृत्यौ प्रेममानाभ्यां दाक्षिण्येनेतरं जनम् ॥ १७४ ॥
बलवान् बुद्धिमान् शूरो यो हि युक्तपराक्रमी ।
विस्तपूर्णां महीं भुङ्क्ते स भूपो भूपतिर्भवेत् ॥ १७५ ॥

---

न हीति । त्रिषु लोकेषु ईदृशं संवननं वशीकरणं न हि नैव विद्यते इत्यर्थः, यथा भूतेषु दया, मैत्री, सौहृद्यं, दानं तथा मधुरा वाक् ॥ १७१ ॥

श्रुतिरिति । आस्तिक्यपूतात्मा ईश्वरे भक्तिमान् सन् सदा देवतां देवतावत् गुरुजनान् तथा आत्मवत् सुहृज्जनान् बन्धून् पूजयेत् इति श्रुतिरस्तीति शेषः ॥ १७२ ॥

प्रणिपातेनेति । अनूचानैः साङ्गवेदविद्भिः सुपण्डितैरित्यर्थः, अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य इत्यमरः, वेष्टितः परिवृतः सन् प्रणिपातेन सतः साधून् गुरून् गुरुजनान् तथा भूत्यै मङ्गलाय सुकृतकर्मणा शोभनेन कार्य्येण देवान् अभिमुखान् अनुकूलान् कुर्वीत ॥ १७२ ॥

सद्भावेनेति । सद्भावेन मित्रं सद्भावेन बान्धवान्, प्रेममानाभ्यां प्रेम्णा सम्मानेन च स्त्रीभृत्यौ स्त्रीं भृत्यं परिजनवर्गं तथा दाक्षिण्येन औदार्य्येण च इतरं जनं हरेत् वशीकुर्य्यात् ॥ १७४ ॥

बलवानिति । यः भूपः बलवान् बुद्धिमान् शूरः प्रतापवान् तथा

पराक्रमो बलं बुद्धिः शौर्यमेते वरा गुणाः ।
एभिर्हीनोऽन्यगुणयुग् महीभुक् सधनोऽपि च ॥ १७६ ॥
महीं स्वल्पां नैव भुङ्क्ते द्रागवराज्याद् विनश्यति ।
महाधनाच्च नृपतेर्विभात्यल्पोऽपि पार्थिवः ॥ १७७ ॥
अव्याहतास्त्रस्तेजस्वी एभिरेव गुणैर्भवेत् ।
राज्ञः साधारणास्त्वन्ये न शक्ता भूप्रसाधने ॥ १७८ ॥
खनिः सर्वधनस्येयं देवदैत्यविमर्दिनी ।
भूम्यर्थे भूमिपतयः स्वात्मानं नाशयन्त्यपि ॥ १७९ ॥
उपभोगाय च धनं जीवितं येन रक्षितम् ।

---

युक्तपराक्रमी युक्तम् उचितं यथा तथा पराक्रमते इति तादृशः भवेत्, स भूपतिः समग्रपृथिवीपतिः समाक्रान्तवर्गः सन् निःशेषां महीं भुङ्क्ते ॥ १७५ ॥

पराक्रम इत्यादि । पराक्रमः बलं बुद्धिः तथा शौर्यम् एते वराः श्रेष्ठाः गुणाः, एभिर्गुणैः हीनः अन्यगुणयुक् महीभुक् राजा सधनोऽपि धनवानपि स्वल्पामपि महीं नैव भुङ्क्ते, प्रत्युत द्राग् शीघ्रं द्रागेतदव्ययम् । राज्यात् विनश्यति भ्रश्यति । तथा राजा एभिः पराक्रमादिभिः गुणैः उपलक्षितः अव्याहतास्त्रः अस्खलितनिदेशः तथा तेजस्वी भवेत् यः अल्पोऽपि अल्पधनोऽपि पार्थिवः महाधनात् एतद्गुणहीनात् नृपतेः अपेक्षार्थे पञ्चमी । विभाति शोभते । अन्ये साधारणाः सामान्याः जनाः भूप्रसाधने पृथिवीवशीकरणे न शक्ताः न समर्थाः ॥ १७६ ॥ १७७ ॥ १७८ ॥

खनिरिति । इयं देवदैत्यविमर्दिनी सुरासुरविध्वंसिनी भूमिः यस्याः कृते बहुशः सुरासुरविमर्दो जात इति भावः सर्वधनस्य खनिः आकरः, भूमिपतयः राजानः भूम्यर्थे यस्या एव भूमेः कृते इत्यर्थः स्वात्मानं स्वदेहम् अपि नाशयन्ति ॥ १७९ ॥

उपभोगायेति । येन उपभोगाय धनं जीवितञ्च रक्षितं किन्तु भू-

न रक्षिता तु भूर्येन किं तस्य धनजीवितैः ॥ १८० ॥
न यथेष्टव्ययायालं सञ्चितं तु धनं भवेत् ।
सदागमाद् विना यस्य कुबेरस्यापि नाञ्जसा ॥ १८१ ॥
पूज्यस्त्वेभिर्गुणैर्भूपो न भूपः कुलसम्भवः ।
न कुले पूज्यते यादृग् बलशौर्य्यपराक्रमैः ॥ १८२ ॥
लक्षकर्षमितो भागो राजतो यस्य जायते ।
वत्सरे वत्सरे नित्यं प्रजानान्त्वविपीड़नैः ॥ १८३ ॥
सामन्तः स नृपः प्रोक्तो यावल्लक्षत्रयावधि ।
तदूर्द्धं दशलक्षान्तो नृपो माण्डलिकः स्मृतः ॥ १८४ ॥

---

पृथिवी न रक्षिता, तस्य धनजीवितैः धनैः जीवनेन किम् ? न किमपि प्रयोजनमित्यर्थः ॥ १८० ॥

नेति । यस्यापि जनस्य सञ्चितं धनं सदागमात् नित्यधनलाभं विना यथेष्टव्ययाय अलं समर्थं न भवेत्, कुबेरस्यापि अञ्जसा तत्त्वतः न अन्यस्य किं पुनरिति भावः, यथेच्छव्यये सति सञ्चितं धनम् अचिरात् क्षीयते, यादृग्व्ययं तादृगायश्चेत् सर्वदा आगमो न स्यादिति फलितार्थः ॥ १८१ ॥

पूज्य इति । एभिः पूर्वोक्तैः पराक्रमादिभिः गुणैः उपलक्षितस्तु भूपः पूज्यः प्रशंसनीयः, कुलसम्भवः राजवंशप्रसूतस्तु भूपः न पूज्यः राजवंशप्रसूतत्वमेव न पूज्यत्वे निदानमिति भावः । बलशौर्य्यपराक्रमैः यादृक् पूज्यते, कुले कुलजातत्वे तादृक् न ॥ १८२ ॥

लक्षेति । सामन्त इति । यस्य वत्सरे वत्सरे प्रतिवत्सरं प्रजानाम् अविपीड़नैः पीड़नं विना नित्यं निश्चितं लक्षकर्षमितः लक्षकर्षपरिमितः राजतः भागः रौप्यमुद्राकरूपराजस्वं जायते सः सामन्तः प्रोक्तः कथितः, लक्षत्रयावधि यावत् लक्षत्रितयपरिमितरौप्यमुद्राकरूपराजस्वं यस्य प्रतिवत्सरम् उत्पद्यते स नृपः, तदूर्द्धं दशलक्षान्तः लक्षत्रयोर्द्ध्वा-

तदूर्द्ध्वन्तु भवेद्राजा यावद् विंशतिलक्षकः ।
पञ्चाशल्लक्षपर्य्यन्तो महाराजः प्रकीर्त्तितः ॥ १८५ ॥
ततस्तु कोटिपर्य्यन्तः स्वराट् सम्राट् ततः परम् ।
दशकोटिमितो यावद् विराट् तु तदनन्तरम् ॥ १८६ ॥
पञ्चाशत्कोटिपर्य्यन्तः सार्वभौमस्ततः परम् ।
सप्तद्वीपा च पृथिवी यस्य वश्या भवेत् सदा ॥ १८७ ॥
स्वभागभृत्या दास्यत्वे प्रजानाञ्च नृपः कृतः ।
ब्रह्मणा स्वामिरूपस्तु पालनार्थं हि सर्वदा ॥ १८८ ॥

---

र्वधिदशलक्षपर्य्यन्तराजस्वं यस्य प्रतिवत्सरम् उत्पद्यते स नृपः माण्डलिकः स्मृतः कथितः ॥ १८३ ॥ १८४ ॥

तदूर्द्ध्वमिति । तदूर्द्ध्वं यावद्विंशति लक्षकः एकादशलक्षावधिविंशतिलक्षपर्य्यन्ताधिपतिरित्यर्थः राजा भवेत् । तदूर्द्ध्वं पञ्चाशल्लक्षपर्य्यन्तः एकविंशल्लक्षावधिपञ्चाशल्लक्षपर्य्यन्ताधिपतिः महाराजः प्रकीर्त्तितः कथितः ॥ १८५ ॥

तत इति । पञ्चाशदिति । ततः तदूर्द्ध्वं कोटिपर्य्यन्तः एकपञ्चाशदर्वधिकोटिपर्य्यन्ताधिपतिः स्वराट्, ततः तदूर्द्ध्वं दशकोटिमितः कोटिद्वयावधिदशकोटिपर्य्यन्ताधिपतिः सम्राट्, तदनन्तरं पञ्चाशत्कोटिपर्य्यन्तः एकादशकोट्यवधिपञ्चाशत्कोटिपर्य्यन्ताधिपतिः विराट् भवति । ततःपरं सप्तद्वीपा पृथिवी यस्य सदा वश्या वशं गता भवेत् सः सार्वभौमः सर्वभूमीश्वरः चक्रवर्त्तीत्यर्थः भवेत् ॥ १८६ ॥ १८७ ॥

स्वभागेति । ब्रह्मणा विधात्रा स्वभागः राजप्राप्यांशः एव भृतिः वेतनं तया प्रजानां दास्यत्वे किङ्करत्वे स्थित इति शेषः नृपः सर्वदा प्रपालनार्थं प्रजानामेव रक्षणार्थं हि स्वामिरूपः कृतः कल्पित इत्यर्थः; राज्ञः राजस्वरूपवेतनग्रहणात् प्रजानां भृत्यत्वं रक्षणकारित्वाद् स्वामित्वञ्चेति भावः ॥ १८८ ॥

सामन्तादिसमा ये तु भृत्या अधिकृता भुवि ।
ते तु सामन्तसंज्ञाः स्यू राजभागहराः क्रमात् ॥ १८९ ॥
सामन्तादिपदभ्रष्टास्तत्तुल्यं भृतिपोषिताः ।
महाराजादिभिस्ते तु हीनसामन्तसंज्ञकाः ॥ १९० ॥
शतग्रामाधिपो यस्तु सोऽपि सामन्तसंज्ञकः ।
शतग्रामे चाधिकृतोऽनुसामन्तो नृपैश्च सः ॥ १९१ ॥
अधिकृतो दशग्रामे नायकः स च कीर्त्तितः ।
आशापालोऽयुतग्रामभागभाक् च स्वराडपि ॥ १९२ ॥
भवेत् क्रोशात्मको ग्रामो रूप्यकर्षसहस्रकः ।

---

सामन्तेति । ये तु भुवि पृथिव्यां भृत्या वेतनेन जीविनस्तु निर्द्दिष्टमूल्येनेत्यर्थः अधिकृताः प्रजानां पालनकर्म्मणि नियुक्ता इत्यर्थः ते सामन्तादिसमाः सामन्तादीनां पूर्व्वोक्तानां समाः समानकार्य्यकारिण इत्यर्थः । ते तु क्रमात् यथाक्रमं राजभागहराः राजप्राप्यांशहारिणः सामन्तसंज्ञाः सामन्तादिनामधारिणो न भवन्तीति शेषः ॥ १८९ ॥

सामन्तेति । ये तु सामन्तादिपदेभ्यो भ्रष्टाः विच्युताः अपि महाराजादिभिः तत् तुल्यं यथा तथा भृत्या वेतनेन पोषिताः पालिताः भवन्ति ते तु हीनसामन्तसंज्ञकाः हीनसामन्ता इति कथिताः ॥ १९० ॥

शतेति । यस्तु शतग्रामाणाम् अधिपः, सोऽपि सामन्तसंज्ञकः सामन्त इति कथितः । यस्तु नृपैश्च शतग्रामे अधिकृतः नियुक्तः, सः अनुसामन्तः उक्त इति शेषः स्वायत्तपरायत्ततया भेद इति भावः ॥१९१॥

अधिकृत इति । यः दशग्रामे अधिकृतः इमानां ग्रामाणां रक्षणकर्म्मणि नियुक्त इत्यर्थः सः नायकः कीर्त्तितः । यस्तु अयुतग्रामाणां दशसहस्रग्रामाणां भागभाक् राजस्वग्राही, सः आशापालः दिक्पालः तथा स्वराट् अपि कीर्त्तित इति शेषः ॥ १९२ ॥

भवेदिति । क्रोशात्मकः क्रोशैकपरिमितः रूप्यकर्षसहस्रकः

ग्रामार्द्धकं पल्लिसंज्ञं पल्ल्यर्द्धं कुम्भसंज्ञकम् ॥ १९३ ॥
करैः पञ्चसहस्रैर्वा क्रोशः प्रोक्तः प्रजापतेः ।
हस्तैश्चतुःसहस्रैर्वा मनोः क्रोशस्य विस्तरः ॥ १९४ ॥
सार्द्धद्विकोटिहस्तैश्च क्षेत्रं क्रोशस्य ब्रह्मणः ।
पञ्चविंशशतैः प्रोक्तं क्षेत्रैस्तद्धि निवर्त्तनम् ॥ १९५ ॥
मध्यमामध्यमपर्वदैर्घ्यं यच्च तदङ्गुलम् ।
यवोदरैरष्टभिस्तद् दैर्घ्यं स्थौल्यन्तु पञ्चभिः ॥ १९६ ॥
चतुर्विंशत्यङ्गुलैस्तैः प्राजापत्यः करः स्मृतः ।
स श्रेष्ठो भूमिमाने तु तदन्यास्त्वधमा मताः ॥ १९७ ॥

---

बहुवरौप्यसुवर्णाढ्यः भूभागः ग्रामो भवेत्, ग्रामार्द्धकम् अर्द्धग्रामः पल्लिसंज्ञं पल्लीति नाम्ना प्रसिद्धं, तथा पल्ल्यर्द्धम् अर्द्धपल्ली कुम्भसंज्ञकं कुम्भनाम्ना प्रसिद्धम् ॥ १९३ ॥

करैरिति । पञ्चसहस्रैः करैः हस्तैः परिच्छिन्नः भूभागः क्रोशः प्रजापतेः प्रोक्तः कथितः, प्रजापतेरिति वर्त्तमानक्तप्रत्यययोगे कर्त्तरि षष्ठी । चतुःसहस्रैः हस्तैः क्रोशस्य विस्तरः परिमाणं मनोः प्रोक्त इति अध्याहार्य्यम्, अत्रापि मनोरिति कर्त्तरि षष्ठी ॥ १९४ ॥

सार्द्धेति । सार्द्धद्विकोटिहस्तैः क्रोशस्य क्षेत्रं क्रोशमिता भूरिति, तथा पञ्चविंशशतैः क्षेत्रैः क्रोशमितभूभागैः तत् हि प्रसिद्धं निवर्त्तनं नाम ब्रह्मणः प्रोक्तं, ब्रह्मण इति कर्त्तरि षष्ठी ॥ १९५ ॥

मध्यमेति । मध्यमाया अङ्गुल्याः मध्यमं यत् पर्व तस्य दैर्घ्यं दीर्घपरिमाणं तत् अङ्गुलम् उक्तमिति शेषः, तथा अष्टभिः यवानाम् उदरैः मध्यभागैः दैर्घ्यं दैर्घ्ये परिमितं, तथा पञ्चभिः यवोदरैः स्थौल्यं स्थूलत्वे परिच्छिन्नमित्यर्थः यत् तदपि अङ्गुलमिति केषाञ्चिन्मतमिति भावः ॥ १९६ ॥

चतुर्विंशेति । तैः चतुर्विंशत्या अङ्गुलैः प्राजापत्यः प्रजापतिसम्मतः

चतुःकरात्मको दण्डो लगुः पञ्चकरात्मकः ।
तदङ्गुलं पञ्चयवैर्मोक्षं मानमिव तत् ॥ १९८ ॥
वसुषण्मुनिसंख्याकैर्यवैर्दण्डः प्रजापतेः ।
यवोदरैः षट्शतैस्तु मानवो दण्ड उच्यते ॥ १९९ ॥
पञ्चविंशतिभिर्दण्डैरुभयोस्तु निवर्त्तनम् ।
त्रिंशच्छतैरङ्गुलैर्वै त्रिपञ्चसहस्रकैः ॥ २०० ॥
सपादशतहस्तैर्वा मानवन्तु निवर्त्तनम् ।
ऊनविंशतिसाहस्रैर्द्विशतैश्च यवोदरैः ॥ २०१ ॥

---

करः हस्तः स्मृतः । भूमिमाने भूपरिमाणे तु यः करः श्रेष्ठः, तदन्यास्तु कराः अधमाः मताः कथिताः ॥ १९७ ॥

चतुरिति । चतुःकरात्मकः चतुर्हस्तमितः परिमाणविशेषः दण्डः, पञ्चकरात्मकस्तु लगुः लगुसंज्ञया कथितः । तस्य दण्डस्य लगोर्वा अङ्गुलं पञ्चभिर्यवैः परिच्छिन्नमिति शेषः, तत् मानवं मनुसम्मतं मानं परिमाणम् अथवा मानवं मनुप्रवर्त्तितमित्यर्थः ॥ १९८ ॥

वस्विति । वसुषण्मुनिसंख्याकैः ७६८ अष्टषष्ट्यधिकसप्तशतसंख्यैरित्यर्थः यवैः एकैकशः स्थापितैः परिच्छिन्नः परिमाणविशेषः भवतीति शेषः इति प्रजापतेर्मतमित्यर्थः, षट्शतैः यवानाम् उदरैः मध्यभागैः एकैकशः स्थापितैरिति भावः परिच्छिन्नः परिमाणविशेषः मानवः दण्ड उच्यते ॥ १९९ ॥

पञ्चविंशतीति । उभयोः दैर्घ्यविस्तारयोः यथाक्रमं त्रिंशच्छतैः दैर्घ्ये त्रिंशच्छताङ्गुलपरिमितैरित्यर्थः विस्तारे च त्रिपञ्चसहस्रैः यवैः त्रिपञ्चसहस्रयवपरिमितैः पञ्चविंशतिभिः दण्डैः निवर्त्तनं भवति ॥२००॥

सपादेति । सपादशतहस्तैः पञ्चविंशत्यधिकशतहस्तैः वा ऊनविंशतिसाहस्रैः द्विशतैश्च द्विशताधिकेन न विंशतिसहस्रैः यवोदरैः एकशः स्थापितैः यवमध्यभागैः मानवं मनुप्रोक्तं निवर्त्तनं परिमाणविशेषः इत्यर्थः भवति ॥ २०१ ॥

चतुर्विंशतितैरेव ह्यङ्गुलैश्च निवर्त्तनम् ।
प्राजापत्यन्तु कथितं शतैश्चैव करैः सदा ॥ २०२ ॥
सपादषट्शता दृष्टा उभयोश्च निवर्त्तने ।
निवर्त्तनान्यपि सदोभयोर्वै पञ्चविंशतिः ॥ २०३ ॥
पञ्चसप्ततिसाहस्रैरङ्गुलैः परिवर्त्तनम् ।
मानवं षष्टिसाहस्रैः प्राजापत्यं तथाङ्गुलैः ॥ २०४ ॥
पञ्चविंशाधिकैर्हस्तैरेकविंशच्छतैर्मतो: ।
परिवर्त्तं समाख्यातं पञ्चविंशशतैः करैः ॥ २०५ ॥
प्राजापत्यं पादहीनचतुर्लक्षयवैर्मतो: ।
अशीत्यधिकसाहस्रचतुर्लक्षयवैः परम् ॥ २०६ ॥

---

चतुरिति । चतुर्विंशतकैः चतुर्विंशतिशतैरङ्गुलैः एव अथवा शब्दच्छेदोऽत्र निकाम्याध्याहार्यः । शतैः करैः हस्तैः प्राजापत्यं प्रमाणोक्तं निवर्त्तनं सदा कथितम् । हस्तश्च चतुर्विंशत्यङ्गुलपरिमाणत्वादिति भावः ॥ २०२ ॥

सपादेति । उभयोश्च मनुप्राजापत्ययोः सम्बन्धिनी निवर्त्तने कथिते इति शेषः, सपादषट्शतकाः पञ्चविंशत्यधिकषट्शताः दृष्टाः पूर्वोक्त-मानविशेषात् उभयोरेव शतयोः पञ्चविंशतिः निवर्त्तनानि सदा भवन्ति ॥ २०३ ॥

पञ्चेति । पञ्चसप्ततिसाहस्रैः अङ्गुलैः मानवं परिवर्त्तनं मान-विशेषः तथा षष्टिसाहस्रैः अङ्गुलैः प्राजापत्यं परिवर्त्तनं भवतीति शेषः ॥ २०४ ॥

पञ्चेति । प्राजापत्यमिति । पञ्चविंशाधिकैः एकविंशच्छतैः हस्तैः मतो: सम्मत इत्यर्थः परिवर्त्तनं तथा पञ्चविंशशतैः करैः प्राजापत्यं प्रमाणमतं परिवर्त्तनम् आख्यातम् कथितम् । किञ्च पादहीनचतु-र्लक्षयवैः चतुर्थांशन्यूनचतुर्लक्षयवैः मतो: सम्मतमिति शेषः परि-

निवर्त्तनानि द्वात्रिंशन्मनुमानेन तस्य वै ।
चतुःसप्तसहस्राः स्युर्दण्डाश्चाष्टशतानि हि ॥ २०७ ॥
पञ्चविंशतिभिर्दण्डैर्भुजः स्यात् परिवर्त्तने ।
करैरयुतसंख्याकैः क्षेत्रं तस्य प्रकीर्त्तितम् ॥ २०८ ॥
चतुर्भुजैः समं प्रोक्तं कष्टभूपरिवर्त्तनम् ।
प्राजापत्येन मानेन भूभागहरणं नृपः ॥ २०९ ॥
सदा कुर्य्याच्च स्वापत्तौ मनुमानेन नान्यथा ।
लोभात् संकर्षयेद् यस्तु हीयते सप्रजो नृपः ॥ २१० ॥
न दद्याद्द्व्यङ्गुलमपि भूमेः स्वत्वनिवर्त्तनम् ।

---

वर्त्तनं, तथा अशीतिसहस्राधिकचतुर्लक्षयवैः परम् अल्पात् प्राजा-
पत्यमित्यर्थः परिवर्त्तनम् आख्यातं कथितम् ॥ २०५ ॥ २०६ ॥

निवर्त्तनानीति । तस्य मनोरित्यर्थः सम्बन्धिनः समता इत्यर्थः अष्टशतानि दण्डाः चतुःसहस्राः इत्याच चतुःसहस्राधिकाष्टशत-दण्डा इत्यर्थः मनुमानेन मनोः परिमाणेन द्वात्रिंशत् निवर्त्तनानि स्युः भवेयुः ॥ २०७ ॥

पञ्चेति । परिवर्त्तने पूर्वोक्ते परिमाणविशेषे विषये पञ्चविंशतिभिः दण्डैः भुजः स्यात्, तस्य भुजस्य अयुतसंख्याकैः दशसहस्रैः करैः परि-च्छिन्नं स्थानमिति शेषः क्षेत्रं प्रकीर्त्तितं कथितम् ॥ २०८ ॥

चतुरिति । प्रेति । कष्टः क्लेशजनकं भूपरिवर्त्तनं भुवः भूमेः परिवर्त्तनं तदाख्यमानविशेषः चतुर्भुजैः समं प्रोक्तं कथितं शतदण्ड-परिमितमित्यर्थः । नृपः प्राजापत्येन पूर्वोक्तेन मानेन स्वापत्तौ स्वस्य आपत्तौ बाधायां सत्यां अतिसङ्कटे इत्यर्थः मनुमानेन भूभागहरणं भूमिपरिच्छेदं सदा कुर्य्यात् अन्यथा न । यस्तु नृपः लोभात् संकर्षयेत् भूभागनिर्णयेन प्रजाः पीडयेत् स तु सप्रजः सप्रजानः हीयते नश्यति ॥ २०९ ॥ २१० ॥

नेति । राजा भूमेः द्व्यङ्गुलमपि अङ्गुलद्वयपरिमितामपि भूमि-

स्वत्वं कल्पयेद् वापि यावद् ग्राहस्तु जीवति ॥ २११ ॥
गुणी तावत् देवतार्थं विसृजेच्च सदैव हि ।
आरामार्थं गृहार्थं वा दद्याद् दृष्ट्वा कुटुम्बिनम् ॥२१२॥
नानावृक्षलताकीर्णे पशुपक्षिगणावृते ।
सुबहूदकधान्ये च तृणकाष्ठसुखे सदा ॥ २१३ ॥
आसिन्धुनौगमाकूले नातिदूरमहीधरे ।
सुरम्यसमभूदेशे राजधानीं प्रकल्पयेत् ॥ २१४ ॥
अर्द्धचन्द्रां वर्त्तुलां वा चतुरस्रां सुशोभनाम् ।

---

मित्यर्थः न दद्यात् कस्मैचिदपीति शेषः, वापि अथवा गृह्णातीति ग्राहः ग्रहीता यावत् जीवति तावत् तस्य स्वत्वं जीविकार्थं स्वत्वनिवर्त्तनं स्वत्वस्य त्यागं कल्पयेत् । अयमर्थः, अल्पामपि भूमिं कस्मैचिन्न दद्यात्, यदि दद्यात् तदा ग्रहीतृजीवितावधिस्तत्स्वत्वत्याग इति ॥ २११ ॥

गुणीति । गुणी नृपः देवतार्थं देवालयस्थापनार्थं सदैव विसृजेत् दद्यात् भूमिमिति शेषः, तथा कुटुम्बिनं गृहिणं दृष्ट्वा विविच्य तस्मै आरामार्थम् उद्यानार्थं वा गृहार्थं गृहनिर्माणार्थं दद्यात् वा वाशब्दोऽवधारणे, दानञ्च जीवनावधीति बोद्धव्यम् अन्यथा पूर्ववाक्य-विरोधादिति ॥ २१२ ॥

राजधानीकरणमाह नानेति । आसिन्ध्विति । राजा नाना-वृक्षलताकीर्णे बहुविधवृक्षलतासङ्कुले पशुपक्षिगणैः आवृते युक्ते, तदा सुबहूनि अतिप्रचुराणि उदकानि धान्यानि च यस्मिन् तथाभूते, तृणैः काष्ठैश्च सुखे सुखकरे, आसिन्धु आसमुद्रं नौभिः नौकाभिः गमः गमनं तेन आकुले युक्ते समुद्रपर्य्यन्तनौकागमनागमनसाधने इत्यर्थः नातिदूरः अदूरवर्त्ती महीधरः पर्व्वतो यस्य तादृशे सुरम्ये मनोहरे समभूदेशे समानभूमिभागे राज्ञा धीयते उष्यते अस्यामिति राजधानीं अधिवास-स्थानं प्रकल्पयेत् ॥ २१३ ॥ २१४ ॥

अर्द्धचन्द्रामित्यादि । अर्द्धचन्द्राम् अर्द्धचन्द्राकारामित्यर्थः वा

सप्राकारां सपरिखां ग्रामादीनां निवेशिनीम् ॥ २१५ ॥
सभामध्यां कूपवापीतडागादियुतां सदा ।
चतुर्दिक्षु चतुर्द्वारां सुमार्गारामवीथिकाम् ॥ २१६ ॥
दृढसुरालयमठपान्थशालाविराजिताम् ।
कल्पयित्वा वसेत् तत्र सुगुप्तः सप्रजो नृपः ॥ २१७ ॥
राजगृहं सभामध्यं गवाश्वगजशालिकम् ।
प्रशस्तवापीकूपादिजलयन्त्रैः सुशोभितम् ॥ २१८ ॥
सर्वतः स्यात् समभुजं दक्षिणोच्चमुदङ्नतम् ।
शालां विना नैकभुजं तथा विषमबाहुकम् ॥ २१९ ॥
प्रायः शाला नैकभुजा चतुःशालं विना शुभा ।
शस्त्रास्त्रधारिसंयुक्तप्राकारं सुदृढयन्त्रकम् ॥ २२० ॥

---

अर्द्धचन्द्राकाराम् अथवा चतुरस्रां चतुष्कोणां सुशोभनां शोभाशालिनीं सप्राकारां प्राचीरवेष्टितां ग्रामादीनाम् अन्तरान्तरा ग्रामनगरादिविभागवतीं सभामध्यां मध्ये मध्ये स्थापितसभां वापीभिः दीर्घिकाभिः तडागैः सरोवरैः आदिपदेन कुल्यादिभिः युतां चतुर्दिक्षु पूर्वपश्चिमोत्तरदक्षिणासु चतुर्द्वारां द्वारचतुष्टयवतीं शोभनाः मार्गाः पन्थानः आरामवीथयः उपवनश्रेणयः यस्यां तादृशीं तथा दृढैः सुरालयैः देवालयैः मठैः छात्रादिपाठशालाभिः तथा पान्थशालाभिः पथिकजनावस्थानार्थं निर्मितगृहैरित्यर्थः विराजितां राजधानीं कल्पयित्वा नृपः सदा तत्र सुरक्षितः तथा सप्रजः प्रजाद्यन्वयसहितः सन् वसेत् ॥ २१५ ॥ २१६ ॥ २१७ ॥

राजगृहमित्यादि । तत्र राजधान्यां सभामध्यं मध्यस्थितसभागृहं गवाम् अश्वानां गजानाञ्च शालाभिः समन्वितं प्रशस्तैः मनोज्ञैः वापीकूपजलयन्त्रैः सुशोभितं सर्वतः सर्वासु दिक्षु समभुजं समानभुजपरिमाणं दक्षिणस्यां दिशि उच्चम् उन्नतं तथा उदङ्नतम् उत्तरस्यां

धान्यार्थं घरट्टाद्यर्थं दासीदासार्थमेव च ॥ २२४ ॥
उत्सर्गार्थं गृहान् कुर्य्याद्दक्षिणस्यामनुक्रमात् ।
गोवृषोष्ट्रगजाद्यर्थं गृहान् प्रत्यक् प्रकल्पयेत् ॥ २२५ ॥
रथवाज्यस्त्रशस्त्रार्थं व्यायामायामिकार्थकम् ।
वस्त्रार्थकन्तु द्रव्यार्थं विद्याभ्यासार्थमेव च ॥ २२६ ॥
उदग्गृहान् प्रकुर्वीत सुगुप्तान् सुमनोहरान् ।
यथासुखानि वा कुर्य्याद् गृहाण्येतानि वै नृपः ॥२२७॥
धर्माधिकरणं शिल्पशालां कुर्य्यादुदग्गृहात् ।
पञ्चमांशाधिकोच्छ्राया भित्तिर्विस्तारतो गृहे ॥ २२८ ॥

---

यथाक्रमं निद्रार्थं भजनार्थं विहारार्थं क्रीडार्थं पानार्थं मद्यादीनामुपभोगार्थं रोदनार्थं क्रन्दनार्थं धान्यार्थं धान्यरक्षणार्थं घरट्टाद्यर्थं तण्डुलोधूमादिचूर्णनार्थं अन्नविशेषाद्यर्थं दासीदासार्थं किङ्करीकिङ्करावस्थानार्थं तथा उत्सर्गार्थं मलमूत्रत्यागार्थं गृहान् कुर्य्यात् । किञ्च, प्रत्यक् पश्चिमायां दिशि गवां वृषाणाम् उष्ट्राणां गजादीनाञ्च रक्षणार्थं गृहान् प्रकल्पयेत् ॥ २२४ ॥ २२५ ॥

रथेति । उदगिति । रथानां वाजिनाम् अस्त्राणां क्षेपणीयानां शस्त्राणां हस्तधृतानां प्रहरणानां स्थानार्थं व्यायामायामिकार्थं व्यायामः अङ्गचालनाविशेषः तस्य आयामिका विस्तारः तदर्थं वस्त्रार्थकं वसनरक्षणार्थकं द्रव्यार्थं धनरक्षणार्थं गृहोपकरणाद्यर्थं वा तथा विद्याभ्यासार्थं सुगुप्तान् सुरक्षितान् सुमनोहरान् उदग्गृहान् उत्तरदिग्वर्त्तिनः गृहान् प्रकुर्वीत । वा अथवा नृपः यथासुखानि आत्मनः सुखानुसारेण एतानि पूर्वोक्तानि गृहाणि कुर्य्यात् ॥ २२६ ॥ २२७ ॥

धर्मेति । धर्माधिकरणं विचारालयं तथा शिल्पशालां गृहात् राजगृहात् उदक् उत्तरस्यां दिशि, उदगिति अव्ययं, कुर्य्यात् । किञ्च गृहे राजगृहे भित्तिः विस्तारतः गृहविस्तारात् पञ्चमांशः अधिकः उच्छ्रायः औन्नत्यं यस्याः तादृशी भवतीति शेषः ॥ २२८ ॥

कोष्ठं विस्तारषड्भागतुल्या सा च प्रकीर्त्तिता ।
एवंभूमेरिदं मानमूर्ध्वमूर्ध्वं समन्ततः ॥ २२९ ॥
स्तम्भैश्च भित्तिभिर्वापि पृथक्कोष्ठानि कल्पयेत् ।
त्रिकोष्ठं पञ्चकोष्ठं वा सप्तकोष्ठं गृहं स्मृतम् ॥ २३० ॥
द्वारार्थमष्टधा भक्तं द्वारस्थांशौ तु मध्यमौ ।
द्वौ द्वौ श्रेष्ठौ चतुर्दिक्षु धनपुत्रप्रदौ नृणाम् ॥ २३१ ॥
तत्रैव कल्पयेद्द्वारं नान्यथा तु कदाचन ।
वातायनं पृथक्कोष्ठे कुर्य्याद् याद्दक् सुखावहम् ॥ २३२ ॥
अन्यगृहद्वारविद्धं गृहद्वारं न चिन्तयेत् ।
गृहकोणस्तम्भमार्गपीठकूपैश्च वेधितम् ॥ २३३ ॥

---

कोष्ठेति । सा च भित्तिः कोष्ठस्य गृहाभ्यन्तरस्थानस्य यः विस्तारः तस्य षडंशवत् तुल्या प्रकीर्त्तिता उक्ता समन्ततः सर्वतः एवम्भूमेः एतस्य गृहस्य भूमेः इदम् ऊर्द्ध्वम् उपर्य्युपरि चरणविस्तारः ऊर्द्ध्वं मानं परिमाणम् उक्तमिति शेषः ॥ २२९ ॥

स्तम्भैरिति । द्वारार्थमिति । स्तम्भैः भित्तिभिर्वा पृथक् भिन्नानि भिन्नानि कोष्ठानि कल्पयेत् निर्म्मयेत् अवसरेदित्यर्थः । किन्तु गृहं त्रिकोष्ठं त्रिभिः कोष्ठैः युतं पञ्चकोष्ठं पञ्चभिः कोष्ठैः युतं वा सप्तकोष्ठं सप्तभिः कोष्ठैः युतं द्वारार्थम् अष्टधाभक्तं द्वारनिर्म्माणाय कोष्ठमित्यर्थः स्मृतं कथितम् । किन्तु द्वारस्य अंशौ श्रेष्ठौ मध्यमौ मध्यविधौ चतुर्दिक्षु द्वौ द्वौ निर्म्मितौ सन्तौ नृणां धनपुत्रप्रदौ भवत इति शेषः अष्टार्थ-मेतत् प्रशंसावचनमिति भावः ॥ २३० ॥ २३१ ॥

तत्रेति । तत्रैव कोष्ठविभागेषु द्वारार्थः द्वारं कल्पयेत् कदाचन अन्यथा न । यथा कोष्ठे याद्दक् सुखावहं सुखकरं भवतीति शेषः ताद्दक् वातायनं गवाक्षं पृथक् पृथक् कुर्य्यात् ॥ २३२ ॥

अन्येति । गृहद्वारम् एवमित्यर्थः अन्यगृहद्वारविद्धम् अपर-

प्रासादमण्डपद्वारे मार्गवेधो न विद्यते ।
गृहपीठं चतुर्थांशमुच्छ्रायस्य प्रकल्पयेत् ॥ २२४ ॥
प्रासादानां मण्डपानामर्धांशं वापरे जगुः ।
परवातायनैर्विद्धं नापि वातायनं स्मृतम् ॥ २२५ ॥
विस्तारार्धांशमध्योच्चा छदिः खर्परसम्भवा ।
पतितन्तु जलं तस्यां सुखं गच्छति वाप्यधः ॥ २२६ ॥
हीना भिन्ना छदिर्न स्यात् तादृक् कोष्ठस्य विस्तरः ।
स्वोच्छ्रायस्यार्धमूलो वा प्राकारः सममूलकः ॥ २२७ ॥

---

द्वारसंयुक्तं तथा हस्तकोणेन स्तम्भेन मार्गपीठेन पथिस्थापितपीठाकारप्रदेशेन तथा कूपैश्च वेधितं संसक्तं न चिन्तयेत् न कल्पयेत् ॥ २२२ ॥

प्रासादेति । प्रासादमण्डपस्य देवगृहस्य राजगृहस्य वा, प्रासादो देवभूभुजामित्यमरः । द्वारे मार्गवेधः मार्गयोर्मार्गाणां वा वेधः संयोगः न विद्यते न कार्य्य इत्यर्थः । किन्तु उच्छ्रा यस्य चतुर्थांशं चतुर्थांशपरिमाणं गृहपीठं प्रकल्पयेत् ॥ २२४ ॥

प्रासादानामिति । अपरे विद्वांसः प्रासादानां मण्डपानां पूर्वोक्तदेवराजगृहाणाम् अर्धांशम् अर्धांशपरिमितं वा गृहपीठं जगुः कथयन्ति अर्धपरिमाणेन गृहपीठं कार्य्यमिति भावः । किन्तु वातायनमेकं परवातायनेन अपरगवाक्षेण विद्धं संसक्तं नापि नैव स्मृतं कथितं न कार्य्यमिति भावः ॥ २२५ ॥

विस्तारेति । खर्परसम्भवा खर्परैः तदाख्यैः आच्छादकवस्तुविशेषैः कृतेत्यर्थः छदिः विस्तारस्य स्वविस्तारस्य अर्धांशं मध्यम् उच्चं मूलं यस्याः तथाभूता कार्य्या इति शेषः तस्यां पतितं जलं सुखं यथा तथा अधः गच्छति, तथान्यः अवधारणे ॥ २२६ ॥

हीनेति । छदिः उक्तरूपा हीना न्यूना भिन्ना अवनता च न स्यात्, तथा स्वोच्छ्रायस्य समुन्नतस्य कोष्ठस्य विस्तरः तादृक् हीनः भिन्नश्चेत्यर्थः न स्यात् किन्तु प्राकारः प्राचीरवेष्टनम् अर्धमूलः मूलार्ध-

तृतीयांशकमूलो वा उच्छ्रायार्धप्रविस्तरः ।
उच्छ्रितस्तु तथा कार्य्यो दस्युभिर्न विलङ्घ्यते ॥ २३८ ॥
यामिकैः रक्षितो नित्यं नालिकास्त्रैश्च संयुतः ।
सुबहुदृढगुल्मश्च सुगवाक्षप्रणालिकः ॥ २३९ ॥
स्वहीनप्रतिप्राकारो ह्यसमीपमहीधरः ।
परिखा च ततः कार्य्या खातात् द्विगुणविस्तरा ॥२४०॥
नातिसमीपप्राकारा ह्यगाधसलिला शुभा ।
युद्धसाधनसम्भारैः सुयुद्धकुशलैर्विना ॥ २४१ ॥
न श्रेयसे दुर्गवासो राज्ञः स्याद् बन्धनाय सः ।
राज्ञा राजसभा कार्य्या सुगुप्ता सुमनोरमा ॥ २४२ ॥

---

परिमितः वा समसूलः मूलपरिमितः न स्यात्, मूलात् किञ्चिदूनपरिमितः कार्य्य इति भावः ॥ २३७ ॥

तृतीयेति । वा अथवा प्राकारः तृतीयांशकं तृतीयभागमितं मूलं यस्य तथोक्तः तथा उच्छ्रायस्य उच्चतायाः अर्द्धः अर्द्धमितः प्रविस्तरः विस्तारः यस्य तादृशः कार्य्य इति शेषः । किञ्च तथा उच्छ्रितः उन्नतः कार्य्यः यथा दस्युभिः शत्रुभिरित्यर्थः न विलङ्घ्यते ॥ २३८ ॥

यामिकैरिति । उक्तरूपः प्राचीरः नित्यं सततं यामिकैः प्रहरिभिः रक्षितः, नालिकाद्यैः नालिकाख्यप्रहरणविशेषैः संयुतः, सुबहूनि बहुलानि दृढ़ानि गुल्मानि रक्षकवर्गस्थानविशेषाः यस्मिन् तादृशः तथा सुष्ठु गवाक्षाणां प्रणाली सन्निवेशश्रेणी वा यत्र तथाभूतः कार्य्य इति शेषः ॥ २३९ ॥

स्वहीनेत्यादि । उक्तः प्राकारः स्वस्मात् हीनः न्यूनः प्रतिप्राकारः विपक्षप्राकारः यस्य तथोक्तः विपक्षप्राकारात् समुन्नत इत्यर्थः तथा असमीपः असन्निहितः महीधरः पर्वतो यस्य तादृशः कर्त्तव्य इति शेषः । पर्वतसन्निधाने तदाश्रयेण शत्रुभिरुल्लङ्घनीयत्वादिति भावः ।

त्रिकोष्ठैः पञ्चकोष्ठैर्वा सप्तकोष्ठैः सुविस्तृता ।
दक्षिणोदक् तथा दीर्घा प्राक्प्रत्यग्द्विगुणाथवा ॥२४३॥
त्रिगुणा वा यथाकाममेकभूमिर्द्विभूमिका ।
त्रिभूमिका वा कर्त्तव्या सोपकार्य्या शिरोगृहा ॥२४४॥
परितः प्रतिकोष्ठे तु वातायनविराजिता ।
पार्श्वकोष्ठात् तु द्विगुणो मध्यकोष्ठस्य विस्तरः ॥२४५॥
पञ्चमांशाधिकं त्वौच्चं मध्यकोष्ठस्य विस्तरात् ।
विस्तारेण समं त्वौच्चं पञ्चमांशाधिकन्तु वा ॥ २४६ ॥

---

ततश्च तस्य प्राचीरस्य परत इत्यर्थः परिखा तदाख्या जलवतिरित्यर्थः कार्य्या, सा च खाताद्‌ गभीरत्वादित्यर्थः द्विगुणः विस्तरः यस्याः तथोक्ता, नातिसमीपप्राकारा प्राकारस्य नितान्तमसन्निहिता, अगाधसलिला बहूदका तथा शुभा सुदृश्या च । किञ्च सुबहुसाधनसम्भारैः संग्रामोपकरणसमूहैः तथा सुबहुगुल्मैः रक्षकैः सुदृढैः विना राज्ञः दुर्गे वासः श्रेयसे मङ्गलाय न परं स बन्धनाय स्यात् । अपरञ्च राजसभा सुगुप्ता सुरक्षिता मनोहरा त्रिकोष्ठैः पञ्चकोष्ठैः सप्तकोष्ठैर्वा विभक्ता इति अध्याहार्य्यं दक्षिणोदक् दक्षिणोत्तरयोरित्यर्थः सुविस्तृता तथा प्राक् प्रत्यक् पूर्वपश्चिमयोरित्यर्थः दीर्घा अथवा द्विगुणा विस्तारात् दैर्घ्ये इति शेषः अथवा त्रिगुणा राजसभा कार्य्या। अथवा यथाकामं यथेप्सितम् एकभूमिः एकमात्रगृहा द्विभूमिका गृहद्वययुता त्रिभूमिका गृहत्रयसंयुता सोपकार्य्याशिरोगृहा उपकार्य्यागृहविशेषेण शिरोगृहेण शिरस्थगृहविशेषेण सहिता प्रतिकोष्ठेषु परितः सर्वतः चतुर्दिक्षु इत्यर्थः वातायनविराजिता गवाक्षशोभिता राजसभा कर्त्तव्या । किन्तु मध्यकोष्ठस्य विस्तरः पार्श्वकोष्ठात् द्विगुणः कार्य्य इति शेषः ॥ २४० ॥
२४१ ॥ २४२ ॥ २४३ ॥ २४४ ॥ २४५ ॥

पञ्चमेति । मध्यकोष्ठस्य उच्चम् उच्चता विस्तरात् पञ्चमांशाधिकं

कोष्ठकानाञ्च भूमिर्वा छदिर्वा तत्र कारयेत् ।
द्विभूमिके पार्श्वकोष्ठे मध्यमं त्वेकभूमिकम् ॥ २४७ ॥
पृथक्स्तम्भान्तसत्कोष्ठा चतुर्मार्गागमा शुभा ।
जलोर्ध्वपातियन्त्रैश्च युता सुस्वरयन्त्रकैः ॥ २४८ ॥
वातप्रेरकयन्त्रैश्च यन्त्रैः कालप्रबोधकैः ।
प्रतिष्ठिता च स्वादर्शैस्तथा च प्रतिरूपकैः ॥ २४९ ॥
एवंविधा राजसभा मन्त्रार्था कार्य्यदर्शने ।
तथाविधामात्यलेख्यसभ्याधिकृतशालिकाः ॥ २५० ॥
कर्त्तव्याश्च पृथक् त्वेतास्तद्वर्गाश्च पृथक् पृथक् ।
शतहस्तमितां भूमिं त्यक्त्वा राजगृहात् सदा ॥ २५१ ॥

---

कार्य्यमिति शेषः । उच्चं विस्तरेण सदृशं पञ्चमांशाधिकं वा कार्य्यमिति केचित् वदन्तीति अध्याहार्य्यम् ॥ २४६ ॥

कोष्ठकानामिति । कोष्ठकानां भूमिः विस्तारभागः वा छदिः आच्छादनभागः वा आसीदिति अध्याहार्य्यं तत्र द्विभूमिके पार्श्वकोष्ठे गृहद्वयावच्छिन्ने पार्श्वावयवे सति मध्यमं कोष्ठमिति शेषः एकभूमिकम् एकगृहपरिच्छिन्नं कारयेत् ॥ २४७ ॥

पृथगित्यादि । पृथक् विभिन्नं स्तम्भान्तः स्तम्भमध्ये सत् विद्यमानं कोष्ठं यस्याः तथोक्ता, चतुर्भिर्मार्गैः पथिभिः आगमे आगमने शुभा सुखकरी चतुष्पथा इत्यर्थः जलानि ऊर्द्ध्वपातीनि ऊर्द्ध्वगामीनि यैः तादृशानि यन्त्राणि जलोद्गमयन्त्राणीत्यर्थः तैः तथा सुस्वरयन्त्रकैः स्वयं मधुरस्वरोत्थापकैः यन्त्रैश्च युता । किञ्च वातप्रेरकयन्त्रैः अभिमतदेशे वायुसञ्चारकयन्त्रैरित्यर्थः कालप्रबोधकैः समयनिर्णायकैश्च यन्त्रैः उपलक्षिता तथा स्वादर्शैः शोभनैः दर्पणैः प्रतिरूपकैः प्रतिकृतिभिश्च प्रतिष्ठिता अलङ्कृता एवंविधा उक्तप्रकारा मन्त्रार्था मन्त्रणाभिप्रायेण निर्मिता राजसभा कार्य्यदर्शने कार्य्यदर्शनार्थमित्यर्थः निमित्तार्थे सप्तमी ।

मध्यमो विंशतिकरो दशपञ्चकरोऽधमः ।
पञ्चमार्गास्तथा चैते पुरग्रामादिषु स्थिताः ॥ २६१ ॥
करत्रयात्मिका पद्या वीथिः पञ्चकरात्मिका ।
मार्गो दशकरः प्रोक्तो ग्रामेषु नगरेषु च ॥ २६२ ॥
प्राक् पश्चाद् दक्षिणोदक् तान् ग्राममध्यात् प्रकल्पयेत् ।
पुरं दृष्ट्वा राजमार्गान् सुबहून् कल्पयेन्नृपः ॥ २६३ ॥
न वीथिं न च पद्यां हि राजधान्यां प्रकल्पयेत् ।
षड्योजनान्तरेऽरण्ये राजमार्गन्तु चोत्तमम् ॥ २६४ ॥

---

त्रिंशद्धस्तमितः त्रिंशता हस्तैः परिमितः राजमार्गः उत्तमः भवेत् ॥ २६० ॥

मध्यम इति । विंशतिकरः विंशतिहस्तपरिमितः राजमार्गः मध्यमः । दशपञ्चकरः पञ्चदशहस्तपरिमितः अधमः । तथा पुरग्रामादिषु एते पञ्चमार्गाः प्रधानां विशेषनामानां मार्गाश्च उपस्कृताः विधातव्याः कर्त्तव्या इति शेषः ॥ २६१ ॥

करेति । पद्या केवलपादचारणयोग्या रथ्या करत्रयात्मिका त्रिहस्तमिता वीथिः वणिग्मार्ग इत्यर्थः पञ्चकरात्मिका पञ्चहस्तमिता कार्य्या इति शेषः । ग्रामेषु नगरेषु यानाद्यैर्गमनार्थः मार्गः दशकरः दशहस्तमितः प्रोक्तः कथितः ॥२६२॥

प्रागिति । नृपः ग्राममध्ये प्राक्पश्चाद्दक्षिणोदक् पूर्वपश्चिमदक्षिणोत्तरं दृष्ट्वा तान् मार्गान् नृपः प्रकल्पयेत् । तथा पुरं दृष्ट्वा सुबहून् राजमार्गान् कल्पयेत् ॥ २६३ ॥

नेति । राजधान्यां वीथिम् अधमप्रवरां रथ्यां न प्रकल्पयेत् पद्यान्तु केवलपादचारणयोग्यां रथ्यान्तु न प्रकल्पयेत् हि यतः अवधारणे । तथा षड्योजनान्तरे षड्विंशतिक्रोशव्यवहिते अरण्ये आरण्यवाणार्थं निर्गमार्थः उत्तमं राजमार्गं प्रकल्पयेत् ॥ २६४ ॥

कल्पयेत् मध्यमं मध्ये तयोर्मध्ये तथाधमम् ।
दशहस्तात्मकं नित्यं ग्रामे ग्रामे नियोजयेत् ॥ २६५ ॥
कूर्मपृष्ठा मार्गभूमिः कार्य्या ग्राम्यैः सुसेतुका ।
कुर्य्यान्मार्गान् पार्श्वखातान्निर्गमार्थं जलस्य च ॥२६६॥
राजमार्गमुखानि स्युर्गृहाणि सकलान्यपि ।
गृहपृष्ठे सदा वीथिं मलनिर्हरणस्थलम् ॥ २६७ ॥
पङ्क्तिद्वयगतानां हि गेहानां कारयेत् तथा ।
मार्गान् सुधाशर्करैर्वा घटिताम् प्रतिवत्सरम् ॥ २६८ ॥
अभियुक्तनिरुद्धैर्वा कुर्य्यात् ग्राम्यजनैर्नृपः ।

---

कल्पयेदिति । मध्ये चतुर्विंशतिकोषव्यवहितारण्यमध्ये इत्यर्थः मध्यमं राजमार्गं तयोः मार्गयोः मध्ये च अधमं मार्गं कल्पयेत् । तथा ग्रामे ग्रामे प्रतिग्रामं दशहस्तात्मकं दशहस्तपरिमितं मार्गं नित्यं सततं योजयेत् स्थापयेत् ॥ २६५ ॥

कूर्मेति । ग्राम्यैः ग्रामवासिभिः कूर्मपृष्ठा कमठपृष्ठाकारा उन्नतमध्या इत्यर्थः, तथा सुसेतुना शोभनसेतुयुक्ता मार्गभूमिः कार्य्या । किञ्च ग्रामवासी जनः जलस्य निर्गमार्थं पार्श्वखातान् पार्श्वयोः खातान् मार्गान् कुर्य्यात् ॥ २६६ ॥

राजेति । सकलानि अपि गृहाणि राजमार्गे मुखं येषां तानि तथाभूतानि स्युः भवेयुः । गृहाणां पृष्ठे पृष्ठदेशे पश्चाद्भूमौ सदा मलनिर्हरणस्य मलनिष्काशनस्य स्थलं स्थानभूतं उपायसङ्कुचितं वीथिः स्वल्पपरा रथ्या च कार्य्या इति शेषः ॥ २६७ ॥

पङ्क्तिद्वयेति । तथा प्रतिवत्सरं पङ्क्तिद्वयगतानां मार्गस्य उभयोः पार्श्वयोः स्थितानां गेहानां गृहाणां मार्गान् सुधाशर्करैः सुधाश्च चूर्णेषु यानि शर्कराणि कठिनद्रव्यविशेषाः तैः वा घटितान् निबद्धान् कर्द्दमपरिहारार्थमिति भावः कारयेत् ॥ २६८ ॥

अभीति । निरुद्धैरिति । अभियुक्तैः संयुक्तैः जनैः निरुद्धैः अव-

ग्रामद्वयान्तरे चैव पान्थशालां प्रकल्पयेत् ॥ २६९ ॥
नित्यं सम्मार्जिताञ्चैव ग्रामपैश्च सुगोपिताम् ।
तत्रागतन्तु सम्पृच्छेत् पान्थं शालाधिपः सदा ॥२७०॥
प्रयातोऽसि कुतः कस्मात् क्व गच्छसि ऋतं वद ।
ससहायोऽसहायो वा किं सशस्त्रः सवाहनः ॥ २७१ ॥
का जातिः किं कुलं नाम स्थितिः कुत्रास्ति ते चिरम् ।
इति पृष्ट्वा लिखेत् सायं शस्त्रं तस्य प्रगृह्य च ॥ २७२ ॥
सावधानमना भूत्वा स्वापं कुर्विति शासयेत् ।
तत्रस्थान् गणयित्वा तु शालाद्वारं पिधाय च ॥ २७३ ॥
संरक्षयेद् यामिकैश्च प्रभाते तान् प्रबोधयेत् ।
शस्त्रं दद्याच्च गणयेद् द्वारमुद्घाट्य मोचयेत् ॥ २७४ ॥

---

हृद्यैः सम्भ्रान्तजनानुरोधवशवर्त्तिभिरित्यर्थः पान्थजनैः पान्थजनेषु सम्भ्रान्तानामनुरोधः साहाय्यदानादेति बोद्धव्यम् । ग्रामे ग्रामे वा ग्रामयोर्मध्ये नित्यं सम्मार्जितां परिष्कृतां ग्रामपैः ग्रामीणैः सुगोपितां सुरक्षिताञ्च पान्थशालां पथिकजनाश्रयं प्रकल्पयेत् । सदा पान्थशालाधिपः पान्थशालाध्यक्षः तत्र पान्थशालायाम् आगतं जनं संपृच्छेत् ॥ २६९ ॥ २७० ॥

पृच्छाप्रकारमाह प्रयात इत्यादि । हे पथिक ! कुतः कस्मात् देशात् प्रयातः आगतः असि, क्व कुत्र गच्छसि, त्वं ससहायः सानुचरः, असहायः एकाकी वा, शस्त्रधारी किं वा सवाहनः वाहनेन अश्वादिना सहितः किं ऋतं सत्यं वद कथय । ते तव का जातिः, किं कुलं कस्मात् कुलादुत्पन्नोऽसीत्यर्थः, नाम किं कुत्र चिरं स्थितिः अवस्थानम् अस्ति ? इति पृष्ट्वा लिखेत् पूर्वोक्तं सर्वमिति शेषः, सायं सन्ध्यायान्तु तस्य पथिकस्य शस्त्रं प्रगृह्य सावधानमनाः भूत्वा सतर्कः कुर्वित्यस्य स्वापं कुरु निद्राहीति तं शासयेत् उपदिशेत् । ततः तत्र-

कुर्य्यात् सहायं सीमान्तं तेषां ग्राम्यजनैः सदा ।
प्रकुर्य्याद्दिनकृत्यन्तु राजधान्यां वसन् नृपः ॥ २७५ ॥
उत्थाय पश्चिमे यामे मुहूर्त्तद्वितयेन वै ।
नियतायश्च कत्यस्ति व्ययश्च नियतः कति ॥ २७६ ॥
कोशभूतस्य द्रव्यस्य व्ययः कति गतस्तथा ।
व्यवहारे मुद्रितायं व्ययशेषं कतीति च ॥ २७७ ॥
प्रत्यक्षतो लेखतश्च ज्ञात्वा चाद्य व्ययः कति ।
भविष्यति च तत्तुल्यं द्रव्यं कोशात् तु निर्हरेत् ॥२७८॥

---

स्तान् पथिकान् गणयित्वा संस्थाप्य प्राकारद्वारं गृहद्वारं पिधाय आच्छाद्य निरुध्य इत्यर्थः यामिकैः प्रहरिभिः संरक्षयेत् रक्षां कारयेत् । अथ प्रभाते द्वारमुद्घाट्य तान् प्रबोधयेत् जागरयेत् सर्व्वं, तेषामिति शेषः दद्यात् प्रत्यर्पयेत्, गणयेत् संख्यां कुर्य्यात् तथा मोचयेत् विसर्जयेत् ॥२७१ ॥ २७२ ॥ २७३ ॥ २७४ ॥

कुर्य्यादिति । ग्राम्यजनैः सदा सर्व्वस्मिन् काले सीमान्तं स्वग्राम-सीमापर्य्यन्तं तेषां पथिकानां सहायं सहगमनं कुर्य्यात् । नृपस्तु राज-धान्यां वसन् दिनकृत्यं प्रतिदिनकर्त्तव्यं प्रकुर्य्यात् प्रकर्षेण यथाविधानेन कुर्य्यादित्यर्थः ॥ २७५ ॥

उत्थायेत्यादि । पश्चिमे यामे प्रहरे रात्रेरिति शेषः उत्थाय राजा मुहूर्त्तद्वितयेन द्वौ मुहूर्त्तौ यावदित्यर्थः नियतायः निर्द्धारितश्चायः अर्थागमः कति कियान् व्ययश्च नियतः निर्द्धारितः कति, कोश-भूतस्य भाण्डारस्थितस्य द्रव्यस्य धनस्य कति व्ययः गतः भूतः, व्यवहारे विचारदर्शने मुद्रितानां निर्णीतानाम् आयस्य व्ययस्य च शेषः कति इति प्रत्यक्षतः लेखतः लिखितात् ज्ञात्वा अद्य व्ययः कति भविष्यतीति च विचार्य्य इति अध्याहार्य्यं कोशात् धनागारात् तत्तुल्यं वर्त्तमानदिव-सीयव्ययोपयोगि इत्यर्थः द्रव्यं निर्हरेत् बहिष्कुर्य्यादित्यर्थः ॥ २७६ ॥ २७७ ॥ २७८ ॥

पश्चात्तु वेगनिर्मोक्षं स्नानं मौहूर्त्तिकं मतम् ।
सन्ध्यापुराणदानेन मुहूर्त्तद्वितयं नयेत् ।
गवाश्वयानव्यायामैर्नयेत् प्रातर्मुहूर्त्तकम् ॥ २७९ ॥
पारितोषिकदानेन मुहूर्त्तन्तु नयेत् सुधीः ।
धान्यवस्त्रसुवर्णरत्नसेनादेश्यविलेखनैः ॥ २८० ॥
आयव्ययैर्मुहूर्त्तानां चतुष्कन्तु नयेत् सदा ।
स्वस्थचित्तो भोजनेन मुहूर्त्तं स सुहृन्नृपः ॥ २८१ ॥
प्रत्यक्षीकरणाज्जीर्णनवीनानां मुहूर्त्तकम् ।
ततस्तु प्राड्विवाकादिबोधितव्यवहारतः ॥ २८२ ॥

---

पश्चादिति । पश्चात् आयव्ययादिनिर्वाहानन्तरमित्यर्थः मौहूर्त्तिकं मुहूर्त्तकमित्यर्थः वेगनिर्मोक्षस्नानं मुहूर्त्तेन मलमूत्रोत्सर्गः स्नानञ्च कर्त्तव्यमित्यर्थः । ततश्च सन्ध्यापुराणदानैः सन्ध्यावन्दनपुराणश्रवणदानकर्मभिश्च मुहूर्त्तद्वितयं द्वौ मुहूर्त्तौ नयेत् यापयेत् । ततश्च गवाश्वयानव्यायामैः गोभिरश्वैश्च यानानि गमनानि एव व्यायामाः चङ्क्रमणव्यापाराः तैः प्रातर्मुहूर्त्तकं प्रातःकालं नयेत् ॥ २७९ ॥

पारितोषिकेति । आयव्ययैरिति । ततः सुधीः सुविज्ञो नृपः पारितोषिकदानैः अनुजीविभ्यः पुरस्कारवितरणैः मुहूर्त्तं नयेत् । ततश्च धान्यानां वस्त्राणां स्वर्णानां रत्नानां सेनानां देशानाञ्च विलेखनेन परिमाणादिपर्य्यालोचनया विशेषेण लेखनैः अवधारणेनेति भावः तथा आयव्ययैः आगमापायनिरूपणैः मुहूर्त्तानां चतुष्कं तथा स्वस्थचित्तः स्वच्छन्दः बन्धुजनपरिवृतः सन् भोजनेन मुहूर्त्तं पञ्चममिति शेषः नयेत् यापयेत् ॥ २८० ॥ २८१ ॥

प्रत्यक्षीत्यादि । ततः जीर्णानां पुरातनानां नवीनानां नूतनानाञ्च प्रत्यक्षीकरणात् परीक्षणादित्यर्थः मुहूर्त्तकं ततश्च प्राड्विवाकादिभिर्विचारकर्मणि नियुक्तैः पुरुषैः बोधितेन ज्ञापितेन व्यवहारेण मुहूर्त्त-

मुहूर्त्तद्वितयञ्चैव मृगयाक्रीडनैर्नयेत् ।
व्यूहाभ्यासैर्मुहूर्त्तन्तु मुहूर्त्तं सन्ध्यया ततः ॥ २८३ ॥
मुहूर्त्तं भोजनेनैव द्विमुहूर्त्तञ्च वार्त्तया ।
गुढ़चार श्रावितया निद्रयाष्टमुहूर्त्तकम् ॥ २८४ ॥
एवं विहरतो राज्ञः सुखं सम्यक् प्रजायते ।
अहोरात्रं विभज्यैवं त्रिंशद्भिस्तु मुहूर्त्तकैः ॥ २८५ ॥
नयेत् कालं वृथा नैव नयेत् स्त्रीमद्यसेवनैः ।
यत् काले ह्युचितं कर्त्तुं तत् कार्य्यं द्रागशङ्कितम् २८६
काले वृष्टिः सुपोषाय ह्यन्यथा सुविनाशिनी ।
कार्य्यस्थानानि सर्वाणि यामिकैरभितोऽनिशम् ॥ २८७ ॥

---

द्वितयं तदनन्तरं मृगयाव्यापारेण क्रीडनैः वा व्यूहाभ्यासैः सैन्यरचनासन्दर्शनैः मुहूर्त्तम् अनन्तरं सन्ध्यया सायंकालीनया मुहूर्त्तं तदनन्तरञ्च भोजनेन रात्रिकालीनेन मुहूर्त्तं पश्चात् गूढचारैः गुप्तचरैः श्राविततया वार्त्तया समाचारेण द्विमुहूर्त्तं तदुपरं निद्रया अष्टमुहूर्त्तकं नयेत् ॥ २८२ ॥ २८३ ॥ २८४ ॥

एवमित्यादि । एवम् उक्तरूपेण विहरतः समयम् अतिवाहयतः राज्ञः सम्यक् सुखं प्रजायते । एवं पूर्वोक्तया दिशा त्रिंशद्भिः मुहूर्त्तकैः दण्डद्वयमितैः कालैः अहोरात्रं दिवारात्रं षष्टिदण्डात्मकं विभज्य अस्मिन् समये इदं कर्त्तव्यमस्मिन् इदमित्येवं विभागं कृत्वा नयेत्. स्त्रीमद्यसेवनैः स्त्रीभिर्विहारैः सुरापानैश्च वृथा नैव नयेत् । यत्काले यत् कार्य्यं कर्त्तुमुचितं तत् कार्य्यं द्राक् झटिति अशङ्कितं निःशङ्कं यथा तथा तत्काले एव कर्त्तव्यम् । एवं सति काले योग्ये काले सुपोषाय प्रजानां सुखपालनाय वृष्टिर्भवति अन्यथा सुविनाशिनी प्रजाक्षयकरी वृष्टिरतिवृष्टिरित्यर्थः हिशब्दः अवधारणे अवश्यमेव भवतीत्यर्थः । किञ्च नयज्ञान् नीतिविचक्षणः तथा नीतेर्नतिम् अभोगतिं वेत्तीति तथोक्तः

नयवान् नीतिमतिवित् सिद्धमन्त्रादिकैर्वरैः ।
चतुर्भिः पञ्चभिर्वापि षड्भिर्वा गोपयेत् सदा ॥ २८८ ॥
तत्रत्यानि दैनिकानि शृणुयात् सेवकाधिपैः ।
दिने दिने यामिकानां प्रकुर्य्यात् परिवर्त्तनम् ॥२८९॥
गृहपंक्तिमुखे द्वारं कर्त्तव्यं यामिकैः सदा ।
तैस्तद्वृत्तन्तु शृणुयात् गृहस्थभृतिपोषितैः ॥ २९० ॥
निर्गच्छन्ति च ये ग्रामाद् ये ग्रामं प्रविशन्ति च ।
तान् सुसंशोध्य यत्नेन मोचयेद्दत्तलक्ष्मकान् ॥ २९१ ॥
प्रख्यातहस्तमौद्रांस्तु प्रविमृश्य विमोचयेत् ।

---

अनयमच इत्यर्थः राजा अभितः सर्वतः सिद्धमन्त्रादिकैः मन्त्रास्त्रकुशलैरित्यर्थः वरैः श्रेष्ठैः चतुर्भिः पञ्चभिः वा षड्भिः यामिकैः प्रहरिभिः सदा सर्वाणि कार्य्यस्थानानि गोपयेत् रक्षेत् ॥ २८५ ॥ २८६ ॥ २८७ ॥ २८८ ॥

तत्रत्यानीति । तत्रत्यानि दैनिकानि प्रतिदिनसञ्जातानि कार्य्याणि सेवकाधिपैः प्रधानसेवकैः शृणुयात् । तथा दिने दिने यामिकानां प्रहरिणां परिवर्त्तनं विनिमयं कुर्य्यात् ॥ २८९ ॥

गृहेति । यामिकैः प्रहरिभिः सदा गृहपङ्क्तिमध्ये गृहस्थानां गृहश्रेण्यभिमुखे सदा द्वारं दौवारिकसदृशस्थानमित्यर्थः कर्त्तव्यम् । गृहस्थानां भृतिभिः वेतनैः गृहस्थदत्तैरित्यर्थः पोषितैः पालितैः तैः प्रहरिभिः तद्वृत्तं तेषां गृहस्थानां वृत्तम् आचरितं शृणुयात् ॥२९०॥

निर्गच्छन्तीति । ये जनाः ग्रामात् निर्गच्छन्ति, ये च ग्रामं प्रविशन्ति, तान् यत्नेन सुसंशोध्य परीक्ष्य दत्तलक्ष्मकान् दत्तः लक्ष्मकः प्रतिभूर्यैः तथाभूतान् अथवा दत्तं लक्ष्मकं शोधनपत्रं येभ्यः तान् कृत्वा मोचयेत् निर्गमप्रवेशौ कारयेदित्यर्थः ॥ २९१ ॥

प्रख्यातेति । वर्त्त्यपिति । प्रख्यातहस्तमौद्रान् सुख्यातपरिमा-

वीथिवीथिषु यामार्द्धैर्निशिपर्य्यटनं सदा ॥ २८२ ॥
कर्त्तव्यं ग्रामिकैरेव चौरजारनिवृत्तये ।
शासनं त्वीदृशं कार्य्यं राज्ञा नित्यं प्रजासु च ॥ २८३ ॥
दासे भृत्येऽथ भार्य्यायां पुत्रे शिष्येऽपि वा क्वचित् ।
वाग्दण्डपरुषं नैव कार्य्यं मद्देशसंस्थितैः ॥ २८४ ॥
तुलाशासनमानानां नाणकस्यापि वा क्वचित् ।
निर्य्यासानाञ्च धातूनां सजातीनां घृतस्य च ॥ २८५ ॥
मधुदुग्धवसादीनां पिष्टादीनाञ्च सर्व्वदा ।
कूटं नैव तु कार्य्यं स्याद् बलाच्च लिखितं जनैः ॥२८६॥
उत्कोचग्रहणं नैव स्वामिकार्य्यविलोभनम् ।
दुर्वृत्तकारिचौरं जारं मद्द्वेषिणं द्विषम् ॥ २८७ ॥

---

निर्णयः तु पुनः अविचार्य्य अविचार्य्य अपरीक्ष्येति यावत् विमोचयेत् हि शब्दः अवधारणे । किञ्च ग्रामिकैः प्रहरिभिः चौराणां तस्कराणां जाराणाम् उपपतीनां निवृत्तये निराकरणाय निशि रजन्यां वीथिवीथिषु प्रतिपल्लीमार्गमध्येषु सदा यामार्द्धैः प्रहरमध्ये यारद्वयेनेत्यर्थः पर्य्यटनं भ्रमणं कर्त्तव्यम् । राज्ञा प्रजासु ईदृशम् उक्तप्रकारं शासनं नित्यं कर्त्तव्यं तु शब्दः अवधारणे, अवश्यमेव कर्त्तव्यमित्यर्थः ॥ २८२ ।२८३॥

इत आरभ्य शासनलिपिचिह्नैरित्यन्तं राजशासनं निर्दिशति दासे इत्यादि । राजा शासनलिपिचिह्नैः शासनार्थवाक्यभेदैः प्रजाः नित्यम् इति वक्ष्यमाणप्रकारेण बोधयेत् ज्ञापयेत् । यथा मद्देशसंस्थितैः मदधिकारवर्त्तिभिः जनैः क्वचित् दासे किङ्करे, भृत्ये पोष्यजने, अथवा भार्य्यायां पत्न्यां पुत्रे तनये अथवा शिष्ये छात्रे वाग्दण्डपरुषं वाक्पारुष्यं दण्डपारुष्यं वा नैव कर्त्तव्यम् । तुलायाः शासनानि निर्णायकानि यानि मानानि परिमाणानि तेषां क्वचित् कुत्रापि वा नाणकस्य मुद्रायाः निर्य्यासानां तरुकाण्डनिर्गतरसानां सजातीनां समानावयवानां

न रक्षत्त्वप्रकाशं हि तथान्यानपकारकान् ।
मातॄणां पितॄणाञ्चैव पूज्यानां विदुषामपि ॥ २९८ ॥
नावमानं नोपहासं कुर्युः सद्वृत्तशालिनाम् ।
न भेदं जनयेयुर्वै नृनार्योः स्वामिभृत्ययोः ॥ २९९ ॥
भ्रातॄणां गुरुशिष्याणां न कुर्युः पितृपुत्रयोः ।
वापीकूपारामसीमाधर्मशालासुरालयान् ॥ ३०० ॥
मार्गांश्चैव प्रबाधेयुर्हीनाङ्गविकलाङ्गकान् ।
द्यूतञ्च मद्यपानञ्च मृगयां शस्त्रधारणम् ॥ ३०१ ॥
गोगजाश्वोष्ट्रमहिषीनॄणां वै स्थावरस्य च ।
रजतस्वर्णरत्नानां मादकस्य विषस्य च ॥ ३०२ ॥

---

भ्रातृनां स्वर्णरजतादीनां इतस्य मधुदुग्धघृतादीनां पित्रादीनां पूर्व-विशेषाणाञ्च सर्वदा कदापीत्यर्थः कूटं कपटं, बलात् बलात्कारेण जनैः क्रियमाणं भेदनं भावे ल्युट्प्रत्ययः । उत्कोचग्रहणं तथा स्वामिकार्येषु विक्षोभनं विशेषेण क्षोभप्रदर्शनं नैव कर्त्तव्यम् । दुष्टकारिणं दुरा-चारिणं चोरं जारं सदुद्वेषिणं मम प्रतिकूलं मन्निदेशमनुवर्त्तिनमित्यर्थः द्विषं शत्रुं ममेति शेषः, तथा अप्रकाशं गूढं यथा तथा अपकारकान् अनिष्टकारिणः अन्यान् जनान् न रक्षन्तु न गोपयन्तु केऽपीति कर्त्तृ-पदमध्याहार्य्यं मातॄणां पितॄणाम् अन्येषां पूज्यानां गुरुजनानां विदुषां पण्डितजनानां तथा सद्वृत्तशालिनां सदाचाररतानां जनानाम् अव-मानं न उपहासञ्च न कुर्य्युः मद्विषजना इति कर्त्तृपदमूह्यम् एवमुत्तरत्र ज्ञेयम् । नृनार्य्योः स्त्रीपुंसयोः दम्पत्योरित्यर्थः तथा स्वामिभृत्ययोः भेदं परस्परमनोभङ्गं जनयेयुः, किञ्च भ्रातॄणां गुरुशिष्याणां तथा पितृपुत्रयोः भेदञ्च न कुर्य्युः । वापी दीर्घिका कूपः प्रसिद्धः आरामः उपवनं सीमा उभयोर्विवादग्रामयोः निर्णीतं स्थानं धर्मशाला धर्मानुष्ठानार्थं स्थापित-गृहं सुरालयः देवालयः एतान् मार्गान् पथः हीनाङ्गान् विकलाङ्गान्

क्रयो वा विक्रयो वापि मद्यसन्धानमेव च ।
क्रयपत्रं दानपत्रञ्च निर्बन्धपत्रकम् ॥ २०३ ॥
राजाज्ञया विना नैव जनैः कार्यं चिकित्सितम् ।
महापापाभिशंसनं निधिग्रहणमेव च ॥ २०४ ॥
नवसमाजनियमं निर्णयं जातिदूषणम् ।
अस्वामि नाष्टिकधनसंग्रहं मन्त्रभेदनम् ॥ २०५ ॥
नृपदुर्गचयोपन्तु नैव कुर्युः कदाचन ।
स्वधर्महानिमनृतं परदाराभिमर्शनम् ॥ २०६ ॥
कूटसाक्ष्यं कूटलेख्यमप्रकाशप्रतिग्रहम् ।
निर्धारितकराधिक्यं स्तेयं साहसमेव च ॥ २०७ ॥

---

वा जनान् नैव प्रबाधेयुः नैव पीडयेयुः । राजाज्ञया विना क्रयानु-मतिपत्रेण द्यूतं पणदेवनं मद्यपानं सुरया मत्तधारणं गवां गजानाम् अश्वानाम् उष्ट्राणां महिषीणां अजानां नराणां स्थावरस्य भूम्यादेः रजतस्य रौप्यस्य स्वर्णस्य रत्नस्य मणिभेदस्य मादकस्य मत्ता-जनकद्रव्यस्य तथा विषस्य क्रयः विक्रयः वा मद्यसन्धानं सुराप्रस्तुतकरणं क्रयपत्रं दानपत्रम् ऋणनिर्बन्धपत्रकं वा चिकित्सितं चिकित्साव्यवसायः नैव कार्यम् । महापापाभिशंसनं महापापकीर्त्तनेन अभिशस्तात् निधेः स्वामिकस्य धनस्य ग्रहणं तस्य राजस्वत्वादिति भावः नवं नूतनं समाजनियमं समाजव्यवस्थां निर्णयम् अनिर्णीतस्य कस्यचित् विषय-स्येति शेषः तस्य राजनिर्णेयत्वादिति भावः, जातिदूषणं जातेः दोषकीर्त्तनम् अस्वामिकस्य नाष्टिकस्य केनचित् हारितस्य वा धनस्य संग्रहं मन्त्रभेदनं गूढमन्त्रणाप्रकाशं तथा नृपस्य राज्ञः दुर्गचयापचयं गुप्तोपायरूपं दुष्कृतं कदाचन नैव कुर्युः प्रजा इति वाक्यद्वयमध्या-हर्त्तव्यम् । स्वधर्महानिं निजधर्मक्षयम् अनृतम् अलीकवादं परदारा-भिमर्शनं परस्त्रीगमनं कूटसाक्ष्यं कपटसाक्षित्वं कूटलेख्यं कपटलिखितम्

मनसापि न कुर्वन्तु स्वामिद्रोहं तथैव च ।
भृत्या शुल्केन भागेन वृद्ध्या दर्पबलाच्छलात् ॥ २०८ ॥
साधर्षणं न कुर्वन्तु यस्य कस्यापि सर्वदा ।
परिमाणोन्मानमानं धार्य्यं राजविमुद्रितम् ॥ २०९ ॥
गुणसाधनसंदक्षा भवन्तु निखिला जनाः ।
साहसाधिकृते दद्युर्विनिगृह्याततायिनम् ॥ २१० ॥
उत्कृष्टा वृषभाद्या येस्तैस्ते धार्य्याः सुयन्त्रिताः ।
इति मच्छासनं श्रुत्वा येऽन्यथा वर्त्तयन्ति तान् ॥ २११ ॥
विनिङ्क्ष्यामि दण्डेन महता पापकारकान् ।
इति प्रबोधयेन्नित्यं प्रजाः शासनडिण्डिमैः ॥ २१२ ॥

---

अप्रकाशप्रतिपक्षेण अज्ञातेन परस्वापहरणं निर्द्धारितस्य करस्य राजस्वस्य आधिक्यं करादायिभिः प्रजाभ्यः अतिरेकापहरणं स्तेयं चौर्य्यं साहसं दस्युवृत्तिं तथा स्वामिद्रोहं प्रभोरनिष्टाचरणं मनसापि न कुर्वन्तु सर्वापि प्रजा इति सर्व्वपदमूहनीयम् । किञ्च भृत्या वेतनेन भरणेन वा शुल्केन पण्यद्रव्याणां राजप्राप्यांशेन भागेन वर्द्धनेन वृद्ध्या कुसीद-व्यवहारेण दर्पात् बलात् छलात् व्याजाद् वा सर्वदा कदापीत्यर्थः यस्य कस्यापि जनस्य आधर्षणं पीडनं न कुर्वन्तु अधिकृता इति शेषः । परिमाणं भूम्यादीनां मानार्थरज्ज्वादिकम् उन्मानं घटकादिकं मानम् आढकादिकञ्च राजविमुद्रितं राजचिह्नितं कृत्वा धार्य्यं व्यवहर्त्तव्यम् । निखिलाः समग्राः प्रजाः गुणसाधने गुणार्जने संदक्षाः सम्यक् निपुणाः भवन्तु । तथा साहसाधिकृते बलात्कारादिदुष्कर्मापचारे सति आततायिनं तादृशमपराधिनं विनिगृह्य विशेषेण निगृह्य दद्युः राजसमीपे इति शेषः । आततायिनश्च षड्विधाः । यथा, अग्निदो गरदश्चैव शस्त्रपाणि-र्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः । इति । यैः जनैः वृषभाद्याः उत्कृष्टाः, तैः ते उत्कृष्टाः वृषभाद्याः सुयन्त्रिताः सुनिय-

लिखित्वा शासनं राजा धारयीत चतुष्पथे ।
सदा चोद्यतदण्डः स्यादसाधुषु च शत्रुषु ॥ २१३ ॥
प्रजानां पालनं कार्य्यं नीतिपूर्व्वं नृपेण हि ।
मार्गसंरक्षणं कुर्य्यान्नृपः पान्थसुखाय च ॥ २१४ ॥
पान्थप्रपीड़का ये ये हन्तव्यास्ते प्रयत्नतः ।
त्रिभिरंशैर्बलं धार्य्यं दानमर्द्धांशकेन च ॥ २१५ ॥
अर्द्धांशेन प्रकृतयो ह्यर्द्धांशेनाधिकारिणः ।
अर्द्धांशेनात्मभोगश्च कोशोंऽशेन स रक्ष्यते ॥ २१६ ॥

---

णिताः धार्य्याः प्रतिपाल्या इत्यर्थः । इति उक्तप्रकारं मच्छासनं मदीयनिर्देशं श्रुत्वा ये जनाः अन्यथा वर्त्तयन्ति आचरन्ति, पापकारकान् राजाज्ञालङ्घनरूपपापकारिणः तान् महता प्रयत्नेन दण्डेन विनिशिष्याणि विशेषेण दण्डयिष्यामीत्यर्थः ॥ २०४—२१२ ॥

लिखित्वेति । राजा शासनम् आदेशं लिखित्वा चतुष्पथे धारयेत् स्थापयेत् सर्व्वेषां गोचरार्थमिति भावः । तथा असाधुषु दुर्जनेषु शत्रुषु च सदा उद्यतदण्डः दण्डधारी स्यात् ॥ २१२ ॥

प्रजानामिति । नृपेण राज्ञा नीतिपूर्व्वं यथानीति प्रजानां पालनं कार्य्यं तथा नृपः पान्थानां पथिकानां सुखाय मार्गसंरक्षणं कुर्य्यात् हिशब्दः अवधारणे ॥ २१४ ॥

पान्थेत्यादि । ये ये जनाः पान्थानां पथिकानां प्रपीड़काः पीड़नकारिणः ते प्रयत्नतः यत्नातिशयेन हन्तव्याः वध्याः राज्ञा इति शेषः । किञ्च वार्षिकस्य आयस्य त्रिभिः अंशैः तृतीयभागेनेत्यर्थः बलं सैन्यं धार्य्यं रक्षितव्यम् अर्द्धस्य आयार्द्धस्य अंशकेन चतुर्थभागेन समुदायस्य अष्टमभागेनेत्यर्थः दानं कर्त्तव्यमिति शेषः । पुनश्च अर्द्धांशेन पूर्व्ववत् समुदायस्य अष्टमभागेन प्रकृतयः प्रधानराजपुरुषाः अपरार्द्धांशेन अधिकारिणः रक्ष्या इति शेषः तथा अपरार्द्धांशेन उक्तया रीत्या समुदायाष्टमभागेन आत्मनः स्वस्य भोगश्च सम्पादनीय इति शेषः । अंशेन

आयस्यैवं षड्विभागैर्व्ययं कुर्य्यात् तु वत्सरे ।
सामन्तादिषु धर्मोऽयं न न्यूनस्य कदाचन ॥ ३१७ ॥
राज्यस्य यशसः कीर्त्तेर्धनस्य च गुणस्य च ।
प्राप्तस्य रक्षणेऽन्यस्य हरणे योद्यमोऽपि च ॥ ३१८ ॥
संरक्षणे संहरणे सुप्रयत्नो भवेत् सदा ।
शौर्य्यपाण्डित्यवक्तृत्वं दातृत्वं न त्यजेत् क्वचित् ॥३१९॥
बलं पराक्रमं नित्यमुत्थानञ्चापि भूमिपः ।
समितौ स्वात्मकार्य्ये वा स्वामिकार्य्ये तथैव च ॥३२०॥
त्यक्त्वा प्राणभयं युध्येत् स शूरस्त्वविशङ्कितः ।
पथ्यं सत्यञ्च यत्नेन बालस्यापि सुभाषितम् ॥ ३२१ ॥

---

अवशिष्टेन भागेन च कोषः धनरक्षणस्थानं रक्ष्यते पूर्य्यते सञ्चयस्याव-श्यकत्वादिति भावः ॥ ३१५ ॥ ३१६ ॥

आयस्येति । एवम् उक्तप्रकारेण आयस्य षड्विभागैः षड्भिः विभागैः अंशैः आयं षोढा विभज्येत्यर्थः वत्सरे प्रतिवर्षं व्ययं कुर्य्यात् । सामन्तादिषु पूर्वोक्तेषु अयं धर्मः नियमः सर्वव्ययस्येति भावः सर्वत्रैव इति अध्याहार्य्यं न्यूनस्य सामन्ताद्यपेक्षया निकृष्टस्य कदाचन अयं धर्मो नेत्यर्थः ॥ ३१७ ॥

राज्यस्येत्यादि । राजा प्राप्तस्य स्वकस्य राज्यस्य यशसः ख्यातेः कीर्त्तेः यशसः कार्य्यस्य धनस्य गुणस्य शौर्य्यादेश्च रक्षणे तथा अन्यस्य अप्राप्तस्य राज्यादेरिति शेषः हरणे उद्यमः उद्युक्तमिति चेष्टते इति उद्यमः चेष्टावान् उत्पूर्वकात् यच्छतेः अच्प्रत्ययः । किञ्च संरक्षणे सम्यक् रक्षणे संहरणे सम्यक् हरणे च सदा सुप्रयत्नः सम्यक् यत्नवांश्च भवेत् । भूमिपः क्वचित् कदाचिदपि शौर्य्यं पाण्डित्यं वक्तृत्वं दातृत्वं वदान्यतां बलं पराक्रमं नित्यं सततम् उत्थानम् उद्योगञ्च न त्यजेत् । यः समितौ युद्धे स्वात्मकार्य्ये निजाभीष्टसम्पादनिमित्ते कार्य्ये तथा स्वामिकार्य्ये

गृह्णाति धर्मतत्त्वं च व्यवस्यति स पण्डितः ।
राज्ञोऽपि दुर्गुणान् वक्ति प्रत्यक्षमविशङ्कितः ॥ २२२ ॥
स वक्ता गुणतुल्यांस्तान्न प्रस्तौति कदाचन ।
अदेयं यस्य नैवास्ति भार्य्यापुत्रादिकं धनम् ॥ २२३ ॥
आत्मानमपि संदत्ते पात्रे दाता स उच्यते ।
अशङ्कितक्षमो येन कार्य्यं कर्त्तुं बलं हि तत् ॥ २२४ ॥
किङ्करा इव येनान्ये नृपाद्याः स पराक्रमः ।
युद्धानुकूलव्यापार उत्थानमिति कीर्त्तितम् ॥ २२५ ॥
विषदोषभयादन्नं विमृशेत् कपिकुक्कुटैः ।

---

विग्रहे प्राणभयं त्यक्त्वा अविशङ्कितः निःशङ्कः सन् बलेन युध्येत् सः शूरः । यः पथ्यं पथ्यप्रायमित्यर्थः संक्षेपतः वाक्यमपि सुभाषितं यत्नेन गृह्णाति, धर्मतत्त्वं व्यवस्यति यथायथं निश्चिनोति सः पण्डितः । यः अविशङ्कितः सन् प्रत्यक्षं समक्षं राज्ञः अपि का कथान्येषामिति भावः दुर्गुणान् दोषान् वक्ति कथयति, कदाचन तान् दुर्गुणान् गुणैः तुल्यान् कृत्वेति शेषः न प्रस्तौति प्रकटयति न प्रशंसतीत्यर्थः सः वक्ता । यस्य भार्य्यापुत्रादिकं धनम् अदेयं नैव अस्ति यश्च आत्मानमपि पात्रे दानपात्रे संदत्ते ददाति हरिश्चन्द्रवदिति भावः स दाता उच्यते । येन गुणेन अशङ्कितं यथा तथा कार्य्यं कर्त्तुं क्षमः शक्तो भवति जन इति शेषः तत् हि तदेव बलम् ॥ २१८ ॥ २१९ ॥ २२० ॥ २२१ ॥ २२२ ॥ २२३ ॥ २२४ ॥

किङ्करा इति । येन गुणेन अन्ये नृपाद्याः राजप्रभृतयः किङ्करा इव दासा इव क्रियन्ते इति शेषः, सः पराक्रमः सर्वेऽपि पराक्रान्ताधीना इति भावः । युद्धस्य अनुकूलः उपयोगी व्यापारः उद्यमः उत्थानमिति कीर्त्तितं विधेयप्राधान्यात् कीर्त्तितमिति नपुंसकत्वम् ॥ २२

विषदोषेत्यादि । विषदोषभयात् अन्नं इदं भक्ष्यं तित्तिरकपोताद्यैः

हंसाः स्खलन्ति कूजन्ति भृङ्गा नृत्यन्ति मायूराः ॥ २२६ ॥
विरौति कुक्कुटो माद्येत् क्रौञ्चो वै रेचते कपिः ।
हृष्टरोमा भवेद् बभ्रुः शारिका वमते तथा ॥ २२७ ॥
दृष्ट्वैवं सविषं चान्नं तस्माद् भोज्यं परीक्षयेत् ।
भुञ्जीत षड्रसं नित्यं न द्वित्रिरससंकुलम् ॥ २२८ ॥
हीनातिरिक्तं न कटु मधुरक्षारसंकुलम् ।
आवेदयति यत् कार्यं शृणुयान्मन्त्रिभिः सह ॥ २२९ ॥
आरामादौ प्रकृतिभिः स्त्रीभिश्च नटगायकैः ।
विहरेत् सावधानस्तु मागधैरैन्द्रजालिकैः ॥ २३० ॥

---

लवणमधुराः रसाः आस्वाद्याः यस्य तादृशम् अन्नं कपिकुक्कुटैः बहु-वचनात् कपिकुक्कुटप्रभृतिभिरित्यर्थः विहगैः परीक्ष्य नित्यं भुञ्जीतेति उत्तरेणान्वयः । यतः सविषम् अन्नं दृष्ट्वैव हंसाः स्खलन्ति पतन्ति, भृङ्गाः भ्रमराः कूजन्ति कूजनम् अव्यक्तनिनादं कुर्वन्ति, मायूराः मयूरा एव मायूराः स्वार्थे अण्प्रत्ययः । नृत्यन्ति, कुक्कुटः विरौति चीत्-कारं करोति, क्रौञ्चः बकः माद्येत् मत्ततां गच्छति, कपिः वानरः रेचते पुरीषमुत्सृजति, बभ्रुः भारद्वाजाख्यपक्षिविशेषः हृष्टरोमा रोमाञ्चित-देहः भवेत् तथा शारिका वमते वमनं करोति वैशब्दोऽवधारणे । तस्मात् भोज्यं खाद्यं वस्तु परीक्षयेत् एतैरिति भावः । द्वित्रिरससङ्कुलं रस-द्वययुक्तं त्रययुक्तं वा न भुञ्जीत, हीनातिरिक्तं यस्मिन् यादृशो रसः उपयुज्यते ततो हीनरसयुक्तम् अधिकरसयुक्तं वा न भुञ्जीत, तथा कटुमधुरक्षारसङ्कुलं कटुमधुरलवणाक्तं न भुञ्जीत । किञ्च यत् कार्यं आवेदयति अर्थी प्रत्यर्थी वा इति शेषः तत् मन्त्रिभिः सह शृणुयात् ॥ २२६ ॥ २२७ ॥ २२८ ॥ २२९ ॥

आरामादाविति । सावधानः सदाऽवहितः सन् आरामादौ उप-वनादिरम्यायतने प्रकृतिभिः प्रधानपुरुषैः, स्त्रीभिः कामिनीभिः, नटैः

 

गजाश्वरथयानं तु प्रातः सायं सदाभ्यसेत् ।
व्यूहाभ्यासं सैनिकानां स्वयं शिक्षेच्च शिक्षयेत् ॥२२१॥
व्याघ्रादिभिर्वनचरैर्मयूराद्यैश्च पक्षिभिः ।
क्रीडयेन्मृगयां कुर्याद् दुष्टसत्त्वान्निपातयन् ॥ २२२ ॥
शौर्य्यं प्रवर्द्धते नित्यं लक्ष्यसन्धानसाधनम् ।
अकातरत्वं शस्त्रास्त्रशीघ्रपातनकारिता ॥ २२३ ॥
मृगयायां गुणा एते हिंसादोषो महत्तरः ।
इङ्गितं चेष्टितं यत्नात् प्रजानामधिकारिणाम् ॥२२४॥
प्रकृतीनाञ्च शत्रूणां सैनिकानां मतञ्च यत् ।
सभ्यानां बान्धवानाञ्च स्त्रीणामन्तःपुरे च यत् ॥ ३३५ ॥

---

नर्त्तकैः गायकैः मागधैः वैतालिकैः तथा ऐन्द्रजालिकैः आश्चर्य्यप्रदर्शकै-र्जनविशेषैः यथासमयमित्यध्याहार्य्यं विहरेत् ॥ २२० ॥

गजेति । सदा प्रतिदिनं प्रातः प्रातःकाले सायं सायंकाले च गजाश्वरथयानं गजेन अश्वेन रथेन वा यानं गमनम् अभ्यसेत् आचरेत् । तथा सैनिकानां व्यूहाभ्यासं रचनाप्रणालीं, व्यूहस्तु बलविन्यास इत्यमरः । स्वयं शिक्षेत् शिक्षयेच्च ॥ २२१ ॥

व्याघ्रेति । वनचरैः व्याघ्रादिभिः मयूराद्यैः पक्षिभिश्च वना-न्तानीव लक्षणाङ्कितैरित्यर्थः क्रीडयेत् तथा दुष्टसत्त्वान् हिंस्रान् प्राणिनः सिंहशार्दूलादीन् निपातयन् नाशयन् मृगयाम् आखेटं कुर्य्यात् ॥२२२॥

शौर्य्यमित्यादि । मृगयायां सदा शौर्य्यं शूरत्वं निःशङ्कत्व-मित्यर्थः लक्ष्यसन्धानं शरव्यान्वेषणकौशलमित्यर्थः अकातरत्वम् अक्लान्तत्वं, तथा शस्त्राणाम् अस्त्राणाञ्च शीघ्रपातनकारिता द्रुतपातित्वं प्रवर्द्धते प्रकर्षेण वृद्धिं प्राप्नोति । एते गुणाः शौर्य्यादय एव मृगयायां सन्तीति शेषः परम् एकः हिंसादोषः हिंसारूपं पापं महत्तरः अतिमहान्, अतः मृगया निवृत्तिरेव महाफलेति भावः । किञ्च सावधानमनाः सतर्कः सन् सदा प्रतिदिनं निशि रात्रौ तथा दिवापि शस्त्राणि कवचानि च यत्न

प्रकृतिभ्योऽधिकृतेभ्यो गूढचारं सुरक्षयेत् ।
सदैकनायकं राज्यं कुर्य्यान्न बहुनायकम् ॥ ३४० ॥
नानायकं क्वचिदपि कर्त्तुं मीहेत भूमिपः ।
राजकुले तु बहवः पुरुषा यदि सन्ति हि ॥ ३४१ ॥
तेषु ज्येष्ठो भवेद्राजा शेषास्तत्कार्य्यसाधकाः ।
गरीयांसो वराः सर्वसहायेभ्योऽभिवृद्धये ॥ ३४२ ॥
ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धः षण्ड एव यः ।
स राज्यार्हो भवेन्नैव भ्राता तत्पुत्र एव हि ॥ ३४३ ॥

---

तत्त्वं याथातथ्यं न जानाति न ग्राहं शक्नोति, न च तत्त्वम् आप्यते प्राप्यते राज्ञेति शेषः । ते च चाराः अबोधकरूपात् उक्तप्रकारेण यः न बोधयति तस्मात् नृपादित्यर्थः अनृतवादने असत्यभाषणे नैव बिभ्यन्ति भयं प्राप्नुवन्तीत्यर्थः ॥ ३३८ ॥

प्रकृतिभ्य इति । प्रकृतिभ्यः अधिकृतेभ्यः राजपुरुषेभ्यः गूढचारं सुरक्षयेत् । गूढचारः प्रकृत्यादीनां राजन्यनुरागविरागौ गूढं कथयति तेन ज्ञातेन तेषां गूढचारं प्रति विद्वेषो जायते अतस्तस्यानिष्टसम्भवः तस्मात् तं सुरक्षयेत् यथा ते तं प्रति नानिष्टमाचरन्तीति फलितार्थः । किञ्च राज्यं सदा एकनायकम् एकस्वामिकं कुर्य्यात् बहुस्वामिकं न, तथात्वे राज्यस्यास्थायित्वप्रसङ्गादिति भावः ॥ ३४० ॥

नेति । तेष्विति । भूमिपः राजा क्वचिदपि अनायकम् अस्वामिकं राज्यमिति शेषः कर्त्तुं न ईहेत चेष्टेत । यदि राजकुले बहवः पुरुषाः सन्ति विद्यन्ते, हिशब्दः अवधारणे । तेषु बहुषु ज्येष्ठः वयसा गुणेन चेति भावः राजा भवेत्, शेषाः अवशिष्टाः तस्य ज्येष्ठस्य कार्य्यसाधकाः सर्वसहायेभ्यः सर्वेभ्यः सहकारिभ्यः गरीयांसः वराः श्रेष्ठाः, अतः अभिवृद्धये अभ्युदयाय भवन्ति ॥ ३४१ ॥ ३४२ ॥

ज्येष्ठ इति । ज्येष्ठोऽपि अधिकारात् मध्यमादयो दण्डापूपन्यायसिद्धा वेदितव्याः । यः बधिरः श्रवणेन्द्रियहीनः, कुष्ठी महा-

राज्यस्यार्द्धप्रदानेन स्थापयेत् तान् समन्ततः ।
चतुर्दिक्षु यथा देशस्वामिनान् कुर्य्यात् सदा नृपः ॥ २४७ ॥
गोगजाश्वोष्ट्रकोषाणामाधिपत्ये नियोजयेत् ।
माता मातृसमा वाऽपि च तत्र नियोज्या महानसे ॥ २४८ ॥
सेनाधिकारके संयोज्या बान्धवाः श्यालकाः सदा ।
सद्दोषदर्शकाः कार्य्या गुरवः सुहृदश्च ये ॥ २४९ ॥
वस्त्रालङ्कारपात्राणां स्त्रियो योज्याः सुदर्शने ।
स्वयं सर्वन्तु विमृशेत् पर्य्यायेण च मुद्रयेत् ॥ २५० ॥

---

राज्येति । गो इति । नृपः तान् दायादान् राज्यस्य तुर्य्यांशदानेन चतुर्थांशप्रदानेन समन्ततः चतुर्दिक्षु स्थापयेत्, अथवा चतुर्दिक्षु सदा देशाधिपान् स्वस्वजनपदाधिपतीन् कुर्य्यात्, किंवा गवां गजादीनाम् अश्वानाम् उष्ट्राणां कोषाणाञ्च आधिपत्ये अधिकारकर्म्मणि नियोजयेत् नियुक्तान् कुर्य्यात् । किञ्च माता जननी तथा वा मातृसमा जननीतुल्या वा महानसे पाकक्रियाकर्म्मणि इत्यर्थः नियोक्तव्या स्थाप्या, आहारदानेन शरीररक्षणे मातृसमा नियमयादिति भावः ॥ २४७ ॥ २४८ ॥

सेनेति । बान्धवाः बन्धुवर्गाः श्यालकाः पत्नीभ्रातरश्च सदा सेनाधिकारे सैन्यकर्म्मणि संयोज्याः स्थाप्याः । ये च गुरवः गुरुजनाः सुहृदश्च ते सद्य आत्मनः राज्ञ इत्यर्थः दोषदर्शकाः कार्य्याः, दोषदर्शनकर्म्मणि अस्मिन् कर्म्मणि दोषः, किं कर्त्तव्यं किमकर्त्तव्यमित्यु परीक्षाकार्य्ये स्थाप्या इत्यर्थः ॥ २४९ ॥

वस्त्रेति । स्त्रियः स्त्रीवर्गाः वस्त्राणाम् अलङ्काराणां पात्राणाञ्च धनागारस्थानस्य सुदर्शने सुपरीक्षणे तत्त्वावधाने च योज्याः स्थापनीयाः । स्वयं सर्वं विमृशेत् केन किं क्रियते न वेति परिदर्शनं कुर्य्यात्, पर्य्यायेण क्रमेण मुद्रयेत् सर्वं परिदृष्टं राजनामाङ्कितं कुर्य्यादित्यर्थः ॥ २५० ॥

अन्तर्वेश्मनि रात्रौ वा दिवारण्ये विशोधिते ।
मन्त्रयेन्मन्त्रिभिः सार्द्धं भाविकृत्यन्तु निर्जने ॥ २५१ ॥
सुहृद्भिर्भ्रातृभिः सार्द्धं सभायां पुत्रबान्धवैः ।
राजकृत्यं सेनपैश्च सभ्याद्यैश्चिन्तयेत् सदा ॥ २५२ ॥
सभायां प्रत्यगर्द्धस्य मध्ये राजासनं स्मृतम् ।
दक्षसंस्था वामसंस्था विशेयुः पार्श्वकोष्ठगाः ॥ २५३ ॥
पुत्राः पौत्रा भ्रातरश्च भागिनेयाः स्वपृष्ठतः ।
दौहित्रा दक्षभागात् तु वामसंस्थाः क्रमादिमे ॥ २५४ ॥
पितृव्याः स्वकुलश्रेष्ठाः सभ्याः सेनाधिपास्तथा ।
स्वाग्रे दक्षिणभागे तु प्राक्संस्थाः पृथगासनाः ॥२५५॥

---

अन्तरिति । रात्रौ दिवा दिवसे वा विशोधिते परिष्कृते निर्जने अन्तर्वेश्मनि गृहाभ्यन्तरे वा अरण्ये मन्त्रिभिः सार्द्धं भावि भविष्यत् कृत्यं मन्त्रयेत् ॥ २५१ ॥

सुहृद्भिरिति । सभायां सुहृद्भिः मित्रैः भ्रातृभिः पुत्रबान्धवैः पुत्रैः बान्धवैः ज्ञातिभिः सेनपैः सेनाध्यक्षैः सभ्याद्यैश्च सदा राजकृत्यं चिन्तयेत् एतत् प्रकाश्यविषयमिति बोध्यम् ॥ २५२ ॥

सभायामिति । सभायां प्रत्यगर्द्धस्य पश्चिमार्द्धभागस्य मध्ये राजासनं सिंहासनं स्मृतं कथितं स्थाप्यत्वेनेति शेषः । तस्य दक्षसंस्थाः दक्षिणभागस्थाः केचिदिति शेषः केचिच्च वामसंस्थाः वामांशस्थिताः अन्ये उपविशेयुरित्यर्थः । अपरे तस्य पार्श्वयोः कोष्ठयोः विभागयोः गच्छन्ति तिष्ठन्तीति तथोक्ताः भवेयुरिति शेषः ॥ २५२ ॥

पुत्रा इत्यादि । पुत्राः पौत्राः भ्रातरः तथा भागिनेयाः स्वस्य राज्ञः पृष्ठतः पश्चाद्भागे इत्यर्थः तथा दौहित्राः दुहितृसुताः दक्षभागात् दक्षिणभागमाश्रित्येत्यर्थः यबर्थे पञ्चमी । विशेयुरित्यनेनान्वयः । इमे वक्ष्यमाणाः पितृव्याः स्वकुलश्रेष्ठाः निजकुलमहत्तराः सभ्याः सभा-

मातामहकुलश्रेष्ठा मन्त्रिणो बान्धवास्तथा ।
श्वशुराश्चैव श्यालाश्च वामांशे चाधिकारिणः ॥ ३५६ ॥
वामदक्षिणपार्श्वस्थौ जामाता भगिनीपतिः ।
स्वसहृद्यः समीपे वा स्वार्धासनगतः सुहृत् ॥ ३५७ ॥
दौहित्रभागिनेयानां स्थाने स्युर्दत्तकादयः ।
भागिनेयाश्च दौहित्राः पुत्रादिस्थानसंश्रिताः ॥ ३५८ ॥
यथा पिता तथाचार्य्यः समश्रेष्ठासने स्थितः ।
पार्श्वयोरग्रतः सर्वे लेखका मन्त्रिपृष्ठगाः ॥ ३५९ ॥
परिचारगणाः सर्वे सर्वेभ्यः पृष्ठसंस्थिताः ।

---

षदः तथा सेनाधिपाः क्रमात् वामभागस्थाः तिष्ठेयुरित्यनेनान्वयः । तथा स्वार्धे राजार्धे आसनस्थमित्यर्थः दक्षिणभागे तु मातामहकुलश्रेष्ठाः राज्ञ इति शेषः मन्त्रिणः बान्धवाः, श्वशुराः श्यालकाश्च प्राक्संस्थाः पूर्वाभिमुखाः पृथगासनाः विभिन्नासनस्थाः सन्तः तिष्ठेयुरित्यनेनान्वयः । वामांशे च मामांशे च अधिकारिणः राजकर्मचारिणः निवसेयुरिति शेषः ॥ ३५४ ॥ ३५५ ॥ ३५६ ॥

वामेति । जामाता भगिनीपतिश्च वामदक्षिणपार्श्वस्थौ क्रमेण तिष्ठेतामिति शेषः । स्वसहृद्यः आत्मसमः सुहृत् समीपे वा स्वस्य अर्द्धासनगतः वा तिष्ठेदित्यर्थः ॥ ३५७ ॥

दौहित्रेति । दत्तकादयः पुत्राः दौहित्रभागिनेयानां स्थाने स्युः भवेयुः । तथा भागिनेयाः दौहित्राश्च पुत्रादीनां स्थानसंश्रिताः स्थानस्थाः स्थानेषु तिष्ठेयुरित्यर्थः ॥ ३५८ ॥

यथेति । यथा पिता तथा आचार्य्यः वेदाध्यापकः गुरुः विद्यागुरुश्च पार्श्वयोः अग्रतः पर्य्यायाप्रभावे समश्रेष्ठासने सभे राजासनस्य समासने वा श्रेष्ठे आसने स्थितः भवेदिति शेषः । लेखकाः सर्वे मन्त्रिपृष्ठगाः मन्त्रिणां पश्चाद्भागेषु तिष्ठेयुरित्यर्थः ॥ ३५९ ॥

परिचारेति । परिचारकगणाः भृत्यवर्गाः सर्वे सर्वेभ्यः कथितेभ्यः

स्वर्णदण्डधरौ पार्श्वे प्रवेशनतिबोधकौ ॥ २६० ॥
विशिष्टचिह्नयुग्राजा स्वासने प्रविशेत् सुखम्।
सुभूषणः सुकवचः सुवस्त्रो मुकुटान्वितः ॥ २६१ ॥
सिद्धास्त्रसन्नद्धशस्त्रः सन् सावधानमनाः सदा।
सर्वस्मादधिको दाता शूरस्त्वं धार्मिको ह्यसि ॥ २६२ ॥
इति वाचं न शृणुयाच्छ्रावका वञ्चकास्तु ये।
रागाल्लोभाद्भयाद्यास्युर्मूका इव मन्त्रिणः ॥ २६३ ॥
न ताननुमतान् विद्यान्नृपतिः स्वार्थसिद्धये।
पृथक्पृथङ्मतं तेषां लेखयित्वा ससाधनम् ॥ २६४ ॥
विमृशेत् स्वमतेनैव यत् कुर्य्याद् बहुसम्मतम्।
गजाश्वरथपद्मादीन् भृत्यान् दासांस्तथैव च ॥ २६५ ॥

---

गुल्मादिभ्यः पृष्ठसंस्थिताः पश्चाद्भागेषु तिष्ठेयुरित्यर्थः। पार्श्वे प्रवेशनतिबोधकौ प्रवेशं नतिं प्रणामञ्च कार्य्यार्थिनामिति भावः बोधयत इति तथोक्तौ प्रवेशनतिनिवेदकौ स्वर्णदण्डधरौ द्वौ भृत्यौ तिष्ठेतामिति शेषः ॥ २६० ॥

विशिष्टेत्यादि। सिद्धास्त्रः शिक्षितास्त्रविद्यः राजा विशिष्टचिह्नयुक् विशेषलक्षणान्वितः सुभूषणः सुवर्णाद्यलङ्कृतः सुकवचः शोभनवर्मधारी सुवस्त्रः परिहितशोभनवसनः मुकुटान्वितः किरीटधरः सन्नद्धशस्त्रः शस्त्रधारी सदा सावधानमनाः सन् आसने राजासने सुखं प्रविशेत् उपविशेत् तथा त्वं सर्वस्मात् अधिकः दाता वदान्यः शूरः विक्रान्तः धार्मिकश्च असि इति वाचं चाटुकाराणामिति शेषः न शृणुयात्। ये श्रावकाः कार्य्यार्थिनां कार्य्यश्रावणकारिणः वञ्चकाः प्रतारकाः तथा ये मन्त्रिणः रागात् कार्य्यार्थिनां केषुचित् अनुरागात् स्नेहादित्यर्थः लोभात् तत्कार्य्ये धनप्राप्तिलोभात् वा भयात् यथार्थकथने स्वस्य हानिः तस्मात् भीताः मूका इव स्युः भवेयुः तान् स्वार्थसिद्धये स्वकार्य्यस्य राज्यकार्य्यस्य सिद्धये

सन्धारान् सैनिकान् कार्य्यक्षमान् ज्ञात्वा दिने दिने।
संरक्षयेत् प्रयत्नेन सुजीर्णान् सन्त्यजेत् सुधीः॥ २६६॥
अयुतक्रोशजां वार्त्तां हरेदेकदिनेन वै।
सर्वविद्याकलाभ्यासे शिक्षयेद् भृतिपोषितान्॥ २६७॥
समाप्तविद्यं संदृष्ट्वा तत्कार्य्ये तं नियोजयेत्।
विद्या कलोत्तमान् दृष्ट्वा वत्सरे पूजयेच्च तान्॥ २६८॥
विद्याकलानां वृद्धिः स्यात्तथा कुर्य्यान्नृपः सदा।
मृष्टाग्रगान् क्रूरवेषानतिनीतिविशारदान्॥ २६९॥

---

अनुमतान् न क्रियात् तेभ्यः राजकार्य्याभिमतं न स्पृष्टीयादित्यर्थः। तेषां मन्त्रिणां पृथक् पृथक् प्रत्येकं भिन्नं भिन्नं यथाधनं यथार्थं युक्तिसहितमित्यर्थः मतं लेखयित्वा स्वमतेन विमृशेत् विवेचयेत्। यत् बहुसम्मतं भवेत् तत् कुर्य्यात्। सुधीः सुबुद्धिः नृपः दिने दिने गजान् अश्वान् रथान् पश्वादीन् भृत्यान् पोष्यवर्गान् दासान् किङ्करान् सन्धारान् सर्वोऽनत्र्व्याश्च तथा सैनिकान् कार्य्यक्षमान् ज्ञात्वा विचार्य्य प्रयत्नेन संरक्षयेत् कार्य्यक्षमान् कर्त्तुमिति शेषः। सुजीर्णान् अत्यन्ताक्षमानित्यर्थः सन्त्यजेत्॥ २६१॥ २६२॥ २६३॥ २६४॥ २६५॥ २६६॥

अयुतेति। अयुतक्रोशजां दशसहस्रक्रोशस्थितां वार्त्तां संवादम् एकदिनेन हरेत् वैशब्दोऽवधारणे, यथा एकेन दिनेन तथाभूता वार्त्ता प्राप्यते प्रेर्य्यते वा तथा उपायं कुर्य्यादित्यर्थः, तथा जनान् भृतिपोषितान् भृत्या वेतनादिना पोषितान् सर्वविद्यानां कलानाञ्च चतुःषष्टिप्रकाराणां नृत्यगीतादीनाम् अभ्यासे शिक्षयेत्॥ २६७॥

समाप्तेति। तेषु समाप्तविद्यं सुशिक्षितमित्यर्थः संदृष्ट्वा सम्यक् परीक्ष्य संदृष्टेत्यार्षः प्रयोगः। तत्कार्य्ये तद्विद्यानुशीलनकार्य्ये वा तदध्यापनकार्य्ये तं नियोजयेत्। तथा तान् छात्रानित्यर्थः विद्यासु कलासु च उत्तमान् उत्कृष्टान् दृष्ट्वा परीक्ष्य वत्सरे प्रतिवत्सरमित्यर्थः पूजयेत् पुरस्कारादिना सम्मानयेत्॥ २६८॥

सिद्धास्त्रान्नम्रशस्त्रांश्च भटाकारान्नियोजयेत् ।
पुरि पर्य्यटनं नित्यं गजस्थो रञ्जयन् प्रजाः ॥ १७० ॥
राजयानारूढितः किं राज्ञा श्वा न समोऽपि च ।
श्वा समो न किं राजा कविभिर्भाव्यतेऽञ्जसा ॥ १७१ ॥
अतः स्वबान्धवैर्मित्रैः स्वसाम्यप्रापितैर्गुणैः ।
प्रकृतिभिर्नृपो गच्छेन्न नीचैस्तु कदाचन ॥ १७२ ॥
मिथ्यासत्यसदाचारैर्नीचः साधुः क्रमात् स्मृतः ।

---

विद्याकलानामिति । विद्याश्चेति । नृपः यदा यथा विद्याकलानां वृद्धिः उन्नतिः स्यात् तथा कुर्यात् । तथा क्रूरवेषान् भीषणवेषधारिणः नतिनीतिविशारदान् नतौ प्रणतौ नीतौ च विशारदान् विचक्षणान् सिद्धास्त्रान् नम्रशस्त्रान् शस्त्रधारिणः भटान् वीरान् आरात् समीपे पृष्ठाग्रगान् पश्चात् अग्रतश्च वर्त्तिनः नियोजयेत् रक्षेत् । स्वयञ्च गजस्थः गजारूढः सन् प्रजाः रञ्जयन् नित्यं पुरि नगरे पर्य्यटयेत् परिभ्रमेत् स्वार्थे णिजन्तोऽयं परिपूर्वोऽटधातुर्बोध्यः ॥ २६८ ॥ १७० ॥

राजेति । श्वा कुक्कुरः राजयानारूढितः राजकीयरथाद्यारोहकः राज्ञा समः तुल्यः किं न ? अपितु राजतुल्य एवेत्यर्थः । तथा राजा तादृशपरिच्छदपरिजनविहीन इति शेषः शुना कुक्कुरेण समः कविभिः विद्वद्भिः किं न विभाव्यते बुध्यते अपितु बुध्यत एव सर्वथा सर्वदा अपरिच्छदपरिजनेन राज्ञा भाव्यमिति भावः ॥ १७१ ॥

अत इति । अतः कारणात् नृपः स्वस्य राज्ञ इत्यर्थः साम्येन तुल्यतया प्रापितैः जनितैः गुणैः उपलक्षितैरित्यर्थः उपलक्षणे तृतीया । स्वबान्धवैः मित्रैः सुहृद्भिः तथा प्रकृतिभिः अमात्यवर्गैः सह गच्छेत् कदाचन नीचैः नतः सन् अपरिच्छदपरिजनः सन्नित्यर्थः न गच्छेदित्यर्थः ॥ १७२ ॥

मिथ्येति । मिथ्यासत्यसदाचारैः क्रमात् नीचः साधुश्च स्मृतः

साधुभ्योऽतिसमृद्धत्वं नीचाः सन्दर्शयन्ति हि ॥२७३॥
ग्रामान् पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे ।
अधिकारिगणैः काश्च रक्षिताः काश्च कर्षिताः ॥२७४॥
प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् ।
न भृत्यपक्षपाती स्यात् प्रजापक्षं समाश्रयेत् ॥ २७५ ॥
प्रजाशतेन संदिष्टं संत्यजेदधिकारिणम् ।
अमात्यमपि संवीक्ष्य सकृदन्यायगामिनम् ॥ २७६ ॥
एकान्ते दण्डयेत् स्पष्टमभ्यासापकृतं त्यजेत् ।
अन्यायवर्त्तिनां राज्यं सर्वस्वञ्च हरेन्नृपः ॥ २७७ ॥

---

कर्षितः मिथ्याभूतसदाचारैः नीचः सत्यभूतसदाचारैः साधुर्भवतीति भावः । नीचाः साधुभ्यः अतिशयेन समृद्धत्वं निजवाह्यं सन्दर्शयन्ति हिशब्दः अवधारणे ॥ २७३ ॥

ग्रामानिति । प्रजा इति । राजा वत्सरे प्रतिवर्षं स्वयं ग्रामान् पुराणि नगराणि देशांश्च संवीक्ष्य सम्यक् दृष्ट्वा तथा अधिकारिगणैः राजपुरुषैः काः प्रजाः रक्षिताः, काश्च कर्षिताः पीड़िताः, ताः संवीक्ष्य साधुभूतेन याथार्थ्येन व्यवहारं विचिन्तयेत् कार्य्यदर्शनं कुर्य्यात् भृत्यानाम् अधिकारिणां पक्षपाती न स्यात्, प्रजापक्षं समाश्रयेत् यथा प्रजानामनुरञ्जनं स्यात् तथा कुर्य्यादित्यर्थः ॥ २७४ ॥ २७५ ॥

प्रजेति । एकान्ते इति । प्रजाशतेन बहुभिः प्रजाभिरित्यर्थः संदिष्टं दत्तदोषमित्यर्थः अधिकारिणं अनियुक्तं राजकर्मचारिणं संत्यजेत् । तथा अमात्यमपि सचिवमपि सकृत् एकवारम् अन्यायकारिणं संवीक्ष्य एकान्ते निर्जने दण्डयेत्, प्रधानपुरुषस्य सर्वसमक्षमवमानस्य यथान्यायापराधे अकर्त्तव्यत्वादिति भावः । अभ्यासापकृतं पुनः पुनरपराधिनं स्पष्टं प्रकाशं दण्डयेत् त्यजेच्च । किञ्च नृपः अन्यायवर्त्तिनाम्

जितानां विषये स्थाप्यं धर्माधिकरणं सदा।
भृतिं दद्याद्विनिर्जितानां तद्वित्तानुरूपतः॥ ३७८॥
स्वानुरक्तां सुरूपाञ्च सुवस्त्रां प्रियवादिनीम्।
सुभूषणां सुसंस्कृतां प्रमदां शयने भजेत्॥ ३७९॥
यामद्वयं शयानश्च ह्यत्यन्तं सुखमश्नुते।
न संत्यजेच्च स्वस्थानं नौकया सानुगमं व्रजेत्॥ ३८०॥
स्थानभ्रष्टा नो विभान्ति दन्ताः केशा नखा नृपाः।
संश्रयेद् गिरिदुर्गाणि महापदि नृपः सदा॥ ३८१॥

---

अपचयंजितानां प्रख्यातानाम् अन्येषाञ्च राज्ञां भूमिं सर्वस्वं सर्वमस्थावर-द्रव्यञ्च हरेत्॥ ३७६॥ ३७७॥

जितानामिति। जितानां पराजितानां राज्ञां विषये राज्ये सदा धर्माधिकरणं विचारालयः स्थाप्यं, तेषां शान्तिदुर्नयदण्डनार्थमिति भावः। तथा निर्जितानां निःशेषेण पराजितानां सर्वस्वच्युतानामित्यर्थः तद्वित्तानुरूपतः तेषां व्यवहारानुसारेण भृतिं भरणोपयुक्तां वृत्तिं दद्यात्॥ ३७८॥

स्वानुरक्तामिति। स्वस्मिन् अनुरक्ताम् अनुरागवतीं सुरूपां सुन्दरीं सुवस्त्रां शोभनवस्त्रां प्रियवादिनीं सुभूषणां भूषितां तथा सुसंस्कृतां सुपरिष्कृताङ्गीं, प्रमदां पत्नीं शयने शय्यायां भजेत् सेवेत॥ ३७९॥

यामद्वयमिति। यामद्वयं प्रहरद्वयपर्यन्तं शयानश्च तिष्ठेदिति भावः, अत्यन्तं सुखम् अश्नुते लभते हिशब्दोऽवधारणे। स्वस्थानं निजस्थानं न संत्यजेत् स्थानस्थितः कापुरुषोऽपि सिंह इति भावः। तथा नौकया नौतिकौशलेन सानुगमं व्रजेत् यायात्॥ ३८०॥

स्थानेति। दन्ताः केशाः नखाः तथा नृपाः स्थानभ्रष्टाः स्थानच्युताः नो विभान्ति न राजन्ते। नृपः महापदि समागतायां दुर्भिक्षराष्ट्रविप्लवरूपायां काले हि सदा गिरिदुर्गाणि पर्वतरूपदुर्गस्थानानि संश्रयेत्॥ ३८१॥

तदाश्रयाद् दस्युहत्या स्वराज्यन्तु समाहरेत् ।
विवाहदानयज्ञार्थं विनाष्टांशावशेषितम् ॥ ३८२ ॥
सर्वतस्तु हरेद् दस्युरसतामखिलं धनम् ।
नैकत्र संवसेन्नित्यं विश्वसेन्नैव कं प्रति ॥ ३८३ ॥
सदैव सावधानः स्यात् प्राणनाशं न चिन्तयेत् ।
क्रूरकर्मा सदोद्युक्तो निर्घृणो दस्युकर्मसु ॥ ३८४ ॥
विमुखः परदारासु कुलकन्याप्रदूषणे ।
पुत्रवत् पालिता भृत्याः समये मत्ततां गताः ॥ ३८५ ॥
न दोषः स्यात् प्रयत्नस्य भागधेयं स्वयं हि तत् ।
दृष्ट्वा सुविफलं कर्म तपस्तप्त्वा दिवं व्रजेत् ॥ ३८६ ॥

---

तदाश्रयादिति । सर्वत इति । तस्य गिरेः आश्रयात् गिरि-आश्रितत्वेनेत्यर्थः दस्युहत्या दस्युव्यवहारेण तु पुनः स्वराज्यं समाहरेत् आददीत, विवाहदानयज्ञार्थं वैवाहिकं दानीयं यज्ञीयञ्च धनं विना दस्युः दस्युभूतो नृप इत्यर्थः अष्टांशावशेषितम् अष्टमांशावशिष्टम् असताम् असाधूनाम् अखिलं समग्रं धनं सर्वतः सर्वैः प्रकारैः हरेत्, अष्टमांशस्तु तेषां हस्त्यर्थं रक्षणीय इति भावः । नित्यम् एकत्र न संवसेत् तथा कं प्रति नैव विश्वसेत् ॥ ३८२ ॥ ३८३ ॥

सदैवेति । विमुख इति । सदैव सावधानः अवहितः क्रूरकर्मा निष्ठुरव्यापारः सदा उद्युक्तः दस्युकर्मसु निर्घृणः किन्तु परदारेषु परस्त्रीषु तथा कुलकन्यानां कुलकुमारीणां प्रदूषणे बलात्कारादिकर्मणि विमुखः पराङ्मुखः भवेत् तथा ये पुत्रवत् पालिताः भृत्याः समये दुःसमये मत्ततां गताः, तेषां प्राणनाशं न चिन्तयेत् अपराधे व्यत्यये न नाशयेत् तेषां पालनमपि कर्त्तव्यम् इति भावः ॥ ३८४ ॥ ३८५ ॥

नेति । प्रयत्नस्य उद्योगस्य न दोषः स्यात् विफलत्वे इति भावः; हि यतः तत् स्वयं भागधेयं भाग्यमित्यर्थः भाग्यवशात् उद्योगे विफले

उक्तं समासतो राजकृत्यं मिश्रेऽधिकं ब्रुवे ।
अध्यायः प्रथमः प्रोक्तो राजकार्य्यनिरूपकः ॥ ३८७ ॥

इति प्रथमोऽध्यायः समाप्तः ।

---

# द्वितीयोऽध्यायः ।

यद्यप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं महोदयम् ॥ १ ॥
सर्वविद्यासु कुशलो नृपो ह्यपि सुमन्त्रवित् ।
मन्त्रिभिस्तु विना मन्त्रं नैकोऽर्थं चिन्तयेत् क्वचित् ॥२॥

---

को दोष इति भावः । कर्म्म उद्योगमित्यर्थः सुविफलं सर्वथा विफलं दृष्ट्वा येषे तपस्तप्त्वा दिवं स्वर्गं व्रजेत् ॥ ३८६ ॥

उक्तमिति । समासतः संक्षेपेण राजकृत्यम् उक्तम् । मिश्रे अस्य ग्रन्थस्य मिश्राख्ये चतुर्थाध्यायप्रकरणे अधिकम् अस्य विस्तारं ब्रुवे कथयामि । राजकार्य्यनिरूपकः राजकार्य्यप्रदर्शकः प्रथमः अध्यायः प्रोक्तः कथितः ॥ ३८७ ॥

इति प्रथमोऽध्यायः समाप्तः ।

---

यदीति । यद्यपि कर्म कार्य्यम् अल्पतरं सामान्यमित्यर्थः तदपि असहायेन एकेन पुरुषेण दुष्करं कर्तुमशक्यं महोदयं महोन्नतं राज्यं किमु किं वक्तव्यमित्यर्थः ॥ १ ॥

सर्वेति । सर्वविद्यासु कुशलः सुमन्त्रवित् शोभनमन्त्रविज्ञः अपि नृपः एकः एकाकी सन् मन्त्रिभिः विना क्वचित् मन्त्रं मन्त्ररूपम् अर्थं न चिन्तयेत् स्वयमेवोऽवधारयेत् ॥ २ ॥

सभ्याधिकारिप्रकृतिसभासत्सुमते स्थितः ।
सर्वदा स्यान्नृपः प्राज्ञः स्वमते न कदाचन ॥ ३ ॥
प्रभुः स्वातन्त्र्यमापन्नो ह्यनर्थायैव कल्पते ।
भिन्नराष्ट्रो भवेत् सद्यो भिन्नप्रकृतिरेव च ॥ ४ ॥
पुरुषे पुरुषे भिन्नं दृश्यते बुद्धिवैभवम् ।
आप्तवाक्यैरनुभवैरागमैरनुमानतः ॥ ५ ॥
प्रत्यक्षेण च सादृश्यैः साहसैश्च छलैर्बलैः ।
वैचित्र्यं व्यवहाराणामौन्नत्यं गुरुलाघवैः ॥ ६ ॥
न हि तत् सकलं ज्ञातुं नरेणैकेन शक्यते ।
अतः सहायान् वरयेद्राजा राज्यविवृद्धये ॥ ७ ॥

---

सभ्येति। प्राज्ञः प्रकृष्टज्ञानवान् नृपः सभ्यानाम् अधिकारिणां कर्मचारिणां प्रकृतीनां प्रधानपुरुषाणां सभासदाञ्च सुमते सुनिश्चित-मन्त्रविषये सर्वदा स्थितः स्यात् कदाचन स्वमते न तिष्ठेदिति शेषः ॥२॥

प्रभुरिति । स्वातन्त्र्यमापन्नः स्वेच्छाधीनः प्रभुः अनर्थाय एव कल्पते हि यतः भिन्नप्रकृतिः प्रकृतीनाम् अननुवर्त्तीत्यर्थः प्रभुः सद्यः झटिति भिन्नराष्ट्रः राज्यच्युतः भवेत् ॥ ४ ॥

पुरुष इति । प्रत्यक्षेणेति । आप्तवाक्यैः विश्वस्तवचनैः, अनुभवैः आगमैः शास्त्रानुशीलनैः अनुमानतः अनुमानप्रमाणेन च पुरुषे पुरुषे प्रतिपुरुषमित्यर्थः बुद्धिवैभवं भिन्नं तथा प्रत्यक्षेण प्रमाणेन सादृश्यैः साहसैः छलैः बलैश्च व्यवहाराणाम् आचाराणां वैचित्र्यं विभिन्नत्वं गुरुलाघवैः औन्नत्यञ्च कस्य वा गुर्वी उन्नतिः कस्य वा लघ्वीत्येवमित्यर्थः दृश्यते ॥ ५ ॥ ६ ॥

न हीत्यादि । तत् सकलं पूर्वोक्तं प्रतिपुरुषीयबुद्धिविभवादि एकेन नरेण ज्ञातुं न शक्यते, अतः अस्मात् कारणात् राजा राज्यविवृद्धये राज्यस्य अभ्युदयाय कुलगुणशीलवयस्कान् कुलीनान् गुणिनः सुशीला-

कुलगुणशीलवृद्धान् शूरान् भक्तान् प्रियंवदान् ।
हितोपदेशकान् क्लेशसहान् धर्मरतान् सदा ॥ ८ ॥
कुमार्गगं नृपमपि बुद्ध्योद्धर्त्तुं क्षमान् शुचीन् ।
निर्मत्सरान् कामक्रोधलोभहीनान्निरालसान् ॥ ९ ॥
हीयते कुसहायेन स्वधर्माद्राज्यतो नृपः ।
कुकर्मणा प्रनष्टास्तु दितिजाः कुसहायतः ॥ १० ॥
नष्टा दुर्य्योधनाद्यास्तु नृपाः शूरा बलाधिकाः ।
निरभिमानो नृपतिः सुसहायो भवेदतः ॥ ११ ॥
युवराजोऽमात्यगणो भुजावेतौ महीभुजः ।
तावेव नयने कर्णौ दक्षसव्यौ क्रमात् स्मृतौ ॥ १२ ॥

---

नित्यर्थः शूरान् बलिनः अभीरूनित्यर्थः भक्तान् अनुरक्तान् प्रियंवदान् हितोपदेशकान् क्लेशसहान् सहिष्णूनित्यर्थः सदा धर्मरतान् कुमार्गग कुपथप्रवृत्तमपि नृपं बुद्ध्या उद्धर्त्तुं कुपथात् निवारयितुं क्षमान् शुचीन् शुद्धचरित्रान् निर्मत्सरान् विद्वेषरहितान् कामक्रोधलोभहीनान् तथा निरालसान् आलस्यरहितान् सहायान् वरयेत् नियुञ्जीत ॥७॥८॥९॥

हीयते इति । कुसहायेन मन्दसचिवेन नृपः स्वधर्मात् राज्यतः राज्याच्च हीयते भ्रश्यति । दितिजाः दैत्याः कुसहायतः कुकर्मणा कुमन्त्रिपरामर्शेन कुकार्यकरणादित्यर्थः प्रनष्टाः निधनं गताः तथाह्यो-ऽवधार्य्ये ॥ १० ॥

नष्टा इति । शूराः विक्रमशीलाः बलाधिकाः समधिकबल-सम्पन्नाः दुर्य्योधनाद्याः नृपाः नष्टाः कुसहायत इति शेषः । अतः अस्मात् कारणात् नृपतिः निरभिमानः अहं सर्वं जानामीत्यभिमान-वर्जितः सन् सुसहायः शोभनसहायसम्पन्नः भवेत् ॥ ११ ॥

युवेति । युवराजः राजकर्मणि अभिषिक्तः पुत्रादिः अमात्यगणः मन्त्रिवर्गश्च एतौ महीभुजः राज्ञः भुजौ बाहुस्वरूपौ । तौ एव

बाहुकर्णादिहीनः स्याद् विना ताभ्यामतो नृपः ।
योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा ॥ १३ ॥
मुद्रां विनाखिलं राजकृत्यं कर्त्तुं क्षमं सदा ।
कल्पयेद् युवराजार्थमौरसं धर्मपत्निजम् ॥ १४ ॥
स्वकनिष्ठं पितृव्यं वानुजं वाग्रजसम्भवम् ।
पुत्रं पुत्रीकृतं दत्तं यौवराज्येऽभिषेचयेत् ॥ १५ ॥
क्रमादभावे दौहित्रं स्वप्रियं वा नियोजयेत् ।
स्वहितायापि मनसा नैतान् संकर्षयेत् क्वचित् ॥ १६ ॥
स्वधर्मनिरतान् शूरान् भक्तान् नीतिमतः सदा ।

---

क्रमात् दक्षसव्यौ दक्षिणवामौ नयने कर्णौ च स्मृतौ कथितौ राज्ञ इति शेषः ॥ १२ ॥

बाहु इति । ताभ्यां युवराजामात्याभ्यां विना नृपः बाहुकर्णादिहीनः भुजश्रोत्रनेत्ररहितः स्यात् अतः अस्मात् कारणात् चिन्तयित्वा विविच्य तौ युवराजामात्यौ योजयेत्, अन्यथा महानाशाय भवतीति शेषः ॥ १३ ॥

मुद्रामिति । मुद्राम् आत्मस्वं विना परित्यज्य सर्वदा सदा अखिलं समग्रं राजकृत्यं कर्त्तुं क्षमं धर्मपत्नीजम् औरसं पुत्रं युवराजार्थं युवराजपदाभिषेकं कल्पयेत् ॥ १४ ॥

स्वेति । वा अथवा स्वकनिष्ठं भ्रातरम् अनुजं वयःकनिष्ठं पितृव्यम् अग्रजसम्भवं पुत्रं ज्येष्ठभ्रातृपुत्रं वा पुत्रीकृतं शास्त्रविधिना परिगृहीतं दत्तं दत्तकपुत्रं यौवराज्ये अभिषेचयेत् ॥ १५ ॥

क्रमादिति । अभावे पूर्वोक्तानामिति शेषः, क्रमात् दौहित्रं वा स्वप्रियम् आत्मनः प्रियं जनं वा कञ्चन जनं नियोजयेत् क्वचित् कदाचित् स्वहिताय स्वस्य आत्मनः हिताय यद्वि हितमिच्छेत् तदेत्यर्थः एतान् यथोक्तान् युवराजान् मनसापि न संकर्षयेत् न पीडयेत् ॥ १६ ॥

स्वधर्मेति । स्वधर्मनिरतान् आत्मधर्मस्थितान् शूरान् विक्रान्तान्

कुलगुणशीलवृद्धान् शूरान् भक्तान् प्रियंवदान् ।
हितोपदेशकान् क्लेशसहान् धर्मरतान् सदा ॥ ८ ॥
कुमार्गगं नृपमपि बुद्ध्योद्धर्तुं क्षमान् शुचीन् ।
निर्मत्सरान् कामक्रोधलोभहीनान्निरालसान् ॥ ९ ॥
हीयते कुसहायेन स्वधर्माद्राज्यतो नृपः ।
कुकर्मणा प्रनष्टास्तु दितिजाः कुसहायतः ॥ १० ॥
नष्टा दुर्य्योधनाद्यास्तु नृपाः शूरा बलाधिकाः ।
निरभिमानो नृपतिः सुसहायो भवेदतः ॥ ११ ॥
युवराजोऽमात्यगणो भुजावेतौ महीभुजः ।
तावेव नयने कर्णौ दक्षसव्यौ क्रमात् स्मृतौ ॥ १२ ॥

---

इत्यर्थः शूरान् बलिनः अभीरूनित्यर्थः भक्तान् अनुरक्तान् प्रियंवदान् हितोपदेशकान् क्लेशसहान् सहिष्णूनित्यर्थः सदा धर्मरतान् कुमार्गगं कुपथप्रवृत्तमपि नृपं बुद्ध्या उद्धर्तुं कुपथात् निवारयितुं क्षमान् शुचीन् शुद्धचरितान् निर्मत्सरान् विद्वेषरहितान् कामक्रोधलोभहीनान् तथा निरालसान् आलस्यरहितान् सहायान् वरयेत् नियुञ्ज्यात् ॥७॥८॥९॥

हीयते इति । कुसहायेन मन्दबुद्धिना नृपः स्वधर्मात् राज्यतः राज्याच्च हीयते भ्रश्यति । दितिजाः दैत्याः कुसहायतः कुकर्मणा कुमन्त्रिपरामर्शेन कुकार्यकरणादित्यर्थः प्रनष्टाः निधनं गताः तथाह्यो-ऽवधार्य्यते ॥ १० ॥

नष्टा इति । शूराः विक्रमशीलाः बलाधिकाः समधिकबल-सम्पन्नाः दुर्य्योधनाद्याः नृपाः नष्टाः कुसहायत इति शेषः । अतः अस्मात् कारणात् नृपतिः निरभिमानः स्वयं सर्वं जानामीत्यभिमान-वर्जितः सन् सुसहायः शोभनसहायसम्पन्नः भवेत् ॥ ११ ॥

युवेति । युवराजः राजसम्बन्धि अभिषिक्तः पुत्रादिः अमात्यगणः मन्त्रिवर्गश्च एतौ महीभुजः राज्ञः भुजौ बाहुस्वरूपौ । तौ एव

बाहुकर्णाक्षिहीनः स्याद् विना ताभ्यामतो नृपः ।
योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा ॥ १३ ॥
मुद्रां विनाखिलं राजकृत्यं कर्तुं क्षमं सदा ।
कल्पयेद् युवराजार्थमौरसं धर्मपत्निजम् ॥ १४ ॥
स्वकनिष्ठं पितृव्यं वानुजं वाग्रजसम्भवम् ।
पुत्रं पुत्रीकृतं दत्तं यौवराज्येऽभिषेचयेत् ॥ १५ ॥
क्रमादभावे दौहित्रं स्वप्रियं वा नियोजयेत् ।
स्वहितायापि मनसा नैतान् संकर्षयेत् क्वचित् ॥ १६ ॥
स्वधर्मनिरतान् शूरान् भक्तान् नीतिमतः सदा ।

---

क्रमात् दक्षसव्यौ दक्षिणवामौ नयने कर्णौ च स्मृतौ कथितौ राज्ञ इति शेषः ॥ १२ ॥

बाह्विति । ताभ्यां युवराजामात्याभ्यां विना नृपः बाहुकर्णाक्षिहीनः भुजश्रोत्रनेत्ररहितः स्यात् अतः अस्मात् कारणात् चिन्तयित्वा विविच्य तौ युवराजामात्यौ योजयेत्, अन्यथा महानाशाय भवतीति शेषः ॥ १३ ॥

मुद्रामिति । मुद्राम् आरक्षं विना परित्यज्य इत्यर्थः सदा अखिलं समग्रं राजकृत्यं कर्तुं क्षमं धर्मपत्नीजम् औरसं पुत्रं युवराजार्थं युवराजपदाभिषेकं कल्पयेत् ॥ १४ ॥

स्वेति । वा अथवा स्वकनिष्ठं भ्रातरम् अनुजं वयःकनिष्ठं पितृव्यम् अग्रजसम्भवं पुत्रं ज्येष्ठभ्रातृपुत्रं वा पुत्रीकृतं पुत्रप्रतिनिधित्वेन परिगृहीतं दत्तं दत्तकपुत्रं यौवराज्ये अभिषेचयेत् ॥ १५ ॥

क्रमादिति । अभावे पूर्वोक्तानामिति शेषः, क्रमात् दौहित्रं वा स्वप्रियम् आत्मनः प्रियं जनं वा कञ्चन जनं नियोजयेत् क्वचित् कदाचित् स्वहिताय स्वस्य आत्मनः हिताय यदि हितमिच्छेत् तदेत्यर्थः एतान् पूर्वोक्तान् युवराजान् मनसापि न संकर्षयेत् न पीडयेत् ॥ १६ ॥

स्वधर्मेति । स्वधर्मनिरतान् आत्मधर्मस्थितान् शूरान् विक्रान्तान्

संरक्षयेद्राजपुत्रान् बालानपि सुयत्नतः ॥ १७ ॥
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ।
रक्ष्यमाणा यदि छिद्रं कथञ्चित् प्राप्नुवन्ति ते ॥ १८ ॥
सिंहशावा इव घ्नन्ति रक्षितारं द्विपं द्रुतम् ।
राजपुत्रा मदोद्धूता गजा इव निरङ्कुशाः ॥ १९ ॥
पितरञ्चापि निघ्नन्ति भ्रातरं त्वितरं न किम् ।
मूर्खो बालोऽपीच्छति स्वाम्यं किं नु पुनर्युवा ? ॥२०॥
स्वात्मन्तसन्निकर्षेण राजपुत्रांस्तु रक्षयेत् ।
सद्भृत्यैश्चापि तत् स्वान्तं छलैर्ज्ञात्वा सदा स्वयम् ॥२१

---

भक्तान् अनुरक्तान् नीतिमतः नयसम्पन्नान् राजपुत्रान् राजवंश्यान् बालान् अप्राप्तवयस्कानपि सुयत्नतः अतियत्नेन सदा संरक्षयेत् ॥ १७ ॥

लोलुभ्यमाना इति । ते राजपुत्राः अर्थेषु तदीयेषु धनेषु लोलुभ्यमानाः राज्ञा इति शेषः तेषामर्थलोभादिति भावः, अरक्षिताः सन्तः एनं नृपं हन्युः नाशयेयुः । किञ्च रक्ष्यमाणा अपि ते यदि कथञ्चित् छिद्रं दोषं कथञ्चित् प्राप्नुवन्ति तदापि एनं हन्युरित्यनेनान्वयः ॥१८॥

सिंहशावा इति । सिंहशावाः द्विपं हस्तिनमिव मदोद्धूताः मदमत्ताः निरङ्कुशाः गजाः इव राजपुत्राः रक्षितारम् अयत्नत इति भावः, नृपं घ्नन्ति नाशयन्ति ॥ १९ ॥

पितरमिति । ते पितरं भ्रातरञ्चापि निघ्नन्ति इतरम् अपरं किं नु वक्तव्यमित्यर्थः, नु वितर्के । मूर्खः बालः शिशुरपि स्वस्य आत्मनः स्वाम्यं प्रभ्वाचारित्वम् इच्छति, युवा किं पुनः ? ॥ २० ॥

स्वात्मन्तेति । सदा स्वयं सद्भृत्यैश्च तत्स्वान्तं तेषां राजपुत्राणां स्वान्तं मनः छलैः कौशलैः ज्ञात्वा स्वात्मन्तसन्निकर्षेण स्वस्य आत्मनः अन्तिके यः सन्निकर्षः सङ्गः तेन रक्षयेत् पालयेत् ॥ २१ ॥

सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान् ।
क्लेशसहांश्च वाग्दण्डपारुष्यानुभवान् सदा ॥ २२ ॥
शौर्य्ययुद्धरताम् सर्वकलाविद्याविदोऽञ्जसः ।
सुविनीतान् प्रकुर्वीत ह्यमात्याद्यैर्नृपः सुतान् ॥ २३ ॥
सुवस्त्राद्यैर्भूषयित्वा लालयित्वा सुक्रीड़नैः ।
अर्हयित्वासनाद्यैश्च पालयित्वा सुभोजनैः ॥ २४ ॥
कृत्वा तु यौवराज्यार्हान् यौवराज्येऽभिषेचयेत् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥ २५ ॥
राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि ॥ २६ ॥

---

सुनीतीति । शौर्य्येति । नृपः अमात्याद्यैः सुतान् सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान् संग्रामनिपुणान् सदा क्लेशसहान् वाग्दण्डपारुष्यानुभवान् वाक्पारुष्यदण्डपारुष्याभिज्ञान् शौर्य्ययुद्धरतान् विक्रमशालिनः सर्वकलाविद्याविदः सर्वासु कलाविद्यासु चतुःषष्टिप्रकारासु विद्यासु विज्ञान् अञ्जसः क्षिप्रकारिणः तथा सुविनीतान् शोभनविनयसम्पन्नान् प्रकुर्वीत ॥ २२ ॥ २३ ॥

सुवस्त्राद्यैरिति । कृत्वेति । सुवस्त्राद्यैः शोभनवसनादिभिः भूषयित्वा सुक्रीड़नैः शोभनक्रीड़नद्रव्यैः लालयित्वा आनन्दितान् कृत्वा आसनाद्यैः उपवेशनादिना अर्हयित्वा सम्भाव्य, सुभोजनैः पालयित्वा क्रमेण यौवराज्यार्हान् कृत्वा पुत्रानिति शेषः यौवराज्ये अभिषेचयेत्, हि यतः अविनीतः अशिक्षितः कुमारो यस्य तादृशं कुलम् आशु शीघ्रं विनश्यति विनाशं प्राप्नोति ॥ २४ ॥ २५ ॥

राजपुत्र इति । राजपुत्रः सुदुर्वृत्तः अतिदुर्वृत्तः अपि परित्यागं न अर्हति न परित्याज्यो भवतीत्यर्थः, स क्लिश्यमानः परान् आश्रित्य पितरं हन्ति हि हन्त्येव ॥ २६ ॥

महाजनांस्तथा राष्ट्रे नावमन्येत पीडयेत् ।
प्राप्यापि महतीं वृद्धिं वर्त्तेत पितुराज्ञया ॥ ३७ ॥
पुत्रस्य पितुराज्ञाहि परमं भूषणं स्मृतम् ।
भार्गवेण हता माता राघवस्तु वनं गतः ॥ ३८ ॥
पितुस्तपोबलात् तौ तु मातरं राज्यमापतुः ।
शापानुग्रहयोः शक्तो यस्तस्याज्ञा गरीयसी ॥ ३९ ॥
सोदरेषु च सर्वेषु स्वस्याधिक्यं न दर्शयेत् ।
भागार्हभ्रातृणां नष्टो ह्यवमानात् सुयोधनः ॥ ४० ॥

---

स्वेति । मातरं पितरं गुरुं भ्रातरं भगिनीं वा अन्यान् राजवल्लभान् राजानुरक्तान् स्वसम्पत्तिं नैव प्रदद्यात् नैव, इत्यादिरर्थः सम्प्रदानेषु कर्म्मविभक्तिरार्षी चेति बोध्यं, दाने धनक्षयात् प्रभुत्वहानिः स्यादिति भावः ॥ ३६ ॥

महाजनानिति । राष्ट्रे राज्ये महाजनान् महद्वंशीयान् न अवमन्येत तथा न पीडयेत् । किन्तु महतीम् वृद्धिम् ऐश्वर्य्यं प्राप्यापि पितुराज्ञया वर्त्तेत तिष्ठेत् ॥ ३७ ॥

पुत्रस्येति । पितुराज्ञाहि पुत्रस्य परमं भूषणं स्मृतं कथितं, तथाहि भार्गवेण परशुरामेण माता हता नाशिता, राघवस्तु रामश्च वनं गतः पितुराज्ञयेति शेषः ॥ ३८ ॥

पितुरिति । तौ भार्गवराघवौ तु पितुस्तपोबलात् मातरं राज्यम् आपतुः प्रापतुः भार्गवस्य माता पुनर्जीविता, रामस्य च पुनः राज्यप्राप्तिराशीदित्यर्थः, अतः यः शापानुग्रहयोः अभिशम्पातप्रसादयोः शक्तः समर्थः, तस्य आज्ञा गरीयसी अतिगुर्वीत्यर्थः ॥ ३९ ॥

सोदरेष्विति । सर्वेषु सोदरेषु भ्रातृषु स्वस्य आधिक्यम् आत्मनः ऐश्वर्य्यम् आधिपत्यं वा न दर्शयेत्, हि यतः भागार्हाणां दायादानां भ्रातृणाम् अवमानात् सुयोधनः नष्टः विनाशं गत इत्यर्थः ॥ ४० ॥

पितुराज्ञोल्लङ्घनेन प्राप्यापि पदमुत्तमम् ।
तस्माद् भ्रष्टा भवन्तीह दासवद्राजपुत्रकाः ॥ ४१ ॥
ययातेश्च यथा पुत्रा विश्वामित्रसुता यथा ।
पितृसेवापरस्तिष्ठेत् कायवाङ्मानसैः सदा ॥ ४२ ॥
तत्कर्म नियतं कुर्य्याद् येन तुष्टो भवेत् पिता ।
न तत् कुर्य्याद् येन पिता मनागपि विनीदति ॥ ४३ ॥
यस्मिन् पितुर्भवेत् प्रीतिः कार्य्यं तस्मिन् प्रियञ्चरेत् ।
यस्मिन् द्वेषं पिता कुर्य्यात् स्वस्यापि द्वेष्य एव सः ॥ ४४ ॥
असम्मतं विरुद्धं वा पितुर्नैव समाचरेत् ।
चारसूचकदोषेण यदि स्यादन्यथा पिता ॥ ४५ ॥
प्रज्ञात्यनुमतं ज्ञात्वा तमेकान्ते प्रबोधयेत् ।
अन्यथा सूचकान्नित्यं महद्दण्डेन दण्डयेत् ॥ ४६ ॥

---

पितुरिति । ययातेरिति । इह जगति राजपुत्रकाः उत्तमं पदं प्राप्यापि पितुः आज्ञोल्लङ्घनेन तस्मात् उत्तमात् पदात् भ्रष्टाः दासवत् भवन्ति, यथा ययातेः पुत्राः यदुप्रभृतयः, यथा वा विश्वामित्रस्य मुनेः सुताः पुत्राः । अतोऽत् कायवाङ्मानसैः सदा पितृसेवापरः पितृशुश्रूषानिरतः तिष्ठेत् ॥ ४१ ॥ ४२ ॥

तदिति । येन कर्म्मणा पिता तुष्टो भवेत् नियतं तत् कर्म कुर्य्यात्, येन कर्म्मणा पिता मनागपि अल्पमपि विनीदति क्षोभमायाति तत् न कुर्य्यात् ॥ ४२ ॥

यस्मिन्निति । यस्मिन् जने पितुः प्रीतिः भवेत्, तस्मिन् कार्य्यं प्रियं चरेत् कुर्य्यात् । पिता यस्मिन् द्वेषं कुर्य्यात् सः स्वस्यापि आत्मनोऽपि द्वेष्य एव ॥ ४४ ॥

असम्मतमिति । प्रज्ञात्यनुमतमिति । पितुः असम्मतम् अनभिमतं विरुद्धम् 'अप्रिय' कार्य्यं वा नैव समाचरेत् । चाराणां गूढ़पुरुषाणां

प्रकृतीनाञ्च कपटस्थान्तं विद्यात् सदैव हि ।
प्रातर्नत्वा प्रतिदिनं पितरं मातरं गुरुम् ॥ ४७ ॥
राजानं स्वकृतं यद् यद् निवेद्यानुदिनं ततः ।
एवं गृहाविरोधेन राजपुत्रो वसेद् गृहे ॥ ४८ ॥
विद्यया कर्मणा शीलैः प्रजाः संरञ्जयन् मुदा ।
त्यागी च सत्यसम्पन्नः सर्वान् कुर्य्याद्वशे स्वके ॥ ४९ ॥
शनैः शनैः प्रवर्द्धेत शुक्लपक्षमृगाङ्कवत् ।
एवं वृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ॥ ५० ॥

---

सूचकानां खलानां धूर्त्तानामित्यर्थः दोषेण यदि पिता अन्यथा स्यात् विपरीतमतिः भवेत् तदा प्रकृतीनां प्रधानपुरुषाणाम् अनुमतं कृत्वा परामर्शेनेत्यर्थः एकान्ते रहसि तं पितरं प्रबोधयेत् यथा पिता तुष्येत् तथा प्रबोधनं कार्य्यमिति भावः अन्यथा पितुरसन्तोषे इत्यर्थः सूचकान् धूर्त्तान् अपराधिन इत्यर्थः महद्दण्डेन महता दण्डेन नित्यं दण्डयेत् ॥ ४५ ॥ ४६ ॥

प्रकृतीनामिति । राजानमिति । सदैव प्रकृतीनां राज्यस्थानां प्रधानपुरुषाणां कपटस्थान्तं कपटं मनः विद्यात् हिशब्दोऽवधारणे प्रकृतयः कापट्येन व्यवहरन्ति न वेति अवधारयेदित्यर्थः । किञ्च राजपुत्रः युवराज इत्यर्थः प्रतिदिनं प्रातः पितरं मातरं तथा गुरुम् आचार्य्यं नत्वा, ततः अनन्तरं यत् यत् कार्य्यं स्वकृतम् आत्मना निष्पन्नं तत्तत् अनुदिनं राजानं निवेद्य ज्ञापयित्वा एवं प्रकारेण गृहस्य अविरोधेन सामञ्जस्येन गृहे वसेत् ॥ ४७ ॥ ४८ ।

विद्ययेति । त्यागी दानशीलः तथा सत्यसम्पन्नः उत्साहवान् राजपुत्रः विद्यया कर्मणा शीलैः दयादाक्षिण्यादिभिश्चरितैः प्रजाः संरञ्जयन् मुदा आनन्देन अनायासेनेत्यर्थः सर्वान् जनान् स्वके वशे आत्मनः वशे कुर्यात् ॥ ४९ ॥

शनैरिति । वृत्तवानिति । किञ्च शुक्लपक्षमृगाङ्कवत् यद्वत् सानचन्द्र

सहायवान् सहामात्यश्चिरं भुंक्ते वसुन्धराम् ।
समासतः कार्य्यमुक्तं युवराजस्य यद्धितम् ॥ ५१ ॥
समासादुच्यते कृत्यममात्यादेश्च लक्षणम् ।
मृदुगुरुप्रमाणत्ववर्णशब्दादिभिः समम् ॥ ५२ ॥
परीक्षकैर्द्रावयित्वा यथा स्वर्णं परीक्ष्यते ।
कर्म्मणा सहवासेन गुणैः शीलकुलादिभिः ॥ ५३ ॥
भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वसेत् तदा ।
नैव जातिर्न च कुलं केवलं लक्षयेदपि ॥ ५४ ॥

---

इत्थं शनैः शनैः क्रमेण प्रवर्द्धित प्रकर्षेण वृद्धिं गच्छेत् राजपुत्र इति शेषः । अकण्टकं राज्यं प्राप्यापि एवं कृतः एवं सदाचारसम्पन्नः राजपुत्रः सहायवान् सहायसम्पन्नः सहामात्यः अमात्यवर्गसहितः चिरं वसुन्धरां पृथिवीं भुङ्क्ते । युवराजस्य यत् हितं हितजनकं कार्य्यं तत् समासतः संक्षेपतः उक्तं मयेति शेषः ॥ ५० ५१ ॥

समासादिति । इदानीम् अमात्यादेः कृत्यं कार्य्यं मृदुगुरुप्रमाणत्ववर्णशब्दादिभिः मृदुः, गुरुः गम्भीरप्रकृतिः, प्रमाणं महत्तया गणनीयः तेषां भावः मृदुगुरुप्रमाणत्वं वर्णः जातिः, शब्दः वाक्यम् एवमादिभिः समं सहितं लक्षणञ्च समासात् संक्षेपात् उच्यते अयं भावः अमात्यः मृदुप्रकृतिः, वा गम्भीरस्वभावः वा कश्चित् वाचालः, अस्य च का जातिः कीदृशं वा वचनमित्यादि वेदितव्यमिति ॥ ५२ ॥

परीक्षकैरिति । भृत्यमिति । परीक्षकैः द्रावयित्वा गलयित्वा यथा स्वर्णं परीक्ष्यते, तथा कर्म्मणा, सहवासेन, शीलकुलादिभिः चरित्रसत्कुलजातत्वादिभिः गुणैः नित्यं भृत्यं परीक्षयेत्, तदा परीक्षिते सतीत्यर्थः विश्वास्यं विश्वासयोग्यं जनं विश्वसेत् । केवलं जातिं न लक्षयेत् कुलं वंशं वा नैव लक्षयेत् नैव परीक्षयेत् गुणाः परीक्षणीया इति भावः ॥ ५३ ॥ ५४ ॥

कर्मशीलगुणाः पूज्यास्तथा जातिकुले न हि ।
न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ ५५ ॥
विवाहे भोजने नित्यं कुलजातिविवेचनम् ।
सत्यवाक् गुणसम्पन्नस्तथाभिजनवान् धनी ॥ ५६ ॥
सुकुलश्च सुशीलश्च सुकर्मा च निरालसः ।
यथा करोत्यात्मकार्यं स्वामिकार्यं ततोऽधिकम् ॥ ५७ ॥
चतुर्गुणेन यत्नेन कायवाङ्मानसेन च ।
भृत्यैव तुष्टो मृदुवाक् कार्यदक्षः शुचिर्दृढः ॥ ५८ ॥
परोपकरणे दक्षो ह्यपकारपराङ्मुखः ।
स्वाम्यागस्कारिणं पुत्रं पितरं वापि दर्शकः ॥ ५९ ॥

---

कर्मेति । कर्म शीलं चरित्रं गुणाः विद्यादयः पूज्याः, जातिकुले तथा न हि; नैव पूज्ये इत्यर्थः कर्मशीलगुणानामेव विशेषेण परीक्षा कार्येति भावः । जात्या केवलया इत्यर्थः कुलेन सद्वंशेन च नैव श्रेष्ठत्वं उत्तमत्वं प्रतिपद्यते प्राप्नोति जन इति शेषः ॥ ५५ ॥

विवाह इति । सत्य इति । विवाहे [illegible] नित्यं सततं कुलजातिविवेचनं कुलजातिविचारः [illegible] गुणसम्पन्नः अभिजनवान् सद्वंशसम्भूतः धनी [illegible] निर्दोषवंशजातः सुशीलः सुकर्मा तथा निरालसः आलस्यरहितः जनः यथा आत्मकार्यं करोति, स्वामिकार्यं ततः तस्मात् आत्मकार्यात् अधिकं यथा तथा करोतीत्यन्वयः ॥ ५६ ॥ ५७ ॥

चतुर्गुणेनेति । भृत्यः कायवाङ्मानसेन शरीरेण वाक्येन मानसेन सर्वथा यत्नेन च चतुर्गुणेन चतुर्णां गुणानां समाहारः तेन, तथा भृत्या वेतनेन च तुष्टः मृदुवाक् मधुरभाषी, कार्यदक्षः शुचिः शुद्धचेताः तथा दृढः कार्येषु स्थिरः भवेदिति शेषः ॥ ५८ ॥

परोपकरणे इति । किञ्च परोपकरणे परेषामु उपकारविधाने

रिपोर्मित्राः सेवकाश्च पूर्ववैरानुबन्धिनः।
चण्डाः साहसिका धर्महीना नैते सुसेवकाः।
संक्षेपतस्तु कथितं सदसद्भृत्यलक्षणम्॥ ६८॥
समासतः पुरोधादिलक्षणं यत् तदुच्यते।
पुरोधाश्च प्रतिनिधिः प्रधानः सचिवस्तथा॥ ६९॥
मन्त्री च प्राड्विवाकश्च पण्डितश्च सुमन्त्रकः।
अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश॥ ७०॥
दशमांशाधिकाः पूर्वं दूताख्याः क्रमशः स्मृताः।
अष्टप्रकृतिभिर्युक्तो नृपः कैश्चित् स्मृतः सदा॥ ७१॥

---

येषां कथामूलाः, द्वेषिणः द्यूतरताः नास्तिकाः परलोकाद्यमानिनः दाम्भिकाः वञ्चकाः तथा असत्यवाचः असत्यवादिनः असूयकाः दोषारोपिणः। ये अपमानिताः कृतावमानाः, ये च असद्वाक्यैर्दुरुक्तिभिः मर्माणि भेदिताः कृतमर्मोद्घाता इत्यर्थः, रिपोः शत्रोः मित्राः तथा रिपोः सेवकाः भृत्याः तथा ये च पूर्ववैरानुबन्धिनः पूर्वमत् नावबद्धविद्विष्टाः तथा चण्डाः कोपनाः साहसिकाः अविमृश्यकारिणः तथा धर्महीनाः अधार्मिकाः, एते सुसेवकाः उत्तमा न भवन्तीति शेषः। संक्षेपतस्तु संक्षेपेणैव सदसद्भृत्यलक्षणं सताम् असताञ्च भृत्यानां लक्षणं स्वरूपं कथितम्॥६५॥६६॥६७॥६८॥

समासत इति। मन्त्री चेति। पुरोधादिलक्षणं यत् अस्तीति शेषः तत् समासतः संक्षेपेण उच्यते। पुरोधाः पुरोहितः, प्रतिनिधिः प्रधानः सचिवः, मन्त्री प्राड्विवाकः, पण्डितः सुमन्त्रकः, अमात्यः, दूतश्च एताः दश राज्ञः प्रकृतयः॥ ६९॥ ७०॥

दशेति। दूतान्ताः पुरोहितादिदूतपर्यन्ताः प्रकृतयः क्रमशः दशमांशाधिकाः दशमेन अंशेन अधिकाः स्मृताः कथिताः पूर्वं आद्यः पुरोहितस्य या भृतिः, प्रतिनिधेस्ततः दशमांशाधिका प्रतिनिधेर्वा

सुमन्त्रः पण्डितो मन्त्री प्रधानः सचिवस्तथा ।
अमात्यः प्राड्विवाकश्च तथा प्रतिनिधिः स्मृतः ॥ ७२ ॥
एता भृतिसमास्त्वष्टौ राज्ञः प्रकृतयः सदा ।
इङ्गिताकारतत्त्वज्ञो दूतस्तदनुगः स्मृतः ॥ ७३ ॥
पुरोधाः प्रथमं श्रेष्ठः सर्वेभ्यो राजराष्ट्रभृत् ।
तदनु स्यात् प्रतिनिधिः प्रधानस्तदनन्तरम् ॥ ७४ ॥
सचिवस्तु ततः प्रोक्तो मन्त्री तदनु चोच्यते ।
प्राड्विवाकस्ततः प्रोक्तः पण्डितस्तदनन्तरम् ॥ ७५ ॥
सुमन्त्रस्तु ततः ख्यातो ह्यमात्यस्तु ततः परम् ॥ ७६ ॥
दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथा गुणाः ॥ ७७ ॥

---

भृतिः, प्रधानस्य ततः दशमांशाधिका, प्रधानस्य या भृतिः, सचिवस्य ततो दशमांशाधिका सचिवस्य या भृतिः मन्त्रिणस्ततोदशमांशाधिका, मन्त्रिणो या भृतिः प्राड्विवाकस्य ततोदशमांशाधिका, प्राड्विवाकस्य या भृतिः पण्डितस्य ततोदशमांशाधिका,पण्डितस्य या भृतिः सुमन्त्रस्य ततोदशमांशाधिका, सुमन्त्रस्य या भृतिः अमात्यस्य ततोदशमांशाधिका अमात्यस्य या भृतिः दूतस्य ततोदशमांशाधिका इति । केचित् पण्डिते नृपः अष्टप्रकृतिभिः सदा युक्तः स्मृतः कथितः ॥ ७१ ॥

सुमन्त्र इति । एता इति । सुमन्त्रः, पण्डितः, मन्त्री, प्रधानः सचिवः, अमात्यः, प्राड्विवाकः, प्रतिनिधिः तथा इङ्गिताकारतत्त्वज्ञः इङ्गितं हृद्गतो भाव इति कोषात् । आकारः शरीरक्रिया तयोस्तत्त्वज्ञः तदनुगः तेषां सुमन्त्रादीनां तस्य राज्ञः वा अनुगामी स्मृतः कथितः दूतश्च एताः अष्टौ राज्ञः प्रकृतयः सदा भृतिसमाः भृत्या वेतनेन समाः तुल्याः तुल्यवेतना इत्यर्थः । इदञ्च मतभेदेनोक्तं पूर्वविरोधादिति विभाव्यम् ॥ ७२ ॥ ७३ ॥

पुरोधा इति । सचिव इति । सुमन्त्र इति । दूत इति । पुरोधाः पुरोहितः प्रथमम् अग्रतः सर्वेभ्यः प्रतिनिध्यादिभ्यः श्रेष्ठः सन् राज्ञः राष्ट्र

विना प्रकृतिसम्बन्धाद्राज्यनाशो भवेद् ध्रुवम् ।
रोधनं न भवेत् तस्मात् राज्ञस्ते स्युः सुमन्त्रिणः ॥ ८१ ॥
न बिभेति नृपो येभ्यस्तैः स्यात् किं राज्यवर्द्धनम् ? ।
यथालङ्कारवस्त्राद्यैः स्त्रियो भूषास्तथा हि ते ॥ ८२ ॥
राज्यं प्रजा बलं कोशः सुनृपत्वं न वर्धितम् ।
यन्मन्त्रतोऽरिनाशस्तैर्मन्त्रिभिः किं प्रयोजनम् ॥ ८३ ॥
कार्य्याकार्य्यप्रविज्ञाता स्मृतः प्रतिनिधिस्तु सः ।
सर्वदर्शी प्रधानस्तु सेनावित् सचिवस्तथा ॥ ८४ ॥

---

समर्थश्च सः पुरोहितः । यश्च पुरोधाः पुरोहितः स एव आचार्य्यः शेयाचार्य्य इति सन्निरार्थः ॥ ७८ ॥ ७९ ॥ ८० ॥

विनेति । प्रकृतीनां पूर्वोक्तानां पुरोहितादीनां सम्बन्धात् सुनिश्चितात् सम्पर्कात् विना ध्रुवं निश्चितं राज्यनाशः भवेत् एवं राज्ञः रोधनम् अपथात् निवर्त्तनं न भवेत्, तस्मात् ते पुरोहितादयः सुमन्त्रिणः स्युः भवेयुः ॥ ८१ ॥

नेति । येभ्यः पुरोहितादिभ्यः नृपः न बिभेति, तैः पुरोहितादिभिः किं राज्यस्य वर्द्धनं वृद्धिः अभ्युदय इत्यर्थः स्यात् ? नैवेत्यर्थः । यथा अलङ्कारवस्त्राद्यैः स्त्रियः भूषाः अलङ्कार्य्याः ते पुरोहितादयः तथाहि तादृशा एव पुरोहितादयः केवलं राज्ञः परिच्छदाः न भवन्ति अपितु तादृशाः यादृशेभ्यः भयात् राजापि न कुपथगामी भवेदिति भावः ॥ ८२ ॥

राज्यमिति । येषां मन्त्रतः मन्त्रणात् राज्यं प्रजा, बलं सैन्यं कोशः धनं तथा सुनृपत्वं सौराज्यं न वर्द्धितं न वृद्धिं प्राप्तं तथा अरिनाशश्च शत्रुक्षयश्च न भवतीति शेषः. तैः मन्त्रिभिः किं प्रयोजनं ? न किमपीत्यर्थः ॥ ८३ ॥

प्रतिनिध्यादीनां लक्षणानि निरूपयति कार्य्याकार्य्येत्यादिना । यः कार्य्यस्य अकार्य्यस्य च परिज्ञाता प्रकर्षेण विज्ञानवान् सः प्रतिनिधिः

मन्त्री तु नीतिकुशलः पण्डितो धर्मतत्त्ववित् ।
लोकशास्त्रनयज्ञस्तु प्राड्विवाकः स्मृतः सदा ॥ ८५ ॥
देशकालप्रविज्ञाता ह्यमात्य इति कथ्यते ।
आयव्ययप्रविज्ञाता सुमन्त्रः स च कीर्त्तितः ॥ ८६ ॥
इङ्गिताकारचेष्टाज्ञः स्मृतिमान् देशकालवित् ।
षाड्गुण्यमन्त्रविद्वाग्मी वीतभीर्दूत इष्यते ॥ ८७ ॥
अहितञ्चापि यत्कार्य्यं सद्यः कर्त्तुं यदोचितम् ।
अकर्त्तुं वोचितमपि राज्ञः प्रतिनिधिः सदा ।
बोधयेत् कारयेत् कुर्य्यान्न कुर्य्यान्न प्रबोधयेत् ॥ ८८ ॥

---

स्मृतः कथितः । यः सर्वदर्शी स प्रधानः । यस्तु सेनावित् सैन्यविज्ञानवान् स सचिवः ॥ ८४ ॥

मन्त्रीति । यः नीतौ नीतिशास्त्रे तदनुष्ठाने च कुशलः स मन्त्री । यः धर्मस्य तत्त्वं याथार्थ्यं वेत्तीति तथोक्तः सः पण्डितः । यस्तु सदा लोकशास्त्रनयज्ञः लोकं लोकाचारं शास्त्रनयञ्च जानातीति तथाभूतः प्राड्विवाकः स्मृतः कथितः ॥ ८५ ॥

देशेति । यः देशस्य कालस्य च प्रविज्ञाता अस्मिन् देशे एवं अस्मिन् काले च एवमिति अभिज्ञानवान् सः हि अमात्य इति कथ्यते । यः आयस्य आगमस्य व्ययस्य अर्थव्ययस्य च प्रविज्ञाता विज्ञानवान् आयव्ययकर्मनिपुण इत्यर्थः सः सुमन्त्रः कीर्त्तितः ॥ ८६ ॥

इङ्गितेति । यः इङ्गितम् अन्तर्भावं आकारं चेष्टाञ्च जानातीति तथोक्तः स्मृतिमान् मेधावी, देशकालवित् देशकालानुरूपकार्य्यवेत्ता, षाड्गुण्यानां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाणां मन्त्रज्ञानवान्, वाग्मी वचनपटुः तथा वीतभीः निर्भयः सः दूतः इष्यते ॥ ८७ ॥

अहितेति प्रतिनिध्यादिमन्त्रिपर्य्यन्तानां कार्य्याणि क्रमेणाह अहितमित्यादि । प्रतिनिधिः सदा यत् कार्य्यम् अहितमपि सद्यः कर्त्तुमुचितञ्चे-

साम दानञ्च भेदश्च दण्डः केषु कदा कथम्।
कर्त्तव्यः किं फलं तेभ्यो बहु मध्यं तथाल्पकम्।
एतत् सञ्चिन्त्य निश्चित्य मन्त्री सर्वं निवेदयेत् ॥ ९५ ॥
साक्षिभिर्लिखितैर्भोगैश्छलैर्भूतैश्च मानुषान्।
स्वेनोत्पादितसम्प्राप्तव्यवहारान् विचिन्त्य च ॥ ९६ ॥
दिव्यसंसाधनाद्वापि केषु किं साधनं परम्।
युक्तिप्रत्यक्षानुमानोपमानैर्लोकशास्त्रतः ॥ ९७ ॥
बहुसम्मतसंसिद्धान् विनिश्चित्य सभास्थितः।
ससभ्यः प्राड्विवाकस्तु नृपं संबोधयेत् सदा ॥ ९८ ॥

---

नूतनो वा चतुरङ्गोगजः अश्वारोहवर्गः कति विद्यते? काष्ठोपकर्षः काष्ठोपमश्च कति सन्ति? तथा महानालिकाग्निचूर्णयुक् महाचि गोलास्त्रयः गोलाकाराग्निपिण्डाः चूर्णानि बारुदेति प्रसिद्धानि तैः युक् युक्तः सांग्रामिकः सम्भारः युद्धसज्जः कति सन्ति? तान् एतान् पूर्वोक्तान् सर्वान् विचिन्त्य च राज्ञे एतत्कार्यं तत्तद्विषयकार्यजातं सद्यः सम्यक् यथातथ्येन निवेदयेत्। मन्त्री केषु विषयेषु कदा कथं केन प्रकारेण साम सन्धिः दानं त्यागः, भेदः उपजापः तथा दण्डः विग्रहः कर्त्तव्यः प्रयोक्तव्यः तेभ्यश्च सामादिभ्यः किं फलं तत्र फलं बहु मध्यं वा अल्पकम् एतत्सर्वं संचिन्त्य निर्णीय च निवेदयेत् राज्ञे इति शेषः ॥८८॥८९॥९०॥९१॥९२॥९३॥९४॥९५॥

प्राड्विवाककार्यमाह साक्षिभिरित्यादि। सभास्थितः प्राड्विवाकः विचारपतिः ससभ्यः सभ्यैः परिवृतः सन् साक्षिभिः लिखितैः भोगैः छलभूतैः छलभूतैः अथवा लोकैश्च मानुषान् स्वेन स्वयं स्वेच्छयेत्यर्थः उत्पादिताः वा संप्राप्ताः याथार्थ्येन उपस्थिताः व्यवहाराः विवादाः येषां तान् मिथ्याकल्पितविवादान् सत्यविवादान् वा इत्यर्थः विचिन्त्य समालोच्य तेषु च कांश्चित् दिव्यसंसाधनान् दिव्यमात्रसाधनान् साक्षिलेख्यादिरहितत्वादिति भावः कांश्चित्तु वा बहुसम्मतसिद्धान्तान् अनेकविचार-

वर्त्तमानाश्च प्राचीना धर्माः के लोकसंश्रिताः ।
शास्त्रेषु के समुद्दिष्टा विरुध्यन्ते च केऽधुना ॥ ९९ ॥
लोकशास्त्रविरुद्धाः के पण्डितस्तान् विचिन्त्य च ।
नृपं संबोधयेत् तैश्च परत्रेह सुखप्रदैः ॥ १०० ॥
इयच्च सञ्चितं द्रव्यं वत्सरेऽस्मिन् तृणादिकम् ।
व्ययीभूतमियच्चैव शेषं स्थावरजङ्गमम् ।
इयदस्तीति वै राज्ञे सुमन्त्रो विनिवेदयेत् ॥ १०१ ॥
पुराणि च कति ग्रामा अरण्यानि च सन्ति हि ।
कर्षिता कति भूः केन प्राप्तो भागस्ततः कति ॥ १०२ ॥
भागशेषं स्थितं कस्मिन् कत्यकृष्टा च भूमिका ।
भागद्रव्यं वत्सरेऽस्मिन् शुल्कदण्डाहृतं कति ॥ १०३ ॥

---

सम्मतान् इत्यर्थः विनिश्चित्य केषु विवादेषु परं श्रेष्ठं साधनं प्रमाणं किम् एतत्सर्वं बुद्धा प्रत्यक्षतः अनुमानेन उपमानेन दृष्टान्तेन लोकतः शास्त्रतश्च सुनिश्चित्य सदा नृपं संबोधयेत् निवेदयेत् ॥ ९६ ॥ ९७ ॥ ९८ ॥

पण्डितकार्य्यमाह वर्त्तमाना इति । लोकेति च । पण्डितः के प्राचीनाः के च वर्त्तमानाः धर्म्माः लोकेषु संश्रिताः, लोकाः कान् प्राचीनान् वा वर्त्तमानान् नव्यान् धर्म्मान् आश्रित्य व्यवहरन्तीत्यर्थः । के धर्म्माः शास्त्रेषु समुद्दिष्टाः विहिताः अधुना इदानीं विरुध्यन्ते च शास्त्रनिर्दिष्टा अपि नाद्रियन्ते इत्यर्थः । के च धर्म्माः लोके प्रचलिताः अथच शास्त्रविरुद्धाः तान् विचिन्त्य परत्र इह च सुखप्रदैः तैः धर्मैः नृपं संबोधयेत् ॥ ९९ ॥ १०० ॥

सुमन्त्रामात्ययोः कार्य्यमाह इयदित्यादि । सुमन्त्रः अस्मिन् वत्सरे इयत् एतत्परिमितं तृणादिकं स्थावरजङ्गमं स्थायि अस्थायि च द्रव्यं सञ्चितं संगृहीतम् इयत् एतत्परिमितं व्ययीभूतम् इयच्च शेषम् अवशिष्टम् अस्तीति राज्ञे विनिवेदयेत् विशेषेण ज्ञापयेत् । अमात्यः कति

अकृष्टपपद्यं कति च कति चारण्यसम्भवम्।
कति चाकरसञ्जातं निधिप्राप्तं कतीति च ॥ १०४ ॥
अस्वामिकं कति प्राप्तं नाष्टिकं तस्कराहृतम्।
सञ्चिन्त्य विनिश्चित्यामात्यो राज्ञे निवेदयेत् ॥ १०५ ॥
समासाद्वचनं कृत्यं प्रधानैर्दशकस्य च।
उक्तं तल्लिखितैः सर्वं विन्द्यात् तदनुदर्शिभिः ॥ १०६ ॥
परिवर्त्य नृपो ह्येतान् युञ्ज्यादध्योऽथकर्मणि ॥१०७॥

---

पुराणि नगराणि, कति ग्रामाः कति अरण्यानि सन्ति विद्यन्ते इ-
त्यन्वोऽवधार्य। कति क्षियत्परिमिता भूः कर्षिता कर्षकैः कृतकर्षणा
केन ततः कृष्टभूमेः कति कियत्परिमाणो भागः स्वामिनामिति भावः
प्राप्तः, कति वा तस्मिन् क्षेत्रे भागधेयं स्थितम्, अकृष्टा च भूमिका
भूखण्डं कति? कस्मिन् विषये अनुवरे प्रतिवर्षमित्यर्थः शुल्कदण्डादिकं
शुल्कं राजग्राह्यः दण्डः दोषिणां शासनेन लब्धं धनं तदादिकं तत्-
प्रवर्तितकरविशेषं भस्मद्रव्यं कति? अकृष्टपद्यं विना कर्षणेन क्षेत्रोत्पन्न-
शस्यादिकं कति? अरण्यसम्भवं वनजातं द्रव्यं कति? आकरसंजातं
खनिजं द्रव्यजातं कति। निधिप्राप्तं रत्नादौ पतितादि अविज्ञातं-
स्वामिकं वस्तु कति? अस्वामिकं स्वामिहीनम् उत्तराधिकारिरहितञ्च
द्रव्यं कति? नाष्टिकं नष्टप्राप्तं हारितद्रव्यमित्यर्थः तथा तस्करेभ्यः
चौरेभ्यः आहृतं तेषां दण्डनेन प्राप्तं वा कति? एतत् सर्वं संचिन्त्य
सम्यक् चिन्तयित्वा विनिश्चित्य विशेषेण निर्णीय च राज्ञे निवेदयेत्।
समासात् संक्षेपात् प्रधानदशकस्य दशानां पुरोहितादीनां प्रकृतीनां
प्रधानं प्रकृतिः क्रियाभिन्नपरः। वचनं कृत्यं कार्यञ्च उक्तं कथितम्।
अपः तदनुदर्शितैः तत्तत्प्रचकार्येषु दर्शितैः कथितैः तल्लिखितैः तेषां
पुरोहितादीनां लिखितैः सर्वं विन्द्यात्। एवम् एतान् परिवर्त्य
अन्योऽन्यकर्मणि परस्परकार्ये दृष्टम्, अमात्यकर्मणि अमात्यम्
इतरकर्मणि इत्येवं विनिमये नियुञ्ज्यात् ॥ १०१—१०७ ॥

न कुर्य्यात् स्वाधिकबलान् कदापि ह्यधिकारिणः ।
परस्परं समबलाः कार्य्याः प्रकृतयो दश ॥ १०८ ॥
एकस्मिन्नधिकारे तु पुरुषाणां त्रयं सदा ।
नियुञ्जीत प्राज्ञतमं मुख्यमेकन्तु तेषु वै ॥ १०९ ॥
द्वौ दर्शकौ तु तत्कार्य्ये हायनैस्तन्निवर्त्तयेत् ।
त्रिभिर्वा पञ्चभिर्वापि सप्तभिर्दशभिश्च वा ॥ ११० ॥
दृष्ट्वा तत्कार्य्यकौशल्ये तथा तौ परिवर्त्तयेत् ।
नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥ १११ ॥
अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् ।
अधिकारमदं पीत्वा को न मुह्येत् पुनश्चिरम् ॥ ११२ ॥

---

न कुर्य्यादिति । अधिकारिणः कार्य्यकारिणः कदापि स्वाधिकबलान् निजबलताधिकबलताशालिनः न कुर्य्यात् हिशब्दोऽवधारणे । तथा दश प्रकृतयः पुरोहितादयः परस्परं समबलाः तुल्यबलताशालिनः कार्य्याः ॥ १०८ ॥

एकस्मिन्निति । एकस्मिन् अधिकारे कर्मणि विषये सदा पुरुषाणां त्रयं नियुञ्जीत, तेषु त्रिषु मध्ये एकं मुख्यतमम् अतिश्रेष्ठं प्राज्ञं प्रकृष्टज्ञानवन्तं नियुञ्जीत ॥ १०९ ॥

द्वाविति । तत्कार्य्ये तस्मिन् कर्मणि दर्शकौ निरीक्षकाविति शेषः त्रिभिः पञ्चभिः वा सप्तभिर्वा दशभिः हायनैः वर्षैः तन्निवर्त्तनं तयोर्दर्शकयोः निवर्त्तनं परिवर्त्तनं कर्त्तव्यमिति शेषः ॥ ११० ॥

दृष्टेति । तत्कार्य्यकौशल्ये तयोः कार्य्ये कौशल्यं नैपुण्यञ्च दृष्ट्वा तौ परिवर्त्तयेत् । नृपः सदा सततं यस्मै कस्मै अपि चिरम् अधिकारं न दद्यात् ॥ १११ ॥

अधिकार इति । अधिकारे क्षमं कार्य्यक्षमं दृष्ट्वा हि दृष्ट्वैव अधिकारे नियोजयेत् । कः पुनः चिरम् अधिकारजं मदं पीत्वा न

अतः कार्य्यक्षमं दृष्ट्वा कार्य्येऽन्ये तं नियोजयेत् ।
तत्कार्य्ये कुशलं चान्यं तत्पदानुगतं खलु ॥ ११३ ॥
नियोजयेद्वर्त्तने तु तदभावे तथापरम् ।
तद्गुणो यदि तत् पुत्रस्तत्कार्य्ये तं नियोजयेत् ॥ ११४ ॥
यथा यथा श्रेष्ठपदे ह्यधिकारी यदा भवेत् ।
अनुक्रमेण संयोज्यो ह्यन्ते तं प्रकृतिं नयेत् ॥ ११५ ॥
अधिकारबलं दृष्ट्वा योजयेद्दर्शकान् बहून् ।
अधिकारिणमेकं वा योजयेद्दर्शकैर्विना ॥ ११६ ॥
ये चान्ये कर्मसचिवास्तान् सर्वान् विनियोजयेत् ।

---

स्थानात् च्यवेत सर्व एव स्यादित्यर्थः अतश्चिरम् अधिकारो न दातव्य इति भावः ॥ ११२ ॥

अत इति । नियोजयेदिति । अतः अस्मात् कारणात् तं कर्मकरं कार्य्यक्षमं दृष्ट्वा एकस्मात् कार्य्यात् अन्ये अन्यस्मिन् अन्ये इति आर्षम् । कार्य्ये नियोजयेत् । वर्त्तने तु कार्य्यचलने सति तु अन्यञ्च तत्पदानुगतं तत्पदस्थितं जनं तत्कार्य्ये कुशलं परिवर्त्तितकार्य्यक्षमं नियोजयेत् खलु अवधारणे तदभावे अयस्मौ तथा कार्य्यक्षमम् अपरं नियोजयेत् । यदि तत्पुत्रः तस्य पूर्वकर्मचारिणः पुत्रः तद्गुणः पितृवत् गुणशाली विद्यते इति शेषः तदा तत्कार्य्ये तं नियोजयेत् ॥११३॥११४॥

यथेति । यदा नवः कर्मचारी यथा यथा यादृशे यादृशे श्रेष्ठपदे अधिकारी योग्यः भवेत् तादृशे तादृशे सः अनुक्रमेण संयोज्यः उत्तरोत्तरं नियोक्तव्यः, हिशब्दः अवधारणे । अन्ते चरमे तं क्रमोन्नतं कर्मकारिणं प्रकृतिं प्रभावं प्रधानं वा अपेटकपदमित्यर्थः नयेत् प्रापयेत् ॥११५॥

अधिकारबलमिति । अधिकारबलं कार्य्यबलं कार्य्यगौरवमित्यर्थः दृष्ट्वा विचार्य्य बहून् दर्शकान् कार्य्यदर्शिनः योजयेत् नियोजयेत् । वा अथवा दर्शकं विना एकं कार्य्यसमर्थं अधिकारिणं योजयेत् ॥ ११६ ॥

ये चेत्यादि । ये च अन्ये कर्मसचिवाः कर्मक्षमाः पुरुषाः

गजाश्वरथपादातपशूष्ट्रमृगपक्षिणाम् ॥ ११७ ॥
सुवर्णरत्नरजतवस्त्राणामधिपान् पृथक् ।
वित्तानामधिपं धान्याधिपं पाकाधिपं तथा ॥ ११८ ॥
आरामाधिपतिञ्चैव सौधगेहाधिपं पृथक् ।
सम्भारपं देवतुष्टिपतिं दानपतिं सदा ॥ ११९ ॥
साहसाधिपतिञ्चैव ग्रामनेतारमेव च ।
भागहारं तृतीयन्तु लेखकञ्च चतुर्थकम् ।
शुल्कग्राहं पञ्चमञ्च प्रतिहारं तथैव च ॥ १२० ॥
षट्कमेतन्नियोक्तव्यं ग्रामे ग्रामे पुरे पुरे ॥ १२१ ॥
तपस्विनो दानशीलाः श्रुतिस्मृतिविशारदाः ।
पौराणिकाः शास्त्रविदो दैवज्ञा मान्त्रिकाश्च ये ॥१२२॥

---

तान् सर्वान् यथाक्रमं गजानाम् अश्वानां रथानां पादातानां पशूनां मृगा-दीनाम् उष्ट्राणां खगानां पक्षिणां सुवर्णानां रत्नानां रजतानां तथा वस्त्राणाम् अधिपान् वित्ताधिपं धनाध्यक्षं धान्याधिपं पाकाधिपं पाका-ध्यक्षम् आरामाधिपतिम् उद्यानाध्यक्षं सौधगेहाधिपं हर्म्याध्यक्षं सम्भारपं सामग्र्यद्रव्यसमूहाधिपतिं देवतुष्टिपतिं देवसेवाध्यक्षं दानपतिं दानाध्यक्षं साहसाधिपतिं संग्रामादिसाहसकर्माध्यक्षं ग्रामनेतारं ग्रामाध्यक्षं भागहारं प्रजाभ्यः राजग्राह्यांशादायिनं लेखकं लिपिकरं शुल्कग्राहं राजग्राह्यवाणिज्याद्यंशहरं तथा प्रतिहारं द्वारपालं पृथक् पृथक् योजयेत् तत्तदाधिपत्यकर्मणि नियोजयेत् । किन्तु साहसाधि-पतिप्रभृतिषट्कं ग्रामे ग्रामे प्रतिग्रामं पुरे पुरे प्रतिपुरं नियोक्तव्यम् ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥

तपस्विन इति । ये जना तपस्विनः तपोनिष्ठाः दानशीलाः वदान्याः श्रुतिस्मृतिविशारदाः वैदिकाः स्मार्ताश्च पौराणिकाः पुरा-णतत्त्वविदः शास्त्रविदः शास्त्रज्ञानरताः दैवज्ञाः गणकाः ये च मान्त्रिकाः

आयुर्वेदविदः कर्म्मकाण्डज्ञास्तान्त्रिकाश्च ये ।
ये चान्ये गुणिनः श्रेष्ठा बुद्धिमन्तो जितेन्द्रियाः ॥१२३॥
तान् सर्व्वान् पोषयेद् भृत्या दानैर्मानैः सुपूजितान् ।
हीयते चान्यथा राजा ह्यकीर्त्तिं चापि विन्दति ॥१२४॥
बहुसाध्यानि कार्य्याणि तेषामप्यधिपांस्तथा ।
तत्तत्कार्य्येषु कुशलान् ज्ञात्वा तांस्तु नियोजयेत् ॥१२५॥
अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् ।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १२६ ॥

---

षडङ्गादिमन्त्रज्ञाः आयुर्वेदविदः वैद्यकशास्त्रज्ञाः, कर्म्मकाण्डज्ञाः वेदस्मृतिविहितकर्म्मानुष्ठानविदः तथा तान्त्रिकाः शैवधर्म्मशास्त्रपारगाः, ये च अन्ये अपरे गुणिनः गुणवन्तः, श्रेष्ठाः महान्तः बुद्धिमन्तः प्रज्ञाशालिनः तथा जितेन्द्रियाः लोभमोहादिभिरनभिभूताः तान् सर्व्वान् दानैः मानैश्च सुपूजितान् कृत्वेति शेषः भृत्या वार्षिकादिवृत्तिविधानेन पोषयेत् पालयेत् । अन्यथा एतेषामपालने राजा हीयते राज्यात् भ्रश्यति अकीर्त्तिम् अयशः विन्दति लभते च हिपदः अवधारणे ॥ १२२ ॥ १२३ ॥ १२४ ॥

बहुसाध्यानीति। कार्य्याणि बहुसाध्यानि बहुजननिर्वाह्याणि ज्ञात्वा तत्र तत्कार्य्येषु कुशलान् तान् पूर्व्वोक्तान् जनान् तेषां बहुसाध्यानां कार्य्याणाम् अधिपान् नियोजयेत् ॥ १२५ ॥

अमन्त्रमिति । अक्षरं वर्णः अमन्त्रम् अमन्त्रात्मकं नास्ति वर्ण-मात्रस्य मन्त्ररूपत्वात् सर्व्व एव वर्णः मन्त्र इत्यर्थः । मूलं तरुगुल्मादी-नामित्यर्थः अनौषधम् औषधव्यतिरिक्तं नास्ति सर्व्वमेव मूलम् औषधं किमपि भेषजमित्यर्थः । पुरुषः अयोग्यः अक्षमः नास्ति यस्य कस्यचिदपि पुरुषस्य यस्मिन् कस्मिन्नपि कार्य्ये पाटवादिति भावः । तत्र तथा स्थिते योजकः यथायोग्यनियोक्ता पुरुषः दुर्लभः अप्राप्यः सर्व्वत्र अक्षरस्य

प्रभद्रादिजातिभेदं गजानाञ्च चिकित्सितम् ।
मिथ्यां व्याधिं पोषणञ्च तालुजिह्वानखैर्गुणान् ।
आरोहणं गतिं वेत्ति स योज्यो गजरक्षणे ॥ १२७ ॥
तथाविधाधोरणस्तु हस्तिहृदयहारकः ॥ १२८ ॥
अश्वानां हृदयं वेत्ति जातिवर्णभ्रमैर्गुणान् ।
गतिं मिथ्यां चिकित्साञ्च सत्त्वं सारं रुजं तथा ॥१२९॥
हिताहितं पोषणञ्च मानं यानं दतो वयः ।
शूरश्च व्यूहवित् प्राज्ञः कार्य्योऽश्वाधिपतिश्च सः ॥१३०॥
एभिर्गुणैश्च संयुक्तो धुर्य्यान् युग्यांश्च वेत्ति यः ।
रथस्य सारं गमनं भ्रमणं परिवर्त्तनम् ॥ १३१ ॥

---

अस्मात्वेऽपि सर्वस्य मूकस्य औषधत्वेऽपि सर्वस्य पुरुषस्य योग्यत्वेऽपि यथायथप्रयोगस्य सर्वैरज्ञकरत्वादिति भावः ॥ १२६ ॥

प्रभद्रादीति । यः गजानां प्रभद्रादिजातिभेदं चिकित्सितं मिथ्यां व्याधिं पीड़ां पोषणं पालनं तालुजिह्वानखैः गुणान् आरोहणं तथा गतिं वेत्ति जानाति सः गजरक्षणे योज्यः नियोक्तव्यः । तथाविधः तादृशः आधोरणः हस्तिपालकस्तु हस्तिनां हृदयहारकः मनोहरः हस्तिनियमने निपुण इत्यर्थः ॥ १२७ ॥ १२८ ॥

अश्वानामिति । यः अश्वानां हृदयं मनोभावं जातिः भेद-ज्ञापकधर्मविशेषः वर्णः श्वेतलोहितादिकं भ्रमाः रोमृषा आवर्त्ता-दयः तैः गुणान् विशेषान् गतिं नियमं मिथ्यां चिकित्सां सत्त्वं बलं सारं असत्वं रुजं रोगं हिताहितं शुभाशुभकरं पोषणं पालनं मानं परिमाणं यानं गमनं दतः दन्तान् वयः वयःक्रमञ्च वेत्ति जानाति तथा शूरः बलवान् व्यूहवित् सैन्यविन्यासवित् तथा प्राज्ञः प्रकृष्ट-बुद्धिमान् भवति सः अश्वाधिपतिः कार्य्यः ॥ १२९ ॥ १३० ॥

एभिरिति । यश्च एभिः उक्तैः कृपाहृदयादिज्ञानादिभिः गुणैः

समापतत्सु शस्त्रास्त्रलक्ष्यसन्धाननाशकः ।
रथगत्या स रथपो हयसंयोगगुप्तिवित् ॥ १२२ ॥
सादिनश्च तथा कार्य्याः शूरा व्यूहविशारदाः ।
वाजिगतिविदः प्राज्ञाः शस्त्रास्त्रैर्युद्धकोविदाः ॥ १२३ ॥
चक्रितं रेचितं वल्गितकं धौरितमाप्लुतम् ।
तुरं मन्दञ्च कुटिलं सर्पणं परिवर्त्तनम् ॥ १२४ ॥
एकादशास्कन्दितञ्च गतीरश्वस्य वेत्ति यः ।
यथाबलं यथार्थञ्च शिक्षयेत् स च शिक्षकः ॥ १२५ ॥

---

संयुक्तः उपलक्षितः धुर्य्यान् भारवहनक्षमान् युग्यान् अश्वान् रथस्य वारं दार्व्वादिकं गमनं भ्रमणं परिवर्त्तनं विनिमयञ्च वेत्ति जानाति, यश्च रथगत्या रथस्य गतिवैचित्र्येण समापततां समागच्छतां दुःशस्त्रास्त्राणां प्रतिपक्षवीराणामित्यर्थः शस्त्रस्य धारकस्य वीरस्य कर्म्मभूतस्य यत् लक्ष्यं शरव्यीकरणं तस्य नाशकः ध्वंसकः तथा हयानाम् अश्वानां संयोगे प्रतिपक्षाश्वैः मेलने या गुप्तिः आच्छादनं तां वेत्तीति तथोक्तः भवति स रथपः सारथिरित्यर्थः भवेदिति शेषः ॥ १२१ ॥ १२२ ॥

सादिन इति । शूराः बलवन्तः व्यूहविशारदाः व्यूहरचनाभिज्ञाः वाजिनाम् अश्वानां गतिविदः गतिज्ञाः प्राज्ञाः बुद्धिमन्तः तथा शस्त्रास्त्रैः युद्धकोविदाः रणपण्डिताः जनाः सादिनः अश्वारोहिवीराः कार्य्याः १२३

चक्रितमिति । यः अश्वस्य चक्रितं चक्राकारेण भ्रमणं रेचितं गतिविशेषं वल्गितम् उल्लम्फनरूपगतिं धौरितं गतिभेदम् आप्लुतं लम्फनं तुरं त्वरितपातं मन्दं मृदुगतिं कुटिलं वक्रगतिं सर्पणं गतिप्रभेदं परिवर्त्तनं प्रत्यावर्त्तनगतिं तथा आस्कन्दितं शत्रून् प्रति आक्रमणम् इत्येकादश गतीः वेत्ति जानाति तथा यथाबलं यथार्थञ्च शिक्षयेत् विनयेत् सः च शिक्षकः अश्वशिक्षकः भवेदिति शेषः ॥ १२४ ॥ १२५ ॥

वाजिसेवासु कुशलः पल्याणादिनियोगवित् ।
दृढाङ्गश्च तथा शूरः स कार्य्यो वाजिसेवकः ॥ १३६ ॥
नीतिशस्त्रास्त्रव्यूहादिनतिविद्याविशारदाः ।
अबाला मध्यवयसः शूरा दान्ता दृढाङ्गकाः ॥ १३७ ॥
स्वधर्मनिरता नित्यं स्वामिभक्ता रिपुद्विषः ।
शूद्रा वा क्षत्रिया वैश्या म्लेच्छाः सङ्करसम्भवाः ॥ १३८ ॥
सेनाधिपाः सैनिकाश्च कार्य्या राज्ञा जयार्थिना ॥ १३९ ॥
पञ्चानामथवा षण्णामधिपः पद्गामिनाम् ।
योज्यः स पत्तिपालः स्यात्त्रिंशतां गौल्मिकः स्मृतः ॥ १४० ॥

---

वाजीति । यः वाजिसेवायां अश्वपरिचर्य्यायां कुशलः निपुणः पल्याणादीनाम् अश्वसज्जाविशेषाणां नियोगवित् प्रयोगज्ञः दृढाङ्गः कठिनशरीरः तथा शूरः बलवान् सः वाजिसेवकः अश्वसेवकः कार्य्यः ॥ १३६ ॥

नीतीत्यादि । ये जनाः नीतिः कार्य्याकार्य्यविज्ञानं शस्त्राणि अक्षेपणीयानि प्रहरणानि तरवारादीनि अस्त्राणि क्षेपणीयानि शरादीनि व्यूहादयः चक्रव्यूहप्रभृतयः तथा नतिविद्याः शत्रुपराजयकौशलेषु विशारदाः दक्षाः अबालाः शैशवातीताः मध्यवयसः तरुणाः शूराः बलवन्तः दान्ताः विनीताः दृढाङ्गकाः कठिनदेहाः स्वधर्मनिरताः निजधर्मपालननिष्ठाः नित्यं स्वामिभक्ताः स्वामिषु प्रभुषु भक्ताः अनुरागिणः रिपुद्विषः शत्रुषु अननुरागिणः शूद्राः शूद्रजातीयाः क्षत्रियाः क्षत्रियजातीयाः वैश्याः वैश्यजातीयाः वा सङ्करसम्भवाः सङ्कीर्णाः म्लेच्छाः हीनजातयः, ते जयार्थिना विजिगीषुणा राज्ञा सेनाधिपाः सैनिकाश्च कार्य्याः । पञ्चानाम् अथवा षण्णां पद्गामिनां पदातीनाम् अधिपः पत्तिपालः पदातिगः योज्यः पदातिपालकत्वेन नियोक्तव्यः । त्रिंशतां पत्तिपालानाम् अधिपः गौल्मिकः स्मृतः कथितः शतानाम् गौल्मिका-

शतानान्तु शतानीकस्तथानुशतिको वरः ।
सेनानीर्लेखकश्चैते शतं प्रत्यधिपा इमे ॥ १४१ ॥
साहस्रिकस्तु संयोज्यस्तथा चायुतिको महान् ॥ १४२ ॥
व्यूहाभ्यासं शिक्षयेद्यः सायं प्रातश्च सैनिकान् ।
जानाति स शतानीकः सुयोद्धुं युद्धभूमिकाम् ॥ १४३ ॥
तथाविधोऽनुशातिकः शतानीकस्य साधकः ।
जानाति युद्धसम्भारं कार्य्ययोग्यञ्च सैनिकम् ॥ १४४ ॥
निदेशयति कार्य्याणि सेनानीर्यामिकांश्च सः ।
परिवृत्तिं यामिकानां करोति स च पत्तिपः ॥ १४५ ॥
स्वावधानं यामिकानां विजानीयाच्च गुल्मपः ॥ १४६ ॥

---

शताम् अधिपः शतानीकः अनुशतिकः वरः सेनानीः तथा लेखकः एते नियोक्तव्या इति शेषः इमे च शतानीकादयः शतं प्रति अधिपाः विशेष-विशेषकार्य्याध्यक्षा इत्यर्थः । किञ्च साहस्रिकः सहस्रपतिः तथा महान् अयुतपतिः दशसहस्रपतिः संयोज्यः नियोक्तव्यः ॥ १३७ ॥ १३८ ॥ ॥ १३९ ॥ १४० ॥ १४१ ॥ १४२ ॥

व्यूहेति । यः सायं प्रातश्च सैनिकान् व्यूहाभ्यासं व्यूहरचनाया अभ्यासं पाटवं शिक्षयेत् तथा सुयोद्धुं सम्यक् युद्धं कर्त्तुं युद्धभूमिकां रणस्थानञ्च जानाति स शतानीकः ॥ १४२ ॥

तथेति । यश्च तथाविधः तादृशगुणसम्पन्नः शतानीकस्य साधकः साहाय्यकारकः युद्धसंभारं युद्धोपयोगिद्रव्यसमूहं तथा कार्य्ययोग्यं सैनिकञ्च जानाति सः अनुशातिकः ॥ १४४ ॥

निदेशयतीति । यः कार्य्याणि तथा यामिकान् प्रहरिणश्च निर्देशयति आदेशयति सः सेनानीः । यश्च यामिकानां प्रहरिणां परिवृत्तिं विनिमयं करोति स च पत्तिपः पदातिपतिः ॥ १४५ ॥

स्वावधानमिति । गुल्मपः यामिकानां स्वावधानं स्वस्वकर्मणि

सैनिकाः कति सन्त्येतैः कति प्राप्तन्तु वेतनम् ।
प्राचीनाः के कुत्र गताश्चैतान् वेत्ति स लेखकः ।
गजाश्वानां विंशतेश्चाधिपो नायकसंज्ञकः ॥ १४७ ॥
उक्तसंज्ञान् स्वस्वचिह्नैर्लाञ्छितांश्च नियोजयेत् ॥ १४८ ॥
अजाविगोमहिष्येश्च मृगाणामधिपाश्च ये ।
तद्वृद्धिपुष्टिकुशलास्तद्वात्सल्यनिपीड़िताः ।
तथाविधा गजोष्ट्रादेर्योज्यास्तत् सेवका अपि ॥ १४९ ॥
युद्धप्रवृत्तिकुशलास्तित्तिरादेश्च पोषकाः ।
शुकादेः पाठकाः सम्यक् श्येनादेः पातबोधकाः ।
तत्तद् हृदयविज्ञानकुशलाश्च सदा हि ते ॥ १५० ॥

---

सतर्कतां जानीयात् । यः लेखकः सैनिकाः कति कियन्तः सन्ति ? एतैश्च कति कियत्परिमाणं वेतनं प्राप्तं ? के च प्राचीनाः पुरातना इत्यर्थः । के च कुत्र गताः एतान् वेत्ति जानाति जानीयादित्यर्थः । किञ्च गजानाम् अश्वानाञ्च विंशतेः विंशतिगजानां विंशत्यश्वानामित्यर्थः । अधिपः नायकसंज्ञकः नायक इति ख्यात इत्यर्थः ॥ १४६ ॥ १४७ ॥

उक्तसंज्ञानित्यादि । उक्तसंज्ञान् कथितनाम्नः पत्तिपादीन् स्वस्वचिह्नैः चिह्नितान् लाञ्छितान् कृत्वा नियोजयेत् । ये च अजानां छागानाम् अवीनां मेषाणां गवां महिषीणाम् एषाणां जन्तुविशेषाणां तथा मृगाणां तत्तद्वृद्धिपुष्टिकुशलाः तत्तदुन्नतिसाधनपोषणनिपुणाः तद्वात्सल्येन तेषु पाल्यादिषु वात्सल्येन स्नेहेन निपीड़िताः ते तदधिपाः तथा गजानाम् उष्ट्रादीनाञ्च ये तथाविधाः पालकाः इत्यर्थः ते अपि तत् सेवकाः तेषां गजादीनां सेवकाः योज्याः नियोक्तव्याः । किञ्च तित्तिरादेः पक्षिजातेः युद्धप्रवृत्तिकुशलाः पोषकाश्च, शुकादेः सम्यक् पाठकाः पाठनकारिणः तथा श्येनादेः पक्षिविशेषस्य पातबोधकाः पतनज्ञानवन्तः जनाः नियोक्तव्या इति अध्याहार्य्यं हि यतः ते जनाः सदा तत्तद्-

मानाकृतिप्रभावर्णजातिसाम्याच्च मौल्यवित्।
रत्नानां स्वर्णरजतमुद्राणामधिपश्च सः॥ १५१॥
दान्तस्तु सधनो यस्तु व्यवहारविशारदः।
धनप्राणोऽतिकृपणः कोशाध्यक्षः स एव हि॥ १५२॥
देशभेदैर्जातिभेदैः स्थूलसूक्ष्मबलाबलैः।
कौशेयादेर्मानमूल्यवेत्ता वस्त्रस्य वस्त्रपः॥ १५४॥
कुटीकञ्चुकनेपथ्यमण्डपादेः परिक्रियाम्।
प्रमाणतः सौचिकेन रचनानि च वेत्ति यः॥ १५४॥
तथा शय्यादिसन्धानं वितानादेर्नियोजनम्।
वस्त्रादीनाञ्च स प्रोक्तो वितानाद्यधिपः खलु॥ १५५॥

---

हृदयविज्ञानकुशलाः तेषां तेषां पक्षिणां हृदयविज्ञाने निपुणाः। यस्य रत्नानां स्वर्णरजतमुद्राणाञ्च मानं परिमाणम् आकृतिः आकारः प्रभा दीप्तिः वर्णः रक्तनीलत्वादि जातिः भेदज्ञापकधर्मविशेषः तथा साम्यम् औपम्यं तस्मात् मौल्यवित् मूल्यविज्ञः सः रत्नादीनामधिपः। यस्तु दान्तः विनीतः सधनः धनवान् व्यवहारविशारदः लोकाचार-विज्ञः धनप्राणः धनेषु प्राणसमबुद्धिः तथा अतिकृपणः अतिव्ययकुण्ठः स एव कोशाध्यक्षः धनाध्यक्षः। यश्च देशभेदैः जातिभेदैः स्थूलसूक्ष्म-बलाबलैः देशतः जात्या च विभिन्नैः स्थौल्यसौक्ष्म्यस्थायित्वास्थायित्व-रूपैः कौशिकादेः कृमिकोशोत्थादेः वस्त्रस्य मानस्य परिमाणस्य मूल्यस्य च वेत्ता विशेषज्ञः सः वस्त्रपः। यश्च कुटीकञ्चुकनेपथ्यमण्डपादेः कुट्याः कुटीरस्य कञ्चुकस्य वारवाणस्य नेपथ्यस्य परिच्छदस्य तथा मण्डपादेः स्थलादेः परिक्रियाम् अनुष्ठानपरिपाटीं प्रमाणतः परिमाणेन, रचनानि च सौचिकेन सूचीकर्मनैपुण्येन, तथा शय्यादिविधानं वितानादेः चन्द्रातपादेः वस्त्रादीनाञ्च नियोजनं वेत्ति जानाति सः खलु वितानाद्यधिपः प्रोक्तः कथितः॥ १४८॥ १४९॥ १५०॥ १५१॥ १५२॥ १५३॥ १५४॥ १५५॥

जातिं तुलाञ्च मौल्यञ्च सारं भोगं परिग्रहम् ।
सम्मार्जनञ्च धान्यानां विजानाति स धान्यपः ॥ १५६ ॥
धौताधौतविपाकज्ञो रससंयोगभेदवित् ।
क्रियासु कुशलो द्रव्यगुणवित् पाकनायकः ॥ १५७ ॥
फलपुष्पवृद्धिहेतुं रोपणं शोधनं तथा ।
पादपानां यथाकालं कर्त्तुं भूमिजलादिना ।
तद्भेषजञ्च संवेत्ति ह्यारामाधिपतिश्च सः ॥ १५८ ॥
प्रासादं परिखां दुर्गं प्राकारं प्रतिमां तथा ।
यन्त्राणि सेतुबन्धञ्च वापीं कूपं तड़ागकम् ॥ १५९ ॥
तथा पुष्करिणीं कुण्डं जलाद्यूर्द्ध्वगतिक्रियाम् ।
सुशिल्पशास्त्रतः सम्यक् सुरम्यन्तु यथा भवेत् ॥१६०॥

---

जातिमिति । यः धान्यानां जातिं तुलां मौल्यं मूल्यं सारं भोगं परिग्रहं ग्रहणोपायं सम्मार्जनञ्च विजानाति स धान्यपः ॥१५६॥

धौताधौतेति । धौतञ्च क्षालितम् अधौतम् अक्षालितं तयोः विपाकः विशेषेण पचनं तं जानातीति तथोक्तः । रसानां कटुकषाय-तिक्ताम्ललवणमधुराणां संयोगे यः भेदः विशेषः तं वेत्तीति तद्भूतः क्रियासु पाकक्रियासु कुशलः निपुणः तथा द्रव्याणां गुणानाञ्च विभाग-वित् विभागज्ञः जनः पाकनायकः रन्धनाधिपः भवतीति शेषः ॥१५७॥

फलेति । यः पादपानां वृक्षाणां यथाकालं भूमिजलादिना मृत्तिकाप्रदानजलसेचनादिना फलपुष्पाणां वृद्धिहेतुं वर्द्धनसाधनं रोपणं शोधनं संस्कारणं तथा तेषां भेषजं कीटादिकृतरोगप्रतिकारं संवेत्ति सम्यक् जानाति स हि एव आरामाधिपतिः ॥ १५८ ॥

प्रासादमित्यादि । यः सुशिल्पशास्त्रतः शोभनशिल्पशास्त्रयथा-लोचनया सम्यक् सुरम्यं यथा भवेत् तथा प्रासादं देवराजभवनं परिखां दुर्गवेष्टनजलाशयं दुर्गं प्राकारं प्राचीरं प्रतिमां प्रतिमूर्त्तिं यन्त्राणि

कर्त्तुं जानाति यः सैव ह्यम्ब्वाधिपतिः स्मृतः ॥१६१॥
राजकार्य्योपयोग्यान् हि पदार्थान् वेत्ति तत्त्वतः ।
सञ्चिनोति यथाकाले सम्भाराधिप उच्यते ॥ १६२ ॥
स्वधर्माचरणे दक्षो देवताराधने रतः ।
निस्पृहः स च कर्त्तव्यो देवतुष्टिपतिः सदा ॥ १६३ ॥
याचकं विमुखं नैव करोति न च संग्रहम् ।
दानशीलश्च निर्लोभो गुणज्ञश्च निरालसः ॥ १६४ ॥
दयालुर्मृदुवाक् दानपात्रविन्नतितत्परः ।
नित्यमेभिर्गुणैर्युक्तो दानाध्यक्षः प्रकीर्त्तितः ॥ १६५ ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥ १६६ ॥

---

सेतुबन्धं वापीं दीर्घिकां कूपं तड़ागकं सरोवरं पुष्करिणीं कुण्डं तथा जलादीनाम् ऊर्द्धं गतिक्रियां यन्त्रादिना ऊर्द्धगमनं कर्त्तुं जानाति सैव स एव जलादीनाम् अधिपतिः स्मृतः कथितः । सैवेति सन्धिः आर्षःप्रयोगः । यः तत्त्वतः याथार्थ्येन राजकार्य्योपयोग्यान् पदार्थान् वस्तूनि वेत्ति जानाति यथाकाले सञ्चिनोति च सः सम्भाराधिप उच्यते । यश्च सदा स्वधर्माचरणे दक्षः तत्परः देवतानामाराधने परिचर्य्यायां रतः आसक्तः तथा निस्पृहः निराकाङ्क्षः लोभरहित इत्यर्थः सः देवतुष्टिपतिः देवार्चनाध्यक्षः कर्त्तव्यः । किञ्च यः दानशीलः निर्लोभः गुणज्ञः निरालसः आलस्यरहितः दयालुः मृदुवाक् मधुरभाषी दानपात्रवित् नतितत्परः विनतः सन् याचकं विमुखं नैव करोति कदापि न करोतीत्येवमव्ययात् प्रतीयते । संग्रहं स्वयं ग्रहणञ्च न करोति सः नित्यं सततम् एभिर्गुणैः दानशीलत्वादिभिः युक्तः दानाध्यक्षः प्रकीर्त्तितः ॥ १५९—१६५ ॥

व्यवहारेत्यादि । ये च सर्वासु जातिषु मध्ये व्यवहारविदः

निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।
सभ्याः सभासदः कार्य्या वृद्धाः सर्वासु जातिषु ॥ १६७ ॥
सर्वभूतात्मतुल्यो यो निस्पृहोऽतिथिपूजकः ।
दानशीलश्च यो नित्यं सैव सत्राधिपः स्मृतः ॥ १६८ ॥
परोपकारनिरतः परमर्माप्रकाशकः ।
निर्मत्सरो गुणग्राही तद्विद्यः स्यात् परीक्षकः ॥ १६९ ॥
प्रजा नष्टा न हि भवेत् तथा दण्डविधायकः ।
नातिक्रूरो नातिमृदुः साहसाधिपतिश्च सः ॥ १७० ॥
आधर्षकेभ्यश्चोरेभ्यो ह्यधिकारिगणात् तथा ।
प्रजासंरक्षणे दक्षो ग्रामपो मातृपितृवत् ॥ १७१ ॥

---

कर्षादानाद्युत्पादशविवादज्ञाः वा लौकिकाचारज्ञाः प्राज्ञाः विद्वांसः वृत्तैः सदाचारैः शीलैः सौजन्यादिभिः गुणैः दयादाक्षिण्यादिभिः अन्विताः युक्ताः रिपौ शत्रौ मित्रे सुहृदि च समाः धर्मज्ञाः धार्मिकाः सत्यवादिनः निरालसाः आलस्यवर्जिताः जितक्रोधकामलोभाः प्रियंवदाः प्रियभाषिणः वृद्धाः स्थविराः तथा सभ्याः सभासदः कार्य्याः ॥१६६॥१६७

सर्वभूतेति । यः सर्वभूतेषु सर्वप्राणिषु आत्मतुल्यः निस्पृहः निर्लोभः नित्यम् अतिथिपूजकः तथा दानशीलश्च सैव स एव सत्राधिपः यज्ञाध्यक्षः स्मृतः । सैवेति पूर्ववदार्षम् ॥ १६८ ॥

परोपकारेति । यः परेषाम् उपकारे निरतः परेषां मर्माप्रकाशकः मर्मदारुणदोषाप्रकाशी निर्मत्सरः अन्यशुभद्वेषरहितः गुणग्राही तथा तद्विद् गुणज्ञः सः परीक्षकः स्यात् ॥ १६९ ॥

प्रजेति । यः प्रजा यथा नष्टा न भवेत् तथा दण्डविधायकः आडम्बदण्डकरः नातिक्रूरः नातिनिष्ठुरः नातिमृदुः नात्यन्तकोमलश्च सः साहसाधिपतिः चौर्य्यादिशासनाध्यक्षः कर्त्तव्य इति शेषः ॥ १७० ॥

आधर्षकेभ्य इति । ग्रामपः ग्रामाधिपतिः आधर्षकेभ्यः दस्युभ्यः

वृक्षान् संपुष्य यत्नेन फलं पुष्पं विचिन्वति ।
मालाकार इवात्यन्तं भागहारस्तथाविधः ॥ १७२ ॥
गणनाकुशलो यस्तु देशभाषाप्रभेदवित् ।
असन्दिग्धमगूढार्थं विलिखेत् स च लेखकः ॥ १७३ ॥
शस्त्रास्त्रकुशलो यस्तु दृढाङ्गश्च निरालसः ।
यथायोग्यं समाहूयात् प्रणम्रः प्रतिहारकः ॥ १७४ ॥
यथा विक्रयिणां मूलधननाशो भवेन्न हि ।
तथा शुल्कन्तु हरति शौल्किकः स उदाहृतः ॥ १७५ ॥
जपोपवासनियमकर्मध्यानरतः सदा ।

---

चोरेभ्यः तथा अधिकारिगणात् दुष्टपरराजपुरुषवर्गात् मातृपितृवत् मातेव पितेव च प्रजानां संरक्षणे सम्यक् प्रतिपालने दक्षः यत्नवान् सन् यथा मालाकारः मालौ यत्नेन वृक्षान् अत्यन्तं संपुष्य सम्यक् वर्द्धयित्वा फलं पुष्पञ्च विचिन्वति लभते, तथाविधः भागहारः तद्वत् भागहारीत्यर्थः भवेदिति शेषः प्रजाभ्यः रक्षणमूल्यस्वरूपराजप्राप्यांशं गृह्णीयादिति यावत् ॥ १७१ ॥ १७२ ॥

गणनेति । यस्तु गणनायां संख्याने कुशलः तथा देशानां भाषाणाम् प्रभेदवित् विशेषज्ञानवान् असन्दिग्धं सन्देहरहितं तथा अगूढार्थं स्पष्टार्थं यथा तथा विलिखेत् स च लेखकः ॥ १७२ ॥

शस्त्रेति । यस्तु शस्त्रेषु अक्षेपणीयेषु प्रहरणेषु अस्त्रेषु क्षेपणीयेषु प्रहरणेषु कुशलः निपुणः दृढाङ्गः कठिनशरीरः निरालसः आलस्यहीनः तथा प्रणम्रः विनतः सन् यथायोग्यं समाहूयात् समाह्वानं कुर्य्यात् करोतीत्यर्थः सः प्रतिहारकः ॥ १७४ ॥

यथेति । विक्रयिणां व्यवसायिनां यथा मूलधननाशः न हि नैव भवेत्, सः तथा शुल्कं तादृशं राजप्राप्यं हरति आदत्ते कश्चिन्मुख्य इति शेषः सः शौल्किकः शुल्कग्राही उदाहृतः कथितः ॥ १७५ ॥

जपोपवासेति । यः सदा जपे उपवासे नियमे अग्न्याधाने कर्म्मणि

दान्तः क्षमी निस्पृहश्च तपोनिष्ठः स उच्यते ॥ १७६ ॥
याचकेभ्यो ददात्यर्थं भार्य्यापुत्रादिकं त्वपि ।
न संगृह्णाति यत्किञ्चिद्दानशीलः स उच्यते ॥ १७७ ॥
पठनं पाठनं कर्त्तुं क्षमास्त्वभ्यासशालिनः ।
श्रुतिस्मृतिपुराणानां श्रुतज्ञास्ते प्रकीर्त्तिताः ॥ १७८ ॥
साहित्यशास्त्रनिपुणः सङ्गीतज्ञश्च सुस्वरः ।
सर्गादिपञ्चकज्ञाता स वै पौराणिकः स्मृतः ॥ १७९ ॥
मीमांसातर्कवेदान्तशब्दशासनतत्परः ।
ऊहवान् बोधितुं शक्तास्तत्त्वतः शास्त्रविच्च सः ॥ १८० ॥

---

तथा ध्याने समाधौ रतः दान्तः निगृहीतेन्द्रियः क्षमी क्षमावान् तथा निस्पृहः निर्लोभश्च सः तपोनिष्ठ उच्यते ॥ १७६ ॥

याचकेभ्य इति । यः याचकेभ्यः अर्थिभ्यः अर्थं ददाति किन्तु भार्य्यापुत्रादिकं स्त्रीपुत्रादिनिमित्तमित्यर्थः अपि यत्किञ्चित् धनमिति शेषः न संगृह्णाति सञ्चिनोति सः दानशीलः उच्यते ॥ १७७ ॥

पठनमिति । ये श्रुतिस्मृतिपुराणानां पठनम् अध्ययनं पाठनम् अध्यापनञ्च कर्त्तुं क्षमाः तथा अभ्यासशालिनः अभ्याससमर्थाः ते श्रुतज्ञाः प्रकीर्त्तिताः ॥ १७८ ॥

साहित्येति । यः साहित्यशास्त्रेषु काव्यशास्त्रेषु निपुणः सङ्गीतज्ञः सुस्वरः मधुरवाक् तथा सर्गादिपञ्चकानां सर्गप्रतिसर्गवंशमन्वन्तर वंशानुचरितानां सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षणमित्युक्तेः ज्ञाता वेत्ता स वै स एव पौराणिकः पुराणज्ञः स्मृतः कथितः ॥ १७९ ॥

मीमांसेति । यः मीमांसायां तर्के वेदान्ते तथा शब्दशासने व्याकरणादिशब्दशास्त्रे तत्परः विज्ञः ऊहवान् तर्कविचारक्षमः तथा तत्त्वतः बोधितुं बोधयितुमित्यर्थः आर्षमिदम् । शक्तः समर्थः स शास्त्रवित् शास्त्रज्ञः ॥ १८० ॥

संहिताञ्च तथा होरां गणितं वेत्ति तत्त्वतः।
ज्योतिर्विच्च स विज्ञेयो त्रिकालज्ञश्च यो भवेत् ॥ १८१ ॥
बीजानुपूर्व्या मन्त्राणां गुणान् दोषांश्च वेत्ति यः।
मन्त्रानुष्ठानसम्पन्नो मान्त्रिकः सिद्धदैवतः ॥ १८२ ॥
हेतुलिङ्गौषधीभिर्यो व्याधीनां तत्त्वनिश्चयम्।
साध्यासाध्यं विदित्वोपक्रमते स भिषक् स्मृतः ॥१८३॥
श्रुतिस्मृतीतरैर्मन्त्रानुष्ठानैर्दैवतार्चनम्।
कर्त्तुं हिततमं मत्वा यतते स च तान्त्रिकः ॥ १८४ ॥
नपुंसकाः सत्यवाचः सुभाषाश्च प्रियंवदाः।
सुकुलाश्च सुरूपाश्च योज्यास्त्वन्तःपुरे सदा ॥ १८५ ॥

---

संहितामिति। यः होरां होरानिर्णायिकां संहितां शास्त्रं तथा गणितं तत्त्वतः याथार्थ्येन वेत्ति जानाति तथा त्रिकालज्ञः भूतभवद्भविष्यज्ञः भवेत् सः ज्योतिर्विद् ज्योतिषिकः विज्ञेयः ॥ १८१ ॥

बीजेति। यः बीजानां बीजभूतमन्त्राणां आनुपूर्व्या पूर्वानुक्रमेण मन्त्राणां गुणान् दोषांश्च वेत्ति, तथा मन्त्रानुष्ठानसम्पन्नः सिद्धदैवतः देवतासिद्धश्च सः मान्त्रिकः मन्त्राचार्य्यः ॥ १८२ ॥

हेत्विति। यः हेतुभिः कारणैः लिङ्गैः चिह्नैः औषधीभिश्च व्याधीनां रोगाणां तत्त्वनिश्चयं याथार्थ्यनिर्णयं साध्यासाध्यञ्च विदित्वा ज्ञात्वा, उपक्रमते चिकित्सामारभते सः भिषक् वैद्यः स्मृतः ॥ १८३ ॥

श्रुतीति। यः श्रुत्या स्मृत्या इतरेण पुराणादिना विहितैः मन्त्रानुष्ठानैःदेवतार्चनं हिततमं मत्वा कर्त्तुं यतते, स तान्त्रिकः ॥ १८४ ॥

नपुंसका इति। ये सत्यवाचः सत्यवादिनः सुभूषाः शोभनालङ्काराः प्रियंवदाः प्रियभाषिणः सुकुलाः सद्वंशजाः सुरूपाः नपुंसकाः क्लीवाः, ते सदा अन्तःपुरे योज्याः रक्षणीयाः ॥ १८५ ॥

अनन्याः स्वामिभक्ताश्च धर्मनिष्ठा दृढाङ्गकाः ।
अबाला मध्यवयसः सेवासु कुशलाः सदा ॥ १८६ ॥
सर्वं यद्यत् कार्य्यजातं नीचं वा कर्त्तुमुद्यताः ।
निदेशकारिणो राज्ञा कर्त्तव्याः परिचारकाः ॥ १८७ ॥
अत्र प्रजाभृत्यवृत्तं विज्ञातुं कुशलाश्च ये ।
ते गूढचाराः कर्त्तव्या यथार्थश्रुतबोधकाः ॥ १८८ ॥
राज्ञः समीपप्राप्तानां नतिस्थानविबोधकाः ।
दण्डधरा वेत्रधराः कर्त्तव्यास्ते सुशिक्षकाः ॥ १८९ ॥
तन्त्रीकण्ठोत्थितान् सप्त स्वरान् स्थानविभागतः ।
उत्पादयति सर्वेषां सुसंयोगविभागिनः ॥ १९० ॥

---

अनन्या इति सर्वमिति । ये अनन्याः नापरसंक्रान्ता इत्यर्थः स्वामिभक्ताः प्रभुपरायणाः धर्मनिष्ठाः धर्मपराः दृढाङ्गकाः कठिनशरीराः अबालाः शैशवातीताः मध्यवयसः तरुणाः सेवासु कुशलाः परिचर्य्याभिज्ञाः सर्वं यत् यत् कार्य्यजातं नीचं वा हीनमपि मल-मूत्रादिनिष्कासनादि कर्त्तुम् उद्यताः किं बहुना सदा निदेशकारिणः आज्ञाकारिणः, ते राज्ञा परिचारकाः दासाः कर्त्तव्याः ॥ १८६ ॥१८७॥

अत्र प्रजेति । ये अत्र एषां प्रजानां भृत्यानाञ्च वृत्तं चरितं विज्ञातुं कुशलाः निपुणाः तथा यथार्थश्रुतस्य सत्यश्रुतस्य न तु मिथ्याभूतस्य बोधकाः निवेदकाः ते गूढचाराः गुप्तचाराः कर्त्तव्याः ॥ १८८ ॥

राज्ञ इति । ये राज्ञः समीपप्राप्तानां समीपोपस्थितानां जनानामिति शेषः नतिं प्रणामप्रकारं स्थानं स्थितिनियमञ्च विशेषेण बोधयन्ति ज्ञापयन्ति बोधयितुं शक्नुवन्ति सुशिक्षकाः सुविनयशिक्षाभिज्ञाश्च ते दण्डधराः वेत्रधराः वा कर्त्तव्याः ॥ १८९ ॥

तन्त्रीति । अष्टरागमिति । यः तन्त्र्याः कण्ठे स्वस्य उत्थितान् सप्त स्वरान् निषादादीन् स्थानविभागतः उत्पादयति जनयति, सुसंयोग-

अनुरागं सुस्वरञ्च सतालञ्च प्रगायति।
सनृत्यं वा गायकानामधिपः स च कीर्त्तितः॥ १९१॥
तथाविधा च पण्यस्त्री निर्लज्जा भावसंयुता।
शृङ्गाररसतत्त्वज्ञा सुन्दराङ्गी मनोरमा।
नवीनोत्तुङ्गकठिनकुचा सुस्मितरङ्गिणी॥ १९२॥
ये चान्ये साधकास्ते च तथा चित्तविरञ्जकाः।
सुभृत्यास्तेऽपि सन्धार्य्या नृपेणात्महिताय च॥ १९३॥
वैतालिकाः सुकवयो वेत्रदण्डधराश्च ये।
शिल्पज्ञाश्च कलावन्तो ये सदाप्युपकारकाः॥ १९४॥

---

विभागिनः संयुक्तान् विभक्तांश्च संवेत्ति सम्यक् जानाति तथा अनुरागम् अनुगतः रागो यस्मिन् तत्, सुस्वरं मधुरस्वरं सतालं तालसहितं सनृत्यं नृत्यसहितं वा यथा तथा प्रगायति। सः गायकानाम् अधिपः कीर्त्तितः कथितः॥ १९०॥ १९१॥

तथाविधेति यद्येति। नृपेण राज्ञा आत्महिताय आत्मनः मनसः हिताय सन्तोषाय तथाविधा तादृशसङ्गीतचतुरा इत्यर्थः निर्लज्जा भावसंयुता अनुरागवती शृङ्गाररसस्य तत्त्वज्ञा सुविदितशृङ्गाररसा इत्यर्थः सुन्दराङ्गी सुरूपा मनोरमा चित्तहारिणी नवीना नवयुवती उत्तुङ्गकठिनकुचा उन्नतकठिनस्तनी तथा सुस्मितं यथा तथा पश्यतीति तथोक्ता सहास्यदर्शना पण्यस्त्री वेश्या संधार्य्या रक्षणीया तथा ये च अन्ये साधकाः मनोनीतकार्य्यसाधनचतुराः चित्तविरञ्जकाः चित्ततोषिणः सुभृत्याः तेऽपि संधार्य्याः रक्षणीयाः एकेन संधार्य्या इति पदेन उभयत्रान्वयः बहुवचनेऽपि विसर्गलोपादिति विभावनीयम्॥ १९२॥ १९३॥

वैतालिका इत्यादि। एते वैतालिकादयः कार्य्यानुरूपतः कार्य्यानुसारेण योज्याः रक्षणीया इत्यर्थः, नृपेणेति शेषः इति उत्तरेणान्वयः।

दुर्गुणासूचका भाणा नर्त्तका बहुरूपिणः ।
आरामकृत्रिमवनकारिणो दुर्गकारिणः ॥ १९५ ॥
महानालिकयन्त्रस्थगोलैर्लक्ष्यविभेदिनः ।
लघुयन्त्राग्नेयचूर्णबाणगोलासिकारिणः ॥ १९६ ॥
अनेकयन्त्रशस्त्रास्त्रधनुस्तूणादिकारकाः ।
स्वर्णरत्नाद्यलङ्कारघटका रथकारिणः ॥ १९७ ॥
पाषाणघटका लोहकारा धातुविलेपकाः ।
कुम्भकाराः शौल्विकाश्च तक्षाणो मार्गकारकाः ॥१९८॥

---

ये वैतालिकाः स्तुतिपाठकाः बोधकरा इति ख्याताः, सुकवयः उत्कृष्टकवयः, वेत्रदण्डधराः पुररक्षकविशेषाः, शिल्पज्ञाः शिल्पकुशलाः, कलावन्तः चतुःषष्टिप्रकारकामविद्याकुशलाः तथा सदा उपकारिणः हितैषिणः ॥ १९४ ॥

दुर्गुणासूचकाः दोषाप्रकाशकाः, भाणाः परिहासकुशलाः, नर्त्तकाः नटाः बहुरूपिणः, विविधरूपधारिणः, आरामस्य उपवनस्य कृत्रिमवनस्य च कारिणः करणनिपुणाः तथा दुर्गकारिणः गुप्तिस्थाननिर्मातारः ॥ १९५ ॥

महानालिक इङ्गालीयुक्तं यत् यन्त्रं तत्रस्थैः गोलैः गोलाकारैः पिण्डैः लक्ष्यस्य रिपुपक्षस्य भेदिनः भेदनकुशलाः तथा लघु क्षुद्रं यन्त्रं येषां तादृशानाम् आग्नेयचूर्णानां गुलीतिख्यातानां वाणानां शराणां गोलानां वर्त्तुलाकारपिण्डानाम् असीनां तलवाराणाञ्च कारिणः निर्मातारः ॥ १९६ ॥

अनेकानि विविधानि यन्त्राणि येषां तादृशानां शस्त्राणाम् अस्त्राणां धनुषां तूणादीनाञ्च कारकाः करणक्षमाः, स्वर्णरत्नादिभिः अलङ्कारघटकाः भूषणकारिणः तथा रथकारिणः शकटादिनिर्माणकारिणः ॥ १९७ ॥

नापिता रजकाश्चैव वासिका मलहारकाः ।
वार्त्ताहराः शौचिकाश्च राजचिह्नाग्रधारिणः ॥ १९९ ॥
भेरीपटहगोपुच्छशङ्खवेण्वादिनिस्वनैः ।
ये व्यूहरचका यानव्यपयानादिबोधकाः ॥ २०० ॥
नाविकाः खनका व्याधाः किराता भारिका अपि ।
शस्त्रसम्मार्जनकरा जलधान्यप्रवाहकाः ॥ २०१ ॥
आपणिकाश्च गणिका वाद्यजायाप्रजीविनः ।
तन्तुवायाः शाकुनिकाश्चित्रकाराश्च चर्मकाः ॥ २०२ ॥

---

पाषाणानां प्रस्तराणां घटकाः प्रस्तरैर्गृहादिनिर्मातारः, लोहकाराः कर्मकाराः, धातुभिः गैरिकादिभिः विलेपकाः गृहादिरञ्जनकारिणः, कुम्भकाराः, शौल्विकाः जातिभेदाः, तथाच स्थलचरजातिविशेषाः तथा मार्गकारकाः रथ्याबन्धिनः ॥ १९८ ॥

नापिताः रजकाः वासिकाः काष्ठच्छेदादिजातिभेदाः मलहारकाः पुरीषादिनिःसारकाः वार्त्ताहराः संवादवाहिनः, शौचिकाः सूचीकर्मकारिणः तथा राजचिह्नानि अग्रे धारयन्तीति तथोक्ताः ॥ १९९ ॥

ये व्यूहरचकाः सैनिकरचयितारः भेरीणां पटहानां गोपुच्छानां शङ्खानां वेण्वादीनाञ्च वाद्यानां निःस्वनैः ध्वनिभिः सैन्यस्य शत्रुं प्रति यात्रायाः व्यपयानस्य शत्रुभ्यः पराङ्मुखीभावस्य आदिपदेन आक्रमणादेश्च बोधकाः ज्ञापकाः ॥ २०० ॥

नाविकाः कर्णधाराः, खनकाः खननकारिणः, व्याधाः, किराताः भारिकाः भारवाहिनः शस्त्राणां संमार्जनकराः तीक्ष्णयितारः तथा जलानां धान्यानाञ्च प्रवाहकाः वहनकारिणः ॥ २०१ ॥

आपणिकाः विपणिवासिनः गणिकाः वाराङ्गनाः वैदेशिककर्मकारिणां स्त्र्यर्थमिति भावः, वाद्यैः जायाभिः पत्नीभिर्वा प्रकर्षेण जीवन्तीति तथोक्ताः, तन्तुवायाः प्रसिद्धाः शाकुनिकाः पक्षिजीविनः चित्रकाराः आलेख्यव्यवसायिनः तथा चर्मकाः चर्मकाराः ॥ २०२ ॥

गृहसम्मार्जकाः पात्रधान्यवस्त्रप्रमार्जकाः ।
शय्यावितानास्तरणकारकाः शासका अपि ॥ २०३ ॥
आमोदास्वेदसत्पकारास्ताम्बूलिकास्तथा ।
हीनाल्पकर्मिणश्चैते योज्याः कार्य्यानुरूपतः ॥ २०४ ॥
प्रोक्तं पुण्यतमं सत्यं परोपकरणं तथा ।
आम्नायुक्तांश्च भृतकान् सततं धारयेत् नृपः ॥ २०५ ॥
हिंसा गरीयसी सर्वपापेभ्योऽनृतभाषणम् ।
गरीयस्तरमेताभ्यां युक्तान् भृत्यान् न धारयेत् ॥२०६॥
यदा यदुचितं कर्त्तुं वक्तुं वा तत् प्रबोधयन् ।

---

गृहाणां सम्मार्जकाः शोधकाः, पात्राणां तैजसानां धान्यानां वस्त्राणाञ्च प्रमार्जकाः शुद्धिकारिणः, शय्यानां वितानानाम् चन्द्रोपाख्यानाम् आच्छादनपटानाम् आस्तरणानां शय्योपरिपातनीयानां पटानां कारकाः निर्मातारः शासका अपि शिक्षकाश्च ॥ २०३ ॥

आमोदानां सुगन्धानाम् आस्वादानां स्वेदाजनकानाम् अनुष्णानामित्यर्थः सताम् उत्कृष्टानां धूपानां गन्धद्रव्यविशेषाणां काराः कारकाः ताम्बूलिकाः ताम्बूलप्रदातारः तथा हीनाल्पकर्मिणः हीनकर्मिणः निकृष्टकर्मकराः अल्पकर्मिणः क्षुद्रकर्मकराश्च ॥ २०४ ॥

प्रोक्तमिति । तथा परोपकरणं परोपकारकरणम् पुण्यतमम् अतिपुण्यकरं प्रोक्तं कथितम् अतः कारणात् नृपः आम्नायुक्तान् आज्ञाकारिणः भृतकान् भृत्यान् सततं धारयेत् पालयेत् । आम्नायुक्तानित्यत्र आभ्यां युक्तानिति पाठान्तरकल्पने आभ्यां सत्यपरोपकाराभ्यां युक्तानित्यर्थः ॥ २०५ ॥

हिंसेति । हिंसा सर्वपापेभ्यः गरीयसी श्रेष्ठा, तथा अनृतभाषणं मिथ्यावचनं गरीयस्तरं अतिगुरुतरं तस्मात् नृपः एताभ्यां हिंसानृताभ्यां युक्तान् भृत्यान् न धारयेत् त्यजेदित्यर्थः ॥ २०६ ॥

यदेति । यदा यत् कार्य्यं कर्त्तुं वा वक्तुम् उचितं तत् प्रबो-

तद्भक्तिं कुरुते द्राक् तु स सद्भृत्यः सुपूज्यते ॥ २०७ ॥
उत्थाय पश्चिमे यामे गृहकृत्यं विचिन्त्य च ।
कृत्वोत्सर्गन्तु विष्णुं हि स्मृत्वा स्नायादनन्तरम् ॥२०८॥
प्रातःकृत्यन्तु निर्वर्त्य यावत् सार्द्धमुहूर्त्तकम् ।
गत्वा स्वकार्य्यशालां वा कार्य्याकार्य्यं विचिन्त्य च ॥२०९॥
विनाज्ञया विशन्तन्तु द्वाःस्थः सम्यङ्निरोधयेत् ।
निवेद्यकार्य्यं विज्ञाप्य तेनाज्ञप्तः प्रवेशयेत् ॥ २१० ॥
दृष्ट्वागतान् सभामध्ये राज्ञे दण्डधरः क्रमात् ।
निवेद्य तन्नतीः पश्चात् तेषां स्थानानि सूचयेत् ॥२११॥
ततो राजगृहं गत्वाऽसौ गच्छेच्च सन्निधिम् ।

---

पयन् राज्ञे बोधयन् सन् यः द्राक् झटिति तद्भक्तिं कथयति कुरुते सः सद्भृत्यः सुपूज्यते सम्यक् प्रशस्यते ॥ २०७ ॥

उत्थायेति । प्रात इति । पश्चिमे यामे प्रहरे रात्रेरिति शेषः उत्थाय गृहकृत्यं गृहकार्य्यं विचिन्त्य उत्सर्गं मलमूत्रत्यागं कृत्वा विष्णुं स्मृत्वा इत्यं सार्द्धमुहूर्त्तकं दण्डत्रयं यावत् प्रातःकृत्यं निर्वर्त्य तु समाप्यैव स्वस्य कार्य्यशालां कर्म्मस्थलं गत्वा कार्य्याकार्य्यं कार्य्यम् अकार्य्यं च विचिन्त्य च तदनन्तरं स्नायात् प्रथमश्लोकेऽध्याहरणे ॥ २०८ ॥ २०९ ॥

विनेति । द्वाःस्थः दौवारिकः आज्ञया आदेशेन विना विशन्तं प्रविशन्तं जनं गृहाभ्यन्तरमिति शेषः सम्यक् निरोधयेत्, पश्चात् निदेशेन यथाविधेयमित्यर्थः कार्य्यं विज्ञाप्य राज्ञे इति शेषः तेन राज्ञा आज्ञप्तः सन् तं प्रविशन्तं प्रवेशयेत् त्यजेत् प्रवेशाय अनुमन्येत इत्यर्थः ॥ २१० ॥

दृष्ट्वेति । दण्डधरः दौवारिकः सभामध्ये आगतान् दृष्ट्वा क्रमात् यथाक्रमं राज्ञे तन्नतीः तेषां प्रणामान् निवेद्य पश्चात् तेषां स्थानानि उपवेशनार्थानि सूचयेत् प्रदर्शयेत् ॥ २११ ॥

तत इति । असाविति । ततः तेषां स्थाननिर्देशानन्तरं राजगृहं

नत्वा नृपं यथान्यायं विष्णुरूपमिवापरम् ॥ २१२ ॥
प्रविश्य सानुरागस्य चित्तज्ञस्य समन्ततः ।
भर्त्तुरर्द्धासने दृष्टिं कृत्वा नान्यत्र निक्षिपेत् ॥ २१३ ॥
अग्निं दीप्तमिवासीदेद् राजानमुपशिक्षितः ।
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ॥ २१४ ॥
यत्नेनोपचरेन्नित्यं नाहमस्मीति चिन्तयेत् ।
समर्थयन् च तत् पक्षं साधु भाषित भाषितम् ।
तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितम् ॥ २१५ ॥
सुखप्रबन्धगोष्ठीषु विवादे वादिनां मतम् ।
विजानन्नपि नो ब्रूयाद्भर्त्तुः क्षिप्तोत्तरं वचः ॥ २१६ ॥

---

गत्वा आसन्नः प्राप्तराजनिदेशः सन् सन्निधिं राज्ञ इति शेषः गच्छेत् प्रविश्य च नृपं राजानम् अपरं विष्णुरूपं नारायणावतारमिव यथान्यायं नत्वा प्रणम्य सानुरागस्य अनुरागिणः चित्तज्ञस्य हृदयं विजानतः भर्त्तुः स्वामिनः अर्द्धासने आसनार्द्धे दृष्टिं कृत्वा अन्यत्र समन्ततः चतुर्दिक्षु दृष्टिं न क्षिपेत् न दद्यात् ॥ २१२ ॥ २१३ ॥

अग्निमिति । उपशिक्षितः सम्यग् विनीतः सन् दीप्तं ज्वलन्तं अग्निमिव तथा क्रुद्धम् आशीविषं भुजङ्गमिव प्राणानां धनानाञ्च ईश्वरं प्रभुं प्रभुं स्वामिनं राजानम् आसीदेत् राजसमीपं गच्छेदित्यर्थः ॥ २१४ ॥

यत्नेनेति । नित्यं सततं यत्नेन उपचरेत् सेवेत राजानमिति शेषः, अहम् अस्मि स्वाधीनः भवामीति न चिन्तयेत् न भावयेत् । तथा तत्पक्षं राजपक्षं समर्थयन् दृढीकुर्वन् साधु सन्तोषकरं भाषितं वचनं भाषेत कथयेत् तस्य राज्ञः नियोगेन आदेशेन वा सुपरिनिश्चितं सुनिश्चितं अर्थं ब्रूयात् ॥ २१५ ॥

सुखेति । सुखप्रबन्धगोष्ठीषु विहारसमाजेषु वादिनां परस्परतर्क-

सदानुद्धतवेशः स्यादाहूतस्तु प्राञ्जलिः ।
तद्वाचं कृतनतिः श्रुत्वा वस्त्रान्तरितसन्मुखः ॥ २१७ ॥
तदाज्ञां धारयित्वादौ स्वकर्माणि निवेदयेत् ।
नत्वाऽऽसीताऽऽसने प्रह्वो न तत्पार्श्वे न सम्मुखे ॥२१८॥
उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा ।
जृम्भणं गात्रभङ्गञ्च पर्वास्फोटञ्च वर्जयेत् ॥ २१९ ॥
राज्ञादिष्टन्तु यत् स्थानं तत्र तिष्ठेन्मुदान्वितः ।
प्रवीणोचितमेधावी वर्जयेदभिमानताम् ॥ २२० ॥

---

सतां विवादे तर्कव्यवहारे मतं सिद्धान्तं विजानन्नपि भर्त्तुः स्वामिनः उत्तरं सिद्धान्तं छित्त्वा आक्षिप्य आच्छाद्य इत्यर्थः वचः वचनं नो ब्रूयात् न कथयेत् ॥ २१६ ॥

सदेति । नृपेण आहूतः सन् सदा अनुद्धतवेशः विनीतपरिच्छदः प्राञ्जलिः स्यात् तथा कृतनतिः प्रणतः वस्त्रान्तरितसन्मुखः आच्छादितपुरोभागः सन् आदौ अग्रतः तस्य प्रभोः तां वाचं श्रुत्वा तदाज्ञां आदेशं धारयित्वा स्वीकृत्य पश्चात् प्रह्वः नम्रः सन् स्वकर्माणि निजागमनप्रयोजनानि निवेदयेत् । तस्य प्रभोः पार्श्वे सम्मुखे वा प्रभोराज्ञयापीत्यर्थः आसने न तु आसीत नैव उपविशेत् आज्ञापालनार्थं आसनं स्पृशेदिति भावः ॥ २१७ ॥ २१८ ॥

उच्चैरिति । उच्चैः प्रहसनम् उच्चहासं कासं कफादिनिःसारणशब्दविशेषं ष्ठीवनं थुत्कारं कुत्सनं कुत्सितकर्मकरणम् अथवा कस्यापि निन्दनं जृम्भणं गात्रभङ्गं तथा पर्वणां शरीरसन्धीनाम् आस्फोटं कण्डूयनं वर्जयेत् प्रभुसमक्षमिति शेषः ॥ २१९ ॥

राज्ञेति । राज्ञा आदिष्टं प्रदर्शितं यत् स्थानं, मुदान्वितः सहर्षः सन् तत्र तिष्ठेत् तथा प्रवीणोचितमेधावी दक्षोचितप्रज्ञावान् सन् अभिमानतां मानितां वर्जयेत् प्रभुसमीपे मानापमानबुद्धिर्न क्रियते इति भावः ॥ २२० ॥

आपत्सून्मार्गगमने कार्य्यकालात्ययेषु च ।
अपृष्टोऽपि हितान्वेषी ब्रूयात् कल्याणभाषितम् ॥२२१॥
प्रियं तथ्यञ्च पथ्यञ्च वदेद्धर्मार्थकं वचः ।
समानवार्त्तया चापि तद्धितं बोधयेत् सदा ॥ २२२ ॥
कीर्त्तिमन्यनृपाणां वा वदेन्नीतिफलं तथा ।
दाता त्वं धार्म्मिकः शूरो नीतिमानसि भूपते ! ॥२२३॥
अनीतिस्ते तु मनसि वर्त्तते न कदाचन ।
ये ये भ्रष्टा अनीत्या तान् तदग्रे कीर्त्तयेत् सदा ॥२२४॥
नृपेभ्यो ह्यधिकोऽसीति सर्वेभ्यो न विशेषयेत् ।
परार्थं देशकालज्ञो देशे काले च साधयेत् ॥ २२५ ॥

---

आपत्स्विति । हितान्वेषी हितकामी जनः अपृष्टोऽपि अजिज्ञासितोऽपि आपदि, उन्मार्गगमने तथा कार्य्यकालात्ययेषु कार्य्यसमयातिक्रमेषु प्रभोरिति शेषः कल्याणभाषितं हितवाक्यं ब्रूयात् कथयेत् ॥२२१॥

प्रियमिति । प्रियं प्रीतिकरं तथ्यं यथार्थं पथ्यं हितं धर्मार्थकं धर्मार्थयुक्तञ्च वचः वदेत् समानवार्त्तया मानयुक्तसमाचारेण च सदा तस्य प्रभोः हितं बोधयेदपि ज्ञापयेच्च ॥ २२२ ॥

कीर्त्तिमिति । अन्येषां नृपाणां कीर्त्तिं यशस्करकार्य्यं नीतिफलं च वदेत् । किञ्च हे भूपते ! त्वं दाता, धार्म्मिकः, शूरः वीरः तथा नीतिमान् नयसम्पन्नः असि, कदाचन ते तव मनसि अनीतिः दुर्नयः न तु नैव वर्त्तते । ये ये नृपाः अनीत्या दुर्नयेन भ्रष्टाः तान् तदग्रे तस्य प्रभोरग्रे सदा कीर्त्तयेत् ॥ २२३ ॥ २२४ ॥

नृपेभ्य इति । सर्वेभ्यः नृपेभ्यः अधिकः श्रेष्ठः असीति न विशेषयेत् विशिष्य न ब्रूयात् तथा देशकालज्ञः अस्मिन् देशे इदं कर्त्तव्यमस्मिन् काले इदं कर्त्तव्यमिति जानन् सन् देशे यथास्थाने काले यथासमये परार्थं परेषामन्येषाम् अर्थं कार्य्यं प्रयोजनं वा साधयेत् ॥ २२५ ॥

पराथनाशनं न स्यात् तथा ब्रूयात् सदैव हि ।
न कर्षयेत् प्रजाकार्य्यमिषतश्च नृपं सदा ॥ २२६ ॥
अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा ।
न त्वेवानर्थसम्पन्नां वृत्तिमीहेत पण्डितः ॥ २२७ ॥
यत्कार्य्ये यो नियुक्तः स भूयात् तत्कार्य्यतत्परः ।
नान्याधिकारमन्विच्छेन्नाभ्यसूयेच्च केनचित् ॥ २२८ ॥
न न्यूनं लक्षयेत् कस्य पूरयीत स्वशक्तितः ।
परोपकरणादन्यन्न स्वामिहितकरं सदा ॥ २२९ ॥
करिष्यामीति ते कार्य्यं न कुर्य्यात् कार्य्यलङ्घनम् ।

---

परार्थेति । यथा परार्थनाशनं परेषां प्रजादीनां कार्य्यहानिः न स्यात् तथा सदैव ब्रूयात् तथा प्रजाकार्य्यमिषतः प्रजानां कार्य्यानुरोधेनेत्यर्थः नृपं स्वामिनं सदा न कर्षयेत् न विरक्तीकुर्य्यात् [illegible] ॥ २२६ ॥

अपीति । पण्डितः प्राज्ञो जनः क्षुधा परिगतः क्षुधार्त्तः अत एव शुष्यन् शोषं गच्छन्नपि स्थाणुवत् शाखापल्लवादिहीनः शुष्कतरुरिव आसीत तिष्ठेत् अनर्थसम्पन्नां विपत्सङ्कुलाम् अशास्त्रीयामित्यर्थः वृत्तिं जीविकां नत्वेव ईहेत चेष्टेत नैवावलम्बेतेत्यर्थः ॥ २२७ ॥

यत्कार्य्ये इति । यः यस्मिन् कार्य्ये नियुक्तः, सः तत्कार्य्यतत्परः भूयात् भवेत्, अन्यस्य अधिकारं न अन्विच्छेत् तथा केनचित् न अभ्यसूयेत् मात्सर्य्यं कुर्य्यात् ॥ २२८ ॥

नेति । कस्य जनस्य अपीति शेषः न्यूनं त्रुटिमित्यर्थः न लक्षयेत् न पश्येत् प्रत्युत स्वशक्तितः निजशक्त्या पूरयीत न्यूनं पूरयेत् । सदा सर्वस्मिन् काले परेषामुपकारकरणात् अन्यत् किमपीत्यर्थः हितकरं मैत्रीविधायकं न स्यात् न विद्यते, अतः परेषां न्यूनतापूरणं सर्वथा कर्त्तव्यमिति भावः ॥ २२९ ॥

करिष्यामीति । ते तव कार्य्यं करिष्यामीति प्रतिश्रुत्येति शेषः

आपत्सु चामार्गगमने कार्य्यकालात्ययेषु च ।
अपृष्टोऽपि हितान्वेषी ब्रूयात् कल्याणभाषितम् ॥२२१॥
प्रियं तथ्यञ्च पथ्यञ्च वदेद्धर्मार्थकं वचः ।
समानवार्त्तया चापि तद्धितं बोधयेत् सदा ॥ २२२ ॥
कीर्त्तिमन्यनृपाणां वा वदेन्नीतिफलं तथा ।
दाता त्वं धार्म्मिकः शूरो नीतिमानसि भूपते ! ॥२२३॥
अनीतिस्ते तु मनसि वर्त्तते न कदाचन ।
ये ये भ्रष्टा अनीत्या तान् तदग्रे कीर्त्तयेत् सदा ॥२२४॥
नृपेभ्यो ह्यधिकोऽसीति सर्वेभ्यो न विशेषयेत् ।
परार्थं देशकालज्ञो देशे काले च साधयेत् ॥ २२५ ॥

---

आपत्स्विति । हितान्वेषी हितकामी जनः अपृष्टोऽपि अजिज्ञासितोऽपि आपदि, उन्मार्गगमने तथा कार्य्यकालात्ययेषु कार्य्यसमयातिक्रमेषु प्रभोरिति शेषः कल्याणभाषितं हितवाक्यं ब्रूयात् कथयेत् ॥२२१॥

प्रियमिति । प्रियं प्रीतिकरं तथ्यं यथार्थं पथ्यं हितं धर्म्मार्थं धर्म्मार्थयुक्तञ्च वचः वदेत् समानवार्त्तया लोकवृत्तसमाचारेण च सदा तस्य प्रभोः हितं बोधयेदपि ज्ञापयेत् ॥ २२२ ॥

कीर्त्तिमिति । अन्येषां नृपाणां कीर्त्तिं यशस्करकार्य्यं नीतिफलं च वदेत् । किञ्च हे भूपते ! त्वं दाता, धार्म्मिकः, शूरः वीरः तथा नीतिमान् नयसम्पन्नः असि, कदाचन ते तव मनसि अनीतिः दुर्णयः न कदैव वर्त्तते । ये ये नृपाः अनीत्या दुर्णयेन भ्रष्टाः तान् तदग्रे तस्य प्रभोरग्रे सदा कीर्त्तयेत् ॥ २२३ ॥ २२४ ॥

नृपेभ्य इति । सर्वेभ्यः नृपेभ्यः अधिकः श्रेष्ठः असीति न विशेषयेत् विशिष्य ब्रूयात् तथा देशकालज्ञः अस्मिन् देशे इदं कर्त्तव्यमस्मिन् काले इदं कर्त्तव्यमिति जानन् सन् देशे यथास्थाने काले यथासमये परार्थं परेषामन्येषाम् अर्थं कार्य्यं प्रयोजनं वा साधयेत् ॥ २२५ ॥

पराथनाशनं न स्यात् तथा ब्रूयात् सदैव हि ।
न कर्षयेत् प्रजाकार्य्यमिषतश्च नृपं सदा ॥ २२६ ॥
अपि स्थाणुवदासीत शुष्यन् परिगतः क्षुधा ।
न त्वेवानर्थसम्पन्नां वृत्तिमीहेत पण्डितः ॥ २२७ ॥
यत्कार्य्ये यो नियुक्तः स भूयात् तत्कार्य्यतत्परः ।
नान्याधिकारमन्विच्छेन्नाभ्यसूयेच्च केनचित् ॥ २२८ ॥
न न्यूनं लक्षयेत् कस्य पूरयीत स्वशक्तितः ।
परोपकरणादन्यन्न स्वाम्यहितकरं सदा ॥ २२९ ॥
करिष्यामीति ते कार्य्यं न कुर्य्यात् कार्य्यलङ्घनम् ।

---

परार्थेति । यथा परार्थनाशनं परेषां प्रजादीनां कार्य्यहानिः न स्यात् तथा सदैव ब्रूयात् तथा प्रजाकार्य्यमिषतः प्रजानां कार्य्यानुरोधेनेत्यर्थः नृपं स्वामिनं सदा न कर्षयेत् न विरक्तीकुर्य्यात् हिशब्दोऽवधारणे ॥ २२६ ॥

अपीति । पण्डितः प्राज्ञो जनः क्षुधा परिगतः क्षुधार्त्तः अत एव शुष्यन् शोषं गच्छन्नपि स्थाणुवत् शाखापल्लवादिहीनः शुष्कतरुरिव आसीत तिष्ठेत् अनर्थसम्पन्नां विपत्सङ्कुलाम् अधर्म्म्यामित्यर्थः वृत्तिं जीविकां न त्वेव ईहेत चेष्टेत नैवावलम्बेतेत्यर्थः ॥ २२७ ॥

यत्कार्य्य इति । यः यस्मिन् कार्य्ये नियुक्तः, सः तत्कार्य्यतत्परः भूयात् भवेत्, अन्यस्य अधिकारं न अन्विच्छेत् तथा केनचित् न अभ्यसूयेत् नासूयां कुर्य्यात् ॥ २२८ ॥

नेति । कस्य जनस्य अपीति शेषः न्यूनं त्रुटिमित्यर्थः न लक्षयेत् न पश्येत् प्रत्युत स्वशक्तितः निजशक्त्या पूरयीत न्यूनं पूरयेत् । यदा सर्वस्मिन् कार्य्ये परेषामुपकारापकरणात् अन्यत् किमपीत्यर्थः हितकरं श्रेयोविधायकं न स्यात् न विद्यते, अतः परेषां न्यूनतापूरणं सर्वथा कर्त्तव्यमिति भावः ॥ २२९ ॥

करिष्यामीति । ते तव कार्य्यं करिष्यामीति प्रतिश्रुत्येति शेषः

द्राक् कुर्य्यात् तु समर्थश्चेत् साम्रं दीर्घं न रचयेत् ॥२३०
गुह्यं कर्म च मन्त्रञ्च न भर्त्तुः सम्प्रकाशयेत् ।
विद्वेषञ्च विनाशञ्च मनसापि न चिन्तयेत् ॥ २३१ ॥
राजा परममित्रोऽस्ति न कामं विचरेदिति ।
स्त्रीभिस्तदर्थिभिः पापैर्वैरिभूतैर्निराक्रतैः ॥ २३२ ॥
एकार्थचर्य्यां साहित्यं संसर्गञ्च विवर्जयेत् ।
वेशभाषानुकरणं न कुर्य्यात् पृथिवीपतेः ॥ २३३ ॥
सम्पन्नोऽपि च मेधावी न स्पर्धेत च तद्गुणैः ।
रागापरागौ जानीयाद्भर्त्तुः कुशलकर्मवित् ।
इङ्गिताकारचेष्टाभ्यस्तदभिप्रायतां तथा ॥ २३४ ॥

---

कार्य्यस्य लम्बनं विलम्बनं न कुर्य्यात् समर्थः शक्तश्चेत् द्राक् झटिति कुर्य्यात् साम्रम् आमावच्छितम् आमां दत्त्वेति भावः दीर्घं कालं न रचयेत् न कार्य्यमाहत्य तिष्ठेदित्यर्थः ॥ २३० ॥

गुह्यमिति । भर्त्तुः स्वामिनः गुह्यं गोपनीयं कर्म मन्त्रं परामर्शञ्च न सम्प्रकाशयेत् विद्वेषं विनाशञ्च मनसापि न चिन्तयेत् न भावयेत् ॥२३१

राजेत्यादि । राजा मम परममित्रः अस्ति वर्त्तते इति कामं सम्यक् न विचरेत् न भावयेत् मित्र इति पुंलिङ्गं आर्षः । तदर्थिभिः तस्य प्रभोः अर्थिभिः अभिलाषिणीभिरित्यर्थः तदर्थिभिरिति आर्षम् । स्त्रीभिः तथा पापैः पापाचारैः अत एव निराक्रतैः वैरिभूतैः शत्रुभिः प्रभोरिति शेषः एकार्थचर्य्यां सम्भूय व्यवहारम् । साहित्यं एक-क्रियाकरणं संसर्गञ्च विवर्जयेत् त्यजेत् किञ्च पृथिवीपतेः वेशस्य भाषा-याश्च अनुकरणं न कुर्य्यात् तथा सम्पन्नोऽपि सम्बद्धोऽपि मेधावी अपि तस्य प्रभोः गुणैः न स्पर्द्धेत । अपिच कुशलकर्मवित् शुभकार्य्यज्ञः सन् भर्त्तुः स्वामिनः रागापरागौ अनुरागविरागौ जानीयात् केन कर्मणा अनुरागः केन वा विरागो भवेदिति तथा इङ्गितेन आकारेण चेष्टया

त्यजेद्विरक्तं नृपतिं रक्ते वृत्तिन्तु कारयेत् ॥ २३५ ॥
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ॥ २३६ ॥
आशावर्धनकं कृत्वा फलनाशं करोति च।
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः।
वाक्यञ्च समदं वक्ति वृत्तिच्छेदं करोति च ॥ २३७ ॥
लक्ष्यते विमुखश्चैव गुणसङ्कीर्त्तने कृते।
दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्मणि ॥ २३८ ॥
विरक्तलक्षणं ह्येतद्रक्तस्य लक्षणं ब्रुवे ॥ २३९ ॥
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात्।

---

च तस्य प्रभोः अभिप्रायतां मनोभावं जानीयात् बुध्येत ॥२३२॥२३३॥२३४ ॥

त्यजेदिति। विरक्तं नृपतिं त्यजेत् रक्ते अनुरक्ते नृपे वृत्तिं वर्त्तनं स्थितिमित्यर्थः कारयेत् कुर्यादित्यर्थः स्वार्थे अन्तोऽयं कथाहुः। विरक्तः नृपः नाशं विपदं तथा विपक्षाणां शत्रूणाम् अभ्युदयम् उन्नतिं कारयेत् जनयेत् ॥ २३५ ॥ २३६ ॥

विरक्तरक्तलक्षणमाह आशेत्यादि। यः प्रभुः आशावर्द्धनकम् आशावृद्धिं कृत्वा फलनाशं करोति आशां दत्वा फले वञ्चयतीत्यर्थः, अकोपः अक्रोधः अपि सकोपाभः सकोप इव तथा प्रसन्नः अपि निष्फलः फलदानविमुखः भवति। किञ्च समदं सगर्वं वाक्यं वक्ति वृत्तिच्छेदं जीविकाव्याघातं करोति च अपिच गुणसङ्कीर्त्तने कृतेऽपि विमुख एव लक्ष्यते तथा अन्यत्र क्रियमाणे कर्मणि दृष्टिं क्षिपति ददाति न गुणसंकीर्त्तके इति भावः। एतत् विरक्तस्य लक्षणं चिह्नमिति शेषः। इदानीं रक्तस्य लक्षणं ब्रुवे कथयामि। दृष्ट्वा प्रसन्नः भवति, आदरात् वाक्यं गृह्णाति, कुशलादिपरिप्रश्नो यत् कुशलादि-विप्रायान्तर्मित्यर्थः आसनम् अस्य वीरकस्य विविक्तदर्शनम् एकान्ते

कुशलादिपरिप्रश्नी प्रदापयति चासनम् ॥ २४० ॥
विविक्तदर्शनं चास्य रहस्येनं न शङ्कते ।
मायेत हृष्टवदनः श्रुत्वा तस्य च तत्कथाम् ॥ २४१ ॥
अप्रियाण्यपि चान्यानि तदुक्तान्यभिमन्यते ।
उपायनञ्च गृह्णाति स्तोकं सम्पादनैस्तथा ।
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ॥ २४२ ॥
इति रक्तस्य वै लक्ष्यं कर्त्तव्यं तस्य सेवनम् ॥ २४३ ॥
तद्दत्तवस्त्रभूषादिचिह्नं सन्धारयेत् सदा ।
न्यूनाधिक्यं स्वाधिकारकार्य्ये नित्यं निवेदयेत् ।
तदर्थां तत्कृतां वार्त्तां शृणुयाद्वापि कीर्त्तयेत् ॥२४४॥
चारसूचकदोषेण त्वन्यथा यद्वदेन्नृपः ।

---

दर्शनञ्च प्रददाति, रहसि एकान्ते स्थित इति शेषः एनं सेवकं न शङ्कते तस्य सेवकस्य तत्कथां श्रुत्वा हृष्टवदनः प्रसन्नमुखः मायते प्रभुरिति शेषः, तेन सेवकेन उक्तानि अप्रियाणि अपि अन्यानि अभिमन्यते अनुमोदते, उपायनम् उपढौकनं गृह्णाति तथा स्तोकसम्पादनैः स्व किञ्चन कार्य्यसम्पादनैरपि कथान्तरेषु विविधालापेषु मध्ये प्रहृष्टवदनः प्रसन्नमुखः सन् स्मरति आह्वयति च । रक्तस्य अनुरागिणः प्रभोः इति उक्तप्रकारं लक्ष्यं चिह्नं तस्य अनुरक्तस्य प्रभोः सेवनं कर्त्तव्यम् ॥ २३७—२४२ ॥

तद्दत्तेति । तेन प्रभुणा दत्तं वस्त्रभूषादि वसनभूषणादि चिह्नं सदा सन्धारयेत् तथा स्वाधिकारकार्य्ये निजाधिकारकर्म्मणि न्यूनाधिक्यं न्यूनताम् आधिक्यञ्च नित्यं निवेदयेत् स्वामिने इति शेषः । किञ्च तदर्थां प्रभुसम्बद्धां वा तत्कृतां प्रभुकथितां वार्त्तां शृणुयात् कीर्त्तयेच्च ॥ २४४ ॥

चारेति । चाराणां सूचकानां दुर्जनानां दोषेण नृपः यद्

शृणुयान्मौनमाश्रित्य तथ्यवन्नानुमोदयेत् ॥ २४५ ॥
आपद्गतं सुभर्त्तारं कदापि न परित्यजेत् ॥ २४६ ॥
एकवारमप्यशितं यस्यान्नं ह्यादरेण च ।
तदिष्टं चिन्तयेन्नित्यं पालकस्याञ्जसा न किम् ? ॥२४७॥
अप्रधानः प्रधानः स्यात् काले चात्यन्तसेवनात् ।
प्रधानोऽप्यप्रधानः स्यात् सेवालस्यादिना यतः ॥ २४८॥
नित्यं सुसेवनरतो भृत्यो राज्ञः प्रियो भवेत् ।
स्वस्वाधिकारकार्यं यद्द्राक् कुर्यात् सुमना यतः ॥२४९॥
न कुर्य्यात् सहसा कार्य्यं नीचं राजापि नो दिशेत् ।
तत्कार्य्यं कारकाभावे राज्ञः कार्य्यं सदैव हि ॥२५०॥

---

अन्यथा विरुद्धमित्यर्थः वदेत् कथयेत् मौनं तूष्णीम्भावम् आश्रित्य तत् शृणुयात् किन्तु तथ्यवत् सत्यवत् न अनुमोदयेत् न श्लाघयेत् ॥ २४५ ॥

आपद्गतमिति । आपद्गतं विपद्ग्रस्तं सुभर्त्तारम् अनुरक्तं प्रभुं कदापि न परित्यजेत्, यस्य अन्नम् एकवारमपि आदरेण अशितं भक्षितं, तस्य इष्टं प्रियं हितमित्यर्थः नित्यं चिन्तयेत् तस्य पालकस्य अञ्जसा यत्नेन किं न भवति अपितु सर्वमेव कार्यं विदधातीति भावः ॥ २४६ ॥ २४७ ॥

अप्रधान इति । अत्यन्तसेवनात् प्रभोरिति शेषः सेवकः अप्रधानोऽपि प्रधानः स्यात् यतः प्रधानोऽपि सेवायाम् आलस्यादिना अप्रधानः स्यात् ॥ २४८ ॥

नित्यमिति । नित्यं सततं संसेवनरतः सेवानतत्परः भृत्यः राज्ञः प्रियो भवेत् यत् यस्मात् भृत्यः द्राक् झटिति स्वस्वाधिकारकार्यं कुर्य्यात् करोति अतः राजा सुमनाः भवतीत्यर्थः सुमना यत इति विसर्गस्थाने चादेशः ॥ २४९ ॥

नेति । सहसा अविमृश्य नीचं कार्य्यं न कुर्य्यात् भृत्य इति शेषः

काले यदुचितं कर्त्तुं नीचमप्युत्तमोऽर्हति ।
यस्मिन् प्रीतो भवेद्राजा तदनिष्टं न चिन्तयेत् ॥२५१॥
न दर्शयेत् स्वाधिकारगौरवन्तु कदाचन ॥ २५२ ॥
परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुः कदा ।
राज्ञा चाधिकृताः सन्तो स्वस्वाधिकारगुप्तये ॥ २५३ ॥
अधिकारिगणो राजा सद्वृत्तौ यत्र तिष्ठतः ।
उभौ तत्र स्थिरा लक्ष्मीर्विपुला सम्मुखी भवेत् ॥२५४॥
अन्याधिकारवृत्तन्तु न ब्रूयात्कुत्रचिदप्यत ।
राजा न शृणुयादन्यमुखतस्तु कदाचन ॥ २५५ ॥

---

राजापि नीच कार्य्यं कर्म नो द्विषेत् कर्त्तुं नाज्ञापयेदित्यर्थः । राज्ञः सत्कार्य्यस्य नीचकार्य्यस्य सम्मूर्च्छादिपरिष्कारकरूपस्य कारकाभावे सदैव सत्कार्य्यं कार्य्यं हि कर्त्तव्यमेव ॥ २५० ॥

काले इति । काले समये यत् कर्त्तुमुचितं तत् नीचमपि निकृष्टमपि उत्तमः उत्कृष्टः भृत्यः अर्हति कर्त्तुमधिकरोति यस्मिन् कर्मणि राजा प्रीतः भवेत् । किञ्च तस्य राज्ञः अनिष्टं न चिन्तयेत् ॥ २५१ ॥

नेति । कदाचन स्वाधिकारस्य निजकार्य्यस्य गौरवं गुरुत्वं दुःसाध्यत्वं न दर्शयेत् न प्रकाशयेत् भृत्य इति शेषः ॥ २५२ ॥

परस्परमिति । राज्ञा अधिकृताः सन्तः साधवः भृत्याः स्वस्वाधिकारगुप्तये निजनिजाधिकाररक्षणाय परस्परं न अभ्यसूयुः न दोषं दर्शयेयुः तथा कदापि भेदं मनोभङ्गरूपं न प्राप्नुयुः ॥ २५३ ॥

अधिकारीति । यत्र अधिकारिगणः भृत्यवर्गः राजा च उभौ सद्वृत्तौ सद्व्यवहाररतौ परस्परानुकूलावित्यर्थः तिष्ठतः वर्त्तेते, तत्र तयोः स्थिरा अनपायिनी विपुला महती तथा सम्मुखी अनुकूलवर्त्तिनी भवेत् ॥ २५४ ॥

अन्येति । अन्यस्य अपरस्य भृत्यस्य अधिकारे वृत्तं जातं दोष-

न बोधयन्ति च हितमहितं चाधिकारिणः।
प्रच्छन्नवैरिणस्ते तु दास्यरूपमुपाश्रिताः॥ २५६॥
हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः।
स दस्यू राजरूपेण प्रजानां धनहारकः॥ २५७॥
सुपुष्टव्यवहारा ये राजपुत्रैश्च मन्त्रिणः।
विरुध्यन्ति च तैः साकं ते तु प्रच्छन्नतस्कराः॥ २५८॥
बाला अपि राजपुत्रा नावमान्यास्तु मन्त्रिभिः।
सदा सुबहुवचनैः सम्बोध्यास्ते प्रयत्नतः॥ २५९॥
असदाचरितं तेषां क्वचिद्राज्ञे न दर्शयेत्।
स्त्रीपुत्रमोहो बलवान् न निन्दा श्रेयसे तयोः॥२६०॥

---

मिति शेषः, श्रुतमपि ज्ञातमपि न ब्रूयात् राज्ञे इति शेषः, राजापि कदाचन अन्यमुखतः अपरमुखात् अपरकथां न शृणुयात्॥ २५५॥

नेति। ये अधिकारिणः हितम् अहितञ्च न बोधयन्ति न ज्ञापयन्ति राज्ञे इति शेषः ते तु दास्यरूपं दासत्वम् उपाश्रिताः प्रच्छन्नवैरिणः गूढशत्रवः दास्यरूपेण प्रच्छन्नं वैरं साधयन्तीत्यर्थः॥ २५६॥

हिताहितमिति। यश्च राजा मन्त्रिमुखात् हिताहितं न शृणोति, सः राजरूपेण प्रजानां धनहारकः दस्युः दस्युर्यथा प्रजानां धनहारकस्तथा स इत्यर्थः॥ २५७॥

सुपुष्टेति। ये मन्त्रिणः राजपुत्रैः सुपुष्टः व्यवहारः येषां तथोक्ताः सन्तः तैः राजपुत्रैः साकं सह विरुध्यन्ति विरोधं कुर्वन्ति ते तु प्रच्छन्नतस्कराः गूढचौराः॥ २५८॥

बाला इति। राजपुत्राः बालाः शिशवोऽपि मन्त्रिभिः न अवमान्याः अवज्ञेयाः, परं सदा सततं सुबहुवचनैः शोभनैः बहुभिः वाक्यैः ते राजपुत्राः प्रयत्नतः अतियत्नेन संबोध्याः सम्यक् बोधनीयाः॥ २५९॥

असदाचरितमिति। क्वचित् कदाचित् तेषां राजपुत्राणाम् असद्-

राज्ञोऽवश्यतरं कार्य्यं प्राणसंशयितञ्च यत्।
आज्ञापयाग्रतस्त्वाहं करिष्ये तत्तु निश्चितम्।
इति विज्ञाप्य द्राक् कर्त्तुं प्रयतेत स्वशक्तितः॥ २६१ ॥
प्राणानपि च सन्दद्यान्महत्कार्य्ये नृपाय च।
भृत्यः कुटुम्बपुष्ट्यर्थं नान्यथा तु कदाचन॥ २६२ ॥
भृत्या धनहराः सर्व्वे युक्त्या प्राणहरो नृपः॥ २६३ ॥
युद्धादौ सुमहत्कार्य्ये भृत्यात् प्राणान् हरेन्नृपः।

---

मन्दम् आचरितं कार्य्यं राज्ञे न दर्शयेत् भृत्य इति शेषः। स्त्रीपुत्र-मोहः स्त्रियां पुत्रे च मोहः ममताद्रूपाज्ञानं बलवान् अतिप्रबलः भवतीति शेषः तस्मात् तयोः स्त्रीपुत्रयोः निन्दा कुत्सनं न श्रेयसे मङ्गलाय भवतीति शेषः स्त्रीपुत्रेषु ममतातिशय्यात् तन्निन्दा न कैरपि सह्यते इति भावः॥ २६१ ॥

राज्ञ इति। भृत्यः राज्ञः अग्रतः अवश्यतरं सुनिश्चितं प्राण-संशयितं जीवनसंशयकरं यत् कार्य्यं तत् निश्चितं करिष्ये इति विज्ञाप्य प्रतिश्रुत्य द्राक् झटिति स्वशक्तितः निजसामर्थ्यानुसारेण कर्त्तुं प्रयतेत॥ २६१ ॥

प्राणानिति। भृत्यः कुटुम्बपुष्ट्यर्थं परिजनभरणार्थं महत्कार्य्ये महति सङ्कटे कार्य्ये आपतिते इति शेषः। नृपाय प्राणानपि सन्दद्यात् प्राणक्षयेऽपि नृपकार्य्यं सम्पादयेदिति भावः। अन्यथा कुटुम्बभरणाभावे तु कदाचन न प्राणान् दद्यादिति शेषः॥ २६२ ॥

भृत्या इति। सर्व्वे भृत्याः युक्त्या युक्तिमाश्रित्य वेतनग्रहणच्छलेन इत्यर्थः धनहराः राज्ञ इति शेषः नृपोऽपि प्राणहरः भृत्यानामिति शेषः युक्तिमाश्रित्य परस्परं धनप्राणहरौ भृत्यप्रभू इति भावः॥२६३॥

युक्तिमाह युद्धादाविति। युद्धादौ सुमहत्कार्य्ये उपस्थिते नृपः भृत्यात् वेतनेन प्रतिपालितात् भृत्यात् प्राणान् हरेदिति शेषः

मान्य यां भृतिरूपेण भृत्यो राजधनं हरेत् ॥ २६४ ॥
अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ ॥ २६५ ॥
राजानु युवराजस्तु मान्योऽमात्यादिकैः सदा ।
तन्न्यूनामात्यनवकं तन्न्यूनाधिकृतो गणः ।
मन्त्रितुल्यश्चायुतिको न्यूनसाहस्रिको मतः ॥ २६६ ॥
न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् ।
नावमान्या राजपत्नी कन्या ह्यपि च मन्त्रिभिः ॥२६७॥
राजसम्बन्धिनः पूज्याः सुहृदश्च यथार्हतः ।

---

हरेत् भृतिलोभेन भृत्याः युद्धादौ प्रभुजयार्थिनः प्राणान् त्यजन्तीति भावः । अन्यथा न युद्धादिव्यतिरिक्तविषये तु न हरेदिति शेषः । अत्यय भृतिरूपेण राजधनं हरेत् अन्यथा न हरेदिति निष्कर्षः । अन्यथा अन्यप्रकारेण तौ राजभृत्यौ यदि हरतः प्राणधने इति शेषः तदा स्वनाशकौ आत्मक्षयकरौ भवतः तथात्वे उभयविरागादुभयनाशोऽवश्यं भविष्यतीति भावः ॥ २६४ ॥ २६५ ॥

राजेति । राजा अमात्यादिकैः सदा मान्यः युवराजस्तु अनु राजापेक्षया न्यूनतया मान्य इत्यर्थः, अमात्यनवकम् अमात्यादयः नव प्रकृतयः तन्न्यूनाः युवराजापेक्षया न्यूनतया मान्याः अनुजीविभिरिति शेषः । तन्न्यूनाधिकृतो गणः अधिकारिवर्गः तदपेक्षया न्यूनतया मान्य इत्यर्थः । मन्त्री न्यूनः साहस्रिकः सहस्रसङ्ख्यकधनशाली यस्मात् तादृशः अयुतिकः दशसहस्रधनशाली च तुल्यः सम मानवीयावेतौ इत्यर्थः ॥ २६६ ॥

नेति । राजसमं राज्ञा सहितं न क्रीडयेत् न विहरेत् क्रीडिते सति तं राजानं विशेषयेत् न पराजितं कुर्यात् तेन सह क्रीडने तदवमाननं न कुर्यादिति भावः । राजपत्नी कन्या च राज्ञ इति शेषः मन्त्रिभिः न अवमान्या नावज्ञेया ॥ २६७ ॥

राजेति । राजसम्बन्धिनः सुहृदश्च राज्ञ इति शेषः यथार्हतः

नृपाहूतस्तु तं गच्छेत् त्यक्त्वा कार्य्यशतं महत् ॥ २६८ ॥
मित्रायापि न वक्तव्यं राजकार्य्यं सुमन्त्रितम् ।
भृतिं विना राजद्रव्यमदत्तं नाभिलाषयेत् ॥ २६९ ॥
राजाज्ञया विना नेच्छेत् कार्य्यमाध्यक्षिकीं भृतिम् ।
न निह्नुयाद् द्रव्यलोभात् तत्कार्य्यं यस्य कस्यचित् ॥ २७०
स्वस्त्रीपुत्रधनप्राणैः काले संरक्षयेन्नृपम् ।
तल्लोभं नैव गृह्णीयादन्यथा बोधयेन्नृपम् ॥ २७१ ॥
अन्यथा दण्डकं भूपं नित्यं प्रबलदण्डकम् ।
निगृह्य बोधयेत् सम्यगेकान्ते राज्यगुप्तये ॥ २७२ ॥
हितं राज्ञस्त्वहितं यल्लोकानां तन्न कारयेत् ।

---

यथायोग्यं पूज्याः भृत्यैरिति शेषः । नृपाहूतः राज्ञा आहूतस्तु भृत्यः महत् कार्य्यशतमपि त्यक्त्वा तूर्णं सत्वरं गच्छेत् ॥ २६८ ॥

मित्रायेति । सुमन्त्रितं कृतमन्त्रणं राजकार्य्यं मित्राय सुहृदेऽपि न वक्तव्यं किञ्च भृतिं वेतनं विना अदत्तम् अन्यत् राजद्रव्यं न अभिलाषयेत् नेच्छेत् । स्वार्थे अन्तोऽयं णिच्प्रत्ययः ॥ २६९ ॥

राजेति । राजाज्ञया विना कार्य्यमाध्यक्षिकीं भृतिं कार्य्यस्य अध्यक्षवर्त्तिनीं भृतिं वेतनं कार्य्यमप्राप्य भृतिमित्यर्थः न इच्छेत् न गृह्णीयात् तथा द्रव्यलोभात् धनलोभात् यस्य कस्यचित् तत्कार्य्यं न निह्नुयात् न नाशयेत् ॥ २७० ॥

स्वेति । काले स्वस्त्रीपुत्रधनप्राणैः स्वकीयैः स्त्रीपुत्रधनप्राणैः नृपं संरक्षयेत्, तल्लोभं नैव गृह्णीयात् तथा नृपम् अन्यथा न बोधयेत् ॥ २७१ ॥

अन्यथेति । अन्यथा अयथाविधि दण्डकं दण्डयितारं नित्यं सततं प्रबलदण्डकं तीव्रदण्डञ्च भूपं निगृह्य राज्यगुप्तये राज्यरक्षणाय एकान्ते रहसि सम्यक् बोधयेत् शिक्षयेत् ॥ २७२ ॥

हितमिति । यत् राज्ञः हितं किन्तु लोकानां प्रजानाम् अहितं

नवीनकरशुल्काद्यैर्लोक उद्विजते ततः ॥ २७३ ॥
गुणनीतिबलद्वेषी कुलभूतोऽप्यधार्मिकः ।
नृपो यदि भवेत् तन्तु त्यजेद्राष्ट्रविनाशकम् ॥ २७४ ॥
तत्पदे तस्य कुलजं गुणयुक्तं पुरोहितः ।
प्रकृत्यनुमतिं कृत्वा स्थापयेद्राज्यगुप्तये ॥ २७५ ॥
सास्त्रो दूरं नृपात् तिष्ठेदस्त्रपाताद् वहिः सदा ।
सशस्त्रो दशहस्तन्तु यथादिष्टं नृपप्रियाः ॥ २७६ ॥
पञ्चहस्तं वसेयुर्वै मन्त्रिणो लेखकाः सदा ।
सैनपैस्तु विना नैव सशस्त्रास्त्री विशेत् सभाम् ॥ २७७ ॥

---

तद् न कारयेत् यस्मात् नवीनैः नूतनैः करैः राजस्वैः शुल्काद्यैश्च लोकः प्रजा ततः तस्मात् नृपात् उद्विजते विरज्यते अतस्तादृशं राजहितं न कर्त्तव्यमिति भावः ॥ २७३ ॥

गुणेति । कुलभूतः महाकुलप्रसूतोऽपि नृपः यदि गुणनीति बलद्वेषी गुणद्वेषी नीतिद्वेषी बलद्वेषी तथा अधार्मिकः भवेत् राष्ट्रस्य राज्यस्य विनाशकं क्षयकारकं तं तु त्यजेत् ॥ २७४ ॥

तत्पदे इति । पुरोहितः प्रकृतीनां प्रधानपुरुषाणामनुमतिं कृत्वा गृहीत्वा गुणयुक्तं गुणवन्तं तस्य कुन्नृपस्य कुलजं वंशभवं तत्पदे तस्य राज्ञः पदे राज्यगुप्तये राज्यस्य रक्षणाय स्थापयेत् अभिषिञ्चेत् ॥२७५॥

साक्ष इत्यादि । साक्षः क्षेपणीयास्त्रसहितः नृपात् दूरम् अस्त्रपाताद् वहिः बाह्यदेशे सदा तिष्ठेत्, सशस्त्रः शस्त्रसहितस्तु दशहस्तं तु दूरं तिष्ठेदिति शेषः । नृपप्रियाः राजप्रणयिनः मन्त्रिणः लेखकाश्च सदा यथादिष्टम् आदेशक्रमेण पञ्चहस्तं दूरं वै निश्चितं वसेयुः । राजा तु सैनपैः सेनापतिभिः विना सशस्त्रास्त्रः अस्त्रशस्त्रसहितः सन् सभां नैव विशेत् ॥ २७६ ॥ २७७ ॥

पुरोहितः श्रेष्ठतरः श्रेष्ठः सेनापतिः स्मृतः ।
समः सुहृच्च सम्बन्धी उत्तमा मन्त्रिणः स्मृताः ॥२७८॥
अधिकारिगणो मध्योऽधमौ दर्शकलेखकौ ।
ज्ञेयोऽधमतमो भृत्यः परिचारगणः सदा ।
परिचारगणान्न्यूनो विज्ञेयो नीचसाधकः ॥ २७९ ॥
पुरोगमनमुत्थानं स्वासने सन्निवेशनम् ।
कुर्य्यात् स कुशलप्रश्नं क्रमात् सुस्मितदर्शनम् ॥ २८० ॥
राजा पुरोहितादीनां त्वन्येषां स्नेहदर्शनम् ।
अधिकारिगणादीनां सभास्थश्च निरालसः ॥ २८१ ॥
विद्यावत्सु शरच्चन्द्रो निदाघार्को द्विषत्सु च ।
प्रजासु च वसन्तार्क इव स्यात् त्रिविधो नृपः ॥ २८२ ॥

---

पुरोहित इति । पुरोहितः श्रेष्ठतरः सर्वेभ्यः श्रेष्ठ इत्यर्थः सेनापतिः श्रेष्ठः स्मृतः कथितः सुहृच्च सम्बन्धी च समः तुल्यः मन्त्रिणस्तु उत्तमाः उत्कृष्टाः स्मृताः ॥ २७८ ॥

अधिकारिगण इति । अधिकारिगणः अपरकर्मचारिवर्गः मध्यमः, दर्शकलेखकौ अधमौ निकृष्टौ भृत्यः परिचारकगणः सदा अधमतमः अतिनिकृष्टः ज्ञेयः । परिचारगणात् नीचसाधकः नीचकर्मकारकः न्यूनः निकृष्टतमः विज्ञेयः ॥ २७९ ॥

पुरोगमनमिति । स राजा पुरोहितादीनां क्रमात् यथाक्रमं पुरोऽग्रे गमनम् उत्थानम् आसनात् गात्रोत्थानं स्वस्य निजस्य आसने सन्निवेशनं कुशलप्रश्नं तथा सुस्मितदर्शनं सहास्यदर्शनम् अन्येषान्तु अधिकारिगणादीनां सभास्थः सभायां स्थितः न तु उत्थित इत्यर्थः तथा निरालसः आलस्यरहितश्च सन् स्नेहदर्शनं सस्नेहमवलोकनं कुर्य्यात् ॥ २८० ॥ २८१ ॥

विद्यावत्स्विति । नृपः त्रिविधः त्रिप्रकारः स्यात् भवेत् यथा विद्या-

यदि ब्राह्मणभिन्नेषु मृदुत्वं धारयेन्नृपः ।
परिभवन्ति तं नीचा यथा हस्तिपका गजम् ॥ २८३ ॥
भृत्याद्यैर्न कर्त्तव्याः परिहासाय क्रीड़नम् ।
अपमानास्पदे ते तु राज्ञो नित्यं भयावहे ॥ २८४ ॥
पृथक् पृथग्ज्ञापयन्ति स्वार्थसिद्धै नृपाय ते ।
स्वकार्य्यं गुणवत् कृत्वा सर्वं स्वार्थपरा यतः ॥ २८५ ॥
विकत्थन्तेऽवमन्यन्ति लङ्घयन्ति च तद्वचः ।
राजभोज्यानि भुञ्जन्ति न तिष्ठन्ति स्वके पदे ॥ २८६ ॥

---

यतश्च पण्डितेषु शरच्चन्द्र इव, द्विषत्सु शत्रुषु निदाघार्कः ग्रीष्मकालसूर्य्य इव तथा प्रजासु वसन्तार्कः वसन्तकालिकः सूर्य्य इव । एक इव शब्दः सर्वत्र सम्बध्यते ॥ २८२ ॥

यदीति । नृपः यदि ब्राह्मणभिन्नेषु ब्राह्मणशब्दोऽत्र द्विजातिपरः । ब्राह्मणक्षत्रवैश्यव्यतिरिक्तेषु शूद्रेष्वित्यर्थः मृदुत्वं धारयेत् मार्द्दवेन व्यवहरेदित्यर्थः तदा नीचाः शूद्राः हस्तिपकाः गजमिव तं नृपं परिभवन्ति । इतरेषु लज्जा न दातव्येति भावः ॥ २८३ ॥

भृत्याद्यैरिति । भृत्याद्यैः अधीनस्वजनैरित्यर्थः क्रीड़नं परिहासाय न कर्त्तव्याः यत् यस्मात् ते परिहासक्रीड़ने राज्ञः अपमानास्पदे अपमानजनके नित्यं सततं भयावहे भयजनके च भवत इति शेषः ॥ २८४ ॥

पृथगिति । यतः ते सहक्रीड़नादिकारिणः भृत्याः स्वार्थपराः सन्तः स्वार्थस्य स्वकार्य्यस्य सिद्धौ साधनाय स्वकार्य्यं निजकार्य्यमेव गुणवत् नान्यकार्य्यमिति भावः इति कृत्वा नृपाय पृथक् पृथक् ज्ञापयन्ति बोधयितुं यतन्ते इत्यर्थः ॥ २८५ ॥

विकत्थन्ते इत्यादि । नृपे राजनि विषये यः परिहासः या कथा या च क्रीड़ा तदुद्भवाः एते दोषाः भवन्तीति शेषः यथा तादृशाः भृत्याः तस्य राज्ञः वचः वाक्यं विकत्थन्ते तर्कैण परिहरन्ति अवमन्यन्ति अतु-

विस्रंसयन्ति तन्मन्त्रं विवृण्वन्ति च दुष्कृतम् ।
भवन्ति नृपवेशा हि वञ्चयन्ति नृपं सदा ॥ २८७ ॥
तत् स्त्रियं सज्जयन्ति स्म राज्ञि क्रुद्धे हसन्ति च ।
व्याहरन्ति च निर्लज्जा हेलयन्ति नृपं क्षणात् ॥२८८॥
आज्ञामुल्लङ्घयन्ति स्म न भयं यान्त्यकर्मणि ।
एते दोषाः परीहासक्षमाक्रीडोद्भवा नृपे ॥ २८९ ॥
न कार्य्यं भृतकः कुर्य्यान्नृपलेखादिना क्वचित् ।
नाज्ञापयेल्लेखनेन विनाल्पं वा महन्नृपः ॥ २९० ॥
भ्रान्तेः पुरुषधर्मत्वाल्लेख्यं निर्णायकं परम् ।
अलेख्यमाज्ञापयति ह्यलेख्यं यत् करोति यः ।

---

स्थयन्ति उल्लङ्घयन्ति च तथा राजभोग्यानि वस्तूनि भुञ्जन्ति राजाज्ञां विना भक्षयन्ति, स्वके निजे पदे न तिष्ठन्ति च न स्वपदोचितं व्यवहरन्ति चेत्यर्थः । किञ्च तस्य राज्ञः मन्त्रं विस्रंसयन्ति प्रकाशयन्ति, दुष्कृतं मन्दकार्य्यं विवृण्वन्ति प्रकटयन्ति, नृपवेशाः राजपरिच्छदधारिणः भवन्ति (किं बहुना) सदा नृपं वञ्चयन्ति प्रतारयन्ति । अपि च तस्य राज्ञः स्त्रियं राजमहिषीमित्यर्थः सज्जयन्ति अनुरोधयन्ति स्वार्थेऽपि भावः, राज्ञि क्रुद्धे सत्यपि हसन्ति, निर्लज्जाः सन्तः व्याहरन्ति कथयन्ति क्षणात् अल्पेनैव क्षणेन नृपं हेलयन्ति नमयन्ति, आज्ञाम् उल्लङ्घयन्ति तथा अकर्मणि मन्दकार्य्ये कृतेऽपीत्यर्थः भयं न यान्ति न प्राप्नुवन्ति च स्मद्वयं पादपूरणार्थम् ॥ २८६—२८९ ॥

नेति । भृतकः भृत्यः क्वचित् नृपलेखाद् विना राजलिपिमन्तरेण कार्य्यं न कुर्य्यात् । नृपः वा राजा च लेखनेन विना अल्पं वा महद् कार्य्यं न आज्ञापयेत् ॥ २९० ॥

भ्रान्तेरिति । भ्रान्तेः भ्रमस्य पुरुषधर्मत्वात् सर्वपुरुषेषु समानाधिकरणत्वादित्यर्थः लेख्यं लिपिः परं प्रधानं निर्णायकं प्रमापकम् । यः

राजकृत्यमुभौ चौरौ तौ भृत्यनृपती सदा ॥ २८१ ॥
नृपसं चिह्नितं लेख्यं नृपस्तत्र नृपो नृपः ॥ २८२ ॥
समुद्रलिखितं राज्ञा लेख्यं तच्चोत्तमोत्तमम् ।
उत्तमं राजलिखितं मध्यं मन्त्र्यादिभिः कृतम् ।
पौरलेख्यं कनिष्ठं स्यात् सर्वं संसाधनक्षमम् ॥ २८३ ॥
यस्मिन् यस्मिन् हि कृत्ये तु राज्ञा योऽधिकृतो नरः ।
सामात्ययुवराजादिर्यथानुक्रमतश्च सः ॥ २८४ ॥
दैनिकं मासिकं वृत्तं वार्षिकं बहुवार्षिकम् ।
तत्कार्य्यजातलेख्यन्तु राज्ञे सम्यङ्निवेदयेत् ॥ २८५ ॥

---

राजा अलेख्यं लेख्यं विना आज्ञापयति । यश्च भृत्यः यत् अलेख्यं लेख्यं विना राजकृत्यं करोति तौ उभौ भृत्यनृपती सदा चौरौ विज्ञेयाविति शेषः ॥ २८१ ॥

नृपेति । नृपसंचिह्नितं राजचिह्नितं तत् लेख्यम् एव नृपः, नृपो नृपः न लिपेरेव राजकार्य्यकारित्वादिति भावः ॥ २८२ ॥

समुद्रेति । यत् लेख्यं समुद्रं मुद्रासहितं राज्ञा लिखितं तच्च तदेव उत्तमोत्तमम् अत्युत्तमं, राजलिखितं लेख्यं मुद्राहीनमिति शेषः उत्तमं मन्त्र्यादिभिः कृतं लेख्यं मध्यं, पौरैः पुरवासिभिः लेख्यं कनिष्ठम् अधमं स्यात् । सर्वम् अत्युत्तमादिलेख्यं संसाधने सम्यक् साधने कार्य्यस्येति शेषः क्षमं समर्थं सर्वैरेव कार्य्यं साध्यते परम् अत्युत्तमत्वादिभेदेनेति भावः ॥ २८३ ॥

यस्मिन्निति । दैनिकमिति । यस्मिन् यस्मिन् कृत्ये यः यः सामात्ययुवराजादिः अमात्यसहितः युवराजादिः नरः राज्ञा अधिकृतः नियुक्तः सः सः यथानुक्रमतश्च यथाक्रमेणैव दैनिकं प्रात्यहिकं मासिकं वार्षिकं बहुवार्षिकं वा वृत्तं निष्पन्नं तत्तत् कार्य्यजातलेख्यं राज्ञे सम्यक् निवेदयेत् ॥ २८४ ॥ २८५ ॥

राजाद्यङ्कितलेख्यस्य वारयेत् स्मृतिपत्रकम् ।
कालेऽतीते विस्मृतिर्वा भ्रान्तिः सञ्जायते नृणाम् ॥ २९६ ॥
अनुभूतस्य स्मृत्यर्थं लिखितं निर्मितं पुरा ।
यत्नाच्च ब्रह्मणा वाचां वर्णस्वरविचिह्नितम् ॥ २९७ ॥
वृत्तलेख्यं तथा चायव्ययलेख्यमिति द्विधा ।
व्यवहारक्रियाभेदादुभयं बहुतां गतम् ॥ २९८ ॥
यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकञ्चैव जयपत्रकमुच्यते ॥ २९९ ॥
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु यत् ।
कार्य्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥ ३०० ॥

---

राजेति । राजादिभिः अङ्कितस्य चिह्नितस्य लेख्यस्य स्मृतिपत्रकं स्मरणविधिं धारयेत् रक्षेत् भृत्य इति शेषः । यतः काले अतीते गते सति नृणां विस्मृतिः भ्रान्तिः वा संजायते ॥ २९६ ॥

अनुभूतस्येति पुरा पूर्वस्मिन् काले ब्रह्मणा अनुभूतस्य कृतस्य स्मृत्यर्थं स्मरणार्थं यत्नात् वाचां वर्णैः व्यञ्जनैः स्वरैश्च विचिह्नितं विशेषेण अङ्कितं लिखितं लेख्यं निर्मितम् ॥ २९७ ॥

वृत्तलेख्यमिति । लेख्यं द्विधा वृत्तलेख्यं तथा आयव्ययलेख्यञ्च । तदुभयं व्यवहारक्रियाभेदात् बहुतां गतं बहुविधत्वं प्राप्तम् ॥ २९८ ॥

यथेति । यथोपन्यस्तेन यथायथमर्पितेन साध्येन अभियोज्येन अर्थेन विषयेण संयुक्तम् उत्तरक्रियया सहितं सावधारणं सिद्धान्तसहितं लेख्यं जयपत्रकम् उच्यते कथ्यते ॥ २९९ ॥

सामन्तेष्विति । येन लेख्येन सामन्तेषु अधीननृपतिषु अथ वा राष्ट्रपालादिकेषु भृत्येषु यत् कार्य्यम् आदिश्यते आज्ञाप्यते तत् आज्ञापत्रम् उच्यते ॥ ३०० ॥

ऋत्विक् पुरोहिताचार्य्यमन्येष्वभ्यर्चितेषु च ।
कार्य्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥ २०१ ॥
सर्वे शृणुत कर्त्तव्यमाज्ञया मम निश्चितम् ।
स्वहस्तकालसम्पन्नं शासनं पत्रमेव तत् ॥ २०२ ॥
देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्य्यादिभिस्तुष्टः प्रसादलिखितं हि तत् ॥ २०३ ॥
भोगपत्रन्तु करदीकृतं चोपायनीकृतम् ।
पुरुषावधिकं तत्तु कालावधिकमेव वा ॥ २०४ ॥
विभक्ता ये च भ्रात्राद्याः स्वरुच्या तु परस्परम् ।

---

ऋत्विगिति । येन ऋत्विक् पुरोहिताचार्य्येषु अन्येषु अभ्यर्चितेषु पूज्येषु च कार्य्यं निवेद्यते तत् प्रज्ञापनाय पत्रं प्रज्ञापनपत्रमित्यर्थः ॥ २०१ ॥

सर्वे इति । सर्वे यूयं मम आज्ञया निश्चितं कर्त्तव्यं शृणुत एतद्युक्तेति शेषः यत् स्वहस्तेन स्वाक्षरेण कालेन च संयुक्तं लेख्यं तदेव शासनं पत्रं शासनलेख्यमित्यर्थः ॥ २०२ ॥

देशादिकमिति । राजा सेवया परिचर्य्यया शौर्य्यादिभिः वीरत्वप्रकटनादिभिश्च तुष्टः सन् यस्य लेख्यस्य लिखितेन लेखनेन देशादिकं प्रयच्छति पुरस्कारस्वरूपेणेति भावः तत् हि प्रसादलिखितम् ॥ २०३ ॥

भोगपत्रमिति । त्वया एतत् भुज्यतामिति कृत्वा यत् लेख्यं दीयते तत् भोगपत्रम् । अस्य एतत् राजस्वमिति कृत्वा यत् लेख्यं दीयते तत् करदीकृतं करदपत्रमित्यर्थः । उपायनम् उपढौकनं तद्रूपेण द्रव्यं दत्त्वा यत् लेख्यं दीयते तत् उपायनीकृतम् उपायनपत्रमित्यर्थः । इदं वस्तु एकेन द्वाभ्यां त्रिभिर्वा पुरुषैर्भोक्तव्यमिति कृत्वा यत् लेख्यं दीयते तत् पुरुषावधिकम् । यत्र कालसंख्यायुक्तं लेख्यं दीयते तत् कालावधिकं लेख्यमिति शेषः ॥ २०४ ॥

विभक्ता इति । ये च भ्रात्राद्याः स्वरुच्या स्वेच्छया परस्परं

विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥ २०५ ॥
गृहभूम्यादिकं दत्त्वा पत्रं कुर्य्यात् प्रकाशकम् ।
अनुच्छेद्यमनाहार्य्यं दानलेख्यं तदुच्यते ॥ २०६ ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्यप्रमाणयुक् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥ २०७ ॥
जङ्गमस्थावरं बन्धं कृत्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तं सादिलेख्यं तदुच्यते ॥ २०८ ॥
ग्रामो देशश्च यत् कुर्य्यात् सत्यलेख्यं परस्परम् ।
राजाविरोधिधर्मार्थं संवित्पत्रं तदुच्यते ॥ २०९ ॥
वृद्ध्यै धनं गृहीत्वा तु कृतं वा कारितञ्च यत् ।

---

विभक्ताः सन्तः विभागपत्रं परस्परलेख्यं कुर्वन्ति तत् भागलेख्यम् उच्यते ॥ २०५ ॥

गृहेति । गृहं भूम्यादिकञ्च दत्त्वा यत् अनुच्छेद्यम् अविनाशनीयम् अनाहार्य्यम् अलीकवादरहितं प्रकाशकं जनसमक्षं पत्रं कुर्य्यात् तत् दानलेख्यम् उच्यते ॥ २०६ ॥

गृहेति । तुल्येन योग्येन मूल्येन प्रमाणेन परिमाणेन च युक्तं गृहक्षेत्रादिकं क्रीत्वा यत्तु पत्रं कारयते तत् क्रयपत्रम् उच्यते ॥ २०७ ॥

जङ्गमेति । जङ्गमं स्वर्णरजतादि, स्थावरं गृहभूम्यादिकञ्च बन्धकं कृत्वा यत् गोप्यभोग्यक्रियायुतं लेख्यं करोति तत् सादिलेख्यम् उच्यते ॥ २०८ ॥

ग्राम इति । ग्रामः बहुजनवासभूमिः देशः बहुग्रामसमूहः जनपदश्च परस्परं राजविरोधिधर्मार्थं नृपविरुद्धधर्मरक्षणार्थं यत् सत्यलेख्यं कुर्य्यात् तत् संवित्पत्रम् उच्यते ॥ २०९ ॥

वृद्ध्यै इति । वृद्ध्यै वृद्धिं दास्यामि इति प्रतिश्रुत्य धनं गृहीत्वा धनाधिपात् शोभनैः निर्दोषैर्ब्राह्मणैः साक्षिभिर्युक्तमित्यर्थः यत् लेख्यं

सत्याभिमत तत् प्रोक्तमुक्तलेख्यं मनीषिभिः ॥ २१० ॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः ।
दत्तं लेख्यं साक्षिमच्छुद्धिपत्रं तदुच्यते ॥ २११ ॥
मेलयित्वा स्वधनांशान् व्यवहाराय साधकाः ।
कुर्वन्ति लेख्यपत्रं यत् तच्च सामयिकं स्मृतम् ॥ २१२ ॥
सभ्याधिकारिप्रकृतिसभासद्भिर्न यः कृतः ।
तत्पत्रं वादिमान्यं चेज्ज्ञेयं सम्मतिसंज्ञिकम् ॥ २१३ ॥
स्वकीयवृत्तज्ञानार्थं लिख्यते यत् परस्परम् ।

---

कृतं कारितं वा तत् मनीषिभिः विद्वद्भिः उक्तलेख्यं प्रोक्तम् कथितम् ॥ २१० ॥

अभिशापे इति । अभिशापे अभियोगे अपवादे इत्यर्थः समुत्तीर्णे अप्रमाणतादितिः ख्यापिते तथा प्रायश्चित्ते पापशोधकव्यापारे कृते सति यत् साक्षिमत् ससाक्षिकं लेख्यं दत्तं, बुधैः तत् शुद्धिपत्रम् उच्यते ॥ २११ ॥

मेलयित्वेति साधकाः सम्भूयसमुत्थायिनः व्यवसायिनः स्वधनांशान् व्यवहाराय मेलयित्वा मिश्रयित्वा यत् लेख्यपत्रं कुर्वन्ति तत् सामयिकं समयकृतं लेख्यं स्मृतम् ॥ २१२ ॥

सभ्येति । सभ्यैः अधिकारिभिः राजपुरुषैः प्रकृतिभिः अमात्यादिभिः सभासद्भिः व्यवहारदर्शिभिरित्यर्थः यत् न कृतं तत् पत्रं चेत् यदि वादिभिः प्रतिपक्षैः मान्यं ग्राह्यं भवति तदा तत् सम्मतिसंज्ञकं सम्मतिपत्रमित्यर्थः ज्ञेयम् ॥ २१२ ॥

स्वकीयेत्यादि । स्वकीयस्य निजस्य वृत्तस्य चरितस्य ज्ञानार्थं बोधनार्थं कौशलपदैः आद्यं युक्तं सपूर्वोत्तरपक्षकं पूर्वपक्षोत्तरपक्षसहितम् असन्दिग्धं सन्देहरहितम् अगूढार्थम् अगुप्तविषयं तदा स्पष्टानि सुबोधानि अक्षरपदानि यस्मिन् तथोक्तम् अन्येषां व्यावर्त्तकैः बोधनिवारकैः आत्मनः निजस्य परस्य च पित्रादिनामभिः युक्तम्

श्रीमङ्गलपदाढ्यं वा सपर्वोत्तरपत्रकम् ॥ २१४ ॥
असन्दिग्धमगूढ़ार्थं स्पष्टाक्षरपदं सदा ।
अन्वयावर्तकस्वात्मपरपित्रादिनामयुक् ॥ २१५ ॥
एकाद्विबहुवचनैर्यथार्हस्तुतिसंयुतम् ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ २१६ ॥
कार्य्यबोधि सुसम्बन्धं नत्याशीर्वादपूर्वकम् ।
स्वाम्यसेवकसेव्यार्थं क्षेमपत्रं तु तत् स्मृतम् ॥ २१७ ॥
एभिरेव गुणैर्युक्तं स्वाधर्षकविबोधकम् ।
भाषापत्रं तु तज्ज्ञेयमथवा वेदनार्थकम् ॥ २१८ ॥
प्रदर्शितं वृत्तलेख्यं समासाल्लक्षणान्वितम् ।
समासात् कथ्यते चान्यच्छेषायव्ययबोधकम् ॥ २१९ ॥
व्याप्यव्यापकभेदैश्च मूल्यमानादिभिः पृथक् ।

---

एकेन द्वाभ्यां वा बहुभिः वचनैः यथार्हया यथायोग्यया स्तुत्या प्रशंसा-वादेन संयुतं समामासतदर्धाहर्नामजात्यादिचिह्नितं वत्सरमासपक्षदिन-नाम जात्यादिभिरङ्कितं कार्य्यबोधि कार्य्यज्ञापकं सुसम्बन्धं सुसङ्गतं नत्याशीर्वादपूर्वकं प्रणत्या आशिषा च युक्तं स्वाम्यसेवकसेव्यार्थं प्रभु भृत्यसेवासम्बन्धितं यत् परस्परं लिख्यते तत् क्षेमपत्रं मङ्गललेख्यं स्मृतं कथितम् ॥ २१४—२१७ ॥

एभिरिति । एभिः क्षेमपत्रीयैरेव गुणैः धर्मैः युक्तं स्वस्य आत्मनः आधर्षकस्य पीड़नस्य विबोधकं विशेषणज्ञापकं यत् लेख्यं तत् भाषापत्रम् अभियोगपत्रम् अथवा वेदनार्थकं पत्रं ज्ञेयम् ॥ २१८ ॥

प्रदर्शितमिति । समासात् संक्षेपात् लक्षणान्वितं लक्षणयुक्तं वृत्त-लेख्यं प्रदर्शितम् । इदानीम् अन्यत् शेषम् अवशिष्टम् आयव्ययबोधकं लेख्यं समासात् संक्षेपात् कथ्यते ॥ २१९ ॥

व्याप्येति । तत् आयव्ययपत्रं व्याप्यानाम् अल्पविषयाणां व्याप-

विशिष्टसंश्रितैस्तद्धि यथार्थैर्वस्तुभेदयुक् ॥ २२० ॥
वत्सरे वत्सरे वापि मासि मासि दिने दिने ।
हिरण्यपशुधान्यादि स्वाधीनं त्वायसंज्ञकम् ।
पराधीनं कृतं यत्तु व्ययसंज्ञं धनं च तत् ॥ २२१ ॥
साद्यस्कश्चैव प्राचीन आयः स स्थितसंज्ञकः ।
व्ययो द्विधा चोपभुक्तस्तथा विनिमयात्मकः ॥ २२२ ॥
निश्चितान्यस्वामिकं चानिश्चितस्वामिकं तथा ।
स्वस्वत्वनिश्चितं चेति त्रिविधं संचितं मतम् ॥ २२३ ॥
निश्चितान्यस्वामिकं यद्धनं तु त्रिविधं हि तत् ।
औपनिध्यं याचितकमौत्तमर्णिकमेव च ॥ २२४ ॥

---

तानां वस्तुविषयाणां भेदैः वैशिष्ट्यैः विशिष्टसंश्रितैः वस्तुसत्त्वैः पृथक् यथार्थैः मूल्यमानादिभिश्च वस्तुभेदयुक् त्रिविधं भवति ॥ २२० ॥

वत्सरे इति । वत्सरे वत्सरे प्रतिवत्सरं मासि मासि प्रतिमासं दिने दिने प्रतिदिनं यत् हिरण्यपशुधान्यादि स्वाधीनं निजायत्तं भवति तत् तु तदेव आयसंज्ञकम् । यत् धनं हिरण्यादि पराधीनं परस्वामिकं कृतं तत् व्ययसंज्ञम् ॥ २२१ ॥

साद्यस्क इति । आयः साद्यस्कः सद्यो भवः प्राचीनश्च भवति । तत्र प्राचीनः आयः संचितमिति संज्ञा यस्य तादृशः संचितनामा इत्यर्थः । व्ययश्च द्विधा उपभुक्तः तथा विनिमयात्मकः परिवर्त्तरूपः ॥ २२२ ॥

निश्चितेति । संचितं संचितनामा आयः त्रिविधं मतं कश्चित् निश्चितः अन्यः स्वामी यस्य तथोक्तम् एकम् । अनिश्चितः स्वामी यस्य तादृशं द्वितीयम् । तथा स्वस्य स्वत्वं निश्चितं यस्मिन् तथाभूतं तृतीयम् ॥ २२३ ॥

निश्चितेति । निश्चितान्यस्वामिकं यत् धनं संचितमित्यर्थः तत्

विस्रम्भान्निहितं सद्भिर्यदौपनिधिकं हि तत् ।
अवृद्धिकं गृहीतान्यालङ्कारादि च याचितम् ॥ २२५ ॥
सवृद्धिकं गृहीतं यद्धनं तदौत्तमर्णिकम् ।
निध्यादिकं च मार्गादौ प्राप्तमज्ञातस्वामिकम् ॥ २२६ ॥
साहजिकं चाधिकं च द्विधा स्वत्वविनिश्चितम् ॥ २२७ ॥
उत्पद्यते यो नियतो दिने मासि च वत्सरे ।
आयः साहजिकः सैव दायाद्यस्य समर्जितः ॥ २२८ ॥
दायः परिग्रहो यस्तु प्रकृष्टं तत् स्वभावजम् ।
मौल्याधिक्यं कुसीदस्य गृहीतं याजनादिभिः ॥ २२९ ॥

---

त्रिविधं हि त्रिप्रकारमेव । औपनिध्यम् एकम्, याचितकं द्वितीयम्, औत्तमर्णिकं तृतीयम् ॥ २२४ ॥

विस्रम्भादिति । विस्रम्भात् विश्वासात् सद्भिः साधुभिः यत् धनं निहितं गच्छितं तत् हि तदेव औपनिधिकम् औपनिध्यम् । यत् अवृद्धिकं वृद्धिं विना गृहीतं प्रार्थनयेति भावः, अन्यस्य अलङ्कारादि तत् याचितम् ॥ २२५ ॥

सवृद्धिकमिति । सवृद्धिकं वृद्धिं दास्यामीति प्रतिश्रुत्य यत् धनं गृहीतं तत् औत्तमर्णिकम् । मार्गादौ रथ्यादिस्थाने यत् निध्यादिकं धनं प्राप्तं तत् अज्ञातस्वामिकम् अनिश्चितस्वामिकम् ॥ २२६ ॥

साहजिकमिति । स्वत्वविनिश्चितं निश्चितस्वत्वं धनं द्विधा साहजिकम् आधिकञ्च ॥ २२७ ॥

उत्पद्यते इति । दिने मासि वत्सरे वा दायात् पैतृकात् धनात् समर्जितः स्वव्यवसायाच्च यः नियतः निर्द्धारितः आयः उत्पद्यते स एव साहजिकः ॥ २२८ ॥

दाय इति । यस्तु दायः पैतृकं धनं परिग्रहः दानग्रहणात् लब्ध आयः, तत् प्रकृष्टम् अक्लेशलभ्यत्वात् उत्तमं स्वभावजं साहजिकं धनमिति शेषः । यत् मौल्याधिक्यं यथावथमूल्यात् अधिकत्वेन

पारितोष्यं भृतिप्राप्तं विजितार्थं धनञ्च यत् ।
स्वस्वत्वेऽधिकसंज्ञं तदन्यत् साहजिकं स्मृतम् ॥ २३० ॥
पूर्ववत्सरशेषञ्च वर्त्तमानाब्दसम्भवम् ।
स्वाधीनं सञ्चितं द्वेधा धनं सर्वं प्रकीर्त्तितम् ॥ २३१ ॥
द्वेधाधिकं साहजिकं पार्थिवेतरभेदतः ।
भूमिभागसमुद्भूत आयः पार्थिव उच्यते ॥ २३२ ॥
स देवकृत्रिमजलैर्देशग्रामपुरैः पृथक् ।
बहुमध्याल्पफलतो भिद्यते भूविभागतः ॥ २३३ ॥
शुल्कदण्डाकरकरभाटकोपायनादिभिः ।
इतरः कीर्त्तितस्तज्ज्ञैरायो लेखविशारदैः ॥ २३४ ॥

---

प्राप्तं, कुसीदं वृद्ध्या प्राप्तं, याजनादिभिः कर्मभिः स्वीकृतं पारितोष्यं पुरस्काररूपेण लब्धं भृतिप्राप्तं वेतनलब्धं तथा विजितं युद्धजयादिना लब्धं धनं तत् स्वस्वत्वे स्वस्वत्वनिश्चिते धने अधिकसंज्ञम् अधिकमिति प्रसिद्धमित्यर्थः, अन्यत् सर्वं साहजिकं स्मृतं कथितम् ॥ २२९॥ २३० ॥

पूर्वेति । स्वाधीनं सञ्चितं सर्वं धनं द्वेधा द्विविधं प्रकीर्त्तितं, पूर्ववत्सरशेषं वर्त्तमानाब्दसम्भवं वर्त्तमानवर्षजातञ्च ॥ २३१ ॥

द्वेधेति । अधिकं साहजिकञ्च पूर्वोक्तं द्विविधं धनं पार्थिवेतरभेदतः पार्थिवं स्थावरम् इतरम् अस्थावरं जङ्गममिति भेदात् द्वेधा द्विविधम् । तत्र भूमिभागेभ्यः समुद्भूतः आयः पार्थिव उच्यते ॥ २३२ ॥

स इति । सः पार्थिव आयः देवकृत्रिमजलैः देवमातृकादिभिः कृत्रिमैः कल्पितैः वस्तुभिः जलैः देशग्रामपुरैः पृथक् विभिन्नैः भूमिभागतः पृथ्वीविभागैः बहुमध्याल्पफलतः बहुभिः मध्यैः अल्पैश्च फलैः भिद्यते भेदं गच्छति ॥ २३३ ॥

शुल्केति । शुल्कैः वणिग्भ्यः लब्धैः राजभाग्यांशैः दण्डैः दुष्टदमनोत्थैः आकरैः खन्युत्पन्नैः करैः राजस्वैः भाटकैः भाड़ेति

यन्निमित्तो भवेदायो व्ययस्तन्नामपूर्वकः।
व्ययश्चैवं समुद्दिष्टो व्याप्यव्यापकसंयुतः॥ २२५॥
पुनरावर्त्तकः स्वत्वनिवर्त्तक इति द्विधा।
व्ययो यन्निध्युपनिधीकृतो विनिमयीकृतः।
सकुसीदाकुसीदाधमर्णिकश्चाहृतः स्मृतः॥ २२६॥
निधिर्भूमौ विनिहितोऽन्यस्मिन्नुपनिधिः स्थितः।
दत्तमूल्यादिसंप्राप्तः सैव विनिमयीकृतः॥ २२७॥
वृद्ध्यावृद्ध्या च यो दत्तः स वै स्यादाधमर्णिकः।
सवृद्धिकमृणं दत्तमकुसीदं तु याचितम्॥ २२८॥

---

प्रविष्टैः तथा उपायनैः उपदाभिः इत्येवमादिभिः आयः तज्ज्ञैः आयज्ञानवद्भिः लेखविशारदैः लेखकैः इतरः पार्थिवभिन्नः कीर्त्तितः॥२२४॥

यन्निमित्त इति। आयः यन्निमित्तः येन निमित्तेन भवेत् व्ययोऽपि तन्नामपूर्वकः तन्नाम पूर्वं यस्य तादृशः तन्निमित्तकस्तत्रैव इत्यर्थः भवेत्। व्ययश्च एवम् आयवदित्यर्थः व्याप्यव्यापकसंयुतः स्वल्पबहुविषयगोचरः समुद्दिष्टः कथितः॥ २२५॥

पुनरिति। स व्ययश्च द्विधा, पुनरावर्त्तकः, स्वत्वनिवर्त्तकश्च इति। यः व्ययः निधिः कृतः, उपनिधिः कृतः, विनिमयीकृतः सकुसीदः सवृद्धिकः अकुसीदः अवृद्धिक इति द्वेधा आधमर्णिकश्च आहृतः पुनरावर्त्तकः स्मृतः॥ २२६॥

निधिरिति। भूमौ विनिहितः निखातः निधिः तस्य कष्टातिपातेऽप्युपभोग्यत्वात् व्ययव्यपदेशः। अन्यस्मिन् जने स्थितः गच्छित इत्यर्थः उपनिधिः। दत्तेन मूल्यादिना संप्राप्तः सैव स एव आर्षोऽयं सन्धिः, विनिमयीकृतः परिवर्त्तितः एकवस्तुप्रदानेन अपरवस्तुग्रहणमित्यर्थः॥ २२७॥

वृद्ध्येति। यश्च वृद्ध्या अवृद्ध्या च दत्तः स वै एव आधमर्णिकः स्यात्। तत्र सवृद्धिकं यत् दत्तं तत् ऋणम्, अकुसीदम् अवृद्धिकन्तु याचितं भवति॥ २२८॥

स्वत्वनिवर्त्तको द्वेधा त्वैहिकः पारलौकिकः ॥ २३९ ॥
प्रतिदानं पारितोष्यं वेतनं भोग्यमैहिकः ।
चतुर्विधस्तथा पारलौकिकोऽनन्तभेदभाक् ॥ २४० ॥
शेषं संयोजयेन्नित्यं पुनरावर्त्तको व्ययः ।
मूल्यत्वेन च यद् दत्तं प्रतिदानं स्मृतं हि तत् ॥२४१॥
सेवाशौर्य्यादिसन्तुष्टैर्दत्तं तत् पारितोषिकम् ।
भृतिरूपेण सन्दत्तं वेतनं तत् प्रकीर्त्तितम् ॥ २४२ ॥
धान्यवस्त्रगृहारामगोगजादिरथार्थकम् ।
विद्याराज्याद्यर्जनार्थं धनाद्यर्थं तथैव च ।
व्ययीकृतं रक्षणार्थमुपभोग्यं तदुच्यते ॥ २४३ ॥
सुवर्णरत्नरजतनिष्कशालास्तथैव च ।

---

स्वत्वनिवर्त्तक इत्यादि । स्वत्वनिवर्त्तकः व्ययस्तु द्वेधा द्विविधः, ऐहिकः पारलौकिकश्च । तत्र प्रतिदानं पारितोष्यं वेतनं भोग्यञ्चेति चतुर्विधः ऐहिकः । तथा पारलौकिकः अनन्तभेदभाक् बहुविध इत्यर्थः ॥ २३९ ॥ २४० ॥

शेषमिति । पुनरावर्त्तकः व्ययः नित्यं शेषं संयोजयेत् । यच्च मूल्यत्वेन दत्तं तत् हि प्रतिदानं स्मृतम् ॥ २४१ ॥

सेवेति । सेवया शौर्य्यादिना च सन्तुष्टैः प्रभुभिः यत् दत्तं तत् पारितोषिकं पारितोष्यम् । यच्च भृतिरूपेण संदत्तं तत् वेतनं प्रकीर्त्तितं कथितम् ॥ २४२ ॥

धान्येति । धान्यानि वस्त्राणि गृहाणि आरामाः उद्यानानि गावः गजाश्च आदयो येषां ते रथाश्च अर्थाः प्रयोजनानि यत्र तादृशं विद्याराज्याद्यर्जनार्थं धनाद्यर्थं रक्षणार्थञ्च यत् व्ययीकृतं तत् उपभोग्यम् उच्यते ॥ २४३ ॥

सुवर्णेत्यादि । सुवर्णानां रत्नानां रजतानां निष्काणां मोहर इति

रथाश्वगोगजोष्ट्राजावीमशाला: पृथक् पृथक् ॥ २४४ ॥
वाद्यशस्त्रास्त्रवस्त्राणां धान्यसम्भारयोस्तथा ।
मन्त्रिशिल्पनाट्यवैद्यमृगाणां पाकपक्षिणाम् ।
शाला भोग्ये निविष्टास्तु तद्व्ययो भोग्य उच्यते ॥२४५॥
जपहोमार्च्चनैर्दानैश्चतुर्धा पारलौकिक: ।
पुनर्यातो निवृत्तश्च विशेषायव्ययौ च तौ ।
आवर्त्तको निवर्त्ती च व्ययायौ तु पृथग्द्विधा ॥ २४६ ॥
आवर्त्तकविहीनौ तु व्ययायौ लेखको लिखेत् ॥ २४७॥
क्रयाधमर्णघटनान्यस्थलाप्तो विवर्त्तक: ।
द्रव्यं लिखित्वा दद्यात् तु गृहीत्वा विलिखेत् स्वयम्२४८

---

रथादीनां याः शालाः स्थानानि, पृथक् पृथक् रथानाम् अश्वानां गवां गजानाम् उष्ट्राणाम् अजानां छागानाम् अवीनां मेषाणाम् इनानाञ्च याः शालाः, वाद्यानां शस्त्राणाम् अस्त्राणां वस्त्राणाञ्च याः शालाः, धान्यस्य सम्भारस्य द्रव्यसमूहस्य च याः शालाः तथा मन्त्रिणां शिल्पानां नाट्यानां वैद्यानां मृगाणां पाकानां पक्षिणाञ्च याः शालाः भोग्ये निविष्टाः भोग्यान्तर्भूताः, तद्व्ययः तासां व्ययः भोग्य उच्यते ॥ २४४—२४५ ॥
जपेति । पारलौकिकः व्ययः जपहोमार्च्चनदानभेदेन चतुर्धा । तौ च विशेषायव्ययौ पुनर्यातः निवृत्तश्चेति द्वौ तु व्ययायौ व्यय आयश्च पृथक् द्विधा, आवर्त्तकः निवर्त्ती चेति ॥ २४६ ॥
आवर्त्तकेति । लेखकः आवर्त्तकविहीनौ आवर्त्तकनिवर्त्तिनौ व्ययायौ तु व्ययम् आयञ्च लिखेत् ॥ २४७ ॥
क्रयेति । क्रयेषु अधमर्णघटनासु ऋणादिव्यवहारेषु अन्यस्थलेषु अन्येषु विषयेषु च आप्तः विश्वस्तः विवर्त्तकः लेखकः स्वयं द्रव्यं लिखित्वा दद्यात् गृहीत्वा च द्रव्यमिति शेषः विलिखेत् ॥ २४८ ॥

क्षीयते वर्द्धते नैवमायव्ययविलेखकः ॥ २४९ ॥
हेतुप्रमाणसम्बन्धकार्य्याङ्गव्याप्यव्यापकैः ।
आयाश्च बहुधा भिन्ना व्ययाः शेषं पृथक् पृथक् ।
मानेन संख्यया चैवोन्मानेन परिमाणकैः ॥ २५० ॥
क्वचित् संख्या क्वचिन्मानमुन्मानं परिमाणकम् ।
समाहारः क्वचिच्चेष्टो व्यवहाराय तद्विदाम् ॥ २५१ ॥
अङ्गुलाद्यं स्मृतं मानमुन्मानं तु तुला स्मृता ।
परिमाणं पात्रमानं संख्यैकद्व्यादिसंज्ञिका ॥ २५२ ॥
यत्र यादृग् व्यवहारस्तत्र तादृक् प्रकल्पयेत् ॥ २५३ ॥

---

क्षीयते इति । एवम् आयव्ययविलेखकः न क्षीयते वर्द्धते च किञ्चित आयः व्ययश्च न अल्पः नाप्यधिकः भवतीत्यर्थः ॥ २४९ ॥

हेत्विति । शेषमित्यव्ययम् अवशिष्टा इत्यर्थः आयाः व्ययाश्च पृथक् पृथक् हेतुभिः कारणैः प्रमाणैः परिमाणैः सम्बन्धैः संयोगैः कार्य्याङ्गैः कार्य्याणामवान्तरव्यापारैः व्याप्यैः अल्पविषयैः व्यापकैः बहुविषयैश्च तथा मानेन संख्यया गणनेन उन्मानेन ऊर्द्धमानेन परिमाणकैः प्रमाणैश्च बहुधा भिन्नाः भेदं गताः ॥ २५० ॥

क्वचिदिति । क्वचित् प्रदेशे तद्विदां मानादिज्ञानवतां व्यवहाराय संख्या गणना, क्वचित् मानं, क्वचित् उन्मानं, क्वचित् परिमाणकं, क्वचिच्च समाहारः सङ्ख्यादिसमुदायः इष्टः अभिलषितः ॥ २५१ ॥

अङ्गुलाद्यमिति । अङ्गुलाद्यम् आद्यपदेन हस्तादीनां ग्रहणम् अङ्गुलादिपरिमाणं मानं स्मृतम् । तुला तु उन्मानं स्मृता । पात्राणां मानन्तु परिमाणम् । एकद्वित्रिप्रभृतिसंज्ञा संख्या स्मृतेति शेषः ॥२५२॥

यत्रेति । यत्र यस्मिन् देशे यादृक् व्यवहारः चलनं तत्र तादृक् प्रकल्पयेत् व्यवहारयेत् राजेति कर्त्तृपदमध्याहार्य्यम् ॥ २५३ ॥

रजतस्वर्णताम्रादि व्यवहारार्थमुद्रितम्।
व्यवहार्य्यं वराटाद्यं रत्नान्तं द्रव्यमीरितम्।
सपशुधान्यवस्त्रादितृणान्तं धनसंज्ञिकम् ॥ २५४ ॥
व्यवहारे चाधिकृतं स्वर्णाद्यं मूल्यतामियात् ॥ २५५ ॥
कारणादिसमायोगात् पदार्थस्तु भवेद्भुवि।
येन व्ययेन संसिद्धस्तद्व्ययस्तस्य मूल्यकम् ॥ २५६ ॥
सुलभासुलभत्वाच्चागुणत्वगुणसंश्रयैः।
यथाकामात् पदार्थानामर्घं हीनाधिकं भवेत् ॥ २५७ ॥
न हीनं मणिधातूनां क्वचिन्मूल्यं प्रकल्पयेत्।
मूल्यहानिस्तु चैतेषां राजदौष्ट्येन जायते ॥ २५८ ॥

---

रजतेति। व्यवहारार्थमुद्रितं लोकव्यवहाराय कृतमुद्रणं रजतस्वर्णताम्रादिव्यवहार्य्यं लोकैरिति शेषः। वराटाद्यं वराटकप्रभृतिरत्नान्तं रत्नपर्य्यन्तं वस्तु द्रव्यम् ईरितं कथितम्। तथा सपशु पशुसहितं धान्यवस्त्रादितृणान्तं तृणपर्य्यन्तं वस्तु धनसंज्ञिकं धनमिति नाम्ना प्रसिद्धम् ॥ २५४ ॥

व्यवहारे इति। व्यवहारे च अधिकृतं व्यवहारार्थं निर्द्धारितं स्वर्णाद्यं मूल्यतामियात् मूल्यत्वं प्राप्नुयात् ॥ २५५ ॥

कारणादीति। भुवि पृथिव्यां कारणादिसमायोगात् कारणादीनां संयोगात् येन व्ययेन पदार्थः द्रव्यं संसिद्धः निर्मितः, तद्व्ययस्तु तस्य द्रव्यस्य मूल्यकम् ॥ २५६ ॥

सुलभेति। पदार्थानां वस्तूनां सुलभा सुलभत्वात् असुलभत्वात् दुर्लभत्वाच्च तथा अगुणत्वगुणसंश्रयैः सगुणत्वात् निर्गुणत्वाच्च अर्घं मूल्यं यथाकामात् यथेच्छं हीनाधिकम् अल्पं बहु च भवेत् ॥ २५७ ॥

नेति। क्वचित् प्रदेशे मणीनां रत्नानां धातूनां स्वर्णरजतादीनाञ्च मूल्यं हीनम् अल्पं न प्रकल्पयेत् नावधारयेत् राजेति शेषः।

दीर्घे चतुर्भागभूतपत्रे तिर्य्यग्गतावलिः।
त्र्यंशगाभ्यन्तरगता चार्द्धगा पादगापि वा।
कार्य्या व्यापकव्याप्यानां लेखने पदसंज्ञिका॥ २५९॥
श्रेष्ठाभ्यन्तरगा तासु वामतः त्र्यंशगाप्यनु।
दक्षत्र्यंशगता चानु ह्यर्द्धगा पादगा ततः॥ २६०॥
स्वभ्यन्तरे स्वभेदाः स्युः सदृशाः सदृशे पदे।
स्वारम्भपूर्तिसदृशे पदगे स्तः सदैव हि॥ २६१॥

---

एतेषां सन्निधानेनाथ न्यूनकाभिः न्यूनात्मता दोषः दीर्घेन दोषेण ज्ञायते ॥ २५८ ॥

सम्प्रति लेखनप्रकारमाह दीर्घे इत्यादि सदैव हि इत्यन्तेन। दीर्घे इति। व्याप्यव्यापकानाम् अल्पाधिकानां विषयाणां लेखने दीर्घे प्रशस्ते चतुर्भागपत्रे विभागचतुष्टयीकृतपत्रे त्र्यंशगा तृतीयांशव्यापिनी अर्द्धगा अर्द्धव्यापिनी वा पादगा चतुर्थांशव्यापिनी अभ्यन्तरगता तिर्य्यग्गता तिर्य्यग्भावेन विन्यस्ता पदसंज्ञिता आवलिः पदावलि-रित्यर्थः कार्य्या लेख्या इत्यर्थः ॥ २५९ ॥

श्रेष्ठेति। तासु त्रिविधासु पदावलिषु वामतः वामभागे अभ्यन्तरगा त्र्यंशगा तृतीयांशगामिनी पदावलिः श्रेष्ठा। दक्षत्र्यंशगता दक्षभागे तृतीयांशव्यापिनी अनु तत्पश्चात् तदपेक्षया न्यूना इत्यर्थः अप्रशस्तेति यावत्। अर्द्धगा ततः अनु न्यूना इत्यर्थः पादगा चतु-र्थांशगामिनी ततः तदपेक्षया हीनाः अप्रशस्ता इत्यर्थः ॥ २६० ॥

स्वभ्यन्तरे इति। शोभनम् अभ्यन्तरं यस्य तादृशे सदृशे समविन्यस्त पदे सुपतितुल्यरूपे वर्णाः इति अध्याहर्त्तव्यम्। स्वभेदाः सुष्ठु अभेदः येषां तथोक्ताः अत एव सदृशाः समानाः तुल्याकाराः स्युः भवेयुः। किञ्च पदं गच्छतीति पदगं पत्रमित्यर्थः सदैव स्वस्य लेख्यस्य यः आरम्भः कार्य्यं विषय इत्यर्थः तस्य या पूर्त्तिः पूरणं तत्सदृशं स्यात् हिशब्दः पादापूरणार्थः ॥ २६१ ॥

राजा स्वलेख्यचिह्नं तु यथाभिलषितं तथा ।
लेखानुपूर्वं कुर्य्याद्धि दृष्ट्वा लेख्यं विचार्य्य च ॥ २६२ ॥
मन्त्री च प्राड्विवाकश्च पण्डितो दूतसंज्ञकः ।
स्वाविरुद्धं लेख्यमिदं लिखेयुः प्रथमं त्विमे ॥ २६३ ॥
अमात्यः साधु लिखनमस्त्येतत् प्राग्लिखेदयम् ।
सम्यग्विचारितमिति सुमन्त्रो विलिखेत् ततः ॥२६४॥
सत्यं यथार्थमिति च प्रधानश्च लिखेत् स्वयम् ।
अङ्गीकर्त्तुं योग्यमिति ततः प्रतिनिधिर्लिखेत् ॥२६५॥
अङ्गीकर्त्तव्यमिति च युवराजो लिखेत् स्वयम् ।
लेख्यं स्वाभिमतं चैतद्विलिखेच्च पुरोहितः ॥ २६६ ॥

---

राजेति । राजा लेख्यं दृष्ट्वा विचार्य्य च लेखानुपूर्वं यथा तथा लिखनानुसारेणेत्यर्थः यथाभिलषितं यथेच्छं तथा स्वस्य आत्मनः लेख्यचिह्नम् स्वनामाङ्कितं कुर्य्यात् ॥ २६२ ॥

मन्त्री चेति । मन्त्री प्राड्विवाकः विचारपतिः पण्डितः दूतसंज्ञकः दूतश्च इमे तु प्रथमं राजदर्शनार्थमित्यर्थः स्वाविरुद्धं स्वाधिकाराविरोधि इदं लेख्यं लिखेयुः ॥ २६३ ॥

अमात्य इति । अयम् अमात्यः एतत् साधु लिखनम् अस्ति इति प्राक् लिखेत् । ततः सुमन्त्रः सम्यक् विचारितं इदमेतत् इति विलिखेत् ॥ २६४ ॥

सत्यमिति । प्रधानश्च प्रधानाख्यः राजपुरुष इत्यर्थः सत्यं यथार्थम् अर्थानुगतमिदम् इति स्वयम् आत्मना लिखेत् । ततः प्रतिनिधिः राज्ञ इति शेषः अङ्गीकर्त्तुं ग्रहीतुं योग्यमिदम् इति लिखेत् ॥२६५॥

अङ्गीकर्त्तव्यमिति । युवराजश्च इदम् अङ्गीकर्त्तव्यं ग्राह्यमिति स्वयं लिखेत् । पुरोहितश्च एतत् लेख्यं स्वाभिमतम् आत्मनः सम्मतमिति विलिखेच्च ॥ २६६ ॥

स्वस्वमुद्राचिह्नितं च लेख्यान्ते कुर्युरेव हि।
अङ्गीकृतमिति लिखेन्मुद्रयेच्च ततो नृपः॥ ३६७॥
कार्य्यान्तरस्याकुलत्वात् सम्यग्द्रष्टुं न शक्यते।
युवराजादिभिर्लेख्यं तद्दर्शनं च दर्शितम्॥ ३६८॥
समुद्रं विलिखेयुर्वै सर्वे मन्त्रिगणास्ततः।
राजा दृष्टमिति लिखेद् द्राक् सम्यग्दर्शनाक्षमः॥३६९॥
आयमादौ लिखेत् सम्यग् व्ययं पश्चात् तथागतम्।
वामे वायं व्ययं दक्षे पत्रभागे च लेखयेत्॥ ३७०॥
यत्रोभौ व्यापकव्याप्यौ वामोर्ध्वभागगौ क्रमात्।
आधाराधेयरूपौ वा कालार्थं गणितं हि तत्॥३७१॥

---

स्वेति। लेख्यान्ते लेख्यस्य अन्ते शेषे स्वस्वमुद्राभिः चिह्नितं कुर्युरेव मन्त्र्यादय इति शेषः। हिशब्दः पादपूरणार्थः। ततः नृपः अङ्गीकृतं स्वीकृतम् इति लिखेत् मुद्रयेच्च स्वनामाङ्कितं कुर्य्याच्च॥३६७॥

कार्य्यान्तरस्येति। युवराजादिभिः कार्य्यान्तरस्य कार्य्यान्तरेणेत्यर्थः सम्बन्धविवक्षया करणे षष्ठी। आकुलत्वात् व्यस्तत्वात् सम्यक् द्रष्टुं न शक्यते, तत् तस्मात् तैः अनेन अनेन दर्शितं सम्यक् विवेचितमिति च लेख्यम्॥ ३६८॥

समुद्रमिति। सर्वे मन्त्रिगणाः समुद्रं मुद्रया सहितं मुद्राङ्कित-मित्यर्थः यथा तथा विलिखेयुः वैशब्दः अवधारणे। ततः सम्यग्-दर्शनाक्षमः बहुकार्य्यव्यापृतत्वादिति भावः, राजा द्राक् झटिति दृष्ट-मिति लिखेत् मन्त्र्यादिषु विश्वासादिति भावः॥ ३६९॥

आयमिति। आदौ सम्यक् समग्रम् आयं, पश्चात् यथागतं व्ययं लिखेत्। वामे पत्रभागे वा एव वाशब्दोऽवधारणे। आयं दक्षे पत्र-भागे च व्ययं लेखयेत्॥ ३७०॥

यत्रेति। यत्र उभौ लेखनीयौ विषयौ व्यापकव्याप्यौ अधिकाल्पौ

अधोऽधश्च क्रमात् तत्र व्यापकं वामतो लिखेत् ।
व्याप्यानां मूल्यमानादि तत्पङ्क्त्यां विनिवेशयेत् ॥ २७२ ॥
ऊर्ध्वगानां तु गणितमधःपङ्क्त्यां प्रजायते ।
यत्रोभौ व्यापकव्याप्यौ व्यापकत्वेन संस्थितौ ॥ २७३ ॥
व्यापकं बहुवृत्तित्वं व्याप्यं स्यान्न्यूनवृत्तिकम् ।
व्याप्यास्त्ववयवाः प्रोक्ता व्यापकोऽवयवी स्मृतः ॥ २७४ ॥
सजातीनां च लिखनं कुर्याच्च समुदायतः ।
यथाप्राप्तं तु लिखनमाद्यन्तसमुदायतः ॥ २७५ ॥

---

वा आधाराधेयरूपौ व्याप्यव्यापकौ स्यातामिति शेषः तत्र तौ क्रमात् यथाक्रममथ वामोर्ध्वभागगौ पत्रस्य वामभागीयोर्ध्वस्थानस्थितौ कार्यौ इति शेषः । तत् गणित संख्यानं व्यवस्थापनमित्यर्थं कार्यार्थं वक्तव्यार्थं नियमार्थमिति यावत् स्मृतोऽवधारणार्थः ॥ २७१ ॥

अधेति । तत्र व्यापकं क्रमात् वामतः वामभागस्य अधः अधः लिखेत् । व्याप्यानान्तु मूल्यं मानादि च तत्पङ्क्त्यां तेषां व्याप्यानां संख्याद्य विनिवेशयेत् लिखेत् ॥ २७२ ॥

ऊर्ध्वगानामिति । यत्र उभौ व्यापकव्याप्यौ व्यापकत्वेन बहुत्वेन संस्थितौ बहुसंख्यकावित्यर्थः । तत्र ऊर्ध्वगानाम् उपरिस्थितानां तेषां गणितं संख्यानम् अधःपङ्क्त्यां प्रजायतं भवति ॥ २७३ ॥

व्यापकमिति । बहुवृत्तित्वं व्यापकं व्यापकधर्म इत्यर्थः, न्यूनवृत्तिकम् अल्पदेशव्यापि व्याप्यं स्यात् अवयवाः व्याप्याः प्रोक्ताः कथिताः, अवयवी व्यापकः स्मृतः कथितः ॥ २७४ ॥

सजातीनामिति । समाना जातिर्येषां तादृशानाम् एकविधानामित्यर्थः विषयाणां लिखनं समुदायतः साकल्येन कुर्यात् एकस्मिन्नेव स्थाने इति अध्याहार्यम् । आद्यन्तसमुदायतः आदौ अन्ते समुदायतः सर्वत्र च यथाप्राप्तं यथोपस्थितं यथा तथा लिखनं कर्त्तव्यमिति नानाविधानां विषयाणामिति च शेषः ॥ २७५ ॥

व्यापकाश्च पदार्था वा यत्र सन्ति स्थलानि हि ।
आयव्ययं तत्र कुर्यात् कालेन सर्वदा ॥ २७६ ॥
स्थानटिप्पनिका चैषा ततोऽन्यत् वस्तुटिप्पनम् ।
विशिष्टसंज्ञितं तत्र व्यापकं लेख्यभाषितम् ॥ २७७ ॥
आयाः कति व्ययाः कस्य शेषं द्रव्यस्य चास्ति वै ।
विशिष्टसंज्ञकैरेषां संविज्ञानं प्रजायते ॥ २७८ ॥
आदौ लेख्यं यथा प्राप्तं पश्चात् तद्गणितं लिखेत् ।
यथा द्रव्यं च स्थानं चाधिकसंज्ञं च टिप्पनैः ॥२७९॥
शेषायव्ययविज्ञानं क्रमाल्लेख्यैः प्रजायते ।
स्थलायव्ययविज्ञानं व्यापकं स्थलतो भवेत् ॥ २८० ॥

---

व्यापका इति । यत्र पदार्थाः वस्तूनि व्यापकाः बहवः, स्थलानि स्थानानि च बहूनीत्यर्थः सन्ति हि वर्त्तन्त एव तत्र सर्वदा आयव्ययं कालेन व्याप्य कुर्यात् ॥ २७६ ॥

स्थानेति । एषा स्थानानां टिप्पनिका विवरणम् अस्या इति शेषः, बहूनां वस्तुसमूहानाञ्च टिप्पनं विवरणं ततः स्थानटिप्पनिकायाः अन्यत् । तत्र लेख्यभाषितं लेख्योक्तं व्यापकं विशिष्टसंज्ञितं विविधमिति संज्ञया प्रसिद्धमित्यर्थः ॥ २७७ ॥

आया इति । आयाः कति, व्ययाश्च कति, कस्य द्रव्यस्य शेषम् अवशेषं वर्त्तत इत्यर्थः अस्ति वैशब्दोऽवधारणार्थः । विशिष्टसंज्ञकैः व्यापकलेख्यविशेषैः एषाम् आयादीनां संविज्ञानं सम्यक् ज्ञानं प्रजायते ॥२७८॥

आदाविति । आदौ प्रथमतः यथा प्राप्तं पश्चात् तदनन्तरं तस्य प्राप्तस्य गणितं संख्या लेख्यम् । ततश्च टिप्पनैः विवरणैः सह यथा यादृशं द्रव्यं स्थानम् अधिकसंज्ञञ्च तथा लिखेत् ॥ २७९ ॥

शेषेति । शेषायव्यययोः अवशिष्टस्य आयस्य व्ययस्य च विज्ञानं

पदार्थस्य स्थलानि स्युः पदार्थाश्च स्थलस्य तु ।
आप्यास्तिथ्यादयश्चापि यथेष्टा लेखने नृणाम् ॥ २८१ ॥
निश्चितान्यस्वामिकाद्या आया ये इतरान्तगाः ।
विभिन्नसंज्ञका ये च पुनरावर्तकादयः ।
व्ययाश्च परलेखान्ता अन्तिमव्यापकाश्च ते ॥ २८२ ॥
इच्छया ताडितं कृत्वादौ प्रमाणफलं ततः ।
प्रमाणभक्तं तल्लब्धं भवेदिच्छाफलं नृणाम् ॥ २८३ ॥
समासतो लेख्यमुक्तं सर्वेषां स्मृतिसाधनम् ॥ २८४ ॥

---

क्रमात् लेख्यैः प्रजायते भवति । किन्तु व्यापकं बहुत्र स्थलस्य आयव्यय-विज्ञानं स्थलतः स्थलभागक्रमाद्वेत्यर्थः भवेत् ॥ २८० ॥

पदार्थस्येति । स्थलानि पदार्थस्य द्रव्यस्य पदार्थाश्च द्रव्याणि च स्थलस्य आप्याः स्युः भवेयुः । तिथ्यादयश्च नृणां लेखने यथा इष्टाः इच्छानुसारेण निवेश्याः ॥ २८१ ॥

निश्चितेति । निश्चिताः अन्ये स्वामिनः येषां तत्प्रभृतयः तथा इतरान्तगाः अपरसमीपस्थिताः ये आयाः, ये च विभिन्नसंज्ञकाः विभिन्ननामानः पुनरावर्तकादयः व्ययाः ते परलेखान्ताः परेषां लेखः लेखनम् अन्ते येषां तथोक्ताः तथा अन्तिमव्यापकाश्च भवन्ति ॥ २८२ ॥

सम्प्रति त्रैराशिकविधिना आयव्ययान् निरूपयति इच्छयेति । आदौ प्रमाणफलं सिद्धं वस्तु इच्छया साध्यवस्तुना ताडितम् हतं गुणितमित्यर्थः कृत्वा प्रमाणेन भक्तं सत् यत् लब्धं तत् नृणाम् इच्छाफलं भवेत् । उक्तं लीलावत्यां भास्करेण, प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः फलमन्यजातिः । मध्ये तदिच्छाहतमाद्यहृत् स्यादिच्छाफलं व्यस्तविधिर्विलोमे इति ॥ २८३ ॥

समासत इति । समासतः संक्षेपेण सर्वेषां स्मृतिसाधनं स्मरणकारणं लेख्यम् उक्तम् ॥ २८४ ॥

गुञ्जा माषस्तथा कर्षः पदार्धः प्रस्थ एव हि ।
यथोत्तरा दशगुणाः पञ्च प्रस्थस्य चाढकाः ॥ १८५ ॥
ततश्चाष्टाढकः प्रोक्तो ह्यर्मणास्ते तु विंशतिः ।
खारिका स्याद्भिद्यते तद् देशे देशे प्रमाणकम् ॥ १८६ ॥
पञ्चाङ्गुलावटं पात्रं चतुरङ्गुलविस्तृतम् ।
प्रस्थपादं तु तज्ज्ञेयं परिमाणे सदा बुधैः ॥ १८७ ॥
ऊर्ध्वाङ्कश्च यथासंख्यस्तदधःस्थाश्च वामगाः ।
क्रमात् स्वदशगुणिताः परार्धान्ताः प्रकीर्तिताः ॥१८८॥

---

सम्प्रति मानान्याह गुञ्जेति । गुञ्जा, माषः, कर्षः, पदार्धः तथा प्रस्थः एते यथोत्तराः दशगुणाः हिशब्दोऽवधारणार्थः । अयमर्थः गुञ्जा प्रसिद्धा । दश गुञ्जाः माषः । दश माषाः कर्षः । दश कर्षाः पदार्धः । पदार्धाः प्रस्थ इति । प्रस्थस्य पञ्च पञ्चकमित्यर्थः पञ्च प्रस्था इति यावत् आढकः ॥ १८५ ॥

तत इति । ततश्च अष्टाढकः अष्टौ आढका इत्यर्थः अर्मणः प्रोक्तः कथितः हिशब्दोऽवधारणार्थः । ते विंशतिः अर्मणाः खारिका स्यात् । देशे देशे देशभेदेनेत्यर्थः तत् प्रमाणकं परिमाणं भिद्यते विभिन्नं भवति ॥ १८६ ॥

पञ्चेति । पञ्चाङ्गुलावटं पञ्चाङ्गुलदीर्घं चतुरङ्गुलविस्तृतं यत्पात्रं बुधैः पण्डितैः सदा परिमाणे तत् प्रस्थपादं ज्ञेयं तुशब्दोऽवधारणार्थः ॥ १८७ ॥

ऊर्ध्वाङ्क इति । ऊर्ध्वाङ्कः उपरिस्थितः अङ्कः यथासंख्यः संख्यापरिमितः । तदधःस्थाः तस्य ऊर्ध्वाङ्कस्य अधःस्थिताः वामगाः वामभागवर्तिनः अङ्का इति शेषः क्रमात् स्वदशगुणिताः स्वैः दशभिः गुणिताः सन्तः परार्धान्ताः परार्धपर्यन्ताः प्रकीर्त्तिताः ॥ १८८ ॥

न कर्त्तुं शक्यते संख्यासंज्ञा कालस्य दुर्गमात्।
अशक्यो द्विपरार्द्धं तु आयुरुक्तं मनीषिभिः॥ ३८९ ॥
एको दश शतं चैव सहस्रं चायुतं क्रमात्।
नियुतं प्रयुतं कोटिरर्बुदं चाब्जखर्वकौ।
निखर्वपद्मशङ्काब्धिमध्यमान्तपरार्द्धकाः॥ ३९० ॥
कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनम्।
भृतिदाने सदा सौरं चान्द्रं कौसीदवृद्धिषु।
कल्पयेत् सावनं नित्यं दिनभृत्येऽवधौ सदा॥ ३९१ ॥
कार्यमाना कालमाना कार्यकालमितिस्त्रिधा।
भृतिरुक्ता तु तद्विज्ञैः सा देया भाषिता यथा॥ ३९२॥

---

नेति। कालस्य दुर्गमात् दुरवगमनात् संख्यानां संज्ञा परार्द्धाधिका इत्यर्थः कर्त्तुं न शक्यते। तथाहि मनीषिभिः विद्वद्भिः अशक्यः विधातुः द्विपरार्द्धं परार्द्धद्वयपरिमितम् आयुः जीवनकालः उक्तं परार्द्धातिरिक्तायाः संख्यासंज्ञाया अभावादिति भावः॥ ३८९ ॥

एक इति। एकः, दश, शतं, सहस्रम्, अयुतं, नियुतं प्रयुतं लक्षमित्यर्थः, कोटिः, अर्बुदम्, अब्जं, खर्वः, निखर्वः, पद्मं, शङ्कुः, अब्धिः, मध्यम्, अन्तः, परार्द्धम् इति संख्यासंज्ञका इति शेषः॥ ३९० ॥

कालमानमिति। कालस्य मानं परिमाणं त्रिधा ज्ञेयं, चान्द्रं चन्द्रस्यावधिकं शुक्लप्रतिपदादिरूपमित्यर्थः, सौरं संक्रमणदिनावधिकं, सावनम् उदयास्तदिनावधिकञ्च। भृत्या वेतनस्य दाने सदा सौरं, कौसीदवृद्धिषु कलान्तरव्यवहारेष्वित्यर्थः नित्यं चान्द्रं, दिनभृत्ये दैनिकपरिमाणके अवधौ च सदा सावनं कल्पयेत् व्यवहरेत्॥ ३९१ ॥

कार्य्यमानेति। कार्य्यमाना कार्य्यपरिमिता, कालमाना कालपरिमिता, तथा कार्य्यकालमितिः कार्य्यकालोभयपरिमिता इत्यर्थः

अयं भारस्त्वया तत्र स्थाप्यस्त्वेतावतीं भृतिम्।
दास्यामि कार्यमाना सा कीर्तिता तद्विदेशकैः ॥२९३॥
वत्सरे वत्सरे वापि मासि मासि दिने दिने।
एतावतीं भृतिं तेऽहं दास्यामीति च कालिका ॥२९४॥
एतावता कार्य्यमिदं कालेनापि त्वया कृतम्।
भृतिमेतावतीं दास्ये कार्यकालमिता च सा ॥२९५॥
न कुर्याद् भृतिलोपं तु तथा भृतिविलम्बनम्।
अवश्यपोष्यभरणा भृतिर्मध्या प्रकीर्तिता ॥ २९६ ॥
परिपोष्या भृतिः श्रेष्ठा समान्नाच्छादनार्थिका।
भवेदेकस्य भरणं यया सा हीनसंज्ञिका ॥ २९७ ॥

---

त्रिधा त्रिविधा भृतिः तज्ज्ञैः पण्डितैः उक्ता, यथा भाषिता उक्ता, सा भृतिः देया ॥ २९२ ॥

अयमिति। त्वया तत्र अयं भारः स्थाप्यः रक्षितव्यः, मया एतावतीं भृतिं वेतनं दास्यामि तुभ्यमिति शेषः इत्येवं या परिभाषिता इति अध्याहार्य्यं तन्निर्देशकारिभिः विद्वद्भिः सा भृतिः कार्य्यमाना कीर्त्तिता ॥ २९३ ॥

वत्सर इति। वत्सरे वत्सरे प्रतिवत्सरं मासि मासि प्रतिमासं वा दिने दिने प्रतिदिनं ते तुभ्यं एतावतीं भृतिं दास्यामीति या परिभाषितेति शेषः सा कालिका कालमाना भृतिः ॥ २९४ ॥

एतावतेति। त्वया एतावता कालेन इदं कार्य्यं कृतं यदीति अध्याहार्य्यं तदा एतावतीं भृतिं दास्ये इत्येवं परिभाषिता या भृतिः सा कार्य्यकालमिता ॥ २९५ ॥

नेत्यादि। भृतिलोपं वेतनच्छेदं भृतिविलम्बनञ्च कुर्य्यात्। अवश्यपोष्याणां मातापित्रादीनां भरणं यया सा भृतिः मध्या, परिपोष्या अवश्यपोष्यव्यतिरिक्तानामपि पोषणकारिणी भृतिः श्रेष्ठा

यथा यथा तु गुणवान् भृतकस्तद्भृतिस्तथा ।
संयोज्या तु प्रयत्नेन नृपेणात्महिताय वै ॥ ३९८ ॥
अवश्यपोष्यवर्गस्य भरणं भृतकाद्भवेत् ।
तथा भृतिस्तु संयोज्या तद्योग्या भृतकाय वै ॥ ३९९
ये भृत्या हीनभृतिकाः शत्रवस्ते स्वयं कृताः ।
परस्य साधकास्ते तु छिद्रकोशप्रजाहराः ॥ ४०० ॥
अन्नाच्छादनमात्रा हि भृतिः शूद्रादिषु स्मृता ।
तत्पापभागन्यथा स्यात् पोषको मांसभोजिषु ॥४०१॥

---

तथा अन्नाच्छादनार्थिका अन्नवस्त्रमात्रपर्य्याप्ता भृतिः समा प्रकीर्त्तिता, किन्तु यया एकस्य जनस्य भरणं भवेत् सा हीनसंज्ञका हीना नाम भृतिः भवेत् ॥ ३९६ ॥ ३९७ ॥

यथेति । भृतकः भृत्यः यथा यथा गुणवान्, तथा तथा तस्य भृतिः नृपेण आत्महिताय प्रयत्नेन संयोज्या कल्पनीया वैशब्दोऽवधारणार्थः ॥ ३९८ ॥

अवश्येति । भृतकात् अवश्यपोष्यवर्गस्य तन्मातापित्रादेः यथा भरणं भवेत् सम्पद्येत, तद्योग्यभृतकाय तथा भृतिस्तु संयोज्या देया, वैशब्दोऽवधारणार्थः ॥ ३९९ ॥

ये इति । ये भृत्याः हीनभृतिकाः अल्पवेतनाः ते स्वयं प्रभुणेति शेषः शत्रवः कृताः यतः ते तु परस्य अन्यस्य साधकाः कार्य्यकारिणः प्रभुकार्य्यं परिहृत्येति भावः तथा छिद्रकोशप्रजाहराः छिद्रान्वेषिणः प्रभुधनापहारकाः प्रजानाञ्च पीडका इत्यर्थः ॥ ४०० ॥

अन्नेति । शूद्रादिषु नीचजातिषु भृतिः अन्नाच्छादनमात्रा अन्नाच्छादनमात्रपर्य्याप्ता स्मृता कथिता, अन्यथा अन्येन प्रकारेण अतिरिक्तभृतिदानेनेत्यर्थः मांसभोजिषु नीचजातिषु पोषकः नीचजातिपोषणकारीत्यर्थः प्रभुः तेषां पापभाक् स्यात् भवेत् ॥ ४०१ ॥

यद् ब्राह्मणेनापहृतं धनं तत् परलोकदम्।
शूद्राय दत्तमपि यन्नरकायैव केवलम् ॥ ४०२ ॥
मन्दो मध्यस्तथा शीघ्रस्त्रिविधो भृत्य उच्यते।
समा मध्या च श्रेष्ठा च भृतिस्तेषां क्रमात् स्मृता ॥ ४०३ ॥
भृत्यानां गृहकृत्यार्थं दिवा यामं समुत्सृजेत्।
निशि यामत्रयं नित्यं दिनभृत्येऽर्द्धयामकम् ॥ ४०४ ॥
तेभ्यः कार्यं कारयीत ह्युत्सवाद्यैर्विना नृपः।
अत्यावश्यं तूत्सवेऽपि हित्वा श्राद्धदिनं सदा ॥ ४०५ ॥
पादहीनां भृतिं त्वार्ते दद्यात् त्रैमासिकीं ततः।
पञ्चवत्सरभृत्ये तु न्यूनाधिक्यं यथा तथा ॥ ४०६ ॥

---

यदिति। ब्राह्मणेन यद् धनम् अपहृतं चोरितं तदपि परलोकदं शुभदमित्यर्थः, यत्तु धनं शूद्राय दत्तमपि केवलं नरकाय भवतीति शेषः ॥ ४०२ ॥

मन्द इति। भृत्यः त्रिविध उच्यते, मन्दः चिरक्रियः, मध्यः तथा शीघ्रः क्षिप्रकारीत्यर्थः। तेषां भृतिश्च समा मध्या तथा श्रेष्ठा इति क्रमात् स्मृता निरूपिता ॥ ४०३ ॥

भृत्यानामिति। भृत्यानां गृहकृत्यार्थं स्वगृहकार्य्यनिमित्तं दिवा दिवसे यामं प्रहरमेकं तथा निशि रात्रौ यामत्रयं प्रहरत्रयं नित्यं प्रतिदिनं समुत्सृजेत् अवकाशं दद्यादित्यर्थः, दिनभृत्ये दैनिकभृत्ये अर्द्धयामकम् अवकाशदानमिति शेषः ॥ ४०४ ॥

तेभ्य इति। नृपः उत्सवाद्यैः विना उत्सवदिवसव्यतिरेकेण तेभ्यः भृत्येभ्यः कार्य्यं कारयेत् तेभ्य इति अपादानविवक्षायां करणे पञ्चमी। कारयीतेति आर्षः प्रयोगः। किन्तु उत्सवेऽपि श्राद्धदिनं हित्वा अत्यावश्यं कार्य्यं सदा कारयेदिति शेषः ॥ ४०५ ॥

पादहीनामिति। भृत्ये आर्ते पीड़िते तु पादहीनां चतुर्थांश-

षाण्मासिकीं तु दीर्घार्ते तदूर्ध्वं न च कल्पयेत् ।
नैव पक्षार्द्धमार्तस्य हातव्याल्पापि वै भृतिः ॥ ४०७ ॥
संवत्सरोषितस्यापि ग्राह्यः प्रतिनिधिस्ततः ।
सुमहद्गुणिनं त्वार्तं भृत्यर्द्धं कल्पयेत् सदा ॥ ४०८ ॥
सेवां विना नृपः पक्षं दद्याद् भृत्याय वत्सरे ॥ ४०९ ॥
चत्वारिंशत् समा नीताः सेवया येन वै नृपः ।
ततः सेवां विना तस्मै भृत्यर्द्धं कल्पयेत् सदा ॥४१०॥
यावज्जीवं तु तत्पुत्रेऽक्षमे बाले तदर्द्धकम् ।

---

न्यूनां भृतं दद्यात् एतच्च पञ्चवर्षादर्वाग् भृत्ये अल्पदिनपीड़िते बोद्धव्यं तृतीयपादे पञ्चवर्षभृत्यस्योपादानात् । वत्सरावधिपीड़िते तु त्रैमासिकीं भृतं भृतेश्चतुर्थांशमित्यर्थः दद्यात् । पञ्चवत्सरभृत्ये तु पीड़िते इति शेषः न्यूनाधिक्यं यथा पीड़ादीनामिति शेषः तथा भृतं दद्यादिति निष्कर्षः ॥ ४०६ ॥

षाण्मासिकीमिति । दीर्घार्त्ते दीर्घकालंपीड़िते संवत्सरादूर्द्धमपीति शेषः षाण्मासिकीं भृतिं दद्यात् । तदूर्द्धं न च कल्पयेत् नैव दद्यादित्यर्थः । किञ्च पक्षार्द्धं सप्ताहमित्यर्थः आर्त्तस्य अल्पापि भृतिः नैव हातव्या नैव छेत्तव्या इत्यर्थः ॥ ४०७ ॥

संवत्सरोषितस्येति । संवत्सरोषितः वर्षं यावत् रोगार्त्तस्य इत्यर्थः प्रतिनिधिः ततः तस्मादेव भृत्यात् ग्राह्यः । किञ्च सुमहद्गुणिनम् अति गुणवन्तम् आर्षप्रयोग एषः । आर्त्तं भृत्यं प्रतीति शेषः सदा भृतेः अर्द्धं कल्पयेत् व्यवस्थापयेत् ॥ ४०८ ॥

सेवामिति । नृपः सेवां विना वत्सरे पक्षं पक्षीयवेतनं दद्यात् ॥४०९॥

चत्वारिंशदिति । येन भृत्येन सेवया चत्वारिंशत् समा वत्सराः नीताः वैशब्दोऽवधारणार्थः । नृपः ततः तदनन्तरं सेवां विना सदा तस्मै भृत्याय भृत्यर्द्धं वेतनार्द्धं कल्पयेत् दद्यात् ॥ ४१० ॥

भार्य्यायां वा सुशीलायां कन्यायां वा स्वश्रेयसे ॥४११॥
अष्टमांशं पारितोष्यं दद्यात् भृत्याय वत्सरे ।
कार्य्याष्टमांशं वा दद्यात् कार्य्यं द्रागधिकं कृतम् ॥४१२॥
स्वामिकार्य्ये विनष्टो यस्तत्पुत्रे तद्भृतिं वहेत् ।
यावद् बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं वहेत् ॥४१३॥
षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत् ।
दद्यात् तदर्द्धं भृत्याय त्रिवर्षैऽखिलं तु वा ॥ ४१४ ॥
वाक्पारुष्यान्न्यूनभृत्या स्वामी प्रबलदण्डतः ।

---

यावज्जीवमिति । यावज्जीवम् आजन्म कार्य्याक्षमे तस्य भृत्यस्य पुत्रे बाले अप्राप्तव्यवहारे च तत्पुत्रे बाल्यपर्य्यन्तमिति भावः सुशीलायां सुचरित्रायां तस्य भार्य्यायां वा एतच्च यावज्जीवपर्य्यन्तमिति भावः कन्यायाम् अनूढायां दुहितरि च स्वस्य आत्मनः श्रेयसे कल्याणाय तदर्द्धकं तस्य वेतनार्द्धस्य अर्द्धकं दद्यादिति शेषः ॥ ४११ ॥

अष्टमांशमिति । वत्सरे प्रतिवर्षं भृत्याय अष्टमांशं भृतेरिति शेषः पारितोष्यं पुरस्कारं दद्यात्, किन्तु द्राक् झटिति अधिकं कार्य्यं कृतं यदीति शेषः, तदा कार्य्यस्य अष्टमांशं पारितोष्यं दद्यात् वाशब्दः अवधारणार्थः ॥ ४१२ ॥

स्वामिकार्य्ये इति । यः भृत्यः स्वामिनः कार्य्ये विनष्टः भवेदिति शेषः तस्य पुत्रः यावद्बालः यावत्पर्य्यन्तं शिशुः तावत्कालपर्य्यन्तं तस्य भृतिं वहेत् प्राप्नुयात् । अन्यथा शैशवापगमे इत्यर्थः पुत्रस्य गुणान् दृष्ट्वा भृतिं वहेत् दद्यादित्यर्थः ॥ ४१२ ॥

षष्ठांशमिति । भृत्यस्य भृतेः षष्ठांशं वा चतुर्थांशं पालयेत् रक्षेत् दद्यादित्यर्थः एतच्च यथायथम् आर्त्तिविशेषे कालविशेषे बोद्धव्यम् । त्रिभिर्वर्षैः पीड़िते भृत्याय तदर्द्धं वा अखिलं समग्रं दद्यात् एतच्च सेवकस्याधिगुणवत्त्वाभ्यां व्यवस्थेयम् ॥ ४१४ ॥

भृत्यं प्रभिक्षयेन्नित्यं प्रभुत्वं त्वपमानतः ॥ ४१५ ॥
भृतिदानेन सन्तुष्टा मानेन परिवर्धिताः ।
सान्त्विता मृदुवाचा ये न त्यजन्त्यधिपं हि ते ॥४१६॥
अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥४१७॥
यथागुणान् स्वभृत्यांश्च प्रजाः संरञ्जयेन्नृपः ।
शाखाप्रदानतः कांश्चिदपरान् फलदानतः ॥ ४१८ ॥
अन्यान् सुचक्षुषा हास्यैस्तथा कोमलया गिरा ।
सुभोजनैः सुवसनैस्ताम्बूलैश्च धनैरपि ॥ ४१९ ॥

---

वाक्पारुष्यादिति । स्वामी वाक्पारुष्यात् निर्भर्त्सनात् न्यूनभृत्या वेतनसंकोचेन प्रबलदण्डतः गुरुदण्डात्, अपमानतः अन्यस्मादपि मानखण्डनादित्यर्थः भृत्यं नित्यं सततं प्रभुत्वं प्रभिक्षयेत् भिक्षयति भृत्यमनपि प्रभुभावमुपदिशतीत्यर्थः ताद्दृशव्यवहारेण भृत्याः प्रभवो भवन्तीति भावः ॥ ४१५ ॥

भृतिदानेनेति । ये भृत्याः भृतिदानेन सन्तुष्टाः मानेन परिवर्द्धिताः तथा मृदुवाचा मधुरवचसा सान्त्विताः, ते हि निश्चितम् अधिपं स्वामिनं न त्यजन्ति ॥ ४१६ ॥

अधमा इति । अधमाः जनाः धनम् इच्छन्ति, मध्यमाः धनमानौ, उत्तमास्तु केवलं मानम् इच्छन्ति हि यतः मानः महतां धनम् ॥४१७॥

यथेत्यादि । नृपः यथागुणं गुणानुसारेण स्वभृत्यान् प्रजाश्च संरञ्जयेत् सन्तोषयेत् तथाच कांश्चित् जनान् शाखाप्रदानतः शाखाप्रदानेन यत्किञ्चिद्दानेनेत्यर्थः; अपरान् जनान् फलदानेन ततोऽप्यधिकदानेनेत्यर्थः, अन्यान् जनान् सुचक्षुषा शोभनदर्शनेन, हास्यैः कोमलया मधुरया गिरा वाचा, सुभोजनैः सुमिष्टाहारदानैः, सुवसनैः शोभनवस्त्रदानैः ताम्बूलैः ताम्बूलदानैः तथा धनैरपि, कांश्चित् जनान् सत्कु-

कांश्चित् सुकुशलप्रश्नै रधिकारप्रदानतः ।
वाहनानां प्रदानेन योग्याभरणदानतः ॥ ४२० ॥
छत्रातपत्रचमरदीपिकानां प्रदानतः ।
क्षमया प्रणिपातेन मानेनाऽभिगमेन च ॥ ४२१ ॥
सत्कारेण च मानेन ह्यादरेण शमेन च ।
प्रेम्णा समीपवासेन स्वार्धासनप्रदानतः ।
सम्पूर्णासनदानेन स्तुत्योपकारकीर्तनात् ॥ ४२२ ॥
यत्कार्यं विनियुक्ता ये कार्याङ्कैरङ्कयेच्च तान् ।
लोहजैस्ताम्रजै रीतिभवै रजतसम्भवैः ॥ ४२३ ॥
सौवर्णै रत्नजैर्वापि यथायोग्यैः स्वलाञ्छनैः ।
प्रविज्ञानाय दूरात् तु वस्त्रैश्च मुकुटैरपि ॥ ४२४ ॥

---

कुशलप्रश्नैः शुभकुशलवार्त्ताजिज्ञासाभिः, अधिकारप्रदानतः कार्यभारप्रदानैः, वाहनानां हस्त्यश्वादीनां प्रदानेन, योग्यानाम् आभरणानां प्रदानतः प्रदानेन, छत्राणां पत्रनिर्मितवृष्टिरौद्रादिनिवारकाणाम् आतपत्राणां वस्त्रनिर्मितरौद्रादिनिवारकाणां चमराणां चामराणामित्यर्थः, तथा दीपिकानां प्रदानतः प्रदानेन, क्षमया दोषमार्जनेन, प्रणिपातेन गुरुजनप्रणामेन, मानेन अभिगमेन समभिव्याहारगमनेन, सत्कारेण पूजनेन, मानेन आत्मीयप्रदर्शनेन, आदरेण यत्नेन, शमेन शान्त्या, प्रेम्णा स्नेहेन, समीपवासेन सन्निधिस्थित्या, स्वस्य अर्द्धासनस्य आसनार्द्धस्य प्रदानतः प्रदानेन सम्पूर्णस्य आसनस्य उपवेशनीयस्य दानेन, स्तुत्या गुणकीर्त्तनेन तथा उपकारकीर्त्तनात् कृतज्ञतयेत्यर्थः सर्वान् जनान् यथायोग्यं रञ्जयेदिति समुदायार्थः ॥ ४१८—४२२ ॥

यत्कार्ये इति । सौवर्णैरिति । ये भृत्याः यत्कार्ये यस्मिन् कार्ये विनियुक्ताः; तान् दूरात् प्रविज्ञानाय अस्मिन् कार्ये अयं नियुक्त इति झटिति परिज्ञानाय लोहजैः ताम्रजैः रीतिभवैः पित्तलजैरित्यर्थः

वाद्यवाहनभेदैश्च भृत्यान् कुर्यात् पृथक् पृथक् ।
स्वविशिष्टं च यच्चिह्नं न दद्यात् कस्यचिन्नृपः ॥४२५॥
दश प्रोक्ताः पुरोधाद्या ब्राह्मणाः सर्व एव ते ।
अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः ॥ ४२६ ॥
नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः ॥ ४२७ ॥
भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः ।
ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा ॥४२८॥

---

रजतमयैः रौप्यनिर्मितैः सौवर्णैः सुवर्णजैः रत्नजैः वापि यथायोग्यैः स्वनामाङ्कनैः स्वमापकैः वस्त्रैः मुकुटैश्च कार्य्याङ्कैः कार्य्यचिह्नैः अङ्कयेत् चिह्नितान् कुर्य्यात् ॥ ४२३ ॥ ४२४ ॥

वाद्येति । विशेषेति चार्थः । नृपः भृत्यान् वाद्यानां वाहनानाञ्च भेदैः अस्य भृत्यस्य गमनागमनादिषु वाद्यं स्यात् अयञ्च वाहनेन गतागतं कुर्य्यादित्येवं रूपैः विशेषैश्च भृत्यान् विशिष्टान् अधिकारिण इत्यर्थः पृथक् पृथक् विशेषचिह्नितान् इत्यर्थः कुर्य्यात् । तथा स्वस्य विशिष्टं यत् चिह्नं छत्रचामरादिकं तत् कस्यचित् न दद्यात् ॥४२५॥

दशेति । पुरोधाद्याः पुरोहितप्रभृतयः अधिकारिणः । ये दश प्रकृतय इत्यर्थः प्रोक्ताः कथिताः, ते सर्वे एव ब्राह्मणाः भवेयुरित्यर्थः, अभावे ब्राह्मणानामिति शेषः क्षत्रियाः, तदभावे क्षत्रियाभावे ऊरुजाः वैश्या इत्यर्थः योज्याः तत्तत्कर्मणीति, शेषः ॥ ४२६ ॥

नैवेति । शूद्रास्तु गुणवन्तोऽपि पार्थिवैः नैव संयोज्याः तत्तत्प्रकृतिकर्मणीति शेषः ॥ ४२७ ॥

भागग्राहीति । क्षत्रियः भागग्राही राजकरग्रहणे नियुक्तः तथा साहसाधिपतिः साहसकार्य्य दस्युचौर्य्यादिरूपकार्य्याणाम् अधिपतिः शासनाधिकारीत्यर्थः, ब्राह्मणः ग्रामपः ग्रामाध्यक्षः तथा कायस्थः लेखकः योज्यः नियोक्तव्यः ॥ ४२८ ॥

शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः ।
सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः ॥ ४२९ ॥
न वैश्यो न च वै शूद्रः कातरश्च कदाचन ।
सेनापतिः शूर एव योज्यः सर्वासु जातिषु ॥ ४३० ॥
समस्तरचतुर्वर्णधर्मोऽयं नैव पावनः ।
यस्य वर्णस्य यो राजा स वर्णः सुखमेधते ॥ ४३१ ॥
नोपकृतं मन्यते यः न तुष्यति सुसेवनैः ।
कथान्तरे न स्मरति प्रकृते प्रलपत्यपि ।
क्षुब्धस्तनोति मर्माणि तं नृपं भृतकस्त्यजेत् ॥ ४३२ ॥

---

शुल्कग्राहीति । वैश्यः शुल्कानां वाणिज्यादिषु राजकराणां ग्राही, पादजः शूद्रः प्रतिहारः द्वारपालः क्षत्रियः सेनाधिपः, तदभावे क्षत्रियाभावे ब्राह्मणश्च सेनाधिपः नियोक्तव्य इति शेषः ॥ ४२९ ॥

नेति । कदाचन वैश्यः सेनापतिर्न, शूद्रः न, कातरः भीतश्च न भवेदिति शेषः । सर्वासु जातिषु शूर एव बलवानेव सेनापतिः योज्यः ॥ ४३० ॥

समस्तरेति । अयं समस्तराणां मूर्द्धावसिक्ताम्बष्ठप्रभृतिसङ्करजातानां चतुर्णां वर्णानां ब्राह्मणादीनां धर्मः राजधर्मः न पावनः पापाश्रया-दिति भावः । यस्य वर्णस्य जातेरित्यर्थः यः राजा राजा यद्वर्णीय इत्यर्थः स वर्णः सुखम् एधते प्राप्नोति ॥ ४३१ ॥

नेति । यः नृपतिः उपकृतम् उपकारं न मन्यते न स्वीकरोति, सुसेवनैः सुपरिचर्य्याभिश्च न तुष्यति न तुष्टो भवति, कथान्तरे प्रसङ्ग-विशेषे न स्मरति प्रत्युत प्रकृते तथा प्रलपति इथा वाक्यं कथयति तथा क्षुब्धः सन् मर्माणि तनोति पीडयति च, भृतकः भृत्यः तं नृपं त्यजेत् ॥ ४३२ ॥

लक्षणं युवराजादेः कृत्यमुक्तं समासतः ॥ ४२२ ॥

इति शुक्रनीतौ युवराजादिलक्षणं नाम
द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

---

अथ साधारणं नीतिशास्त्रं सर्वेषु चोच्यते ।
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥ १ ॥
सुखं च न विना धर्मात् तस्माद् धर्मपरो भवेत् ।
त्रिवर्गशून्यं नारम्भं भजेत् तं चाविरोधयन् ।
अनुयायात् प्रतिपदं सर्वधर्मेषु मध्यमः ॥ २ ॥

---

लक्षणमिति । युवराजादेः लक्षणं कृत्यञ्च समासतः संक्षेपेण उक्तम् ॥ ४२२ ॥

समाप्तोऽयं द्वितीयोऽध्यायः ।

---

अथेति । अथ युवराजलक्षणादिनिरूपणानन्तरमित्यर्थः सर्वेषु राजप्रजासाधारणेषु नीतिशास्त्रम् उच्यते । सर्वभूतानां सर्वेषां प्राणिनां सर्वाः प्रवृत्तयः कार्य्येषु प्रवृत्त्युद्योगाः सुखार्थाः सुखमात्रप्रयोजनसाधनाः मताः ॥ १ ॥

सुखमिति । धर्मात् विना सुखं न भवति, तस्मात् धर्मपरः धर्मनिष्ठः भवेत् । त्रयाणां धर्मकामार्थानां वर्गः त्रिवर्गः तेन शून्यम् आरम्भं कर्म न भजेत् न कुर्यात् । तञ्च त्रिवर्गम् अविरोधयन् अत्यजन् मध्यमः मध्यवर्ती सन् सर्वधर्मेषु सर्वेषु कार्य्येषु प्रतिपदञ्च अनुयायात् अनुगच्छेत् ॥ २ ॥

नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिर्मलायनः ।
स्नानशीलः सुसुरभिः सुवेशोऽनुल्बणोज्ज्वलः ।
धारयेत् सततं रत्नसिद्धमन्त्रमहौषधीः ॥ ३ ॥
सातपत्रपदत्राणो विचरेद् युगमात्रदृक् ।
निशि चात्ययिके कार्य्ये दण्डी मौली सहायवान् ॥ ४ ॥
न वेगितोऽन्यकार्य्यः स्यान्न वेगान् धारयेत् बलात् ।
भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ ५ ॥
हिंसास्तेयान्यथाकामपैशुन्यं परुषानृतम् ।

---

नीचेति । नीचाः ह्रस्वाः कर्त्तनादिति भावः रोमाणि नखाः श्मश्रवश्च यस्य तथोक्तः निर्मलानि परिशोधितानि अङ्घ्री पादौ मलायनानि मलस्थानानि इन्द्रियद्वाराणि यस्य तथाभूतः स्नानशीलः कृतस्नानः सुसुरभिः गन्धद्रव्यानुलिप्तः सुवेशः शोभनपरिच्छदः तथा अनुल्बणः अनुद्धतः उज्ज्वलश्च सन् रत्नानि सिद्धमन्त्राणि महौषधीश्च सततं धारयेत् ॥ ३ ॥

सातपत्रेति । सातपत्रेण छत्रेण पदत्राणाभ्यां पादुकाभ्याञ्च सहितः तथा युगमात्रदृक् युगमात्रे युगाख्यचतुर्हस्तपरिमिते भूभागे दृक् दृष्टिर्यस्य तथोक्तः सन् सङ्कटदर्शने पदस्खलनसम्भवादिति भावः विचरेत् एतच्च दिवारात्रसाधारणविषयम् । निशि रात्रौ आत्ययिके आवश्यकजनके कार्य्ये व्यापारे उपस्थिते इति शेषः दण्डी यष्टिपाणिः मौली उष्णीषादिना बद्धशिराः तथा सहायवान् ससहायः विचरेदिति शेषः ॥ ४ ॥

नेति । वेगितः मलमूत्रादिवेगवान् अन्यकार्य्ये अन्यस्मिन् कस्मिंश्चित् कर्मणि तत्परः न स्यात् । वेगान् बलाच्च न धारयेत् वेगधारणं न कुर्यात् । किन्तु इतरदूरगः निकटगः दूरगश्च भक्त्या कल्याणानि मित्राणि च सेवेत ॥ ५ ॥

हिंसेति । हिंसा प्राणिहत्या, स्तेयं चौर्य्यम्, अन्यथाकामः

संभिन्नालापव्यापादमभिध्यादृग्विपर्य्ययम् ।
पापकर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ ६ ॥
धर्मकार्यं यतन् शक्त्या नो चेत् प्राप्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र वै नास्ति संशयः ॥ ७ ॥
मनसा चिन्तयन् पापं कर्मणा नाभिरोचयेत् ।
तत् प्राप्नोति फलं तस्येत्येवं धर्मविदो विदुः ॥ ८ ॥
अवृत्तिव्याधिशोकार्त्ताननुवर्त्तेत शक्तितः ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥ ९ ॥

---

अवैधरतिरित्यर्थः, पैशुन्यं खलता, परुषं निष्ठुरता, अनृतं मिथ्या, सम्भिन्नेन सम्यक् विभिन्नेन आलापेन व्यापः मनोभङ्गापादनम्, अदमः अविनयः, मिथ्यादृक् नास्तिकता, मिथ्यादृष्टिर्नास्तिकता इत्यमरः । विपर्य्ययः अवैधाचरणम् इत्येवं कायवाङ्मानसैः कृतं दशधा पापकर्म्म त्यजेत् ॥ ६ ॥

धर्म्मकार्य्यमिति । चेत् यदि मानवः शक्त्या यतन् यतमानः आर्षोऽयं प्रयोगः । धर्म्मकार्य्यं न प्राप्नोति अन्तराविघ्नापातादिति भावः, तदा सः अत्र इहलोके तत्पुण्यं तस्य धर्म्मकार्य्यस्य पुण्यम् अनुष्ठानजनितमित्यर्थः प्राप्तः भवति, वैशब्दोऽवधारणे । संशयः नास्ति निश्चितमेव प्राप्नोतीत्यर्थः ॥ ७ ॥

मनसेति । मनसा पापं चिन्तयन् कर्मणा न अभिरोचयेत् न कुर्य्यात् । एवं सति पापकर्मणि कृते सतीत्यर्थः तस्य कर्मणः तत् फलं प्राप्नोति इति धर्मविदः धर्मज्ञाः पण्डिताः विदुः जानन्ति ॥ ८

अवृत्तीति । अवृत्तीन् वृत्तिरहितान् जीविकाशून्यानित्यर्थः तथा व्याधिशोकार्त्तान् रोगार्त्तान् शोकार्त्तांश्च शक्तितः यथाशक्ति अनुवर्त्तेत साहाय्यदानेन उपकुर्य्यादित्यर्थः । किञ्च कीटपिपीलिकमपि कीटान् पिपीलिकाश्च क्षुद्रजीवानपि सततम् आत्मवत् पश्येत् ॥ ९ ॥

उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।
सम्पद्विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ॥ १० ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ॥ ११ ॥
नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ॥ १२ ॥
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ॥ १३ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति ।
तं तथैवानुवर्त्तेत पराराधनपण्डितः ॥ १४ ॥

---

उपकारेति । अपकारपरेऽपि अरौ शत्रौ उपकारप्रधानः उपकारपरः तथा सम्पदुविपत्सु सम्पत्सु विपत्सु च एकमनाः अविचलितचित्तः स्यात् । किञ्च हेतौ कारणे सति ईर्ष्येत् विद्विषन्नात् परमिति शेषः न तु किन्तु फले न, न विद्विषन्नादिव्यर्थः विद्वेषेण फलहानिरनर्थकमेवेति भावः ॥ १० ॥

काले इति । पूर्वाभिभाषी पूर्वालापकारी निरहङ्कारत्वादिति भावः सुमुखः प्रसन्नवदनः सुशीलः सच्चरितः करुणामृदुः दयाशीलः सन् काले योग्ये काले हितं मितं परिमितं न तु हथाबहुलमित्यर्थः अविसंवादि सत्यरूपं पेशलं मधुरञ्च वचः ब्रूयात् ॥ ११ ॥

नेति । एकः एकाकी न सुखी सुखासक्तः न, सर्वत्र सर्वस्मिन् जने विश्रब्धः विश्वासी न, तथा शङ्कितश्च न भवेदिति शेषः ॥ १२ ॥

नेति । कञ्चित् जनम् आत्मनः शत्रुं न, आत्मानञ्च कस्यचित् रिपुं शत्रुं न, प्रभोः सकाशात् अपमानं न, निःस्नेहतां स्नेहशून्यताञ्च न प्रकाशयेत् ॥ १३ ॥

जनस्येति । पराराधनपण्डितः परस्य जनः जनस्य आश-

न पीड़येदिन्द्रियाणि न चैतान्यतिलालयेत् ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ १५ ॥
एणो गजः पतङ्गश्च भृङ्गो मीनस्तु पञ्चमः ।
शब्दस्पर्शरूपगन्धरसैरेते हताः खलु ॥ १६ ॥
एषु स्पर्शो वरस्त्रीणां खान्तहारी मुनेरपि ।
अतोऽप्रमत्तः सेवेत विषयांस्तु यथोचितान् ॥ १७ ॥

---

यस्य अभिप्रायम् आशयम् विविच्य यः जनः यथा येन प्रकारेण परितु-ष्यति, तं जनं तथैव तेनैव प्रकारेण अनुवर्त्तेत ॥ १४ ॥

नेति । इन्द्रियाणि चक्षुरादीनि न पीड़येत्, तत् तद्विषयभोग-व्यावर्त्तनेन न क्लिश्यात् । एतानि इन्द्रियाणि न च अतिलालयेत् स्वस्वविषयेषु नातिसक्तानि कुर्य्यात् । यथायथं वैधभावेन इन्द्रियतर्पणं कार्य्यमिति भावः । इन्द्रियाणि प्रमाथीनि प्रमन्थनशमर्थानि अतिप्रब-लानि चेत् मनः प्रसभं बलात् हरन्ति वशीकुर्वन्तीत्यर्थः, अतस्तानि दम-नीयानीति भावः ॥ १५ ॥

एण इति । एणः हरिणः, गजः हस्ती, पतङ्गः क्षुद्रपक्षिविशेषः, भृङ्गः भ्रमरः, पञ्चमः मीनः मत्स्यः एते शब्दस्पर्शरूपगन्धरसैः इन्द्रिय-भोग्यैः विषयैः यथाक्रमं हताः खलु हता एव, तथाहि एणः सुस्वर-गानश्रवणासक्तोऽपलायमानः मृगयुभिर्बध्यते । गजः करिणीस्पर्शसुखा-सक्तोऽपलायमानः तद्ग्राहिभिर्बध्यते । पतङ्गः प्रदीपशिखाया रूप-दर्शनोन्मत्तस्तत्रैव पतनात् म्रियते । भृङ्गः गन्धलोभेन पद्मोत्पलयो-रभ्यन्तरवर्त्ती भवति । मत्स्यश्च आमिषरसास्वादलोभेन वड़िशविद्धो भवतीति ॥ १६ ॥

एष्विति । एषु शब्दादिषु मध्ये वरस्त्रीणाम् उत्तमाङ्गनानां स्पर्शः मुनेरपि स्वान्तहारी मनोहारी, अतः अप्रमत्तः सावधानः सन् यथो-चितान् विषयान् सेवेत ॥ १७ ॥

माता स्वस्रा दुहित्रा वा नात्यन्तैकान्तिकं वसेत्।
यथा सम्बन्धमाह्वयाद्‌भार्य्याख्यास्य वै स्त्रियम्।
स्वीयां तु परकीयां च सुभगे! भगिनीति च॥ १८॥
सहवासोऽन्यपुरुषैः प्रकाशमपि भाषणम्।
स्वातन्त्र्यं न चणमपि ह्यावासोऽन्यगृहे तथा॥ १९॥
भर्त्ता पित्राथवा राज्ञा पुत्रश्वशुरबान्धवैः।
स्त्रीणां नैव तु देयः स्याद्‌ गृहकृत्यैर्विना चणः॥ २०॥
चण्डं षण्डं दण्डशीलमकामं सुप्रवासिनम्।
सुदरिद्रं रोगिणं च ह्यन्यस्त्रीनिरतं सदा॥ २१॥
पतिं दृष्ट्वा विरक्ता स्यान्नारी वान्यं समाश्रयेत्।
त्यक्त्वैतान् दुर्गुणान् यत्नादतो रच्याः स्त्रियो नरैः॥२२॥

---

मातेति। माता जनन्या, स्वस्रा भगिन्या, दुहित्रा कन्यया वा सह अत्यन्तैकान्तिकम् अतिनिर्जनम् यथा तथा न वसेत्। किञ्च स्वीयां स्वसम्पर्कीयां परकीयाञ्च नारीं यथासम्बन्धं सम्बन्धानुसारेण सुभगे! भगिनि! इति च आमात्र्य आभाष्य च आह्वयेत् आह्वयेत्॥१८॥

सहवास इति। अन्यपुरुषैः सहवासः तथा प्रकाशमपि का कथा विजने इति भावः, भाषणं कथोपकथनं चणमपि स्वातन्त्र्यं स्वाधीनता तथा अन्यगृहे परगृहे आवासः स्त्रीणां दूषणमिति शेषः॥ १९॥

भर्त्तेति। भर्त्ता स्वामिना, पित्रा, राज्ञा, तथा पुत्रश्वशुरबान्धवैः स्त्रीणां गृहकृत्यैः गार्हस्थ्यकार्य्यैः विना चणः अल्पोऽपि समयः नैव देयः स्यात्॥ २०॥

चण्डमिति। पतिमिति। नारी पतिं चण्डम् उग्रं षण्डं क्लीवं दण्डशीलं दण्डकरम् अकामम् अननुरक्तं सुप्रवासिनं दीर्घप्रवासरतं सुदरिद्रम् अतिनिर्धनं रोगिणं नित्यरोगिणं तथा सदा अन्यस्त्रीरतं दृष्ट्वा

वस्त्राद्यभूषणप्रेममृदुवाग्भिश्च यन्त्रितः ।
स्वात्यन्तसन्निकर्षेण स्त्रियं पुत्रं च रक्षयेत् ॥ २३ ॥
चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ।
नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ॥ २४ ॥
नदीं तरेन्न बाहुभ्यां नाग्निं स्कन्नमभिव्रजेत् ।
सन्दिग्धनावं वृक्षं च नारोहेद् दुष्टयानवत् ॥ २५ ॥
नासिकां न विकुष्णीयान्नाकस्माद् विलिखेद् भुवम् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥ २६ ॥

---

विरक्ता स्यात् भवेत् वा अथवा अन्यं समाश्रयेत् । अतः कारणात् एतान् दुर्गुणान् उन्मत्तादिकान् त्यक्ता परित्यज्य नरैः यत्नात् स्त्रियः कार्य्याः रक्ष्याः ॥ २१ ॥ २२ ॥

वस्त्रेति । वस्त्राद्यभूषणप्रदानेन प्रेम्णा स्नेहेन मृदुभिः मधुराभिः वाग्भिः तथा स्वस्य आत्मनः अत्यन्तसन्निकर्षेण अतिसान्निध्येन यन्त्रितः अधायत्ता स्त्रियं पुत्रञ्च रक्षयेत् ॥ २३ ॥

चैत्येति । चैत्यान् रथ्यावृक्षविशेषान्, पूज्यान् पूजनीयान् गुरुजनानित्यर्थः, ध्वजान् पताकादण्डान् अशस्तानाम् अप्रशस्तवस्तूनां छायाः भस्मानि तुषान् अशुचीन् अपवित्रान्, शर्कराः लोष्टान्, बलीन् पूजाद्रव्याणि तथा स्नानभूमीश्च न आक्रमेत् न अतिक्रमेत् ॥ २४ ॥

नदीमिति । बाहुभ्यां नदीं न तरेत् । स्कन्नं विगलितम् अग्निं न अभिव्रजेत् विगलिताग्न्यभिमुखं न गच्छेत् । तथा दुष्टयानवत् दुष्टं यानं वाहनम् अश्वादिकमिव सन्दिग्धनावं तरणे शक्ता वा अशक्तेति सन्देहयुक्तां नावं नौकां भारधारणे क्षमो वा अक्षमो इति सन्देहयुक्तं वृक्षञ्च न आरोहेत् ॥ २५ ॥

नासिकामिति । नासिकां न विकुष्णीयात् न विशेषेण आकर्षेत् । अकस्मात् विना हेतुं भुवं भूमिं न विलिखेत् । तथा संहताभ्यां युक्ताभ्यां पाणिभ्याम् आत्मनः शिरः न कण्डूयेत् ॥ २६ ॥

नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटुकश्चिरम्।
देहवाक्चेतसां चेष्टाः प्राक् श्रमाद् विनिवर्तयेत्॥२७॥
नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम्।
तथा चत्वरचैत्यं न चतुष्पथसुरालयान्॥ २८॥
शून्याटवीशून्यगृहश्मशानानि दिवापि न।
सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत्॥ २९॥
नेक्षेत सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च॥३०॥
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम्।
मद्यविक्रयसन्धानदानादानानि नाचरेत्॥ ३१॥

---

नेति। अङ्गैः अवयवैः विगुणं विरुद्धं न चेष्टेत, उत्कटुकः उत्कटासनस्थितः चिरं न आसीत नावतिष्ठेत्। तथा श्रमात् प्राक् परिश्रमात् पूर्वम् आर्त्तितः पूर्वमित्यर्थः देहवाक्चेतसां शरीरवाङ्मनसां चेष्टाः विनिवर्त्तयेत् यथा क्लान्तिर्न भवेत् तथा शारीरादिव्यापारान् कुर्य्यादिति भावः॥ २७॥

नेति। ऊर्द्धजानुः उत्क्षिप्तजानुकः सन् चिरं बहुक्षणं न तिष्ठेत् तथात्वे आत्मपतनसम्भवादिति भावः नक्तं वातान्दोलितं द्रुमं तथा चत्वरचैत्यं प्राङ्गणस्थितं वनस्पतिविशेषं तथा चतुष्पथेषु ये सुरालयाः देवालयाः तान् न सेवेत न आश्रयेत्॥ २८॥

शून्येति। दिवापि का कथा रात्रौ इति शून्याटवीं शून्यकाननं शून्यगृहाणि श्मशानानि च न, तथा सर्वथा सर्वैः प्रकारैः सम्यगित्यर्थः आदित्यञ्च न ईक्षेत न पश्येत्। किञ्च शिरसा मस्तकेन भारं न वहेत्॥ २९॥

नेक्षेतेति। सततं सूक्ष्मं पदार्थमिति शेषः दीप्तं दीप्तियुक्तं पदार्थम् अमेध्यानि अपवित्राणि अप्रियाणि च द्रव्याणि न ईक्षेत न पश्येत्॥ ३०॥

सन्ध्यास्विति। सन्ध्यासु अभ्यवहारम् आहारं स्त्रीं स्त्रीसङ्गं

अहं सहस्रापराधी किमेकेन भवेन्मम ।
मत्वा नाल्पं चरेद्दोषं बिन्दुना पूर्यते घटः ॥ ३६ ॥
नष्टं दिनानि मे यान्ति कथम्भूतस्य सम्प्रति ।
दुःखभाङ् न भवेदेवं नित्यं सन्निहितस्मृतिः ॥ ३७ ॥
समासव्यासहेत्वादिकृतेच्छार्थं विहाय च ।
स्तुत्यर्थवादान् सन्त्यज्य सारं संगृह्य यत्नतः ॥ ३८ ॥
धर्मतत्त्वं हि गहनमतः सत्सेवितं नरः ।
श्रुतिस्मृतिपुराणानां कर्म कुर्याद् विचक्षणः ॥ ३९ ॥
न शोषयेद् वासयेच्च राजा मित्रं सुतं गुरुम् ।
अधर्मनिरतं स्तेनमाततायिनमप्युत ॥ ४० ॥

---

अहमिति । अहं सहस्रापराधी सहस्रदोषी, मम एकेन दोषेण किं भवेत् इति मत्वा ईषत् अल्पमपि अघं पापं न चरेत् न कर्तुं इच्छेदित्यर्थः यतः बिन्दुना क्रमशः पतितेन इत्यर्थः घटः पूर्यते ॥ ३६ ॥

नष्टमिति । सम्प्रति इदानीं कथम्भूतस्य किंरूपमाचरतः मे मम नष्टं रात्रयः दिनानि च यान्ति गच्छन्तीति भावः, एवं नित्यं सततं सन्निहितस्मृतिः पर्यालोचयन् जनः दुःखभाक् न भवेत् ॥ ३७ ॥

समासेति । धर्मतत्त्वमिति । विचक्षणः नरः श्रुतिस्मृतिपुराणानां समासेन तत्पुरुषकर्मधारयादिरूपपदैक्यकरणेन व्यासेन विभिन्नपदत्वेन हेत्वादिना च कृतम् इच्छार्थं स्वाभिमतपोषणार्थं विहाय त्यक्त्वा स्तुत्यर्थवादान् प्रशंसावादांश्च संत्यज्य यत्नतः सारं संगृह्य च हि यतः धर्मतत्त्वं गहनम् अतिदुर्बोधम् अतः सत्सेवितं तेन धर्मतत्त्वेन समन्वितं कर्म कुर्यात् ॥ ३८ ॥ ३९ ॥

नेति । राजा मित्रं सुतं गुरुमपि अधर्मनिरतं स्तेनं चोरम्

अग्निदो गरदश्चैव शस्त्रोन्मत्तो धनापहः ।
क्षेत्रदारहरश्चैतान् षड्विद्यादाततायिनः ॥ ४१ ॥
नोपेक्षेत स्त्रियं बालं रोगं दासं पशुं धनम् ।
विद्याभ्यासं क्षणमपि सत्सेवां बुद्धिमान् नरः ॥ ४२ ॥
विरुद्धो यत्र नृपतिर्धनिकः श्रोत्रियो भिषक् ।
आचार्यश्च तथा देशो न तत्र दिवसं वसेत् ॥ ४३ ॥
नपुंसकश्च स्त्री बालश्चण्डो मूर्खश्च साहसी ।
यत्राधिकारिणश्चैते न तत्र दिवसं वसेत् ॥ ४४ ॥
अविवेकी यत्र राजा सभ्या यत्र तु पाक्षिकाः ।
सन्मार्गोज्झितविद्वांसः साक्षिणोऽनृतवादिनः ॥ ४५ ॥

---

आततायिनं वधोद्यतम् उत स्वेत् न गोपयेत् न रक्षेत् वासयेत् द्वीपान्तरं प्रेषयेत् ॥ ४० ॥

अग्निद इति । अग्निदः गृहे अग्निदाता, गरदः विषप्रयोक्ता, शस्त्रेण उन्मत्तः मारणोद्यतः, धनापहः मूलधनहारकः क्षेत्रहारी भूमिहरः तथा दारहरः भार्य्याहारी एतान् षट् आततायिनः विद्यात् ॥ ४१ ॥

नेति । बुद्धिमान् नरः स्त्रियं बालं शिशुं रोगं दासं भृत्यं पशुं धनं विद्याभ्यासं तथा सत्सेवां साधुसेवां क्षणमपि न उपेक्षेत ॥ ४२ ॥

विरुद्ध इति । यत्र देशे नृपतिः राजा, धनिकः, श्रोत्रियः वेदज्ञब्राह्मणः, भिषक् वैद्यः तथा आचार्य्यश्च विरुद्धः, तत्र दिवसमपि न वसेत् ॥ ४३ ॥

नपुंसक इति । यत्र नपुंसकः क्लीवः, स्त्री, बालः, चण्डः कोपनः, मूर्खः वा साहसी अविवेकी एते अधिकारिणः स्वामिनः, तत्र दिवसं न वसेत् ॥ ४४ ॥

अविवेकीत्यादि । यत्र राजा अविवेकी अविमृश्यकारी यथेच्छाचारी-

दुरात्मनां च प्राबल्यं स्त्रीणां नीचजनस्य च ।
तत्र नेच्छेद्धर्म मानं वसतिं तत्र जीवितम् ॥ ४६ ॥
माता न पालयेद्‌ बाल्ये पिता साधु न शिक्षयेत् ।
राजा यदि हरेद्‌ वित्तं का तत्र परिदेवना ॥ ४७ ॥
सुसेविताः प्रकुप्यन्ति मित्रस्वजनपार्थिवाः ।
गृहमभ्राग्निनिहतं का तत्र परिदेवना ॥ ४८ ॥
आप्तवाक्यमनादृत्य दर्पेणाचरितं यदि ।
फलितं विपरीतं तत् का तत्र परिदेवना ॥ ४९ ॥
सावधानमना नित्यं राजानं दैवतं गुरुम् ।
अग्निं तपस्विनं धर्मज्ञानवृद्धं सुसेवयेत् ॥ ५० ॥

---

अर्थः यत्र तु सभ्याः राजसभासदः पापिष्ठाः पक्षपातिनः, सन्मार्गेण सदाचारेण वर्जिताः भ्रष्टाः विद्वांसः तथा साक्षिणः असत्यवादिनः मिथ्यावादरताः, यत्र च दुरात्मनां स्त्रीणां तथा नीचजनस्य प्राबल्यं वृद्धिः, तत्र धर्मं मानं वसतिं जीवितञ्च न इच्छेत् ॥ ४५ ॥ ४६ ॥

मातेति । यदि बाल्ये शैशवे माता न पालयेत्, पिता न शिक्षयेत् न विद्यामभ्यासयेत्, तथा राजा वित्तं धनं हरेत्, तत्र परिदेवना विलापः का ? ॥ ४७ ॥

सुसेविता इति । यत्र मित्राणि सुहृदः स्वजनाः बान्धवाः तथा पार्थिवाः राजानः सुसेविता अपि प्रकुप्यन्ति, गृहञ्च अग्निना वज्रेण वा हतं तत्र का परिदेवना ? ॥ ४८ ॥

आप्तवाक्यमिति । यदि आप्तानां विश्वस्तानां हितैषिणां वा वाक्यम् अनादृत्य अवमान्य दर्पेण आचरितं व्यवहृतं विपरीतं यथा तथा फलितं, भवेदिति शेषः तत्र का परिदेवना ? ॥ ४९ ॥

सावधानमना इति । सावधानमनाः सन् राजानं दैवतं गुरुम् अग्निं तपस्विनं धर्मज्ञानवृद्धं धर्मवृद्धं ज्ञानवृद्धञ्च जनं सुसेवयेत् ॥ ५० ॥

मातृपितृगुरुस्वामिभ्रातृपुत्रसखिष्वपि ।
न विरुध्येन्नापकुर्यान्मनसापि क्षणं क्वचित् ॥ ५१ ॥
स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा ।
न कुर्यात् स्त्रीबालवृद्धमूर्खेषु च विवादनम् ॥ ५२ ॥
एकः स्वादु न भुञ्जीत एकः अर्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५३ ॥
नान्यधर्मं हि सेवेत न द्रुह्याद्वै कदाचन ।
हीनकर्मगुणैः स्त्रीभिर्नासीतैकासने क्वचित् ॥ ५४ ॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ।
प्रभवन्ति विघाताय कार्यस्यैते न संशयः ॥ ५५ ॥

---

मात्रेति । मातृपितृगुरुस्वामिभ्रातृपुत्रसखिषु कस्मिन्नपि कदाचिदपि मनसापि का कथा कार्य्येणेति भावः क्षणं न विरुध्येत् न विरोधमाचरेत् नापि अपकुर्य्यात् ॥ ५१ ॥

स्वजनैरिति । स्वजनैः बान्धवैः सह न विरुध्येत न विरोधमाचरेत्, बलीयसा प्रबलेन जनेन न स्पर्द्धेत न स्पर्द्धां कुर्य्यात्, तथा स्त्रीषु बालकेषु मूर्खेषु च विवादनं विवादं न कुर्य्यात् ॥ ५२ ॥

एक इति । एकः एकाकी जनः स्वादु सुस्वादद्रव्यं न भुञ्जीत । एकः अर्थान् कार्य्याणि न चिन्तयेत् । एकः अध्वानं न गच्छेत् । एकः सुप्तेषु जनेषु मध्ये न जागृयात् ॥ ५३ ॥

नेति । अन्यधर्मम् अपरधर्मं न सेवेत नाश्रयेत्, कदाचन न द्रुह्येत् कस्मैचिदपीति शेषः । क्वचित् कुत्रापि स्थाने हीनकर्मगुणैः दुर्जनैरित्यर्थः स्त्रीभिश्च सह एकासने न आसीत नोपविशेत् ॥ ५४ ॥

षड़िति । भूतिं सम्पदम् इच्छता अभिलषता जनेन इह संसारे निद्रा, तन्द्रा प्रसुप्ताङ्गः, भयं, क्रोधः, आलस्यं तथा दीर्घसूत्रता चिर-

उपायज्ञश्च योगज्ञस्तत्त्वज्ञः प्रतिभानवान्।
स्वधर्मनिरतो नित्यं परस्त्रीषु पराङ्मुखः।
वक्तोहवांश्चित्रकथः स्यादकुण्ठितवाक् सदा॥ ५६॥
चिरं संशृणुयान्नित्यं जानीयात् क्षिप्रमेव च।
विज्ञाय प्रभजेदर्थान् न कामं प्रभजेत् क्वचित्॥ ५७॥
क्रयविक्रयातिलिप्सां स्वदैन्यं दर्शयेन्न हि।
कार्य्यं विनान्यगेहे न नाज्ञातः प्रविशेदपि॥ ५८॥
अपृष्टो नैव कथयेद् गृहकृत्यं तु कं प्रति।
बह्वर्थाल्पाक्षरं कुर्य्यात् सल्लापं कार्य्यसाधकम्॥ ५९॥

---

क्रियतां एते षट् दोषाः हातव्याः त्यक्तव्याः। एते दोषाः कार्य्यस्य विघाताय प्रभवन्ति समर्था भवन्ति न संशयः सन्देहो नास्तीत्यर्थः॥ ५५॥

उपायज्ञ इति। उपायज्ञः योगज्ञः कर्म्मकौशली तत्त्वज्ञः सारज्ञः प्रतिभानवान् प्रतिभान्वितः नित्यं स्वधर्म्मनिरतः, परस्त्रीषु पराङ्मुखः वक्ता वाक्पटुः ऊहवान् तर्कनिपुणः सदा चित्रकथः मधुरवाक् तथा अकुण्ठितवाक् स्यात् भवेत्॥ ५६॥

चिरमिति। चिरं बहुकालं साभिनिवेशं यथा तथा इत्यर्थः अर्थान् नित्यं सततं संशृणुयात्, क्षिप्रं शीघ्रमेव जानीयात् बुध्येत, तथा विज्ञाय विशेषेण प्रभजेत् सेवेत, क्वचिदपि कामं न प्रभजेत् कामवशो न भवेदित्यर्थः॥ ५७॥

क्रयेति। क्रयविक्रयेषु अतिलिप्साम् अत्याग्रहं स्वस्य आत्मनः दैन्यं कातरताञ्च न हि दर्शयेत् नैव प्रकाशयेत् तथात्वे स्वस्य लाभहानिसम्भवश्च भवेदिति भावः। किञ्चेति अपिशब्दार्थः कार्य्यं विना न, अज्ञातश्च न अन्यगेहे प्रविशेत्॥ ५८॥

अपृष्ट इति। अपृष्टः सन् कं तु कमपि प्रति गृहकृत्यं नैव

न दर्शयेत् स्वाभिमतमनुभूताद् विना सदा ।
ज्ञात्वा परमतं सम्यक् तेनाज्ञातोत्तरं वदेत् ॥ ६० ॥
दम्पत्योः कलहे साक्ष्यं न कुर्य्यात् पितृपुत्रयोः ।
सुगुप्तः ज्ञातमन्त्रः स्यान्न त्यजेच्छरणागतम् ॥ ६१ ॥
यथाशक्ति चिकीर्षेत कुर्वन् मुह्येन्न नापदि ।
कस्यचिन्न स्पृशेन्मर्म मिथ्यावादं न कस्यचित् ॥ ६२ ॥
नाश्लीलं कीर्त्तयेत् क्वचित् प्रलापं न च कारयेत् ॥६३॥
अस्वर्ग्यं स्वाद्धर्म्यमपि लोकविद्वेषितं तु यत् ।
स्वहेतुभिर्न हन्येत कस्य वाक्यं कदाचन ॥ ६४ ॥

---

कथयेत्, किञ्च बह्वर्थं बहुप्रयोजनं किन्तु अल्पाक्षरं, कार्य्यसाधकं बह्वायं सदालापं कुर्य्यात् ॥ ५९ ॥

नेति । अनुभूतात् तथ्यज्ञानात् विना सदा स्वस्य अभिमतं न दर्शयेत्, तथा परमतं सम्यक्त्वेन सम्यग्मेवेत्यर्थः ज्ञात्वा अज्ञातोत्तरम् अविदितसिद्धान्तञ्च न वदेदिति एकेन नञा उभयत्र सम्बन्धः ॥ ६० ॥

दम्पत्योरिति । दम्पत्योः भार्य्यापत्योः पितृपुत्रयोश्च कलहे साक्ष्यं न कुर्य्यात् । किञ्च सुगुप्तो ज्ञातमन्त्रो येन तथोक्तः कार्य्यमन्त्रगोपकः स्यात् । शरणागतञ्च न त्यजेत् ॥ ६१ ॥

यथाशक्तीति । यथाशक्ति चिकीर्षेत कर्त्तुमिच्छेत् कार्य्यमिति शेषः, कुर्वन् आपदि न मुह्येत् न विचलेत् । कस्यचित् मर्म न स्पृशेत् न पीड़येत्, मिथ्यावादञ्च कस्यचित् न स्पृशेत् न कथयेदित्यर्थः ॥ ६२ ॥

नेति । अश्लीलं इत्यादिकाग्राम्यात्मकं वाक्यं न कीर्त्तयेत्, क्वचित् प्रलापम् अनर्थकं वाक्यञ्च न कारयेत् ॥ ६३ ॥

अस्वर्ग्यमिति । यत् कार्य्यं लोकविद्वेषितं लोकनिन्दितं तत् धर्म्यं धर्मयुक्तमपि अस्वर्ग्यं स्यात्, अतस्तत् न कुर्य्यादिति भावः । कदाचन कस्यापि वाक्यं स्वस्य आत्मनः हेतुभिः न हन्येत ॥ ६४ ॥

प्रविचार्य्योत्तरं देयं सहसा न वदेत् क्वचित् ।
शत्रोरपि गुणा ग्राह्या गुरोस्त्याज्यास्तु दुर्गुणाः ॥ ६५ ॥
उत्कर्षो नैव नित्यः स्यान्नापकर्षस्तथैव च ।
प्राक्कर्मवशतो नित्यं सधनो निर्धनो भवेत् ॥ ६६ ॥
तस्मात् सर्वेषु भूतेषु मैत्रीं नैव च ह्रापयेत् ॥ ६७ ॥
दीर्घदर्शी सदा च स्यात् प्रत्युत्पन्नमतिः क्वचित् ।
साहसी सालसी चैव चिरकारी भवेन्न हि ॥ ६८ ॥
यः सुदुर्निष्फलं कर्म ज्ञात्वा कर्तुं व्यवस्यति ।
द्रागादौ दीर्घदर्शी स्यात् स चिरं सुखमश्नुते ॥ ६९ ॥

---

प्रविचार्य्येति । प्रविचार्य्य प्रकर्षेण विचारं कृत्वा उत्तरं देयं, सहसा क्वचित् न वदेत् । शत्रोः अपि गुणाः ग्राह्याः, गुरोर्दुर्गुणास्तु त्याज्याः न ग्राह्याः इत्यर्थः ॥ ६५ ॥

उत्कर्ष इति । नित्यः सततः उत्कर्षः सुखावस्था तथा अपकर्षः दुःखावस्था च नैव स्यात् । प्राक्कर्मवशतः पूर्वजन्मकर्मवशात् नित्यं सधनः निर्धनश्च भवेत् ॥ ६६ ॥

तस्मादिति । तस्मात् सततसमावस्थाविरहात् सर्वेषु भूतेषु प्राणिषु मैत्रीं सद्भावं नैव ह्रापयेत् नैव त्यजेत्, सर्वेषु सन्तुष्टेषु नितरां क्लेशो न भवतीति भावः ॥ ६७ ॥

दीर्घदर्शीति । सदा दीर्घदर्शी विलम्ब्यकारी प्रत्युत्पन्नमतिः उपस्थितबुद्धिश्च स्यात्, क्वचिदपि साहसी अविमृश्यकारी सालसी आलस्यपरतन्त्रः चिरकारी दीर्घसूत्रश्च न हि भवेत् ॥ ६८ ॥

य इति । यः सुदुर्निष्फलम् अतिविफलम् अशक्यसाधनमित्यर्थः कर्म ज्ञात्वा कर्तुं व्यवस्यति चेष्टते स आदौ द्राक् झटिति दीर्घदर्शी सुविविच्यकारी स्यात् तदा सः चिरं सुखम् अश्नुते प्राप्नोति तेन कर्मणेति भावः ॥ ६९ ॥

प्रत्युत्पन्नमतिः प्राप्तां क्रियां कर्तुं व्यवस्यति ।
सिद्धिः सांशयिकी तत्र चापल्यात् कार्यगौरवात् ॥७०॥
यतते नैव कालेऽपि क्रियां कर्तुं च सालसः ।
न सिद्धिस्तस्य कुत्रापि स नश्यति च सान्वयः ॥ ७१ ॥
क्रियाफलमविज्ञाय यतते साहसी च सः ।
दुःखभागी भवत्येव क्रियया तत्फलेन वा ॥ ७२ ॥
महत्कालेनाल्पकर्म चिरकारी करोति च ।
स शोचत्यल्पफलतो दीर्घदर्शी भवेदतः ॥ ७३ ॥
सुफलं तु भवेत् कर्म कदाचित् सहसा कृतम् ।
निष्फलं वापि प्रभवेत् कदाचित् सुविचारितम् ॥ ७४ ॥

---

प्रत्युत्पन्नमतिरिति । यः प्रत्युत्पन्नमतिः प्राप्ताम् उपस्थितां क्रियां कर्तुम् सहसैवेति भावः व्यवस्यति चेष्टते, तत्र क्रियायां चापल्यात् कार्यगौरवात् कार्यस्य गुरुत्वाच्च सिद्धिः सांशयिकी भवेत् कार्यसिद्धिर्भवति न वेति संशयः स्यादिति निष्कर्षः ॥ ७० ॥

यतते इति । यः सालसः आलस्ययुक्तः कालेऽपि क्रियां कर्तुं नैव यतते, कुत्रापि तस्य न सिद्धिर्भवति, सः सान्वयः सवंशः नश्यति च ॥ ७१ ॥

क्रियेति । यः क्रियाफलम् अविज्ञाय यतते चेष्टते, स साहसी अविवेकी क्रियया कर्मणा तत्फलेन वा दुःखभागी भवत्येव ॥ ७२ ॥

महदिति । यः चिरकारी दीर्घसूत्रः महत्कालेन बहुता कालेन आर्षोऽयं प्रयोगः । अल्पकर्म यत् किञ्चित् कार्यं करोति सः अल्पफलतः कार्यस्य अल्पफलात् शोचति अनुतपति अतः अस्मात् कारणात् दीर्घदर्शी विविच्यकारी भवेत् ॥ ७३ ॥

सुफलमिति । सहसा कृतं कर्म कदाचित् सुफलं भवेत्, सुविचारितम् कर्म कदाचित् निष्फलं प्रभवेत् न तु सर्वदेति भावः ॥ ७४ ।

तथापि नैव कुर्वीत सहसानर्थकारि तत् ।
कदाचिदपि सञ्जातमकार्य्यादिष्टसाधनम् ॥ ७५ ॥
यदनिष्टं तु सत्कार्य्यात्तदकार्य्यप्रेरकं हि तत् ॥ ७६ ॥
भृत्यो भ्रातापि वा पुत्रः पत्नी कुर्य्यान्न चैव यत् ।
विधास्यन्ति च मित्राणि तत् कार्य्यमविशङ्कितम् ॥ ७७ ॥
यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः ।
मित्रार्थं योजयत्येनं तस्य सोऽर्थोऽवसीदति ॥ ७८ ॥
न हि मानसिको धर्मः कस्यचिज्जायतेऽञ्जसा ।
अतो यतेत तत्प्राप्त्यै मित्रलब्धिर्वरा नृणाम् ॥ ७९ ॥

---

तथापीति । तथापि कदाचित् साफल्येऽपि सहसा कार्य्यं नैव कुर्वीत, तत् सहसाकरणम् अनर्थकारि अनिष्टजनकम् । कदाचिदपि, अकार्य्यात् इष्टसाधनं सञ्जातं दृश्यते इति विविच्य अकार्य्यं न कर्त्तव्यमिति भावः ॥ ७५ ॥

यदिति । सत्कार्य्यात् यत् अनिष्टं जायते इति शेषः तत् च अकार्य्यप्रेरकम् अकार्य्यसाधकं हि काकतालीयवत् तत्पतनादिति भावः ॥ ७६ ॥

भृत्य इति । भृत्यः भ्राता पुत्रः पत्नी वा यत् कार्य्यं नैव कुर्य्यात् नैव करोति किन्तु मित्राणि तत् कार्य्यम् अविशङ्कितं निःशङ्कं यथा तथा विधास्यन्ति करिष्यन्ति कार्य्यम् । मित्रोत्कर्षार्थमिदमिति बोध्यम् ॥ ७७ ॥

य इति । यः मन्दधीः मूढमतिः याथातथ्येन मित्रम् अविज्ञाय मित्रस्य अभिप्रायमबुद्ध्वेत्यर्थः मित्रार्थे एवम् अर्थं कार्य्यं योजयति घटयति तस्य सः अर्थः अवसीदति नश्यति, अभिप्रायमज्ञात्वा कस्यापि कार्य्ये न यतितव्यमिति भावः ॥ ७८ ॥

न हीति । कस्यचित् जनस्य मानसिकः धर्मः अञ्जसा तत्त्वतः नहि जायते, केवलं मित्रस्य जायते इत्याशयेनाह अत इति । अतः

नात्यन्तं विश्वसेत् कश्चिद् विश्वस्तमपि सर्वदा।
पुत्रं वा भ्रातरं भार्याममात्यमधिकारिणम् ॥ ८० ॥
धनस्त्रीराज्यलोभो हि सर्वेषामधिको यतः।
प्रामाणिकञ्चानुभूतमाप्तं सर्वत्र विश्वसेत् ॥ ८१ ॥
विश्वसित्वात्मवद् गूढ़स्तत्कार्यं विमृशेत् स्वयम्।
तद्वाक्यं तर्कतोऽनर्थं विपरीतं न चिन्तयेत् ॥ ८२ ॥
चतुःषष्टितमांशं तन्नाशितं क्षमयेदथ।
स्वधर्मनीतिबलवांस्तेन मैत्रीं प्रधारयेत् ॥ ८३ ॥
दानैर्मानैश्च सत्कारैः सुपूज्यान् पूजयेत् सदा ॥ ८४ ॥

---

तस्य मित्रस्य प्राप्तौ प्राप्तिनिमित्तं यतेत, यतः क्षयां मानवानां मित्रलब्धिः मित्रलाभः परा श्रेष्ठा धन्यलाभेभ्य इति शेषः ॥ ७६ ॥

नेति। विश्वस्तमपि कञ्चित् जनं किं बहुना पुत्रं भ्रातरं भार्य्याम् अमात्यम् अधिकारिणं कर्मचारिणमपि सर्वदा अत्यन्तं न विश्वसेत् ॥ ८० ॥

धनेति। यतः यस्मात् सर्वेषां जनानां धनस्त्रीराज्येषु लोभः हि निश्चयेन अधिकः प्रबलः, अतः सर्वत्र प्रामाणिकं विश्वस्तत्वेन प्रमाणसिद्धम् अनुभूतं सुपरिचितम् आप्तं हितैषिणं जनं विश्वसेत् ॥ ८१ ॥

विश्वसित्वेति। आत्मवत् आत्मानमिव विश्वसित्वा गूढ़ः सन् स्वयं तत्कार्य्यं विमृशेत् विविच्य पश्येत्, तद्वाक्यं तस्य विश्वस्तस्य वाक्यञ्च तर्कतः तर्केण अनर्थविपरीतम् अनर्थेन विरुद्धं यथा तथा न चिन्तयेत् ॥ ८२ ॥

चतुःषष्टीति। यदि स्वधर्मनीतिषु बलवान् भवेदिति शेषः तदा तेन विश्वस्तेन नाशितं स्वीकृतं चतुःषष्टितमांशं कार्य्यस्य चतुःषष्टिभागैकभागं क्षमयेत् न गणयेदित्यर्थः। तेन मैत्रीञ्च प्रधारयेत् रक्षेत् ॥ ८३ ॥

दानैरिति। दानैः मानैः सत्कारैः सेवाभिश्च सुपूज्यान् सदा पूजयेत् ॥ ८४ ॥

कदापि नोग्रदण्डः स्यात् कटुभाषणतत्परः ।
भार्या पुत्त्रोऽप्युद्विजते कटुवाक्यात् प्रदण्डतः ॥ ८५ ॥
पशवोऽपि वशं यान्ति दानैश्च मृदुभाषणैः ॥ ८६ ॥
न विद्यया न शौर्येण धनेनाभिजनेन च ।
न बलेन प्रमत्तः स्याच्चातिमानी कदाचन ॥ ८७ ॥
नाप्तोपदेशं संवेत्ति विद्यामत्तः स्वहेतुभिः ।
अनर्थमप्यभिप्रेतं मन्यते परमार्थवत् ॥ ८८ ॥
महाजनैर्धृतः पन्था येन सन्त्यज्यते बलात् ।
शौर्यमत्तस्तु सहसा युद्धं कृत्वा जहात्यसून् ।
व्यूहादियुद्धकौशल्यं तिरस्कृत्य च शस्त्रवान् ॥ ८९ ॥

---

कदापीति । कदापि उग्रदण्डः तीक्ष्णदण्डः कटुभाषणतत्परश्च न स्यात् । कटुवाक्यात् प्रदण्डतः तीक्ष्णदण्डाच्च भार्या पुत्त्रोऽपि किमन्ये इति भावः उद्विजते विरज्यते ॥ ८५ ॥

पशव इति । पशवः अपि दानैः ग्रासादिप्रदानैः मृदुभाषणैश्च वशं यान्ति वशीभूता भवन्ति ॥ ८६ ॥

नेति । विद्यया न, शौर्येण न, धनेन न, अभिजनेन अन्वयेन न, बलेन च न प्रमत्तः अतिमानी च कदाचन स्यात् ॥ ८७ ॥

नेति । विद्यया मत्तः उद्धतः जनः स्वहेतुभिः निजतर्कैः आप्तस्य विश्वस्तस्य गुरुजनस्य उपदेशं न संवेत्ति नावबुध्यते । अनर्थमपि अभिप्रेतं स्वाभिमतं परमार्थवत् परमार्थतुल्यं मन्यते ॥ ८८ ॥

महाजनैरिति । येन महाजनैः साधुभिः धृतः सेवितः पन्थाः आचारः बलात् बलमाश्रित्य त्यज्यते सः, तथा शौर्य्येण बलेन मत्तः व्यूहादियुद्धेषु कौशल्यं नैपुण्यं तिरस्कृत्य अगणयित्वा शस्त्रवान् शस्त्रधारी जनः सहसा युद्धं कृत्वा असून् प्राणान् जहाति त्यजति ॥८९॥

श्रीमत्तः पुरुषो वेत्ति न दुष्कीर्तिमजो यथा ।
स्वमूत्रगन्धं मूत्रेण मुखमासिञ्चते स्वकम् ॥ ९० ॥
तथाभिजनमत्तस्तु सर्वानेवावमन्यते ।
श्रेष्ठानपीतरान् सम्यगकार्य्ये कुरुते मतिम् ॥ ९१ ॥
बलमत्तस्तु सहसा युद्धे विदधते मनः ।
बलेन बाधते सर्वान् पश्वादीनपि ह्यन्यथा ॥ ९२ ॥
मानमत्तो मन्यते स्वं तृणवच्चाखिलं जगत् ।
अनर्होऽपि च सर्वेभ्यस्त्वत्युच्चासनमिच्छति ॥ ९३ ॥
मदा एतेऽवलिप्तानां सतामेते दमाः स्मृताः ॥ ९४ ॥
विद्यायाश्च फलं ज्ञानं विनयश्च फलं श्रियः ।

---

श्रीमत्त इति । श्रीमत्तः ऐश्वर्य्यमत्तः पुरुषः अजः छागः स्वस्य मूत्रगन्धं यथा दुष्कीर्त्तिम् अख्यातिं न वेत्ति न जानाति प्रत्युत मूत्रेण आत्मन अकीर्त्त्या स्वकं निजं मुखम् आसिञ्चते विलिम्पति अन्यत्र अयशः प्रथयति ॥ ९० ॥

तथेति । तथा अभिजनेन कौलीन्येन मत्तः जनः सर्वानपि श्रेष्ठान् गुरून् इतरान् अन्यांश्च अवमन्यते; अकार्य्ये सम्यक् मतिं कुरुते च ॥ ९१ ॥

बलमत्त इति । बलेन मत्तस्तु जनः सहसा युद्धे मनः विदधते, तथा सर्वदा पश्वादीनपि सर्वान् बलेन बाधते पीडयति ॥ ९२ ॥

मानमत्त इति । मानेन अभिमानेन गर्वेणेत्यर्थः मत्तः जनः अखिलं समग्रं जगत् तृणवत् मन्यते स्वं, तथा अनर्होऽपि अयोग्योऽपि सर्वेभ्यः जनेभ्यः अत्युच्चासनम् अतिश्रेष्ठासनम् इच्छति ॥ ९३ ॥

मदा इति । अवलिप्तानां गर्वितानाम् एते मानादयः मदाः मत्तताजनकाः, सतां साधूनाम् एते मानादयः दमाः विनयजनकाः स्मृता उक्ताः ॥ ९४ ॥

विद्याया इति । विद्यायाः फलं ज्ञानं विनयश्च, श्रियः सम्पदः

यशःदानि बलफलं सद्भ्रुणमुदाहृतम् ॥ ९५ ॥
ज्ञामिताः प्रत्नवः शौर्यफलं च करदीकृताः।
शमो दमश्चार्जवं चाभिजनस्य फलं त्विदम्।
मानस्य तु फलं चैतत् सर्वे स्वसदृशा इति ॥ ९६ ॥
सुविद्यामन्त्रभैषज्यश्लोरत्नं दुष्कुलादपि।
गृह्णीयात् सुप्रयत्नेन मानमुत्सृज्य साधकः ॥ ९७ ॥
उपेक्षेत प्रनष्टं यत् प्राप्तं यत् तदुपाहरेत्।
न बालं न स्त्रियं चातिलालयेत् ताडयेन्न च।
विद्याभ्यासे गृहकृत्ये तावुभौ योजयेत् क्रमात् ॥ ९८ ॥
परद्रव्यं क्षुद्रमपि नादत्तं संहरेदपि।
नोच्चारयेदघं कस्य स्त्रियं नैव च दूषयेत् ॥ ९९ ॥

---

फलं यशः दानस्य, बलस्य फलं सतां साधूनां रक्षणम् उदाहृतं कथितम् ॥ ९५ ॥

नामिता इति। शौर्यस्य फलं प्रत्नवः नामिताः करदीकृताश्च। अभिजनस्य च फलमिदं शमः, शान्तिः दमः विनयः, आर्जवञ्च मानस्य च एतत् फलं यथा सर्वे अस्य सदृशा इति ॥ ९६ ॥

सुविद्येति। साधकः कार्य्यार्थी जनः मानम् उत्सृज्य त्यक्त्वा दुष्कुलादपि सुविद्यां मन्त्रं भेषजम् औषधं स्त्रीरत्नञ्च सुप्रयत्नेन गृह्णीयात् आहरेत् ॥ ९७ ॥

उपेक्षेतेति। यत् द्रव्यं प्रनष्टं तत् उपेक्षेत, यत् प्राप्तं तत् उपाहरेत् गृह्णीयात्। किञ्च बालं शिशुं न स्त्रियञ्च न अतिलालयेत् सर्व्वेत्, न च अतिताडयेत्, विद्याभ्यासे गृहकृत्ये च तौ उभौ क्रमात् योजयेत् नियुञ्ज्यात् ॥ ९८ ॥

परद्रव्यमिति। क्षुद्रम् अल्पमपि परद्रव्यम् अदत्तं न संहरेत् न गृह्णीयात्, कस्यापि अघं अल्पमपि अघं पापं न उच्चारयेत् न कीर्त्तयेत् तथा स्त्रियमपि नैव दूषयेत् ॥ ९९ ॥

न ब्रूयादनृतं साक्ष्यं कृतं साक्ष्यं न लोपयेत् ।
प्राणात्यये ऽनृतं ब्रूयात् सुमहत्कार्यसाधने ॥ १०० ॥
कन्यादाने तु प्रथमं दत्त्वे प्रथमं नरम् ।
गुप्तं जिघांसवे नैव विज्ञातमपि दर्शयेत् ॥ १०१ ॥
जायापत्योश्च पित्रोश्च भ्रात्रोश्च स्वामिभृत्ययोः ।
भगिन्योर्मित्रयोर्भेदं न कुर्याद्गुरुशिष्ययोः ॥ १०२ ॥
न मध्यात् गमनं भाषाभाषिणोः स्थितयोरपि ।
सुहृदं भ्रातरं बन्धुमुपचर्यात् सदात्मवत् ॥ १०३ ॥
गृहागतं क्षुद्रमपि यथार्हं पूजयेत् सदा ।
तदीयकुशलप्रश्नैः शक्त्या दानैर्जलादिभिः ॥ १०४ ॥
सपुत्रस्तु गृहे कन्यां सपुत्रां वासयेन्न हि ।

---

नेति । अनृतं मिथ्यासाक्ष्यं न ब्रूयात्, कृतं दत्तञ्च साक्ष्यं न लोपयेत् नाश्रयेत् । प्राणात्यये तथा सुमहत्कार्य्यसाधनेऽपि अनृतं ब्रूयादिति अनृतवचनप्रतिप्रसवोऽयम् ॥ १०० ॥

कन्यादाने इति । कन्यादाने प्रथमं निर्धनं वरं जामातरमेव अभिप्रेतमित्यर्थः, दत्त्वे प्रथमं वरं तथा जिघांसवे हन्तुमिच्छवे जनाय गुप्तं जनं विज्ञातमपि न दर्शयेत् ॥ १०१ ॥

जायापत्योरिति । नेति । जायापत्योः दम्पत्योः पित्रोः मातापित्रोः भ्रात्रोः स्वामिभृत्ययोः भगिन्योः मित्रयोश्च भेदं मनोभङ्गं न कुर्यात् । तथा भाषाभाषिणोः परस्परं कथोपकथनं कुर्वतोः स्थितयोः द्वयोः मध्यात् गमनञ्च न कुर्यात् । किञ्च सुहृदं भ्रातरं बन्धुं स्वजनं सदा आत्मवत् उपचर्यात् व्यवहरेत् ॥ १०२ ॥ १०३ ॥

गृहागतमिति । गृहागतं क्षुद्रमपि नीचमपि जनं सदा यथार्हं यथायोग्यं तदीयकुशलप्रश्नैः शक्त्या यथाशक्ति जलादिभिः दानैश्च पूजयेत् ॥ १०४ ॥

सपुत्र इति । सपुत्रः पुत्रवान् जनः गृहे सपुत्रां पुत्रवतीं कन्यां

स्वभर्तृकां च भगिनीमनाथे ते तु पालयेत् ॥ १०५ ॥
सर्पोऽग्निर्दुर्जनो राजा जामाता भगिनीसुतः ।
रोगः शत्रुर्नावमान्योऽप्यल्प इत्युपचारितः ॥ १०६ ॥
क्रौर्यात् तैक्ष्ण्याद् दुःस्वभावात् स्वामित्वात् पुत्रिकाभयात
स्वपूर्वजपिण्डदत्वाद् हृद्विभीभ्यामुपाचरेत् ॥ १०७ ॥
ऋणशेषं रोगशेषं शत्रुशेषं न रक्षयेत् ।
याचकाद्यैः प्रार्थितः सन् तीक्ष्णं चोत्तरं वदेत् ।
तत्कार्य्यं तु समर्थश्चेत् कुर्य्याद् वा कारयीत च ॥१०८
दातॄणां धार्मिकाणां च शूराणां कीर्त्तनं सदा ।
शृणुयात् तु प्रयत्नेन तच्छिद्रं नैव लक्षयेत् ॥ १०९ ॥

---

स्वभर्तृकां भगिनीञ्च न हि वासयेत् सर्वदा कलहसम्भवादिति भावः । ते कन्याभगिन्यौ अनाथे अवान्धवे तु पालयेत् रक्षेत् ॥ १०५ ॥

सर्प इति । सर्पः, अग्निः, दुर्जनः, राजा, जामाता, भगिनीसुतः रोगः, शत्रुश्च अल्पः लघुः बालको वा उपचारितः अवमान्य इति भावमान्यः ॥ १०६ ॥

क्रौर्य्यादिति । क्रौर्य्यात् हेतोः सर्पं, तैक्ष्ण्यात् दाहकत्वात् अग्निं, दुःस्वभावात् दुर्जनं, स्वामित्वात् राजानं, पुत्रिकाभयात् कन्यायाः क्लेशभयात्, जामातरं, स्वस्य पूर्वजेभ्यः पित्रादिभ्यः पिण्डदत्वात् भगिनीसुतं हृदः रोगं भियाः शत्रुञ्च उपाचरेत् सेवेत ॥ १०७ ॥

ऋणशेषमिति । ऋणशेषं रोगशेषं तथा शत्रुशेषं न रक्षयेत् । किञ्च याचकाद्यैः भिक्षुप्रभृतिभिः प्रार्थितः सन् तीक्ष्णं कर्कशम् उत्तरं न वदेत् । समर्थः सन् चेत् तत्कार्य्यं याचककार्य्यं कुर्य्याद् वा कारयीत च कारयीत इति आर्षोऽयं प्रयोगः कारयेद् वा ॥ १०८ ॥

दातॄणामिति । सदा दातॄणां धार्मिकाणां शूराणाञ्च कीर्त्तनं प्रयत्नेन शृणुयात् तेषां छिद्रं दोषन्तु न लक्षयेत् ॥ १०९ ॥

काले हितमिताहारविहारी विघसाशनः ।
अदीनात्मा च सुस्वप्नः शुचिः स्यात् सर्वदा नरः ॥११०॥
कुर्याद् विहारमाहारं निर्हारं विजने सदा ।
व्यवसायी सदा च स्यात् सुखं व्यायाममभ्यसेत् ॥१११॥
अन्नं न निन्द्यात् सुस्वस्थः स्वीकुर्यात् प्रीतिभोजनम् ।
आहारं प्रवरं विद्यात् षड्रसं मधुरोत्तरम् ॥ ११२ ॥
विहारं चैव स्वस्त्रीभिर्वेश्याभिर्न कदाचन ।
नियुद्धं कुशलैः सार्धं व्यायामं नतिभिर्वरम् ॥ ११३ ॥

---

काले इति । नरः काले यथासमये हितः पथ्यः मितः परिमितः आहारः विहारश्च विद्यते यस्येति तथाभूतः, विघसाशनः देवादिनिवेदितान्नभोजी अदीनात्मा अकातरस्वभावः सुस्वप्नः सुनिद्रः सर्वदा शुचिश्च स्यात् ॥ ११० ॥

कुर्यादिति । सदा सर्वस्मिन् समये विजने निर्जने विहारं स्त्रीसम्भोगम् आहारं निर्हारं मलमूत्रादित्यागञ्च कुर्यात् । सदा व्यवसायी उद्योगी स्यात् सुखं यथा तथा व्यायामम् अभ्यसेच्च ॥ १११ ॥

अन्नमिति । अन्नं न निन्द्यात् न कुत्सयेत् । सुस्वस्थः सन् प्रीतिभोजनं प्रणयभोजनं निमन्त्रणाहारमित्यर्थः स्वीकुर्यात् गृह्णीयात् तादृशाहारस्य गुरुत्वादिति भावः । षड्रसं षट् तिक्तकटुलवणाम्लकषायमधुराः रसाः यस्मिन् तादृशं मधुरोत्तरं मधुररसभूयिष्ठम् आहारं प्रवरं श्रेष्ठं विद्यात् ॥ ११२ ॥

विहारमिति । स्वस्त्रीभिः स्वकीयाभिः स्त्रीभिश्च विहारं कुर्यादिति अध्याहार्य्यम् । वेश्याभिः कदाचन न । किञ्च कुशलैः निपुणैः जनैः सार्द्धं सह नतिभिः प्रणतिभिः वरं श्रेष्ठं व्यायामरूपं नियुद्धं बाहुयुद्धविशेषञ्च कुर्यादिति शेषः ॥ ११२ ॥

छित्वा प्राक्पश्चिमौ यामौ निशि स्वापो वरो मतः ।
हीनान्धपङ्गुबधिरा नोपहास्याः कदाचन ॥ ११४ ॥
नाकार्य्ये तु मतिं कुर्याद् द्राक् स्वकार्य्यं प्रसाधयेत् ।
उद्योगेन बलेनैव बुद्ध्या धैर्य्येण साहसात् ।
पराक्रमेणार्जवेन मानमुत्सृज्य साधकः ॥ ११५ ॥
यदि सिध्यति येनार्थः कलहेन वरस्तु सः ।
अन्यथायुर्धनसुहृद्यशःसुखहरः स्मृतः ॥ ११६ ॥
नानिष्टं प्रवदेत् कस्मिन् न छिद्रं कस्य लक्षयेत् ।
आज्ञाभङ्गस्तु महतां राज्ञः कार्यो न वै क्वचित् ॥११७॥

---

छित्वेति । प्राक्पश्चिमौ प्रथमशेषौ यामौ प्रहरौ छित्वा मध्यमप्रहरद्वयं यावदित्यर्थः निशि रात्रौ स्वापः निद्राः वरः श्रेष्ठः मतः कथितः । हीनाः दरिद्राः अन्धाः पङ्गवः पदद्वयहीनाः बधिराः श्रोत्रेन्द्रियहीनाश्च कदाचन न उपहास्याः ॥ ११४ ॥

नाकार्य्ये इति । अकार्य्ये मतिं न कुर्य्यात् । किन्तु साधकः कार्य्यार्थी मानमुत्सृज्य त्यक्त्वा उद्‌योगेन बलेन बुद्ध्या धैर्य्येण पराक्रमेण आर्जवेन सारल्येन वा साहसात् साहसम् अवलम्ब्येत्यर्थः द्राक् झटिति स्वकार्य्यं प्रसाधयेत् ॥ ११५ ॥

यदीति । यदि येन कलहेन अर्थः सिध्यति सः कलहः वरः श्रेष्ठः अभिमतः कार्य्यसिद्धिकरत्वादिति भावः अन्यथा कार्य्यासिद्धौ कलहः जीवनक्षयकरः धनहरः सुहृद्विच्छेदकरः यशःक्षयकरः सुखहरश्च स्मृतः ॥ ११६ ॥

नानिष्टमिति । कस्मिन् अपि जने अनिष्टं दुर्व्वचनं न प्रवदेत् तथा कस्य अपि छिद्रं दोषं न लक्षयेत् । महतां जनानां विशेषतः राज्ञः आज्ञाभङ्गः क्वचित् कदाचिदपि न वै नैव कार्य्यः ॥ ११७ ॥

असत्कार्यनियोक्तारं गुरुं वापि प्रबोधयेत् ।
नातिक्रामेदपि लघुं क्वचित् सत्कार्यबोधकम् ॥११८॥
ज्ञात्वा स्वतन्त्रां तरुणीं स्त्रियं गच्छेन्न वै क्वचित् ।
स्त्रियो मूलमनर्थस्य तरुण्यः किं परैः सह ॥ ११९ ॥
न प्रमाद्येन्मदद्रव्यैर्न विमुह्येत् कुसन्ततौ ॥ १२० ॥
साध्वी भार्या पितृपत्नी माता बाला पिता स्नुषा ।
अभर्तृकानपत्या या साध्वी कन्या स्वसापि च ॥१२१॥
मातुलानी भ्रातृभार्या पितृमातृस्वसा तथा ।
मातामहोऽनपत्यश्च गुरुश्वशुरमातुलाः ॥ १२२ ॥
बालोऽपिता च दौहित्रो भ्राता च भगिनीसुतः ।
एतेऽवश्यं पालनीयाः प्रयत्नेन स्वशक्तितः ॥ १२३ ॥

---

असदिति । असति कुत्सिते कार्य्ये नियोक्तारं गुरुमपि प्रबोधयेत् तथा क्वचित् कदाचिदपि लघुं क्षुद्रं जनमपि सत्कार्य्यबोधकं सदुपदेशकं न अतिक्रामेत् ॥ ११८ ॥

ज्ञात्वेति । तरुणीं युवतीं स्त्रियं भार्य्यां स्वतन्त्रां स्वाधीनाम् अरक्षितामित्यर्थः ज्ञात्वा क्वचिदपि न वै नैव गच्छेत्, स्त्रियः अनर्थस्य मूलं कारणं परैः परपुरुषैः सह वर्त्तमाना इति शेषः तरुण्यः किम्? तादृश्यस्तरुण्यः अनर्थमूलमिति किं वक्तव्यमित्यर्थः ॥ ११९ ॥

नेति । मदद्रव्यैः मादकैर्द्रव्यैरैश्वर्य्यैरित्यर्थः न प्रमाद्येत् तथा कुसन्ततौ कुत्सिते सन्ताने कुपुत्रे इत्यर्थः न विमुह्येत् पुत्र इति ममतां न कुर्य्यादित्यर्थः ॥ १२० ॥

साध्वीत्यादि । साध्वी सुशीला भार्य्या, पितृपत्नी विमाता माता जननी, बाला अविवाहिता कन्या, पिता, स्नुषा पुत्रवधूः, अभर्तृका अनपत्या अपुत्रा साध्वी कन्या, स्वसा च भगिनी, मातुलानी, भ्रातृभार्य्या, पितुःस्वसा, मातुःस्वसाः, अनपत्यः मातामहः, गुरुः, श्वशुरः,

अविभवेऽपि विभवे पितृमातृकुलं सुहृत्।
पत्न्याः कुलं दासदासीभृत्यवर्गांश्च पोषयेत् ॥ १२४ ॥
विकलाङ्गान् प्रव्रजितान् दीनानाथांश्च पालयेत् ॥१२५॥
कुटुम्बभरणार्थेषु यत्नवान् न भवेच्च यः।
तस्य सर्वगुणैः किन्तु जीवन्नेव मृतश्च सः ॥ १२६ ॥
न कुटुम्बं भृतं येन नार्जिताः शत्रवोऽपि न।
ग्रामं संरक्षितं नैव तस्य किं जीवितेन वै ? ॥ १२७ ॥
स्त्रीभिर्जितो ऋणी नित्यं सुदरिद्रोश्च याचकः।
गुणहीनोऽर्थहीनः सन् मृता एते सजीवकाः ॥ १२८ ॥

---

मातुलः, अपिता पितृहीनः बालकः दौहित्रः, भ्राता, भगिनीसुतश्च एते प्रयत्नेन आश्रिताः निजधनानुसारेण अवश्यं पालनीयाः रक्षणीयाः ॥ १२१ ॥ १२२ ॥ १२३ ॥

अविभवे इति। अविभवे असम्पदि विभवे सम्पदि वा सुहृत् सद्भावसम्पन्नं पितृमातृकुलं पत्न्याः कुलं श्वशुरकुलमित्यर्थः तथा दासदासीभृत्यवर्गांश्च पोषयेत् ॥ १२४ ॥

विकलाङ्गानिति। विकलाङ्गान् काणखञ्जादीन् प्रव्रजितान् सन्न्यासिनः दीनान् दरिद्रान् अनाथांश्च पालयेत् ॥ १२५ ॥

कुटुम्बेति। यः कुटुम्बानां पोषणार्थं भरणार्थेषु भरणविषयेषु यत्नवान् न भवेत् तस्य सर्वैः गुणैः विद्यादिभिः किम्? स तु जीवन्नेव मृतश्च ॥ १२६ ॥

नेति। येन कुटुम्बं न भृतं न पालितं शत्रवः रिपवश्च न मार्जिताः, तथा ग्रामं यस्तु नैव संरक्षितं अपथ्यकर्तृहिंसा रक्षितमित्यर्थः, तस्य जीवितेन किम्? ॥ १२७ ॥

स्त्रीभिरिति। स्त्रीभिः जितः वशीकृतः स्त्रैण इत्यर्थः, नित्य

आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ।
दानमानापमानं च नवैतानि सुगोपयेत् ॥ १२९ ॥
देशाटनं राजसभावेशनं शास्त्रचिन्तनम् ।
वेश्यादिदर्शनं विद्वन्मैत्रीं कुर्यादतन्द्रितः ॥ १३० ॥
अनेकाश्च तथा धर्माः पदार्थाः पशवो नराः ।
देशाटनात् स्वानुभूताः प्रभवन्ति च पर्वताः ॥ १३१ ॥
कीदृशा राजपुरुषा न्यायान्यायं च कीदृशम् ।
मिथ्याविवादिनः के च के वै सत्यविवादिनः ॥१३२॥
कीदृशो व्यवहारस्य प्रवृत्तिः शास्त्रलोकतः ।
सभागमनशीलस्य तद्विज्ञानं प्रजायते ॥ १३३ ॥

---

ऋणी दरिद्रः याचकः गुणहीनः अर्थहीनश्च एते जनाः सजीवका जीवन्तोऽपि मृताः ॥ १२८ ॥

आयुरिति । आयुर्जीवनकालं, वित्तं धनं, गृहच्छिद्रं, मन्त्रं, मैथुनं, औषधं, दानं, मानं, अपमानञ्च एतानि नव सुगोपयेत् न प्रकाशयेदित्यर्थः ॥ १२९ ॥

देशाटनमिति । अतन्द्रितः अनलसः सन् देशाटनं देशपर्य्यटनं, राजसभासु वेशनं प्रवेशनं, शास्त्रचिन्तनं शास्त्राणां बहूनां चिन्तनं, वेश्यादीनां दर्शनं तथा विद्वद्भिः मैत्रीं प्रणयं कुर्य्यात् ॥ १३० ॥

देशाटनफलमाह अनेका इति । देशाटनात् अनेके बहवः धर्माः सम्प्रदायानां बाहुल्यादिति भावः पदार्थाः वस्तूनि, पशवः, नराः, पर्वताश्च स्वानुभूताः स्वस्य अनुभवविषयाः सम्यक् विदिता इत्यर्थः प्रभवन्ति ॥ १३१ ॥

सभागमनफलमाह कीदृशा इत्यादि । सभागमनशीलस्य राजसभा-प्रविष्टस्य जनस्य राजपुरुषाः कीदृशाः, न्यायान्यायं विचाराविचारयोः कीदृशं, के जनाः मिथ्याविवादिनः, के च सत्यविवादिनः, शास्त्रतः

नाहङ्कारी च धर्मात्मा शास्त्राणां तत्त्वचिन्तनैः।
एकं शास्त्रमधीयानो न विन्द्यात् कार्यनिर्णयम् ॥१२४॥
स्याद् बह्वागमसन्दर्शी व्यवहारो महानतः।
बुद्धिमानभ्यसेन्नित्यं बहुशास्त्राण्यतन्द्रितः ॥ १२५ ॥
तदर्थं तु गृहीत्वापि तदधीना न जायते।
वेश्या तथाविधा वापि वशीकर्तुं नरं क्षमा।
नेयात् कस्य वशं तद्वत् स्वाधीनं कारयेज्जगत् ॥१२६॥
श्रुतिस्मृतिपुराणानामर्थविज्ञानमेव च।
सहवासात् पण्डितानां बुद्धिः पक्वा प्रजायते ॥ १२७ ॥

---

शास्त्रानुसारेण लोकतः लौकिकाचाराच्च व्यवहारस्य ऋणादानादिरूपस्य विवादविषयस्य प्रवृत्तिः निष्पत्तिश्च लोकेषु इत्येतत् विज्ञानं प्रजायते ॥ १२२ ॥ १२३ ||

शास्त्रचिन्तनफलमाह नेति। शास्त्राणां बहूनां तत्त्वचिन्तनैः अहङ्कारी धर्मात्मा च न भवेत्। एकं शास्त्रमधीयानो जनः कार्यस्य निर्णयं तत्त्वनिश्चयं न विन्द्यात् ॥ १२४ ॥

स्यादिति। बहून् आगमान् शास्त्राणि संदृष्टवान् इति तथोक्तः जनः महान् व्यवहारः लोकतत्त्वदर्शीत्यर्थः स्यात् अतः बुद्धिमान् मानवः अतन्द्रितः अनलसः सन् नित्यं बहूनि शास्त्राणि अभ्यसेत् ॥ १२५ ॥

वेश्यादिदर्शनफलमाह तदर्थमिति। वेश्या तस्य अर्थं गृहीत्वापि तस्य अधीना न जायते, तथाविधा तादृशी अपि नरं वशीकर्तुं क्षमा शक्ता, किन्तु कस्यापि वशं न इयात् न गच्छेत्। तद्वत् वेश्यावत् जगत् स्वाधीनं निजायत्तं कारयेत् कुर्यात् स्वार्थे अन्यनीरुक्षभावः ॥ १२६ ॥

विद्वल्लोकफलमाह श्रुतीति। पण्डितानां विदुषां सहवासात्

देवपितृअतिथिभ्योऽन्नमदत्त्वा नाश्नीयात् क्वचित् ।
आत्मार्थं यः पचेन्मोहान्नरकार्थं स जीवति ॥ १३८ ॥
मार्गं गुरुभ्यो बलिने व्याधिताय शवाय च ।
राज्ञे श्रेष्ठाय व्रतिने यानगाय समुत्सृजेत् ॥ १३९ ॥
शकटात् पञ्चहस्तं तु दशहस्तं तु वाजिनः ।
दूरतः शतहस्तं च तिष्ठेन्नागाद् वृषाद् दश ॥ १४० ॥
शृङ्गिणां च नखिनां च दंष्ट्रिणां दुर्जनस्य च ।
नदीनां वसतौ स्त्रीणां विश्वासं नैव कारयेत् ॥ १४१ ॥
स्वादन् न गच्छेद् व्याख्यां न च हास्येन भाषणम् ।

---

संयमेत् श्रुतिस्मृतिपुराणानाम् अर्थविज्ञानं यस्मा तज्ज्ञत्वा बुद्धिश्च प्रजायते ॥ १३७ ॥

देवेति । देवेभ्यः पितृभ्यः अतिथिभ्यश्च अन्नं अदत्त्वा क्वचित् न अश्नीयात् । यः मोहात् अज्ञानात् आत्मार्थं स्वार्थं पचेत् पाकं कुर्यात् सः नरकार्थं जीवति ॥ १३८ ॥

मार्गमिति । गुरुभ्यः गुरुजनेभ्यः, बलिने बलवते, व्याधिताय रोगिणे, शवाय मृतदेहोद्वहनायेत्यर्थः राज्ञे श्रेष्ठाय माननीयाय व्रतिने व्रातीयकार्ये नियुक्ताय, तथा यानगाय वाहनाधिरूढाय जनाय मार्गं प्रस्थानं समुत्सृजेत् त्यजेत् नावरुन्ध्यादिति भावः ॥ १३९ ॥

शकटादिति । शकटात् अश्वादियुक्तवाहनात् पञ्चहस्तं, वाजिनः अश्वात् दशहस्तं, नागात् हस्तिनः शतहस्तं तथा वृषात् दशहस्तं दूरतः तिष्ठेत् ॥ १४० ॥

शृङ्गिणामिति । शृङ्गिणां वृषादीनां नखिनां नखायुधानां व्याघ्राणां दंष्ट्रिणां वराहादीनां दुर्जनस्य नदीनां स्रोतस्वतीनां स्त्रीणाञ्च वसतौ समीपे विश्वासं नैव कारयेत् ॥ १४१ ॥

स्वादन्निति । स्वादन् भक्षयन् सन् व्याख्यानं कथनं न गच्छेत्

शोकं न कुर्य्यान्नष्टस्य स्वकृतेरपि जल्पनम् ॥ १४२ ॥
स्वप्रशस्तितानां सामीप्यं त्यजेद् वै नीचसेवनम् ।
संलापं नैव शृणुयात् गुप्तः कस्यापि सर्वदा ॥ १४३ ॥
उत्तमैरननुज्ञातं कार्यं नेच्छेच्च तैः सह ।
देवैः साकं सुधापानाद्राहोश्छिन्नं शिरो यतः ॥१४४॥
महतोऽसत्कृतमपि भवेत् तद्भूषणाय वै ।
विषपानं शिवस्यैव त्वन्येषां मृत्युकारकम् ॥ १४५ ॥
तेजस्वी क्षमते सर्वं भोक्तुं वह्निरिवानघः ।
न सांमुख्ये गुरोः स्थेयं राज्ञः श्रेष्ठस्य कस्यचित् ॥१४६॥

---

किञ्च हास्येन बहु भाषणं कथनं न, नष्टस्य गतस्य शोकं न, तथा स्वकृतेः निजकार्य्यस्य जल्पनं व्याख्यानञ्च न कुर्य्यात् ॥ १४२ ॥

स्वप्रशस्तितानामिति । स्वेन आत्मना शङ्कितानां जनानां सामीप्यं नीचसेवनञ्च त्यजेत् वैशब्दोऽवधारणे । किञ्च गुप्तः सन् सर्वदा कस्यापि जनस्य संलापं परस्परकथोपकथनं न संशृणुयात् ॥ १४३ ॥

उत्तमैरिति । उत्तमैः साधुभिः श्रेष्ठैर्वा अननुज्ञातं प्रतिषिद्धं कार्य्यं तैः उत्तमैः सह न कुर्य्यात् न अभिकाङ्क्षेत् यतः देवैः साकं सह सुधापानात् अननुज्ञातादिति भावः राहोरसुरभेदस्य शिरः छिन्नम् ॥१४४

महत इति । असत्कृतमपि कुत्सितमाचरितमपि सत् प्रसिद्धमित्यर्थः कर्म तन्महतः प्रसिद्धार्थत्वात् न सम्बद्धाश्रितेति बोध्यम् । महतः जनस्य भूषणाय भवतीति शेषः, यथा विषपानं शिवस्य भूषणम् अन्येषान्तु मृत्युकारकम् ॥ १४५ ॥

तेजस्वीति । तेजस्वी जनः अनघः अपापः वह्निरिव सर्वं भोक्तुं क्षमते शक्नोति । किञ्च गुरोः राज्ञः कस्यचित् श्रेष्ठस्य वा सांमुख्ये न स्थेयम् ॥ १४६ ॥

राजा मित्रमिति ज्ञात्वा न कार्यं मानसेप्सितम् ।
नेच्छेन्मूर्खस्य स्वामित्वं दास्यमिच्छेन्महात्मनाम् ।
विरोधं न ज्ञानलवदुर्विदग्धस्य रञ्जनम् ॥ १४७ ॥
अत्यावश्यमनावश्यं क्रमात् कार्यं समाचरेत् ।
प्राक् पश्चाद्द्राग्विलम्बेन प्राप्तं कार्यं तु बुद्धिमान् ॥ १४८ ॥
पित्राज्ञप्तेनापि मातृवधरूपे सुपूजिता ।
कृता गौतमपुत्रेण ह्यकार्ये चिरकारिता ॥ १४९ ॥
प्रेम्णा समीपवासेन स्तुत्या नत्या च सेवया ।
कौशल्येन कलाभिश्च कथाभिर्ज्ञानतोऽपि च ॥ १५० ॥

---

राजेति । राजा मित्रं मम बन्धुरिति ज्ञात्वा मानसेप्सितं यथेप्सितं मानसमित्यर्थः न कार्य्यम् । किन्तु मूर्खस्य स्वामित्वं प्रभुत्वं दास्यञ्च, महात्मनां विरोधं महात्मभिर्विरोधमित्यर्थः तथा ज्ञानलवेन ज्ञानबिन्दुना स्वल्पेन ज्ञानेनेत्यर्थः दुर्विदग्धस्य दुष्टस्य जनस्य रञ्जनं तोषणं न इच्छेत् ॥ १४७ ॥

अत्यावश्यमिति । बुद्धिमान् जनः अत्यावश्यम् अनावश्यं, क्रमात् कार्य्यं तथा प्राप्तं हस्तगतं कार्य्यं प्राक् पश्चात् द्राक् विलम्बेन समाचरेत् तथाच अत्यावश्यं प्राक् प्रथमम् अनावश्यं पश्चात् परतः, क्रमात् कार्य्यं द्राक् झटिति, प्राप्तं विलम्बेनेति यथायथं वेदितव्यम् ॥ १४८ ॥

पित्रेति । पित्राज्ञप्तेन अपि गौतमपुत्रेण शतानन्देन मातुः अहल्यायाः देवराजकृतव्यभिचारजनितदोषात् वधरूपे अकार्य्ये या चिरकारिता कृता विलम्बः कृत इत्यर्थः सा सुपूजिता विलम्बात् तस्यां क्रोधोपशमात् गौतमस्य क्षमा आसीदिति भावः ॥ १४९ ॥

प्रेम्णेत्यादि । सदा प्रेम्णा स्नेहेन, समीपवासेन, स्तुत्या गुणकी-

आदरेणार्जवेनैव शौर्याद् दानेन विद्यया ।
प्रत्युत्थानाभिगमनैरानन्दस्मितभाषणैः ।
उपकारैः स्वाश्रयेण वशीकुर्य्याज्जगत् सदा ॥ १५१ ॥
एते वश्यकरोपाया दुर्जने निष्फलाः स्मृताः ।
तत्सन्निधिं त्यजेत् प्राज्ञः शक्तस्तं दण्डतो जयेत् ।
छलभूतैस्तु तद्रूपैरुपायैरेभिरेव वा ॥ ५२ ॥
श्रुतिस्मृतिपुराणानामभ्यासः सर्वदा हितः ।
साङ्गानां सोपवेदानां सकलानां नरस्य हि ॥ १५३ ॥
मृगयाद्याः स्त्रियः पानं व्यसनानि नृणां सदा ।
चत्वार्य्येतानि सन्त्यज्य युक्त्या संयोजयेत् क्वचित् ॥१५४॥

---

र्त्तनेन, नत्या प्रणामेन, सेवया, कौशल्येन नैपुण्येन, कलाभिः गीतवादित्रादिचतुःषष्टिप्रकाराभिः विद्याभिः, कथाभिः ज्ञानतः ज्ञानोपदेशेन, आदरेण, आर्जवेन सारल्येन, शौर्य्यात्, दानेन, विद्यया, प्रत्युत्थानेन, अभिगमनेन, आनन्दस्मितसहितभाषणेन, उपकारैः, स्वाश्रयेण तुष्ट चित्तानुवर्त्तनेन च जगत् वशीकुर्य्यात् ॥ १५० ॥ १५१ ॥

एते इति । एते वश्यकरोपायाः वशीकरणोपायाः प्रेमादयः दुर्जने निष्फलाः स्मृताः दुर्जनस्य एतैरपि अवश्यत्वादिति भावः । प्राज्ञः जनः तस्य दुर्जनस्य सन्निधिं त्यजेत् । किन्तु शक्तः समर्थश्चेत् दण्डतः दण्डैः छलभूतैः तद्रूपैः प्रेमादिरूपैः एभिरुपायैः कौशलैश्च जनं दुर्जनं जयेत् ॥ १५२ ॥

श्रुतीति । साङ्गानां व्याकरणादिषडङ्गसहितानां श्रुतिस्मृतिपुराणानां सकलानाम् उपवेदानां धनुर्वेदायुर्वेदादीनाञ्च सर्वदा अभ्यासः अनुशीलनं नरस्य हितः हिशब्दोऽवधारणार्थः ॥ १५३ ॥

मृगयेति । मृगया अक्षाः द्यूतानि, स्त्रियः स्त्रीसम्भोगाः पानञ्च एतानि सदा चत्वारि नृणां व्यसनानि दोषाः । कदाचित् कारणे

कूटेन व्यवहारं तु वृत्तिलोपं न कस्यचित् ।
न कुर्य्याच्चिन्तयेत् कस्य मनसाप्यहितं क्वचित् ॥ १५५ ॥
तत्कार्य्यं तु सुखं यस्माद् भवेद् वैकालिकं दृढम् ।
मृते स्वर्गं जीवति च विन्द्यात् कीर्तिं दृढ़ां शुभाम् ॥ १५६ ॥
जागर्त्ति च सचिन्तो य आधिव्याधिनिपीड़ितः ।
जारश्चोरो बलिद्विष्टो विषयी धनलोलुपः ॥ १५७ ॥
कुसहायी कुनृपतिर्भिन्नामात्यसुहृत् प्रजः ।
कुर्य्याद्यथा समीक्ष्यैतत् सुखं स्वप्याच्चिरं नरः ॥ १५८ ॥
राज्ञो नानुकृतिं कुर्य्यान्न च श्रेष्ठस्य कस्यचित् ।

---

न व्यसनमिति भावः । एतानि चत्वारि संव्यव्य वातत्वेन त्यक्त्वा सुमत्या क्वचित् संयोजयेत् अपहरेदित्यर्थः व्ययावाहिकमिति शेषः ॥ १५४ ॥

कूटेनेति । कूटेन कपटेन व्यवहारं कस्यचित् । वृत्तिलोपं जीविकाच्छेदं कस्यापि चाहितञ्च क्वचिदपि मनसापि न कुर्य्यात् नापि चिन्तयेत् ॥ १५५ ॥

तदिति । यस्मात् कार्य्यात् द्वैकालिकम् ऐहिकं पारत्रिकञ्चेत्यर्थः दृढं स्थिरं सुखं भवेत् यथा मृते स्वर्गं जीवति च दृढ़ां स्थिरां शुभां कीर्त्तिं विन्द्यात् लभेत तत् कार्य्यं कर्त्तव्यम् ॥ १५६ ॥

जागर्त्तीति । कुसहायीति । यः सचिन्तः चिन्तायुक्तः आधिना मानस्या व्यथया व्याधिना रोगेण वा निपीड़ितः जारः उपपतिः, चोरः बलिद्विष्टः बलिना प्रबलेन सता द्विष्टः विद्वेषं गतः प्रबलशत्रुरित्यर्थः, विषयी ऐश्वर्य्यवान्, तथा धनलोलुपः यश्च कुसहायी कुत्सितसहायवान् भिन्नामात्यसुहृत्प्रजः विरक्तामात्यबन्धुप्रजः कुनृपतिः स जागर्त्ति नैव निद्रां लभते इत्यर्थः । अतः समीक्ष्य विचार्य्य नरः तथा कुर्य्यात् यथा चिरं सुखं यथा तथा स्वप्यात् निद्रां लभेत ॥ १५७ ॥ १५८ ॥

राज्ञ इति । राज्ञः तथा श्रेष्ठस्य कस्यचित् जनस्य अनुकृतिं तस्य-

नैको गच्छेद् व्यालव्याघ्रचोरेषु च प्रबाधितुम् ॥ १५९॥
जिघांसन्तं जिघांसीयाद् गुरुमप्याततायिनम् ।
कलहे न सहायः स्यात् संरक्षेद् बहुनायकम् ॥ १६० ॥
गुरूणां पुरतो राज्ञो न चासीत महासने ।
प्रौढ़पादो न तद्वाक्यं हेतुभिर्विकृतिं नयेत् ॥ १६१ ॥
यत् कर्तव्यं न जानाति कृतं जानाति चेतरः ।
नैव वक्ति च कर्तव्यं कृतं यश्चोत्तमो नरः ॥ १६२ ॥
न प्रियाकथितं सम्यङ्मन्येतानुभवं विना ।
अपराधं मातृश्वश्रूभ्रातृपत्नीसपत्निजम् ॥ १६३ ॥

---

व्यवहारं न कुर्यात् । एकः एकाकी च व्यालेषु हिंस्रेषु सर्पादिषु व्याघ्रेषु चौरेषु च आपतितेषु तान् प्रबाधितुं न गच्छेत् ॥ १५९ ॥

जिघांसन्तमिति । जिघांसन्तं हन्तुमिच्छन्तम् आततायिनं गुरुमपि जिघांसीयात् । कलहे विवादे सति सहायः एकपक्षावलम्बी न स्यात् । बहुनायकञ्च बहूनां नायकं स्वामिनं भर्त्तारमित्यर्थः संरक्षेत् ॥ १६० ॥

गुरूणामिति । गुरूणां पित्रादीनां राज्ञश्च पुरतः अग्रतः महासने उच्चतासने न आसीत नोपविशेत् । तथा प्रौढपादः उत्क्षिप्तचरणः सन् तेषां वाक्यं हेतुभिः तर्कवादैः न विकृतिं नयेत् न खण्डयेदित्यर्थः ॥ १६१ ॥

यदिति । इतरः नीचः कर्त्तव्यं यत् तत् न जानाति केवलं कृतं जानाति च । यश्च नरः उत्तमः, सः कर्त्तव्यं कृतञ्च न वक्ति न कथयति ॥ १६२ ॥

नेति । प्रियया भार्य्यया कथितं मातृश्वश्रूभ्रातृपत्नीसपत्नीजं अपराधम् अनुभवं विना निजानुभवमन्तरेण सम्यक् सत्यं न मन्येत सपत्निजम् इति आर्षःप्रयोगः ॥ १६२ ॥

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दया दर्पः स्त्रीणामष्टौ स्वदुर्गुणाः ॥ १६४ ॥
षोडशाब्दात् परं पुत्रं द्वादशाब्दात् परं स्त्रियम् ।
न ताडयेद् दुष्टवाक्यैः पीडयेन्न स्नुषादिकम् ॥ १६५ ॥
पुत्राधिकाश्च दौहित्रा भागिनेयाश्च भ्रातरः ।
कन्याधिकाः पालनीया भ्रातृभार्या स्नुषा स्वसा ॥ १६६ ॥
आगमार्थं हि यतते रक्षणार्थं हि सर्वदा ।
कुटुम्बपोषणे स्वामी तदन्ये तस्करा इव ॥ १६७ ॥
अनृतं साहसं मौर्ख्यं कामाधिक्यं स्त्रियां यतः ।
कामाद् विनैकशयने नैव सुप्यात् स्त्रिया सह ॥ १६८ ॥

---

अनृतमिति । स्त्रीणां अष्टौ स्वदुर्गुणाः निजदोषाः यथा अनृतं मिथ्या १, साहसं २, माया कापट्यं ३, मूर्खत्वं निर्बोधता ४, अतिलोभता ५, अशौचम् अपवित्रता ६, निर्दया दयाराहित्यं ७, दर्पः ८ ॥ १६४ ॥

षोडशाब्दादिति । षोडशाब्दात् षोडशवत्सरात् परं पुत्रं द्वादशाब्दात् परं स्त्रियं न ताडयेत् न शासयेत् । स्नुषादिकं पुत्रवधूप्रभृतिकं दुष्टवाक्यैः न पीडयेत् ॥ १६५ ॥

पुत्राधिका इति । दौहित्राः भागिनेयाः भ्रातरश्च पुत्राधिकाः, भ्रातृभार्या स्नुषा स्वसा भगिनी च कन्याधिकाः यथा तथा पालनीयाः ॥ १६६ ॥

आगमार्थमिति । स्वामी कुटुम्बपोषणे आगमार्थं धनागमनिमित्तं रक्षणार्थञ्च सर्वदा यतते हि । तदन्ये स्वामिव्यतिरिक्ताः तस्करा इव चौरा इव वर्तन्ते इति शेषः ॥ १६७ ॥

अनृतमिति । यतः स्त्रियाम् अनृतं, साहसं अविमृश्यका-

दृष्ट्वा धनं कुलं शीलं रूपं विद्यां बलं वयः ।
कन्यां दद्यादुत्तमं चेन्मैत्रीं कुर्यादथात्मनः ॥ १६९ ॥
भार्यार्थिनं वयोविद्यारूपिणं निर्धनं त्वपि ।
न केवलेन रूपेण वयसा न धनेन च ॥ १७० ॥
आदौ कुलं परीक्षेत ततो विद्यां ततो वयः ।
शीलं धनं ततो रूपं देशं पश्चाद् विवाहयेत् ॥ १७१ ॥
कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ १७२ ॥
भार्यार्थं वरयेत् कन्यामसमानर्षिगोत्रजाम् ।
भ्रातृमतीं सुकुलां च योनिदोषविवर्जिताम् ॥ १७३ ॥

---

रित्वं, मौर्ख्यं निर्बोधता; तथा कामाधिक्यं विद्यते इति शेषः अतः कामात् विना स्त्रिया सह एकशयने एकशय्यायां नैव स्वप्यात् ॥१६८॥

दृष्ट्वेति । धनं कुलं शीलं रूपं विद्यां बलं वयश्च दृष्ट्वा कन्यां दद्यात्, उत्तमं सर्वोत्कृष्टतरं चेत् भवति तदा आत्मनः मैत्रीं कुर्य्यात् ॥ १६९ ॥

भार्य्यार्थिनमिति । भार्य्यार्थिनं वयोविद्यारूपिणम् अल्पवयसं विद्यावन्तं रूपवन्तञ्च निर्धनमपि आहूय कन्यां दद्यादिति पदत्रयमूह्यं, केवलेन रूपेण न, केवलेन वयसा न, तथा केवलेन धनेन च न दद्यादिति शेषः ॥ १७० ॥

आदाविति । आदौ प्रथमतः कुलं, ततः विद्यां, ततः वयः, ततः शीलं, ततः धनं, ततः रूपं, ततश्च देशं परीक्षेत, पश्चात् विवाहयेत् कन्यां दद्यादित्यर्थः ॥ १७१ ॥

कन्येति । कन्या रूपं, वरयते प्रार्थयते माता वित्तं धनं, पिता श्रुतं विद्यां, बान्धवाः आत्मादयः कुलम्, इतरे जनाः मिष्टान्नं इच्छन्ति ॥ १७२ ॥

भार्य्यार्थमिति । भार्य्यार्थम् असमानर्षिगोत्रजाम् असमानप्रवरां ...

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।
न त्याज्यौ तु क्षणकणौ नित्यं विद्याधनार्थिना ॥१७४॥
सुभार्यापुत्रमित्रार्थं हितं नित्यं धनार्जनम् ।
दानार्थं च विना त्वेतैः किं धनैश्च जनैश्च किम्? ॥१७५॥
भाविसंरक्षणक्षमं धनं यत्नेन रक्षयेत् ।
जीवामि शतवर्षं तु नन्दामि च धनेन वै ॥ १७६ ॥
इति बुद्ध्या सञ्चिनुयाद्धनं विद्यादिकं सदा ।
पञ्चविंशत्यब्दपूरं तदर्धं वा तदर्धकम् ॥ १७७ ॥
विद्याधनं श्रेष्ठतरं तन्मूलमितरद्धनम् ।
दानेन वर्धते नित्यं न भाराय न नीयते ॥ १७८ ॥

---

असमानगोत्रां आत्ममतीं सुकुलां सत्कुलोत्पन्नां योनिदोषविवर्जितां मातृदोषशून्यां कन्यां वरयेत् ॥ १७२ ॥

क्षणश इति । क्षणशः क्षणे क्षणे कणशः अल्पशः विद्याम् अर्थञ्च साधयेत् अर्जयेत्, विद्याधनार्थिना जनेन नित्यं सततं क्षणकणौ न त्याज्यौ न हातव्यौ ॥ १७४ ॥

सुभार्य्येति । सुभार्य्यार्थं पुत्रार्थं मित्रार्थं दानार्थञ्च नित्यं सततं धनार्जनं हितम् । एतैः सुभार्य्यादिभिः विना तु धनैश्च जनैः अपरैः आत्मवर्गैश्च किं ? न किमपि प्रयोजनमित्यर्थः ॥ १७५ ॥

भावी । इतीति । भाविनां भविष्यतां विपदाणां संरक्षणक्षमं धनं यत्नेन रक्षयेत् । शतवर्षं जीवामि, धनेन च नन्दामि आनन्दं लभे इति बुद्ध्या पञ्चविंशत्यब्दपूरं पञ्चविंशतिवर्षं तदर्द्धं वार्द्धद्वादशाब्दं वा तदर्द्धकं सपादषड़्वर्षं यावत् विद्यादिकं धनं सदा सञ्चिनुयात् संगृह्णीयात् ॥ १७६ ॥ १७७ ॥

विद्याधनमिति । विद्याधनं विद्यारूपं धनं श्रेष्ठतरं सर्वधनेभ्यः

अस्ति यावत् तु सधनस्तावत् सर्वैस्तु सेव्यते।
निर्धनस्त्यज्यते भार्य्यापुत्राद्यैः सगुणोऽप्यतः॥ १७९ ॥
संसृतौ व्यवहाराय सारभूतं धनं स्मृतम्।
अतो यतेत तत्प्राप्त्यै नरः सूपायसाहसैः॥ १८० ॥
सुविद्यया सुसेवाभिः शौर्य्येण कृषिभिस्तथा।
कौसीदवृद्धा पण्येन कलाभिश्च प्रतिग्रहैः।
यया कया चापि वृत्त्या धनवान् स्यात् तथाचरेत् ॥१८१
तिष्ठन्ति सधनद्वारे गुणिनः किङ्करा इव॥ १८२ ॥
दोषा अपि गुणायन्ते दोषायन्ते गुणा अपि।
धनवतो निर्धनस्य निन्द्यते निर्धनोऽखिलैः॥ १८३ ॥

---

श्रेष्ठम् इतरत् अन्यत् धनं तन्मूलं विद्यामूलं विद्ययैव अन्यत् धनमुपार्ज्यते इति भावः। एतच्च दानेन नित्यं सततं वर्द्धते, न भाराय भवति, नापि अन्यैः नीयते नाप्यपह्रियते इत्यर्थः॥ १७८ ॥

अस्तीति। संसृताविति। यावत् सधनः अस्ति, तावत् सर्वैः जनैः सेव्यते आद्रियते, निर्धनस्तु सगुणोऽपि गुणवानपि भार्य्यापुत्राद्यैः त्यज्यते। अतः अस्मात् कारणात् संसृतौ संसारव्यवहाराय धनं सारभूतं स्मृतम्। अतः नरः मानवः उपायैः साहसैः प्राणसंशयकरैः कार्य्यैरपि तस्य धनस्य प्राप्त्यै प्राप्तिनिमित्तं यतेत चेष्टेत॥ १७९ ॥१८०॥

सुविद्ययेति। तिष्ठन्तीति। सुविद्यया शोभनविद्योपार्जनेन, सुसेवाभिः अनीचदासभावैः, शौर्य्येण, कृषिभिः, कौसीदवृद्धा दत्तानाम् ऋणानां लाभेन, पण्येन विक्रेयद्रव्येण, कलाभिः सङ्गीतादिभिः, प्रतिग्रहैः दानग्रहणैः, किं बहुना। यया कयापि वृत्त्या यथा धनवान् भवेत् तथा आचरेत्। यतः गुणिनः गुणवन्तः जनाः सधनानां धनिनां द्वारे किङ्करा इव तिष्ठन्ति॥ १८१ ॥ १८२ ॥

सुनिर्धनत्वं प्राप्यैके मरणं भेजिरे जनाः ।
ग्रामायैकेऽचलायैके नाशायैके प्रवव्रजुः ॥ १८४ ॥
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ १८५ ॥
यथा न जानन्ति धनं सञ्चितं कति कुत्र वै ।
आत्मस्त्रीपुत्रमित्राणि सलेख्यं धारयेत् तथा ॥ १८६ ॥
नैवास्ति लिखितादन्यत् स्मारकं व्यवहारिणाम् ।
न लेख्येन विना कुर्याद् व्यवहारं सदा बुधः ॥ १८७ ॥

---

दोषा इति । धनवतः दोषा अपि गुणायन्ते, निर्धनस्य तु गुणा अपि दोषायन्ते । तस्मात् निर्धनः जनः अखिलैः सर्वैः निन्द्यते ॥ १८३ ॥

सुनिर्धनत्वमिति । एके केचित् जनाः सुनिर्धनत्वं सुदारिद्र्यं प्राप्य मरणं भेजिरे मृता इत्यर्थः, एके जनाः ग्रामाय देशान्तराय, एके अपरे जनाः अचलाय पर्वताय, एके अन्ये जनाः नाशाय आत्महत्यायै प्रवव्रजुः गता इत्यर्थः ॥ १८४ ॥

उन्मादमिति । अर्थहेतुना धनार्थम् एके उन्मादं पुष्यन्ति चिन्तया उन्मादग्रस्ता भवन्तीत्यर्थः, अन्ये द्विषतां शत्रूणां वशं यान्ति प्राप्नुवन्ति, एके अपरे च शत्रूणां दास्यं गच्छन्ति ॥ १८५ ॥

यथेति । यथा आत्मनः स्त्रीपुत्रमित्राणि धनं कति कियत् कुत्र सञ्चितं न जानन्ति वैशब्दोऽवधारणार्थः । तथा सलेख्यं लेख्यसहितं धारयेत् रक्षां दद्यात् वर्द्धमानमिति भावः, स्त्रीपुत्रादिज्ञाने तु धनरक्षाया दुष्करत्वमिति बोध्यम् ॥ १८६ ॥

नैवेति । व्यवहारिणां व्यवसायिनां लिखितात् अन्यत् स्मारकं स्मरणचिह्नं नैव अस्ति, तस्मात् लेख्येन विना बुधः पण्डितो जनः सदा कदाचिदपीत्यर्थः न व्यवहारं कुर्यात् ॥ १८७ ॥

निर्लोभे धनिके राज्ञि विख्याते स्वामिनां वरे ।
सुरक्षितं धनं धार्यं गृहीतलिखितं तु वा ॥ १८८ ॥
मैत्र्यर्थं याचितं दद्यादकुसीदं धनं सदा ।
तस्मिन् स्थितं चेन्न बहु हानिकृच्च तथाविधम् ॥१८९॥
दृष्ट्वाधमर्णं वृद्ध्यापि व्यवहारक्षमं सदा ।
सबन्धं सप्रतिभुवं धनं दद्याच्च साक्षिमत् ॥ १९० ॥
गृहीतलिखितं भोग्यमानं प्रत्यागमे शुभम् ।
न दद्याद् वृद्धिलोभेन नष्टं मूलधनं भवेत् ॥ १९१ ॥
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ।
धनं मैत्रीकरं दाने चादाने शत्रुकारकम् ॥ १९२ ॥

---

निर्लोभे इति । निर्लोभे लोभरहिते धनिके धनवति, विख्याते स्वामिनां वरे श्रेष्ठे राज्ञि च सुरक्षितं धनं धार्यं स्थापनीयं, वा गृहीतं लिखितं यस्य तथाभूतं कृत्वा धनं सुखमपि धार्यमित्यर्थः ॥ १८८ ॥

मैत्र्यर्थमिति । मैत्र्यर्थं मित्रतानिमित्तं सदा अकुसीदम् अवृद्धिकं याचितं मित्रायेति शेषः दद्यात्, चेत् यदि कस्मिंश्चित् मित्रे तथाविधं याचितं बहु धनं स्थितं तदा तत् न हानिकृत् हानिकरं भवतीत्यर्थः ॥ १८९ ॥

दृष्ट्वेति । गृहीतेति । अधमर्णं खातकम् ऋणग्रहीतारमित्यर्थः वृद्ध्या वृद्धिदानेन व्यवहारक्षमं वृद्धिदाने समर्थमित्यर्थः दृष्ट्वा सदा सबन्धं बन्धकसहितं सप्रतिभुवं प्रतिभूसहितं वा साक्षिमत् साक्षियुक्तं गृहीतं लिखितं यस्य तत् भोग्यमानं सुयोग्यपरिमितं प्रत्यागमे प्रत्याये च सुखं सुखकरं कृत्वा धनं दद्यात् । वृद्धिलोभेन यथाकथञ्चिदपि न दद्यात् तथा सति मूलधनं नष्टं भवेत् ॥ १९० ॥ १९१ ॥

आहार इति । आहारे व्यवहारे ऋणदानादिकर्मणि च त्यक्त-

ज्ञात्वा स्वान्ते तथौदार्यं कार्पण्यं बहिरेव च ।
उचितं तु व्ययं काले नरः कुर्यान्न चान्यथा ॥ १९३ ॥
सुभार्यापुत्रमित्राणि शक्त्या संरक्षयेद्धनैः ।
नात्मा पुनरतो ह्यात्मं सर्वैः सर्वं पुनर्भवेत् ॥ १९४ ॥
पश्यति स्म सजीवश्चेन्नरो भद्रशतानि च ।
सदारप्रौढपुत्रान् द्राक् श्रेयोऽर्थी विभजेत् पिता ॥१९५॥
सदारभ्रातरः प्रौढा विभजेयुः परस्परम् ।
एकोदरा अपि प्रायो विनाशायान्यथा खलु ॥ १९६ ॥
नैकत्र संवसेच्चापि स्त्रीद्वयं मनुजस्य तु ।

---

लब्धः जनः सुखी भवेत् । धनं दाने वैतीकरम् आदाने च मन्युकारकं भवति ॥ १९२ ॥

ज्ञात्वेति । नरः स्वान्ते मनसि औदार्य्यं तथा बहिः बाह्ये कार्पण्यं ज्ञात्वा काले उपयुक्तकाले उचितं व्ययं कुर्य्यात् अन्यथा न ॥१९३॥

सुभार्य्येति । शक्त्या यथाशक्ति धनैः सुभार्य्यापुत्रमित्राणि संरक्षयेत्, आत्मा पुनर्न भवेत् अतः कारणात् आत्मानं सर्वैः भार्य्यादिभिरपि संरक्षयेत् यतः सर्वं भार्य्यादिकं पुनर्भवेत् । अतः आत्मानं सततं गोपायीतेति श्रुतिः । आत्मानम् इति सन्धिरत्वार्ष इति बोध्यम् ॥१९४॥

पश्यतीति । सजीवः जीवन् नरः चेत् यदि भद्राणां मङ्गलानां शतानि पश्यति स्म तदा पिता श्रेयोऽर्थी मङ्गलार्थी सन् आत्मनः इति शेषः द्राक् झटिति सदारप्रौढपुत्रान् स्त्रीसहितान् प्रौढान् स्वस्व-कर्मक्षमान् पुत्रान् विभजेत् भाविकलहनिवारणार्थमिति भावः ॥ १९५ ॥

सदारेति । प्रौढाः सदारभ्रातरः स्त्रीसहिताः भ्रातरः एको-दराः सहोदरा अपि परस्परं विभजेयुः विभक्ता भवेयुः, अन्यथा विभागाकरणे प्रायः बाहुल्येन विनाशाय खलु निश्चितम् ॥ १९६ ॥

नैकत्रेति । मनुजस्य मानवस्य स्त्रीद्वयं पशूनां नरद्वयन्तु तु-

आर्थं वर्धेत् तद्बहुत्वं पशूनां तु नरद्वयम् ॥ १९७ ॥

विभजेयुर्न तत् पुत्रा यद्धनं वृद्धिकारणम् ।
अधमर्णस्थितं चापि यद् देयं चौत्तमर्णिकम् ॥ १९८ ॥

यस्येच्छेदुत्तमां मैत्रीं कुर्यात्तस्यार्थाभिलाषकम् ।
परोक्षे तद्गृहचारं तत्स्त्रीसम्भाषणं तथा ॥ १९९ ॥

तच्छ्रून्यदर्शनं नैव तत् प्रतीपविवादनम् ।
असहाय्यं च तत् कार्यं ह्यनिष्टोपेक्षणं न च ॥ २०० ॥

सकुसीदमकुसीदं धनं यच्चौत्तमर्णिकम् ।
दद्यादगृहीतमिव नोभयोः क्वचिदर्थतः यथा ॥ २०१ ॥

मासात्रिमचालिखितसम्पतस्य पुष्ठतः ॥ २०२ ॥

---

सन्दर्भार्थः पुंपशुद्वयमेकत्वर्थः एकत्र न संवसेन्, तद्बहुत्वं स्त्रीबहुत्वं पुंपशुबहुत्वञ्च कथं वर्धेत् न कथमपीत्यर्थः अतोविभज्य वस्तव्यमिति भावः ॥ १९७ ॥

विभजेयुरिति । तत्पुत्राः तस्य गृहपतेः पुत्राः यत् धनं वृद्धिकारणम् अधमर्णे खातके स्थितं यच्च औत्तमर्णिकम् उत्तमर्णायैव इत्यर्थः देयं तत् न विभजेयुः ॥ १९८ ॥

यस्येति । यस्य येनेत्यर्थः सम्बन्धविवक्षायां षष्ठी । उत्तमां मैत्रीम् इच्छेत् तस्य अर्थाभिलाषकम् अर्थेषु अभिलाषं परोक्षे अज्ञाते तस्य गृहेषि अभ्यन्तरे चारं गमनं तथा तस्य स्त्रिया सह संभाषणं रहस्यालापं न कुर्यात् तथात्वे मैत्रीभङ्गप्रसङ्गादिति भावः ॥ १९९ ॥

तदिति । किञ्च तस्य न्यूनदर्शनं तं प्रति दृष्टेः न्यूनतामित्यर्थः तस्य प्रतीपं प्रतिकूलं यथा तथा विवादनं तस्य कार्ये असहाय्यं साहाय्याकरणं तथा तस्य अनिष्टपातेऽपि उपेक्षणं न कुर्यादिति पूर्वेणान्वयः ॥ २०० ॥

सकुसीदमिति । दद्यादिति । सकुसीदं सवृद्धिकम् अकुसीदमवृद्धिकं

आत्मपितृमातृगुणैः प्रख्यातश्चोत्तमोत्तमः ।
गुणैरात्मभवैः ख्यातः पैतृकैर्मातृकैः पृथक् ॥ २०३ ॥
उत्तमो मध्यमो नीचोऽधमो भ्रातृगुणैर्नरः ।
कन्यास्त्रीभगिनीभाग्यो नरोऽधमतमो मतः ॥ २०४ ॥
भूत्वा महाधनः सम्यक् पोष्यवर्गं तु पोषयेत् ।
अदत्त्वा यत् किञ्चिदपि न नयेद् दिवसं बुधः ॥ २०५ ॥
स्थितो मृत्युमुखे चाहं क्षणमायुर्ममास्ति मे ।
इति मत्वा दानधर्मौ यथेष्टौ तु समाचरेत् ॥ २०६ ॥
न तौ विना मे परत्र सहायाः सन्ति चेतरे ।
दानशीलाश्रयाल्लोको वर्तते न शठाश्रयात् ॥ २०७ ॥

---

सा यत् कौसलचिह्नं महाजनीयं धनं, तत् यथा उभयोः मिलितयोः कलहकृत् अपकारं न भवेदिति शेषः तथा गाथाश्चित् साक्षियुक्तमपि ऋणपत्रस्य पृष्ठतः परिचितं कृत्वा गृहीतमिव दद्यात् ॥ २०१ ॥ २०२ ॥

आत्मेति । उत्तम इति । आत्मनः पितुः मातुश्च गुणैः प्रख्यातः जनः उत्तमोत्तमः श्रेष्ठः । आत्मभवैः स्वकीयैः पैतृकैः मातृकैश्च गुणैः पृथक् क्रमेण उत्तमः, मध्यमः तथा नीचः ख्यातः, आत्मगुणै-रुत्तमः, पैतृकैः मध्यमः, मातृकैस्तु नीच इत्यर्थः । भ्रातृगुणैः नरः अधमः ख्यातः । किञ्च कन्यास्त्रीभगिनीभाग्यः कन्यायाः स्त्रियाः भगिन्या वा गलग्रहः नरः अधमतमः मतः ख्यातः ॥ २०२ ॥ २०४ ॥

भूत्वेति । महाधनः धनसम्पन्नः भूत्वा पोष्यवर्गं सम्यक् पोषयेत् । किञ्च बुधः विद्वान् जनः यत् किञ्चिदपि अदत्त्वा कस्मैचिदपीति शेषः दिवसं न नयेत् यापयेत् ॥ २०५ ॥

स्थित इति । नेति । अहं मृत्युमुखे स्थितः, मम क्षणम् अल्पक्षणमपि आयुः न अस्ति, तथा तौ दानधर्मौ विना मे मम परत्र परलोके इतरे सहायाः न सन्ति, किञ्च लोकः जनत् दानशीलानाम्

भवन्ति मित्रा दानेन द्विषन्तोऽपि च किं पुनः॥ २०८॥
देवतार्थं च यद्दानं ब्राह्मणार्थं गवार्थकम्।
यद् दत्तं तत् पारलौक्यं संविद् दत्तं तदुच्यते॥२०९॥
वन्दिमागधमल्लादिनटनार्थं च दीयते।
पारितोष्यं यशोऽर्थं तु श्रिया दत्तं तदुच्यते॥ २१०॥
उपायनीकृतं यत् तु सुहृत् सम्बन्धिबन्धुषु।
विवाहादिषु चाचारदत्तं व्रीडयमेव तत्॥ २११॥
राज्ञे च बलिने दत्तं कार्यार्थं कार्यघातिने।
पापभीत्याथवा यच्च तत् तु भीदत्तमुच्यते॥ २१२॥

---

आश्रयात् वर्त्तते तिष्ठति, शठानां दुर्जनानाम् आश्रयात् न इति मत्वा यथेष्टो यथाभिलषितो दानधर्मो दानं धर्मञ्च समाचरेत् अनुतिष्ठेत्॥ २०६॥ २०७॥

भवन्तीति। द्विषन्तोऽपि शत्रवोऽपि दानेन मित्राः सुहृदः भवन्ति किं पुनः अद्विषन्त इति शेषः, मित्रा इति पुंलिङ्गनिर्देश आर्षः॥२०८॥

देवतार्थमिति। देवतार्थं देवसेवार्थं यद्दानं ब्राह्मणार्थं गवार्थकं गोपालनार्थकञ्च यत् दत्तं तत् पारलौक्यं परलोकसुखसाधनार्थम्। तच्च संविद्दत्तं संविदा ज्ञानेन अवश्यदेयबुद्ध्या इति यावत् दत्तं उच्यते॥२०९

वन्दीति। वन्दिनः स्तुतिपाठकाः मागधाः जातिभेदाः मल्लाः वीराः आदयः येषां तेषां नटनार्थं तत्तत्कार्यार्थं, यत् पारितोष्यं पुरस्काररूपं दीयते तत् यशोऽर्थं यशोवर्द्धकं तच्च श्रिया दत्तं सम्पद्दत्तम् उच्यते॥ २१०॥

उपायनीकृतमिति। सुहृत्सु सम्बन्धिषु आत्मीयेषु विवाहादिकार्येषु विषयेषु यत् उपायनीकृतम् उपढौकनत्वेन दत्तं यत् आचारदत्तं व्यवहारनिबन्धनं तच्च व्रीडदत्तं व्रीडया लज्जया दत्तम्॥ २११॥

राज्ञ इति। राज्ञे बलिने बलवते कार्यघातिने च कार्यार्थं

यद् दत्तं हिंस्रकार्थं नष्टं द्यूतविनाशितम् ।
चोरैर्हृतं पापदत्तं परस्त्रीसङ्गमार्थकम् ॥ २१३ ॥
आराधयति यं देवं तमुत्कृष्टतरं वदेत् ।
तन्न्यूनतां नैव कुर्याल्लोपयेत् तस्य सेवनम् ॥ २१४ ॥
विना दानार्जवाभ्यां न भुव्यस्ति च वशीकरम् ।
दानक्षीणो विवर्धिष्णुः शशी वक्रोऽप्यतः शुभः ॥२१५॥
विचार्य स्नेहं द्वेषं वा कुर्यात् कृत्वा न चान्यथा ।
नापकुर्यान्नोपकुर्याद्भवतोऽनर्थकारिणौ ॥ २१६ ॥

---

अथवा पापभीत्या अदाने पापभयादित्यर्थः यद् दत्तं तत् तु भीदत्तम् उच्यते ॥ २१२ ॥

यदिति । हिंस्राणां हननार्थं दत्तं, द्यूतेन अक्षक्रीड़या विनाशितं, चौरैः हृतं, पापदत्तं पापाय दत्तं, परस्त्रीसङ्गमार्थकञ्च यत् धनं तत् नष्टं भवति ॥ २१३ ॥

आराधयतीति । यं देवम् आराधयति सेवते तं देवम् उत्कृष्टतरं सर्वदेवेभ्यः इति शेषः वदेत् कीर्त्तयेत् । तस्य न्यूनतां लाघवं नैव कुर्यात् तस्य सेवनञ्च लोपयेत् कारयेत् ॥ २१४ ॥

विनेति । दानार्जवाभ्यां दानेन आर्जवेन वा विना भुवि पृथिव्यां वशीकरं वशीकरणोपायभूतम् अन्यत् न अस्ति । अतः कारणात् दानक्षीणः विवर्द्धिष्णुः वर्द्धनशीलः शशी चन्द्रः वक्रोऽपि असरलोऽपि शुभः वर्द्धनशीलत्वात् भविष्यद्दानप्रत्याशावत्त्वादिति भावः ॥ २१५ ॥

विचार्येति । स्नेहं द्वेषं वा विचार्य्य कार्य्यं कुर्यात् कृत्वा च स्नेहद्वेषानुसारेणेति भावः, अन्यथा न कुर्यादिति शेषः । तथाच न अपकुर्यात् स्निग्धं प्रतीति शेषः, नापि उपकुर्यात् द्वेष्यं प्रतीति शेषः तथात्वे तौ उभौ अनर्थकारिणौ अनिष्टकारकौ भवतः ॥ २१६ ॥

नातिक्रौर्यं नातिशाठ्यं धारयेन्नातिमार्दवम् ।
नातिवादं नातिकार्यासक्तिमत्याग्रहं न च ॥ २१७ ॥
अति सर्वं नाशहेतुर्ह्यतोऽत्यन्तं विवर्जयेत् ।
उद्विजते जनः क्रौर्यात् कार्पण्यादतिनिन्दति ॥ २१८ ॥
मार्दवान्नैव गणयेदपमानोऽतिवादतः ।
अतिदानेन दारिद्र्यं तिरस्कारोऽतिलोभतः ॥ २१९ ॥
अत्याग्रहान्नरस्यैव मौर्ख्यं सञ्जायते खलु ।
अनाचाराद्धर्महानिरत्याचारस्तु मूर्खता ॥ २२० ॥
अधिकोऽस्मीति सर्वेभ्यो ह्यधिकज्ञानवानहम् ।
असत्तत्त्वमिदमिति नैवं मन्येत बुद्धिमान् ॥ २२१ ॥

---

नेति । अतिक्रौर्यम् अतिनिष्ठुरतां न, अतिशाठ्यम् अतिशठतां न, अतिमार्दवम् अतिमृदुतां न, अतिवादम् अतिविवादं वा अतिप्रसंगं न, अतिकार्यासक्तिं कार्येषु अत्यासक्तिं न, तथा अत्याग्रहम् अतिनिर्बन्धञ्च न धारयेत् कुर्यात् ॥ २१७ ॥

अतीति । सर्वम् अति अत्यन्तं नाशहेतुः हि अवधारणे, अतः कारणात् अत्यन्तं विवर्जयेत् त्यजेत् । जनः क्रौर्यात् नैष्ठुर्यात् उद्विजते विरज्यते, कार्पण्यात् अतिनिन्दति ॥ २१८ ॥

मार्दवादिति । मार्दवात् नैव गणयेत् । अतिवादतः अतिवादात् अपमानः, अतिदानेन दारिद्र्यं, तथा अतिलोभतः तिरस्कारः भवति ॥ २१९ ॥

अत्याग्रहादिति । नरस्य अत्याग्रहात् आग्रहस्य निर्बन्धस्य अतिशयात् मौर्ख्यं मूर्खता निर्बोधत्वमित्यर्थः, तथा अनाचारात् असदाचारात् आचाराभावाच्च धर्महानिः संजायते खलु । अत्याचारस्तु आचारविरुद्धाचरणन्तु एव तुशब्दोऽवधारणार्थः, मूर्खता ॥ २२० ॥

अधीति । बुद्धिमान् जनः अस्मि अहं सर्वेभ्यः अधिकः हि एवं

ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं विदुर्बुधाः ॥ २२१ ॥
आजन्मसेवितं दानैर्मानैश्च परिपोषितम् ।
तीक्ष्णवाक्यान्मित्रमपि तत्कालं याति शत्रुताम् ।
वक्रोक्तिशल्यमुद्धर्तुं न शक्यं मानसं यतः ॥ २२२ ॥
वर्द्धेदमित्रं स्कन्धेन यावत् स्यात् स्वबलाधिकः ।
ज्ञात्वा नष्टबलं तं तु भिन्द्यात् घटमिवाश्मनि ॥ २२३ ॥
न भूषयत्यलङ्कारो न राज्यं न च पौरुषम् ।
न विद्या न धनं तादृग् यादृक् सौजन्यभूषणम् ॥ २२४ ॥
अश्वे जवो वृषे धैर्यं मणौ कान्तिः क्षमा नृपे ।

---

ज्ञातीनामिति । ज्ञातीनां भ्रात्रादीनां मिथः परस्परं भेदे मनोभङ्गे आपतिते मनोभङ्गे आपतिते इत्यर्थः यत् मित्रं सर्वयत्नेन सर्वप्रकारेण माध्यस्थ्यम् औदासीन्यं न अभिपद्यते नावलम्बते, बुधाः पण्डिताः तत् मित्रं न विदुः ॥ २२१ ॥

आजन्मेति । आजन्म सेवितं दानैः मानैश्च परिपोषितमपि मित्रं तीक्ष्णवाक्यात् तत्कालं तदानीमेव शत्रुतां याति शत्रुभावम् अवलम्बते । यतः यस्मात् मानसं चित्तं वक्रोक्तिः कटुवाक्यमेव शल्यम् उद्धर्तुं न शक्यं न समर्थम् ॥ २२२ ॥

वर्द्धेदिति । यावत् स्वस्य बलात् अधिकः स्यात् अमित्रं इति शेषः तावत् तम् अमित्रम् स्कन्धेन वहेत् । तन्तु नष्टबलं ज्ञात्वा अश्मनि पाषाणे घटमिव भिन्द्यात् ॥ २२३ ॥

नेति । सौजन्यमेव भूषणं यादृक्, अलङ्कारस्तादृक् न, राज्यं तादृक् न, पौरुषं पराक्रमस्तादृक् न, विद्या तादृक् न, धनञ्च तादृक् न भूषयति ॥ २२४ ॥

हावभावौ च वेश्यायां गायके मधुरस्वरः ॥ २३५ ॥
दातृत्वं धनिके शौर्यं सैनिके बहुदुग्धता ।
गोषु दमस्तपस्विषु विद्वत्सु वावदूकता ॥ २३६ ॥
सभ्ये त्वपक्षपातस्तु तथा वाग्मिषु सत्यवाक् ।
अनन्यभक्तिर्भृत्येषु गूढितोक्तिश्च मन्त्रिषु ॥ २३७ ॥
मौनं मूर्खेषु च स्त्रीषु पातिव्रत्यं सुभूषणम् ।
महादुर्भूषणं चैतद् विपरीतममीषु च ॥ २३८ ॥
गृहं बहुकुटुम्बेन दीपैर्गोभिः सुबालकैः ।
भात्येकनायकं नित्यं न गृहं बहुनायकम् ॥ २३९ ॥
न च हिंस्रमुपेक्षेत शक्तो हन्याच्च तत्क्षणे ॥ २४० ॥

---

चन्द्रे इत्यादि । चन्द्रे अङ्कः चिह्नः, रूपे शौर्यं सुवेशत्वं, मणौ रक्ते कान्तिः, नृपे आज्ञा, वेश्यायां हावभावौ विभ्रमविलासौ, गायके मधुरस्वरः, धनिके दातृत्वं, सैनिके शौर्यं, गोषु बहुदुग्धता, तपस्विषु दमः इन्द्रियनिग्रहः, विद्वत्सु वावदूकता वाग्मिता, सभ्येषु अपक्षपातः समदर्शित्वं, वाग्मिषु सत्यवाक्, भृत्येषु अनन्यभक्तिः स्वाम्यनुरागः, मन्त्रिषु गूढितोक्तिः गूढितवचनं, मूर्खेषु मौनम् अवचनं, तथा स्त्रीषु पातिव्रत्यं सुभूषणम् । अमीषु चन्द्रादिषु एतद्विपरीतं अनाभावादिकं महादुर्भूषणं बाधत्वापहारकमित्यर्थः ॥२३५ ॥ २३६ ॥ २३७ ॥ २३८॥

गृहमिति । एकनायकम् एकस्वामिकं गृहं बहुकुटुम्बेन बहुपरिजनेन, दीपैः, गोभिः, सुबालकैश्च नित्यं भाति शोभते, बहवो नायका यस्य तादृशं गृहं नैव शोभते इति शेषः । बहुनायकत्वे परस्परविरोधप्रसङ्गादिति भावः ॥ २३९ ॥

न चेति । शक्तः समर्थः जनः हिंस्रं न च उपेक्षेत, तत्क्षणे हन्याच्च ॥ २४० ॥

पैशुन्यं चञ्चलता चौर्यं मात्सर्यमतिलोभता ।
असत्यं कार्यघातित्वं तथालस्यकताप्यलम् ।
गुणिनामपि दोषाय गुणानाच्छाद्य जायते ॥ २४१ ॥
मातुः प्रियायाः पुत्रस्य धनस्य च विनाशनम् ।
बाल्ये मध्ये च वार्द्धक्ये महापापफलं क्रमात् ॥ २४२ ॥
श्रीमतामनपत्यत्वमधनानां च मूर्खता ।
स्त्रीणां बहुपतित्वं च न सौख्यायेष्टनिर्गमः ॥ २४३ ॥
मूर्खः पुत्रोऽथवा कन्या चण्डी भार्या दरिद्रता ।
नीचसेवा ऋणं नित्यं नैतत् षट्कं सुखाय च ॥ २४४ ॥
नाध्यापने नाध्ययने न देवे न गुरौ द्विजे ।

---

पैशुन्यमिति । पैशुन्यं शठता, चञ्चलता, तीक्ष्णता, चौर्य्यं, मात्सर्य्यम् अन्यशुभद्वेषः, अतिलोभता, असत्यं कार्य्यघातित्वं तथा अलसकता आलस्यं गुणिनामपि अलम् अत्यर्थं दोषाय भवति, एतच्च पैशुन्यादिकं गुणान् आच्छाद्य जायते ॥ २४१ ॥

मातुरिति । बाल्ये शैशवे मातुः, मध्ये मध्यमे वयसि यौवने इत्यर्थः प्रियायाः स्त्रियाः, वार्द्धक्ये पुत्रस्य धनस्य च विनाशनं क्रमात् महापापफलम् ॥ २४२ ॥

श्रीमतामिति । श्रीमताम् ऐश्वर्य्यशालिनाम् अनपत्यत्वम्, अधनानां दरिद्राणां मूर्खता, स्त्रीणां बहुपतित्वं क्लीवपतित्वं, तथा इष्टानां प्रियाणां वस्तूनां निर्गमः विच्छेदः न सौख्याय सुखाय न भवति केवलं दुःखायेत्यर्थः ॥ २४३ ॥

मूर्ख इति । मूर्खः पुत्रः अथवा मूर्खा कन्या, चण्डी कोपना भार्य्या, दरिद्रता, नीचसेवा, तथा नित्यं सततम् ऋणम् एतत् षट्कं सुखाय न केवलं दुःखाय भवतीत्यर्थः ॥ २४४ ॥

न कलासु न सङ्गीते सेवायां नार्जवे स्त्रियाम् ॥ २४५ ॥
न शौर्ये न च तपसि साहित्ये रमते मनः।
यस्य मुक्तः खलः किं वा नररूपपशुश्च सः ॥ २४६ ॥
अन्योदयासहिष्णुश्च छिद्रदर्शी विनिन्दकः।
द्रोहशीलः स्वान्तमलः प्रसन्नास्यः खलः स्मृतः ॥ २४७ ॥
एकस्यैव न पर्याप्तमस्ति यद् ब्रह्मकोशजम्।
आशया वर्द्धितस्यास्ति तस्याल्पमपि पूर्तिकृत् ॥२४८॥
करोत्यकार्यं स्वाशोऽन्यं बोधयत्यनुमोदते ॥ २४९ ॥
भवन्त्यन्योपदेशार्थे धूर्त्ताः साधुसमाः सदा।
स्वकार्यार्थं प्रकुर्वन्ति ह्यकार्याणां शतं तु ते ॥ २५० ॥

---

नेति। नेति। यस्य मनः अध्यापने न, अध्ययने न, देवे न, गुरौ न, द्विजे न, कलासु नृत्यादिषु न, सङ्गीते न, सेवायां न, आर्जवे सारल्यव्यवहारे न, स्त्रियां न, शौर्य्ये पराक्रमे न, तपसि तपश्चर्य्यायां न, साहित्ये काव्यशास्त्रालोचनायाञ्च न रमते सः मुक्तः वा खलः वा नररूपपशुर्वा ॥ २४५ ॥ २४६ ॥

अन्योदयासहिष्णुरिति। यः अन्यस्य उदये उन्नतौ असहिष्णुः छिद्रदर्शी दोषदर्शी, विनिन्दकः द्रोहशीलः अनिष्टकरणशीलः प्रसन्नास्यः प्रसन्नमुखः किन्तु स्वान्तमलः मलपूर्णान्तःकरणः, स खलः स्मृतः कथितः ॥ २४७ ॥

एकस्येति। ब्रह्मकोशजं ब्रह्माण्डजनितं यत् पर्य्याप्तं प्रचुरं वस्तु अस्ति तत् आशया वर्द्धितस्य प्रवृद्धतृष्णस्य तस्य एकस्यापि अल्पमपि पूर्त्तिकृत् आशानिवारकं न ॥ २४८ ॥

करोतीति। स्वाशः आशायुक्तः जनः अकार्य्यं करोति अन्यं बोधयति अकार्य्यं करणीयेति शेषः अनुमोदते च ॥ २४९ ॥

भवन्तीति। धूर्त्ता जनाः अन्योपदेशार्थे अन्यान् प्रति उपदेश-

पुत्रं सदा साधु शास्ति प्रीतिकृत् स पितान्वयी ॥ २५५॥
यः सहायं सदा कुर्यात् प्रतीपं न वदेत् क्वचित् ।
सत्यं हितं वक्ति याति दत्ते गृह्णाति मित्रताम् ॥२५६॥
नीचस्यातिपरिचयो ह्यन्यगेहे सदा गतिः ।
जातौ सङ्घे प्रातिकूल्यं मानहान्यै दरिद्रता ॥ २५७ ॥
व्याघ्राग्निसर्पहिंस्राणां न हि सङ्घर्षणं हितम् ।
सेवितत्वात् तु राज्ञो नैते मित्राः कस्य सन्ति किम् ॥२५८
दौर्मनस्यं च सुहृदां सुप्राबल्यं रिपोः सदा ।
विद्वत्स्वपि च दारिद्र्यं दारिद्र्ये बह्वपत्यता ॥२५९॥

---

विद्येति । यः पिता पुत्रस्य विद्यागमार्थं कृत्यर्थं जीवनार्थं च यतते, सदा सततं पुत्रं साधु शास्ति उपदिशति च स पिता प्रीतिकृत् अन्वयी च पुत्रगतादृणात् मुक्तः भवति ॥ २५५ ॥

य इति । यः सदा सहायं कुर्यात्, क्वचिदपि जने प्रतीपं प्रतिकूलं न वदेत् तथा सत्यं हितं वक्ति वदति सः मित्रतां याति प्राप्नोति, दत्ते ददाति, गृह्णाति च ॥ २५६ ॥

नीचस्येति । नीचस्य इतरजनस्य अतिपरिचयः अतिसंसर्गः, अन्येषां गेहे सदा गतिः गमनं, जातौ ब्राह्मणक्षत्रियादिजन्मनि सङ्घे च समूहे च प्रातिकूल्यं प्रतिकूलाचरणं तथा दरिद्रता मानहान्यै मानक्षयाय भवतीति शेषः ॥ २५७ ॥

व्याघ्रेति । राज्ञः सेवितत्वात् यथा राजा सेवितः अन्ये मम के इति साहसादिति भावः तथा व्याघ्राणाम् अग्नेः सर्पाणाम् अन्येषां हिंस्राणाञ्च संघर्षणम् आक्रमणम् न हि नैव हितम् । एते नृप व्याघ्रादयः किं कस्यापि मित्राः सन्ति वश्यतामापद्यन्ते न कस्यापीत्यर्थः ॥२५८॥

दौर्मनस्यमिति । सुनीति । सुहृदां बन्धूनां दौर्मनस्यं दुःखितमनस्त्वं सदा रिपोः शत्रोः प्राबल्यं प्रबलता, विद्वत्स्वपि पण्डितेषु अपि

मूल्यं मानं च पण्यानां याथात्म्यात् ज्ञायते सदा ॥२६४॥
तपःक्रीडाविसेवासूपभोग्ये नापि भक्षणे ।
हितः प्रतिनिधिर्नित्यं कार्येऽन्ये तं नियोजयेत् ॥२६५॥
निर्जनत्वं मधुरभुक् जारस्त्रीकः सदेच्छति ।
प्राकाम्यं तु वणिग्विद्वान् वेश्या धनिकमित्रताम् ॥२६६॥
कुनृपश्च कृतं नित्यं स्वामिकृत्यं कुसेवकः ।
तत्त्वं तु ध्यानवान् दृश्यं तपोऽग्निं देवजीवकः ॥२६७॥
योग्या कालं च कृतज्ञो जारं वैद्यं च व्याधितः ।
श्रुतपक्षो महार्घत्वं दानशीलं तु याचकः ।
रक्षितारं शरणार्थी भीतश्छिद्रं तु दुर्जनः ॥ २६८ ॥

---

न इति । पण्डितः जनः कथाधिकम् अविकथ्यम् अन्यथा भ-षितमिति भावः कार्यं कर्तुं न च ईहेत चेष्टेत । लाभाधिक्यम् अधिको लाभः यत् क्रियते तेन चेतनः यः लाभाधिककारी जनः तत्कार्यिभिः जनैः सेवेत् तत्कार्यं कुर्यात् सदा च पण्यानां विक्रेयद्रव्याणां मूल्यं मानं परिमाणञ्च याथात्म्यात् यथाक्रमेण ज्ञायते जनैरिति शेषः । अथ वा कर्मणो-हिरण्यः ॥ २६४ ॥

तप इति । तपः तपश्चरणं क्रीडा क्रीडा जपिः कर्मणां सेवा तथा उपभोग्ये भक्षणे च विषये प्रतिनिधिः न हितः । अन्ये कार्यविषये प्रतिनिधेः प्रयोगः । कार्ये नित्यं सततं तं प्रतिनिधिं योजयेत् ॥२६५॥

निर्जनत्वमिति । मधुरभुक् मिष्टभोजी जारः परस्त्रीकामुकः चौरश्च सदा निर्जनत्वं वणिक् विद्वान् प्रवचनपटुः प्राकाम्यं, तथा वेश्या धनिकमित्रतां धनिभिः बन्धुत्वम् इच्छति ॥ २६६ ॥

कुनृप इति । कुनृपः कुत्सितो राजा कृतं, कुसेवकः कुभृत्यः स्वामिनः कृत्यं, ध्यानवान् तत्त्वं, तथा देवजीवकः देवसेवकः दृश्यं तपः अग्निञ्च इच्छतीति पूर्वेणान्वयः ॥ २६७ ॥

अवज्ञायते विवदते खपित्यश्नाति मादकम् ।
करोति निष्फलं कर्म मूर्खो वा स्वेष्टनाशनम् ॥२६९॥
तमोगुणाधिकं चात्रं ब्राह्मं सत्त्वगुणाधिकम् ।
अन्यद्रजोऽधिकं तेजस्तेषु सत्त्वाधिकं वरम् ॥ २७० ॥
सर्वाधिको ब्राह्मणस्तु जायते हि स्वकर्मणा ।
तत्तेजसोऽनुतेजांसि सन्ति च क्षत्रियादिषु ॥२७१॥
स्वधर्मस्थं ब्राह्मणं हि दृष्ट्वा बिभ्यति चेतरे ।
क्षत्रियादिर्नान्यथा स्वधर्मं चातः समाचरेत् ॥ २७२ ॥

---

योग्या इति । योग्या समर्था कुलवधूः कान्तं पतिं, कुलटा व्यभिचारिणी जारम् उपपतिं, व्याधितः रोगी वैद्यं, धृतपक्षः पक्षग्रविक्रयी मध्यार्घत्वं द्रव्यस्य मध्यामूल्यतां, याचकः भिक्षुः दानशीलं जनं, भीतः रक्षितारं, तथा दुर्जनः छिद्रं कलं स्वगवते अन्वेषयति ॥ २६८ ॥

अवज्ञायते इति । मूर्खः जनः अवज्ञायते तोच्छवत् आचरति, विवदते कलहं करोति, खपिति अधिकं निद्रातीत्यर्थः, मादकं मत्तताजनकं द्रव्यम् अश्नाति भक्षयति, कर्म निष्फलं करोति, स्वस्य आत्मनः इष्टनाशनं वा करोति, वाशब्दः समुच्चयार्थः ॥ २६९ ॥

तम इति । क्षात्रं क्षत्रियसम्बन्धि तेजः तमोगुणाधिकम् अधिकतमोगुणं, ब्राह्मं तेजः सत्त्वगुणाधिकम् अन्यत् वैश्यादिकं तेजः रजोऽधिकं तेषु मध्ये सत्त्वाधिकं तेजः ब्राह्ममित्यर्थः वरं श्रेष्ठम् ॥ २७० ॥

सर्वाधिक इति । ब्राह्मणस्तु ब्राह्मण एव स्वकर्मणा निजेन कर्मणा अध्यापनादिकर्मषट्केन सर्वाधिकः सर्वश्रेष्ठः जायते । क्षत्रियादिषु तस्य ब्राह्मणस्य यत् तेजः तस्य अनु पश्चात् हीनानीत्यर्थः तेजांसि सन्ति ॥ २७१ ॥

स्वधर्मस्थमिति । ब्राह्मणं स्वधर्मस्थं दृष्ट्वा इतरे जनाः क्षत्रियादयः बिभ्यति भीता भवन्ति अन्यथा न स्वधर्मभ्रंशे नेत्यर्थः । अतः कारणात् स्वधर्मं समाचरेत् ब्राह्मण इति शेषः ॥ २७२ ॥

न स्यात् स्वधर्महानिस्तु यया वृत्त्या च सा वरा।
स देशः प्रवरो यत्र कुटुम्बपरिपोषणम् ॥ २७३ ॥
कृषिस्तु चोत्तमा वृत्तिर्या सरिन्मातृका मता।
मध्यमा वैश्यवृत्तिश्च शूद्रवृत्तिस्तु चाधमा ॥ २७४ ॥
याच्ञाधमतरा वृत्तिरुत्तमा सा तपस्विषु।
क्वचित् सेवोत्तमा वृत्तिर्धर्मशीलनृपस्य च ॥ २७५ ॥
आध्वर्यवादिकं कर्म कृत्वा या गृह्यते भृतिः।
सा किं महाधनायेव वाणिज्यमलमेव किम्? ॥२७६॥
राजसेवां विना द्रव्यं विपुलं नैव जायते।
राजसेवातिगहना बुद्धिमद्भिर्विना न सा।
कर्तुं शक्या चेतरेण असिधारेव सा सदा ॥ ॥ २७७ ॥

---

नेति। यया वृत्त्या जीविकया स्वस्य धर्महानिः न स्यात् सा वृत्तिः वरा श्रेष्ठा, यत्र कुटुम्बानां पोष्यवर्गाणां परिपोषणं सर्वतोभावेन पोषणं भवति सः देशः प्रवरः श्रेष्ठः ॥ २७३ ॥

कृषिरिति। सरिन्मातृका नदीमातृका या कृषिः सा उत्तमा वृत्तिः मता, वैश्यानां वृत्तिः व्यवसायात्मिकेत्यर्थः मध्यमा, शूद्राणान्तु वृत्तिः सेवारूपेत्यर्थः अधमा ॥ २७४ ॥

याच्ञेति। याच्ञा वृत्तिः अधमतरा अत्यधमा, सा तपस्विषु उत्तमा हि। क्वचित् धर्मशीलनृपस्य सेवाख्या वृत्तिः उत्तमा ॥२७५॥

आध्वर्यवादिकमिति। आध्वर्यवादिकम् अध्वर्युकर्मादि यजुर्वेदादिविहितं कर्म कृत्वा या भृतिः दक्षिणारूपं वेतनं गृह्यते, सा भृतिः महाधनाय किं नैव महाधनाय भवति तस्याः यत्किञ्चिद्रूपत्वादिति भावः, तथा वाणिज्यम् अलं पर्याप्तं महाधनायेति शेषः किम्? नैवेत्यर्थः ॥ २७६ ॥

राजसेवामिति। राजसेवां विना विपुलं द्रव्यं धनं नैव जायते,

तथादौ पादगमनं यानगत्वमनन्तरम्।
सुखाय कल्पते नित्यं दुःखाय विपरीतकम्॥ २८२ ॥
वरं हि स्वनपत्यत्वं कुतोपत्यवतः सदा।
कुद्यानात् पादगमो ह्यौदासीन्यं विरोधतः॥ २८३ ॥
वरं देशाच्छादनतश्चर्मणा पादगूहनम्।
ज्ञानलवदौर्विदग्ध्यादज्ञता प्रवरा मता॥ २८४ ॥
परगृहनिवासादरण्ये निवसनं वरम्।
प्रदुष्टभार्यागार्हस्थ्याद्भैक्ष्यं वा मरणं वरम्॥ २८५ ॥
अमैथुनकृतं गर्भाधानं स्वामित्वमेव च।
खलसख्यमपथ्यं तु प्राक्सुखं दुःखनिर्गमम्॥ २८६ ॥

---

शेषावस्थायामित्यर्थः धनिकत्वं तथा आदौ पादगमनं पद्भ्यां गमनं वरं किन्तु अनन्तरं यानगत्वं यानेन वाहनेन अश्वादिना गमनं नित्यं सुखाय कल्पते विपरीतकं आदौ धनिकत्वं पश्चात् निर्धनत्वमित्यर्थः दुःखाय भवतीति शेषः ॥ २८२ ॥

वरमिति। कुतोपत्यवतः कुतपुत्रात् सदा अनपत्यत्वं अपुत्रत्वं कुद्यानात् कुत्सितात् यानात् अश्वादेः पादगमः पद्व्रजेन गमनं तथा विरोधतः विवादात् औदासीन्यं माध्यस्थं वरं श्रेष्ठम् ॥ २८३ ॥

वरमिति। देशाच्छादनतः समस्तदेशाच्छादनात् चर्मणा चर्मपादुकाभ्यामित्यर्थः पादगूहनं चरणरक्षणं वरं श्रेष्ठम्। तथा ज्ञानलवेन अल्पज्ञानेन दौर्विदग्ध्यात् चातुर्यात् अज्ञता मूर्खता प्रवरा श्रेष्ठा मता ॥ २८४ ॥

परगृहेति। परगृहे निवासात् अरण्ये निवसनं वासः वरं तथा प्रदुष्टया भार्यया सह गार्हस्थ्यात् गृहित्वात् भैक्ष्यं सन्न्यासित्वं वा मरणं वरम् ॥ २८५ ॥

अमैथुनमिति। पुंसां कुपुरुषाणां मैथुनं विना गर्भाधानं स्वामित्वं,

कुमन्त्रिभिर्नृपो रोगी कुवैद्यैः कुनृपैः प्रजा ।
कुसन्तत्या कुलं चात्मा कुबुद्ध्या हीयतेऽनिशम् ॥२८७॥
हस्त्यश्ववृषबालस्त्रीशुकानां शिक्षको यथा ।
तथा भवन्ति ते नित्यं संसर्गगुणधारकाः ॥ २८८ ॥
स्यादाश्रयोऽवसरोक्त्या सद्वसनैः सुप्रसिद्धता ।
सभायां विद्यया मानस्त्रितयं त्वधिकारतः ॥ २८९ ॥
सुभार्या सुष्ठु चापत्यं सुविद्या सुधनं सुहृत् ।
सुदासदास्यौ सद् देहः सद्वेश्म सुनृपः सदा ।
गृहिणां हि सुखायालं दशैतानि न चान्यथा ॥२९०॥

---

सुखेन सह सक्षम् अपथ्यम् अहिताहारश्च प्राक्सुखम् आपात-सुखकरं न किन्तु दुःखनिर्गमं परिणाम दुःखकरम् ॥ २८६ ॥

कुमन्त्रिभिरिति । कुमन्त्रिभिः नृपः कुवैद्यैः रोगी कुनृपैः प्रजा कुसन्तत्या कुपुत्रेण कुलं तथा कुबुद्ध्या आत्मा अनिशं निरन्तरं हीयते हीनो भवति ॥ २८७ ॥

हस्तीति । ते नृपादयः हस्तिनाम् अश्वानां वृषाणां बालानां शिशूनां स्त्रीणां शुकानां पक्षिविशेषाणाञ्च शिक्षको यथा तथा नित्यं सततं संसर्गगुणधारकाः संसर्गेण कुमन्त्र्यादीनामित्यर्थः गुण-धारकाः तत्तद्गुणवन्तः भवन्ति ॥ २८८ ॥

स्यादिति । अवसरे समये उक्त्या कथनेन आश्रयः कार्यसिद्धि-रित्यर्थः स्यात् सद्वसनैः शोभनपरिच्छदैः सुप्रसिद्धता आपाततः शोभा स्यात् तथा विद्यया सभायां मानः स्यात् तु किन्तु अधिकारतः स्वामित्वे सति एतत् त्रितयं भवतीति शेषः ॥ २८९ ॥

सुभार्य्येति । सुभार्य्या, सुष्ठु शोभनं अपत्यं सुविद्या, सुधनं सुहृत्, सुदासः सुदासी सद्देहः रोगादिना अनभिभूतं शरीर-मित्यर्थः सद्वेश्म सुन्दरं गृहं तथा सुनृपः एतानि दश गृहिणां

दृष्टाः सुशीला विश्वस्ताः सदाचारास्त्रियो नराः।
क्लीवा वान्तःपुरे योज्या न युवा मित्रमप्युत ॥ २९१ ॥
कालं नियम्य कार्याणि ह्याचरेत् नान्यथा क्वचित्।
गवादिष्वात्मवज्ज्ञानमात्मानं चार्थधर्मयोः।
नियुञ्जीतावसंशित्रं मातरं भिषजो गुरुम् ॥ २९२ ॥
गच्छेदनियमेनैव सदैवान्तःपुरं नरः ॥ २९३ ॥
भार्यामपत्या सद्यानं भारवाही सुरक्षकः।
परदुःखहरा विद्या सेवकश्च निरालसः।
षडेतानि सुखायालं प्रवासे तु नृणां सदा ॥ २९४ ॥

---

सदा सुखाय अलं पर्य्याप्तानि हि सुखकराणीत्यर्थः. अन्यथा तद्वै-परीत्ये न सुखायेत्यर्थः ॥ २९० ॥

दृष्टा इति। दृष्टाः सुशीलाः सुचरिताः विश्वस्ताः सदाचाराः स्त्रियः नराश्च वा क्लीवाः अन्तःपुरे योज्याः नियोक्तव्याः युवा मित्र-मपि न योज्य इति भावः ॥ २९१ ॥

कालमिति। कालं नियम्य निर्धार्य कार्य्याणि आचरेत्, अन्यथा कालानियमेनेत्यर्थः क्वचित् न। किञ्च गवादिषु पशुषु आत्मवत् ज्ञानं आचरेत् आत्मवत् गवादिकं पालयेदित्यर्थः। किञ्च नरः अर्थधर्मयोः आत्मानं असंशित्रं मातरं भिषजं च गुरुं नियुञ्जीत तथा अनियमेनैव समयासमयविचारेणेत्यर्थः सदैव अन्तःपुरं गच्छेत् तत्र अन्याव्यमान दुराचारनिवारणायेतिभावः ॥ २९२ ॥ २९३ ॥

भार्य्येति। प्रवासे तु नृणां मानवानां अनपत्या भार्या सत्-यानं यानं वाहनं भारवाही सुरक्षकः परेषां दुःखहारिणी विद्या तयाहि परोपकारः भवतीति भावः निरालसः आलस्यहीनः सेवकश्च एतानि षट् सदा सुखाय अलं पर्य्याप्तानि भवन्तीत्यर्थः ॥ २९४ ॥

मार्गं निरुध्य न स्थेयं समर्थेनापि कर्हिचित् ।
सव्याजेनापि गच्छेन्न हट्टमार्गे नृपोऽपि च ॥ २८५ ॥
ससहायः सदा च स्यादध्वगो नान्यथा क्वचित् ।
समीपसन्मार्गजलाभयग्रामेऽध्वगो वसेत् ॥ २८६ ॥
तथाविधे वा विरमेन्न मार्गे विपिनेऽपि न ॥ २८७ ॥
अत्यटनं चानशनमतिमैथुनमेव च ।
अत्यायासश्च सर्वेषां द्राग्जराकरणं महत् ॥ २८८ ॥
अत्यायासो हि विद्यासु जराकारी कलासु च ॥२८९॥
दुर्गुणं तु गुणीकृत्य कीर्तयेत् स प्रियो भवेत् ।

---

मार्गमिति । समर्थेन शक्तेनापि कर्हिचित् कदाचित् मार्गं पन्थानं निरुध्य अवरुध्य न स्थेयं न स्थातव्यम् । नृपोऽपि राजा छद्मना अदृष्टेन यानेन वाहनेनापि हट्टमार्गे क्रयविक्रयवस्तुमार्गे न गच्छेत् ॥ २८५ ॥

ससहाय इति । अध्वगः पथिकः सदा ससहायः सहायवान् स्यात् क्वचित् कुत्रापि अन्यथा असहाय इत्यर्थः । न भवेदिति शेषः । किञ्च अध्वगः समीपे सन् मार्गः जलञ्च यस्य तादृशे अभये भयरहितग्रामे वसेत् तथाविधे मार्गे भयरहिते इत्यर्थः पथि वा विरमेत् विपिने वनेऽपि न विरमेत् न विश्रामं गच्छेदित्यर्थः । एकत्र निर्भयत्वात् अन्यत्र सभयत्वादिति भावः ॥ २८६ ॥ २८७ ॥

अत्यटनमिति । अत्यटनं अतिभ्रमणं अनशनं अनाहारः अतिमैथुनं अत्यायासः अतिशयपरिश्रमश्च सर्वेषां जनानां द्राक् झटिति महत् जराकरणं वार्द्धक्यजननम् ॥ २८८ ॥

सर्वविद्यास्विति । सर्वासु विद्यासु कलासु च शिल्पविद्यासु अत्यायासः अतिपरिश्रमः हि जराकारी जराजनकः भवतीति शेषः ॥२८९॥

दुर्गुणमिति । यः दुर्गुणं दोषं गुणीकृत्य गुणत्वेनारोप्य कीर्त-

गुणाधिक्यं कीर्तयति यः किं स्यात् पुनः सखा ॥२००॥
दुर्गुणं वक्ति सत्येन प्रियोऽपि सोऽप्रियो भवेत् ।
गुणं हि दुर्गुणीकृत्य वक्ति यः स्यात् कथं प्रियः ? ॥२०१॥
स्तुत्या वशं यान्ति देवा अञ्जसा किं पुनर्नराः ? ।
प्रत्यक्षं दुर्गुणान् नैव वक्तुं शक्नोति कोऽप्यतः ॥२०२॥
स्वदुर्गुणान् स्वयं ज्ञात्वा विमृशेल्लोकमात्मनः ॥ २०३ ॥
स्वदुर्गुणश्रवणतो यस्तुष्यति न क्रुध्यति ।
स्वोपहासप्रविज्ञाने यतते त्यजति स्तुते ।
स्वगुणश्रवणान्नित्यं समस्तिष्ठति नाधिकः ॥ २०४ ॥
दुर्गुणानां स्वनिरहं गुणाधानं कथं मयि ।
मय्येव चाज्ञताप्यस्ति मन्यते सोऽधिकोऽखिलात् ॥२०५॥

---

नेव यः लोकस्य अप्रियः भवेत् । यः पुनः गुणाधिक्यं गुणातिशयं कीर्तयति सः किं सखा न स्यात् अपितु सखा एव स्यादित्यर्थः ॥२००॥

दुर्गुणमिति । यः सत्येन दुर्गुणं दोषं वक्ति वदति सः प्रियोऽपि अप्रियो भवेत् । यस्तु गुणं दुर्गुणीकृत्य दोषत्वेनारोप्य वक्ति सः कथं प्रियः स्यात् ? न कथमपीत्यर्थः ॥ २०१ ॥

स्तुत्येति । देवाः अपि स्तुत्या गुणकीर्तनेन अञ्जसा झटिति वशं यान्ति नराः मानवाः पुनः किं ? । अतः कोऽपि प्रत्यक्षं समक्षं दुर्गुणान् दोषान् वक्तुं नैव शक्नोति ॥ २०२ ॥

स्वदुर्गुणानिति । अतः स्वयं लोकतः ज्ञात्वैव स्वदुर्गुणान् निजदोषान् विमृशेत् विवेचयेत् ॥ २०३ ॥

स्वदुर्गुणेत्यादि । यः स्वस्य दुर्गुणानां दोषाणां श्रवणतः श्रवणात् तुष्यति, न क्रुध्यति स्वस्य उपहासस्य प्रविज्ञाने प्रकर्षेण विज्ञाने विवेकज्ञानार्थमित्यर्थः यतते, स्तुते स्वदोषे इति शेषः त्यजति तं दोषमिति शेषः । किञ्च स्वस्य गुणश्रवणात् समः अविकृतः इत्यर्थः तिष्ठति

न साधुस्तस्य देवा हि कलांशेयं लभन्ति न ॥ २०६ ॥
सदाल्पमप्युपकृतं महत् साधुषु जायते ।
मन्यते सर्षपाल्पं महच्चोपकृतं खलः ॥ २०७ ॥
अभिन्नं बलिनं साधुर्मन्यते दुर्जनोऽन्यथा ।
दुरुक्तमप्यतः साधोः क्षमयेद् दुर्जनस्य च ॥ २०८ ॥
तथा न क्रीड़येत् केश्चित् कलहाय भवेद् यथा ।
विनोदेऽपि वदेदेवं ते भार्या कुलटास्ति किम् ? ॥२०९॥
अपशब्दाश्च नो वाच्या मित्रभावाच्च केष्वपि ।
गोप्यं न गोपयेन्मित्रे तद् गोप्यं न प्रकाशयेत् ॥२१०॥

---

न अधिकः न स्फूर्त्तिमान् भवतीत्यर्थः तथा अहं दुर्गुणानां दोषाणां खनिः आकरः, मयि कथं गुणानाम् आधानम् अवस्थानं सम्भवतीति शेषः मयि एव अज्ञता मूर्खता अस्ति इति मन्यते यः अखिलात् जगतः अधिकः महान् । स एव साधुः देवाः अपि तस्य कलांशेयम् अंशविन्दुं न लभन्ति न प्राप्नुवन्ति ॥ २०४ ॥ २०५ ॥ २०६ ॥

सदेति । साधुषु जनेषु सदा अल्पमपि उपकृतं महत् जायते । खलः दुर्जनः महच्च अधिकमपि उपकृतं सर्षपादपि अल्पं मन्यते ॥२०७॥

अभिन्नमिति । साधुर्जनः अभिन्नं समानमन्तं जनं बलिनं बलवन्तं दुर्जनस्तु अन्यथा अभिन्नं दुर्बलमित्यर्थः मन्यते । अतः साधोः दुर्जनस्य च दुरुक्तमपि दुर्वाक्यमपि क्षमयेत् ॥ २०८ ॥

तथेति । केश्चित् जनैः तथा न क्रीड़येत् न क्रीड़ां कुर्य्यात् यथा तत् क्रीड़नं कलहाय विवादाय भवेत् । विनोदेऽपि आमोदेऽपि कौतुकार्थमपीत्यर्थः ते तव भार्य्या कुलटा व्यभिचारिणी अस्ति किम् ? एवं प्रकारेण न वदेत् न दुर्वाक्यं ब्रूयादित्यर्थः ॥ २०९ ॥

अपशब्दा इति । केषु अपि जनेषु मित्रभावाच्च बन्धुभावादपि अपशब्दाः कटुवचनानि नो वाच्याः न वक्तव्याः । किन्तु मित्रे सुहृदि

वैरीभूतोऽपि पश्चात् प्राक्कथितं वापि सर्वदा।
विज्ञातमपि यद्दौष्ट्यं दर्शयेत् तन्न कर्हिचित् ॥ २११ ॥
प्रतिकर्त्तुं यतेतैव गुप्तः कुर्यात् प्रतिक्रियाम् ॥ २१२ ॥
यथार्थमपि न ब्रूयाद् बलवद् विपरीतकम्।
दृष्टं त्वदृष्टवत् कुर्याच्छ्रुतमप्यश्रुतं क्वचित् ॥ २१३ ॥
मूकोऽन्धो बधिरः खञ्जः स्वापत्काले भवेन् नरः।
अन्यथा दुःखमाप्नोति हीयते व्यवहारतः ॥ २१४ ॥
वदेद् वृद्धानुकूलं यन्न बालसदृशं क्वचित्।

---

गोप्यं गोपनीयं रहस्यमित्यर्थः न गोपयेत् तथा तस्य मित्रस्य गोप्यं गोपनीयविषयं किमपि न प्रकाशयेत् ॥ २१० ॥

वैरीभूत इति। पश्चात् वैरीभूतः शत्रुतामापन्नोऽपि सुहृदित्यर्थः प्राक् प्रणयकाले कथितं मित्रेणेति शेषः वा दौष्ट्यं दोषमित्यर्थः यत् विज्ञातं विदितं मित्रस्येति भावः तत् कर्हिचित् कदाचित् अमित्रत्वेऽप्यर्थः न दर्शयेत् न प्रकाशयेत् ॥ २११ ॥

प्रतिकर्त्तुमिति। गुप्तः स्वयं सुरक्षितः सन् प्रतिकर्त्तुं शत्रोरिति शेषः यतेत, प्रतिक्रियां प्रतिकारं कुर्य्याच्च ॥ २१२ ॥

यथार्थमिति। यथार्थमपि सत्यमपि बलवतां प्रबलानां विपरीतकं क्रुद्धाजनकं किमपि न ब्रूयात् न वदेत्। क्वचित् कुत्रचित् दृष्टमपि अदृष्टवत्, श्रुतमपि अश्रुतम् अश्रुतवदित्यर्थः कुर्य्यात् ॥ २१३ ॥

मूक इति। नरः स्वस्य आपत्काले कदाचिदिति शेषः मूकः वाक्यानुच्चारकः, अन्धः दर्शनेन्द्रियहीनः, बधिरः श्रोत्रेन्द्रियरहितः तथा खञ्जः चरणविकलः भवेत्। अन्यथा प्रबलानां क्रुद्धाकथने दुःखं प्राप्नोति, व्यवहारतः लोकाचाराच्च हीयते भ्रष्टो भवति ॥ २१४ ॥

वदेदिति। वृद्धानुकूलं वृद्धानां विज्ञानाम् अनुकूलम् अविरोधि इत्यर्थः यत्, तत् वचनं वदेत् क्वचित् बालसदृशं बालकवदित्यर्थः न वदेत्।

अज्ञातशास्त्रो न ब्रूयात् ज्योतिषं धर्मनिर्णयम् ।
नीतिं दण्डं चिकित्साञ्च प्रायश्चित्तं क्रियाफलम् ॥२२०॥
पारतन्त्र्यात् परं दुःखं न स्वातन्त्र्यात् परं सुखम् ।
अप्रवासी गृही नित्यं स्वतन्त्रः सुखमेधते ॥ २२१ ॥
नूतनप्राक्तनानां च व्यवहारविदां धिया ।
प्रतिक्षणं चाभिनवो व्यवहारो भवेदतः ॥ २२२ ॥
वक्तुं न शक्यते प्रायः प्रत्यक्षादनुमानतः ।
उपमानेन तज्ज्ञानं भवेदाप्तोपदेशतः ॥ २२३ ॥

---

विपदेत् । किन्तु बन्धुभिः दुर्बलजने चिकित्सा दानपत्रं दानभीतमत्त्वभाविषयं नैव वर्जयेत् ॥ २१९ ॥

अज्ञातशास्त्र इति । अज्ञातम् अविदितं शास्त्रं येन सः शास्त्रानभिज्ञ इत्यर्थः ज्योतिषं, धर्मनिर्णयं धर्मतत्त्वं नीतिं दण्डं दण्डनीतिविवरणं चिकित्सां प्रायश्चित्तं तथा क्रियाणां कार्य्याणां फलं न ब्रूयात् न कथयेत् ॥ २२० ॥

पारतन्त्र्यादिति । पारतन्त्र्यात् पराधीनतायाः परं दुःखं न, स्वातन्त्र्यात् स्वाधीनतायाश्च परं सुखं न अस्तीति शेषः । अप्रवासी अविदेशी स्वतन्त्रः स्वाधीनः गृही नित्यं सततं सुखम् एधते प्राप्नोतीत्यर्थः ॥ २२१ ॥

नूतनेति । वक्तुमिति । नूतनानाम् इदानीन्तनानां प्राक्तनानां पूर्वतनानाञ्च व्यवहारविदाम् आचारदर्शिनां धिया बुद्ध्या प्रतिक्षणम् अभिनवः व्यवहारः आचारः भवेत् उत्पद्यते, अतः अस्मात् कारणात् प्रायः साकल्येनेत्यर्थः सः वक्तुं न शक्यते । प्रत्यक्षात् अनुमानतः अनुमानात् उपमानेन दृष्टान्तेन आप्तानां विश्वस्तानाम् उपदेशतः उपदेशात् तस्य व्यवहारस्य ज्ञानं भवेत् ॥ २२२ ॥ २२३ ॥

कथितं तु समासेन सामान्यं नृपराष्ट्रयोः ।
नीतिशास्त्रं हितायालं यद् विशिष्टं नृपे स्मृतम् ॥२२४

इति शुक्रनीतौ नृपराष्ट्रसामान्यलक्षणं नाम
तृतीयोऽध्यायः ।

---

## चतुर्थेऽध्याये प्रथमं प्रकरणम् ।

---

अथ मित्रप्रकरणं प्रवक्ष्यामि समासतः ।
लक्षणं सुहृदादीनां समासाच्छृणुताधुना ॥ १ ॥
मित्रः शत्रुश्चतुर्धा स्यादुपकारापकारयोः ।

---

कथितमिति । समासेन संक्षेपेण नृपराष्ट्रयोः नृपस्य राष्ट्रस्य राज्यस्य साधारणस्य च सामान्यं साधारणं कथितं नीतिशास्त्रं हिताय सर्वेषामिति शेषः अलं पर्याप्तं हितजनकमित्यर्थः । यत् नीतिशास्त्रं नृपे राज्ञि विषये विशिष्टं स्मृतं विशेषेण हितकरत्वादिति भावः ॥ २२४ ॥

समाप्तः तृतीयोऽध्यायः ।

---

अथेति । अथ अनन्तरं मित्राणां विविधविषयाणां प्रकरणं समासतः संक्षेपात्, प्रवक्ष्यामि तत्र सुहृदादीनां लक्षणं समासतः संक्षेपात् अधुना साम्प्रतं प्रथममित्यर्थः शृणुत ॥ १ ॥

मित्र इति । उपकारापकारयोः सतोः क्रमेण मित्रः शत्रुश्च स्यात् स च प्रत्येकं चतुर्धा चतुर्विधः कर्त्ता, कारयिता, अनुमन्ता, तथा

कर्त्ता कारयिता चानुमन्ता यश्च सहायकः ॥ २ ॥
यस्य सुद्रवते चित्तं परदुःखेन सर्वदा ।
इष्टार्थे यततेऽन्यस्याप्रेरितः सत्करोति यः ॥ ३ ॥
आत्मस्त्रीधनगुह्यानां शरणं समये सुहृत् ।
प्रोक्तोत्तमोऽयमन्यश्च त्रिद्व्येकपदमित्रकः ॥ ४ ॥
अनन्यस्वत्वकामत्वमेकस्मिन् विषये द्वयोः ।
वैरिलक्षणमेतद्वान्येष्टनाशनकारिता ॥ ५ ॥
आत्मभावे पितृद्रव्यमखिलं मम वै भवेत् ।
न स्यादेतस्य वश्येऽयं ममैव स्यात् परस्परम् ॥ ६ ॥

---

यश्च सहायकः साहाय्यकारी यः तथा च कर्त्ता मित्रः, कारयिता मित्रः, अनुमन्तामित्रः सहायमित्रः । कर्त्ता शत्रुः कारयिता शत्रुः अनुमन्ता शत्रुः सहायः शत्रुः । मित्रशब्दस्यात्र पुंस्त्वं आर्षः ॥ २ ॥

यस्येति । आत्मेति । यस्य चित्तं परदुःखेन सर्वदा सुद्रवते गलति, यः अन्यस्य इष्टार्थे अभिप्रेतार्थसाधने यतते, तथा अप्रेरितः अयाचितः सन्नपि सत्करोति उपकरोति । किन्तु यः समये यथासमये आत्मनः स्त्रियाः धनानां गुह्यानाम् अन्येषां गुप्तविषयाणां शरणं रक्षिता सः अयम् उत्तमः सुहृत् प्रोक्तः कथितः । प्रोक्तोत्तम इति सन्धिरार्षः । अन्यश्च त्रिद्व्येकपदमित्रकः अस्ति तथाहि यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते तथा अप्रेरितोऽपि सत्करोति सः त्रिपदमित्रकः, यस्य चित्तं परदुःखेन गलति, यश्च अन्यस्य इष्टार्थे यतते, सः द्विपदमित्रकः, यस्य चित्तं परदुःखेन गलति सः एकपदमित्रक इति भावः ॥ ३ ॥ ४ ॥

अनन्येति । द्वयोः एकस्मिन् विषये वस्तुनि अनन्यस्वत्वकामत्वं निजस्वाधिकारमात्रकामना वा अथवा अन्येषाम् इष्टानां नाशनकारिता विनाशकत्वमित्यर्थः; एतत् उभयं वैरिलक्षणं शत्रुतापरिचायकमित्यर्थः ॥ ५ ॥

भोक्ष्येऽखिलमहं चैतद्विनाऽन्यं स्तः सुवैरिणौ ।
द्वेष्टि द्विष्ट उभौ शत्रू स्वस्यैकतरसंश्रयौ ॥ ७ ॥
शूरस्योत्थानशीलस्य बलनीतिमतः सदा ।
सर्वे मित्रा गूढवैरा नृपाः कालप्रतीक्षकाः ॥ ८ ॥
भवन्तीति किमाश्चर्यं राज्यलुब्धा न ते हि किम् ।
न राज्ञो विद्यते मित्रं राजा मित्रं न कस्य वै ॥ ९ ॥
प्रायः कृत्रिममित्रे ते भवतश्च परस्परम् ।
केचित् स्वभावतो मित्राः शत्रवः सन्ति सर्वदा ॥ १० ॥

---

उभयप्रकारं दृष्टान्तेन दर्शयति । भ्रात्रभावे इति । भोक्ष्ये इति । भ्रातुः अभावे विद्यमानतायामपीत्यर्थः अखिलं सम्पूर्णं पितृद्रव्यं मम वै ममैव वैशब्दोऽवधारणे । भवेत्, एतस्य भ्रातुः न स्यात्, अयञ्च भ्राता ममैव वध्यः स्यात् । अहम् अन्यं विना अखिलं सम्पूर्णम् एतद् वस्तु भोक्ष्ये इत्येवं परस्परं तौ मन्येते इति शेषः तौ सुवैरिणौ परमशत्रू स्तः भवतः । यश्च द्वेष्टि, द्वेषं करोति, यश्च द्विष्टः द्वेषविषयीभूतः तौ एकतरसंश्रयौ एकतरमाश्रयमाणौ शत्रू स्तः भवतः ॥६॥७॥

शूरस्येति । भवन्तीति । शूरस्य विक्रमशालिनः सदा उत्थानशीलस्य उद्योगिनः तथा बलनीतिमतः बलशालिनो नीतिपरायणस्य च जनस्य सर्वे गूढवैराः गुप्तशत्रवः कालप्रतीक्षकाः समयापेक्षिणः नृपाः मित्राः मित्रभूताः भवन्ति इत्यत्र आश्चर्यं किम् ? ते हि नृपाः किं राज्यलुब्धाः न अपि तु राज्यलुब्धा एव केवलं कालं प्रतीक्षन्ते इति भावः । कोऽपि जनः राज्ञः मित्रं न विद्यते, राजापि कस्यापि मित्रं न वै नैवेत्यर्थः ॥ ८ ॥ ९ ॥

प्राय इति । प्रायः बाहुल्येन तौ प्रजाराजानौ परस्परं कृत्रिममित्रे कार्य्यजन्ये भवतः । किन्तु केचिच्च स्वभावतः मित्राः सर्वदा कदाचिदित्यर्थः शत्रवः सन्ति भवन्ति ॥ १० ॥

माता मातृकुलं चैव पिता तत् पितरौ तथा ।
पितृपितृव्यात्मकन्या पत्नी तत् कुलमेव हि ॥ ११ ॥
पितृमात्रात्मभगिनीकन्यकासन्ततिश्च या ।
प्रजापालो गुरुश्चैव मित्राणि सहजानि हि ॥ १२ ॥
विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर्वर्तयन्ति हि तैर्बुधाः ॥ १३ ॥
पित्रोर्निदेशवर्ती यः स पुत्रोऽन्वर्थनामवान् ।
श्रेष्ठ एकस्तु गुणवान् किं शतैरपि निर्गुणैः ॥ १४ ॥
स्वभावतो भवन्त्येते हिंस्रो दुष्टस्त एव च ।
ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी ॥ १५ ॥

---

मातेति । माता, मातृकुलं मातामहादिः, पिता तथा तस्य पितुः पितरौ माता पितरौ पितामहः पितामही चेत्यर्थः, पितुः पितृव्यः, आत्मकन्या, पत्नी, तस्याः कुलं श्वशुरादिः, पितृभगिनी, मातृभगिनी, आत्मभगिनी, तासां कन्यकाश्च या च सन्ततिः पुत्र इत्यर्थः, प्रजापालः, भूपतिः, तथा गुरुः एतानि सहजानि मित्राणि हिशब्दोऽवधारणार्थः ॥ ११ ॥ १२ ॥

विद्येति । विद्या, शौर्यं दाक्ष्यं नैपुण्यं, बलं तथा पञ्चमं धैर्यम् एतानि सहजानि मित्राणि आहुः कथयन्ति बुधा इति शेषः. बुधाः पण्डिताः तैः विद्यादिभिः वर्त्तयन्ति जीवन्ति ॥ १२ ॥

पित्रोरिति । यः पुत्रः पित्रोः मातापित्रोः निदेशवर्त्ती आज्ञावर्त्ती स पुत्रः अन्वर्थनामवान् यथार्थनामा इत्यर्थः । एकः गुणवान् पुत्रः श्रेष्ठः, निर्गुणैः शतैरपि किम् ? न किमपि प्रयोजनमित्यर्थः ॥ १४ ॥

स्वभावत इति । एते पूर्वोक्ताः मातादयः स्वभावतः मित्राण्यपि कदाचित् शत्रवः भवन्तीत्यन्वयः । तथाहि हिंस्रः दुष्टश्च तथा ऋण-कारी पिता, व्यभिचारिणी माता चोभे शत्रू ॥ १५ ॥

आत्मपितृभ्रातरश्च तत् स्त्रीपुत्राश्च शत्रवः ।
स्नुषा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा ॥ १६ ॥
मूर्खः पुत्रः कुवैद्यश्चारचकस्तु पतिः प्रभुः ।
चण्डश्चण्डा प्रजा शत्रुरदाता धनिकश्च यः ॥ १७ ॥
दुष्टानां नृपतिः शत्रुः कुलटानां पतिव्रता ।
साधुः खलानां शत्रुः स्यात् मूर्खाणां बोधको रिपुः ॥१८
उपदेशो हि मूर्खाणां क्रोधायैव शमाय न ।
पयःपानं भुजङ्गानां विषायैवामृताय न ॥ १९ ॥
आसमन्ताच्चतुर्दिक्षु सन्निकृष्टाश्च ये नृपाः ।
तत्परास्तत्परा येऽन्ये क्रमाद्धीनबलारयः ॥ २० ॥

---

आत्मेति । आत्मनः पितृश्च भ्रातरः सोदराः पितृव्याश्च इत्यर्थः तेषां स्त्रियः पुत्राश्च तथा स्नुषा पुत्रवधूः श्वश्रूः श्वशुरपत्नी, सपत्नी, ननान्दा, यातरः देवरपत्न्यश्च कदाचित् विरुद्धाचाराः शत्रवः भवन्तीति शेषः ॥ १६ ॥

मूर्ख इति । मूर्खः पुत्रः, कुवैद्यः कुचिकित्सकः, चारचकः पतिः चण्डः कोपनः प्रभुः स्वामी चण्डा प्रजा च तथा यः धनिकः धनवान् अथच अदाता कृपणः सः शत्रुः ॥ १७ ॥

दुष्टानामिति । नृपतिः दुष्टानां शत्रुः, पतिव्रताः कुलटानां व्यभिचारिणीनां शत्रुः, साधुः खलानां दुर्जनानां शत्रुः बोधकः उपदेशकः मूर्खाणां शत्रुः स्यात् ॥ १८ ॥

उपदेश इति । मूर्खाणाम् उपदेशः क्रोधाय एव केवलं कोपवर्द्धनाय, न शमाय न शान्तये भवतीति शेषः । भुजङ्गानां सर्पाणां पयःपानं दुग्धपानं विषाय विषवर्द्धनाय एव न अमृताय न अमृतक्षरणाय इत्यर्थः ॥ १९ ॥

आसमन्तादित्यादि । आसमन्तात् सर्वतः चतुर्दिक्षुः ये नृपाः

रिपूदासीनमित्राणि क्रमात् ते स्युस्तु प्राकृताः।
अरिर्मित्रमुदासीनोऽनन्तरस्तत् परः परः॥ २१॥
क्रमशो वा नृपा ज्ञेयाश्चतुर्दिक्षु तथारयः।
स्वसमीपतरा भृत्या अमात्याद्याश्च कर्षिताः॥ २२॥
बृंहयेत् कर्षयेत् मित्रं हीनाधिकबलं क्रमात्॥ २३॥
भेदनीया कर्षणीयाः पीड़नीयाश्च शत्रवः।
विनाशनीयास्ते सर्वे सामादिभिरुपक्रमैः॥ २४॥
मित्रं शत्रुं यथायोग्यैः कुर्यात् स्ववशवर्तिनम्।
उपायेन यथा व्यालो गजः सिंहोऽपि साध्यते॥ २५॥

---

निकटवर्त्तिनः, ये च तत्पराः तदनन्तरवर्त्तिनः तत्पराः पुनश्च तदनन्तरवर्त्तिनः अन्ये नृपाः ते क्रमात् हीनानि बलानि अरयः शत्रवश्च येषां तादृशाः भवन्ति। ते तु क्रमात् प्रकृताः बहुजाः मित्राणि उदासीनाः मध्यस्थाः तथा शत्रवः स्युः। किञ्च अरिः मित्रम् उदासीनः, अनन्तरः तत्परवर्त्ती, तत्परः तथापरः अन्यः एते चतुर्दिक्षु क्रमशः स्थिताः नृपाः प्राकृताः मित्रशत्रवः ज्ञेयाः। तथा स्वस्य समीपतराः अतिसन्निकृष्टाः भृत्याः कर्षिताः क्लेशिताः अमात्याद्याश्च अरयः शत्रवः ज्ञेया इति शेषः॥ २०॥ २१॥ २२॥

बृंहयेदिति। हीनाधिकबलं हीनबलम् अधिकबलञ्च मित्रं क्रमात् बृंहयेत् वर्द्धयेत् कर्षयेच्च कृशीकुर्य्यात्॥ २३॥

भेदनीया इति। ते सर्वे शत्रवः सामादिभिः सामदानभेददण्डैः उपक्रमैः उपायैः भेदनीयाः प्रकृतिषु मनोभङ्गं प्रापणीयाः, कर्षणीयाः कृशीकरणीयाः विनाशनीयाश्च॥ २४॥

मित्रमिति। यथा उपायेन व्यालः सर्पः सिंहः गजः हस्ती च साध्यते वशीक्रियते तथा यथायोग्यैः उपायैरित्यर्थः मित्रं शत्रुञ्च स्वस्य वशवर्त्तिनं कुर्य्यात्॥ २५॥

भूमिष्ठाः स्वर्गमायान्ति वज्रं भिन्दन्त्युपायतः ॥ २६ ॥
सुहृत् सम्बन्धिस्त्रीपुत्रप्रजाग्रतृषु ते पृथक् ।
सामदानभेददण्डाश्चिन्तनीयाः स्वयुक्तितः ॥ २७ ॥
एकशीलवयोविद्याजातिव्यसनवृत्तयः ।
साहचर्य्यं भवेन्मित्रमेभिर्यदि तु सार्जवैः ॥ २८ ॥
त्वत्समस्तु सखा नास्ति मित्रे साम इदं स्मृतम् ।
मम सर्वं तवैवास्ति दानं मित्रे सजीवितम् ॥ २९ ॥
मित्रेऽन्यमित्रसुगुणान् कीर्तयेद् भेदनं हि तत् ।
मित्रे दण्डो न करिष्ये मैत्रीमेवंविधोऽसि चेत् ॥ ३० ॥

---

भूमिष्ठा इति । उपायतः उपायेन भूमिष्ठाः पृथिवीस्था जनाः स्वर्गम् आयान्ति गच्छन्ति, वज्रं भिन्दन्ति च ॥ २६ ॥

सुहृदिति । ते सामदानभेददण्डाः स्वयुक्तितः निजबुद्ध्यनुसारेण सुहृत् सु सम्बन्धिषु, स्त्रीषु, पुत्रेषु, प्रजासु भ्रातृषु च पृथक् पृथक् चिन्तनीयाः ॥ २७ ॥

एकेति । त्वत्सम इति । ये एकः समानः शीलं वयः वयः-क्रमः विद्या जातिः व्यसनं दोषः वृत्तिः जीवनोपायश्च येषां ते तथोक्ताः, सार्जवैः अकपटैः एभिः साहचर्य्यं यदि मित्रं मित्रत्वमित्यर्थः भावप्रधानो निर्देशः । भवेत् तदा तस्मिन् मित्रे त्वया समः सखा नास्ति इदं साम सान्त्ववचनं स्मृतम् । किञ्च तथाविधे मित्रे मम सर्वं वस्तु, तवैव अस्ति इदं सजीवितं जीवनसहितं दानं दानवाक्यं स्मृतमिति शेषः ॥ २८ ॥ २९ ॥

मित्रे इति । मित्रे अन्येषां मित्राणां सुगुणान् उत्तमगुणान् यत् कीर्त्तयेत् तत् कीर्त्तनं तस्य मित्रस्य भेदनं मनोभङ्गकरणं हि । चेत् यदि त्वम् एवंविधः एतादृशः असि, तदा त्वया सह मैत्रीं न करिष्ये इति वचनं मित्रे दण्डः स्मृत इति शेषः ॥ ३० ॥

यो न संयोजयेदिष्टमन्यानिष्टमुपेक्षते ।
उदासीनः स न कथं भवेच्छत्रुः सुसान्धिकः ॥ ३१ ॥
परस्परमनिष्टं न चिन्तनीयं त्वया मया ।
सुसाहाय्यं हि कर्तव्यं शत्रौ साम प्रकीर्तितम् ॥ ३२ ॥
करैर्वा प्रमितैर्ग्रामैर्वत्सरे प्रबलं रिपुम् ।
तोषयेत् तद्धि दानं स्याद् यथायोग्येषु शत्रुषु ॥ ३३ ॥
शत्रुसाधकहीनत्वकरणात् प्रबलाश्रयात् ।
तद्धीनतोज्जीवनाच्च शत्रुभेदनमुच्यते ॥ ३४ ॥
दस्युभिः पीड़नं शत्रोः कर्षणं धनधान्यतः ।
तच्छिद्रदर्शनादुग्रबलैर्नीत्या प्रभीषणम् ।

---

य इति । यः इष्टं न संयोजयेत् न कुर्य्यात्, तथा अन्यकृतमनिष्टम् उपेक्षते न पश्यति स उदासीनः, सः सुसान्धिकः सुष्ठु सन्धिना साध्यः शत्रुः कथं न भवेत् अपितु शत्रुरेव ॥ ३१ ॥

परस्परमिति । त्वया मया च परस्परं परस्परस्य अनिष्टं न चिन्तनीयं प्रत्युत सुसाहाय्यं कर्त्तव्यं हि इति वचनं शत्रौ साम प्रकीर्त्तितम् ॥ ३२ ॥

करैरिति । यथायोग्येषु शत्रुषु मध्ये प्रबलं रिपुं शत्रुं वत्सरे वत्सरे प्रमितैः परिमितैः करैः राजस्वैः ग्रामैर्वा त्यक्तैरिति शेषः यत् तोषयेत् तत् हि तदेव तादृशे शत्रौ दानं प्रकीर्त्तितमिति शेषः ॥ ३३ ॥

शत्र्विति । शत्रोः साधकं पराजयसाधनं यत् हीनत्वकरणं बान्धवसम्पादनं तस्मात् प्रबलस्य शत्रोरधिकस्य बलवतः आश्रयात् तस्मात् शत्रोः ये हीनाः अर्थाः निकृष्टा इत्यर्थः तेषां भावः तद्धीनता तस्या उज्जीवनात् तन्निकृष्टानां प्रबलीकरणाच्च इत्यर्थः शत्रुभेदनं शत्रौ भेद उच्यते ॥ ३४ ॥

दस्युभिरिति । दस्युभिः शत्रोः पीड़नं धनधान्यतः कर्षणं सर्वो

प्रामयुद्धानिवृत्तिश्च शासनं दण्ड उच्यते । २५ ॥
क्रियाभेदादुपाया हि भिद्यन्ते च यथाहृतः ॥ २६ ॥
सर्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः ।
यथा स्वाभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥ २७ ॥
सामैव प्रथमं श्रेष्ठं दानं तु तदनन्तरम् ।
सर्वदा भेदनं शत्रोर्दण्डनं प्राणसंशये ॥ २८ ॥
प्रबलेऽरौ सामदानौ साम भेदोऽधिके स्मृतौ ।
भेददण्डौ समे कार्य्यौ दण्डः पूज्यः प्रहीनके ॥ २९ ॥

---

अरयश्च तथा तस्य छिद्रदर्शनात् दोषदर्शनात् उपायज्ञैः समधिकबलशालिभिः नीत्या प्रयोगार्थं भयदर्शनं किञ्च प्रामं युद्धात् अनिवृत्तित्वं तैः ताडयैः युद्धादपराङ्मुखैरित्यर्थः शासनं भयजनकं दण्डः शत्रौ इति शेषः उच्यते ॥ २५ ॥

क्रियाभेदादिति । उपायाः सामादयः । यथाहृतः यथायोग्यतः क्रियाभेदात् अनुष्ठानप्रकारस्य भेदत्वर्थः उपायाः भिद्यन्ते हि विश्लेषमाधारणार्थः ॥ २६ ॥

सर्वोपायैरिति । यथा मित्राणि उदासीनाः शत्रवश्च न स्वस्मात् अभ्यधिका अतिप्रबलाः न स्युः, नीतिज्ञः पृथिवीपतिः सर्वैः उपायैः तथा कुर्य्यात् ॥ २७ ॥

सामैवेति । प्रथमं साम सान्त्वमेव श्रेष्ठं, तदनन्तरं तदयत्नसाध्यत्वात् इत्यर्थः दानं, तथाप्यशक्तौ सर्वदा सर्वैः प्रकारैः भेदनं मनोभङ्गकरणं, तथाप्यशक्तौ प्राणसंशये जीवनसङ्कटे उपस्थिते इत्यर्थः शत्रोः दण्डनं कार्य्यमिति शेषः ॥ २८ ॥

प्रबल इति । अरौ शत्रौ प्रबले सामदानौ उपायौ दानसहकृतं सान्त्वमित्यर्थः । स्मृतौ । अधिके बलाधिके रिपौ साम भेदश्च स्मृतं इति शेषः । समे समाने रिपौ भेददण्डौ उपायौ कार्य्यौ, प्रहीनके दुर्बले शत्रौ दण्डः पूज्यः प्रशंसनीयः ॥ २९ ॥

मित्रे च सामदानौ स्तो न कदा भेददण्डने ॥ ४० ॥
रिपोः प्रजानां सम्भेदपीडनं जयाय वै ।
रिपुप्रपीडितानां च साम्ना दानेन संग्रहः ।
गुणवतां च दुष्टानां हितं निर्वासनं सदा ॥ ४१ ॥
स्वप्रजानां न भेदेन नैव दण्डेन पालनम् ।
कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः ॥ ४२ ॥
स्वप्रजादण्डभेदैश्च भवेद्राज्यविनाशनम् ।
हीनाधिका यथा न स्युः सदा रक्ष्यास्तथा प्रजाः ॥४३॥
निवृत्तिरसदाचाराद्दमनं दण्डतश्च तत् ।
येन सन्दम्यते जन्तुरुपायो दण्ड एव सः ॥ ४४ ॥

---

मित्रे इति । मित्रे सुहृदि सामदानौ स्तः, कदापि भेददण्डने न प्रयोज्ये इति शेषः ॥ ४० ॥

रिपोरिति । प्रजानां सम्भेदेन योगेन रिपोः पीडनं सम्यक् जयाय भवतीति शेषः रिपुभिः प्रपीडितानां जनानां साम्ना दानेन च संग्रहः कार्य्य इति शेषः । किन्तु गुणवतां दुष्टानां सदा निर्वासनं देशात् बहिष्करणं हितं तेषां देशस्थितौ महानिष्टकरत्वसम्भवादिति भावः ॥ ४१ ॥

स्वप्रजानामिति । सर्वदा यत्नमास्थितः यत्नवान् सन् सामदानाभ्यां स्वस्य प्रजानां पालनं कुर्वीत,भेदेन मनोभङ्गापादनेन न दण्डेन च ॥४२॥

स्वप्रजेति । स्वप्रजानां दण्डैः भेदैश्च राज्यविनाशनं भवेत् तस्मात् यथा प्रजाः हीनाः वा अधिकाः प्रबलाः न स्युः, तथा सदा सर्वस्मिन् काले रक्ष्याः पालनीयाः ॥ ४३ ॥

निवृत्तिरिति । दण्डतः दण्डात् असदाचारात् निवृत्तिः दमनञ्च तत् तस्मात् येन उपायेन जन्तुः जीवः संदम्यते सम्यक् शास्यते सः उपायः दण्डः एव ॥ ४४ ॥

स उपायो नृपाधीनः स सर्वस्य प्रभुर्मतः ॥ ४५ ॥
निर्भर्त्सनं चापमानोऽनशनं बन्धनं तथा ।
ताडनं द्रव्यहरणं पुरान्निर्वासनाङ्कने ॥ ४६ ॥
व्यस्तक्षौरमसद्यानमङ्गच्छेदो वधस्तथा ।
युद्धमेते ह्युपायाश्च दण्डस्यैव प्रभेदकाः ॥ ४७ ॥
जायते धर्मनिरता प्रजा दण्डभयेन च ।
करोत्याधर्षणं नैव तथा चासत्यभाषणम् ॥ ४८ ॥
क्रूराश्च मार्दवं यान्ति दुष्टा दौष्ट्यं त्यजन्ति च ।
पशवोऽपि वशं यान्ति विद्रवन्ति च दस्यवः ॥ ४९ ॥
पिशुना मूकतां यान्ति भयं यान्त्याततायिनः ।
करदाश्च भवन्त्यन्ये वित्रासं यान्ति चापरे ।
अतो दण्डधरो नित्यं स्यात् नृपो धर्मरक्षणे ॥ ५० ॥

---

स इति । सः दण्डरूपः उपायः नृपाधीनः राजायत्तः यतः सः राजा सर्वस्य लोकस्य प्रभुः स्वामी, दण्डकर्तृत्वं स्वामिन एव युज्यते इति भावः ॥ ४५ ॥

निर्भर्त्सनमिति । व्यस्तेति । निर्भर्त्सनं तिरस्कारः, अपमानः मानच्युतिकरणम् अनशनम् अनाहारेण अवस्थापनं, बन्धनं ताडनं प्रहारः, द्रव्यहरणं, पुरात् नगरात् निर्वासनं बहिष्कारणम्, अङ्कनं शरीरे चिरस्थायिचिह्नकरणं, व्यस्तक्षौरं मस्तकमुण्डनादिरूपं विपरीतं क्षौरकर्म, असद्यानं गर्दभाद्यारोहणेन गमनम् अङ्गस्य अवयवस्य हस्तपदादेः छेदः, वधः प्राणदण्डः, तथा युद्धम् एते निर्भर्त्सनादयः उपायाः दण्डस्यैव प्रभेदकाः विशेषा इत्यर्थः ॥ ४६ ॥ ४७ ॥

जायते इत्यादि । दण्डभयेन प्रजा धर्मनिरता धर्मनिष्ठा जायते, आधर्षणं दुर्बलाक्रमणं तथा असत्यभाषणञ्च नैव करोति । क्रूराः दुर्जनाः मार्दवं मृदुत्वं यान्ति, प्राप्नुवन्ति, दुष्टाः जनाः दौष्ट्यं दोष

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ ५१ ॥
राज्ञां सदण्डनीत्या हि सर्वे सिध्यन्त्युपक्रमाः ।
दण्ड एव हि धर्माणां शरणं परमं स्मृतम् ॥ ५२ ॥
अहिंसैवासाधुहिंसा पशुवच्छ्रुतिचोदनात् ॥ ५३ ॥
दण्ड्यानामदण्डनाद्विप्रमदण्ड्यस्य च दण्डनात् ।
अतिदण्डाच्च गुणिभिस्त्यज्यते पातकी भवेत् ॥ ५४ ॥

---

त्यजन्ति च । पशवः अपि वशं यान्ति, दस्यवः विद्रवन्ति पलायन्ते च । पिशुनाः खलाः धूर्त्ता इत्यर्थः मूकतां मौनभावं यान्ति, आततायिनः उत्कटपापकारिणः जनाः भयं यान्ति च । अन्ये अकरदा जना इत्यर्थः करदाः राजस्वदायिनः भवन्ति, अपरे विप्राः विशेषेण त्रासं यान्ति च । अतः तस्मात् कारणात् नृपः धर्मरक्षणे विषये नित्यं सततं दण्डधरः स्यात् ॥ ४८ ॥ ४९ ॥ ५० ॥

गुरोरिति । अवलिप्तस्य उद्धतस्य कार्याकार्यं कर्त्तव्याकर्त्तव्यम् अजानतः उत्पथं प्रतिपन्नस्य गतस्य गुरोरपि शासनं दण्डनं कार्यं करणीयं भवति ॥ ५१ ॥

राज्ञामिति । राज्ञां सदण्डनीत्या सदण्डया दण्डसहितया नीत्या सर्वे उपक्रमाः कार्याणि सिध्यन्ति हि । हि यतः दण्ड एव धर्माणां परमं शरणम् आश्रयः स्मृतम् ॥ ५२ ॥

अहिंसैवेति । श्रुतिचोदनात् शास्त्रदर्शनात् पशुवत् असाधूनां हिंसा अहिंसा एव यथा यज्ञे पशुवधः शास्त्रीयत्वादहिंसैवेति भावः ॥ ५३ ॥

दण्ड्यस्येति । दण्ड्यस्य दण्डार्हस्य अदण्डनात् दण्डाकरणात् अदण्ड्यस्य अदण्डनीयस्य दण्डनात् तथा नित्यं सततम् अतिदण्डात् अधिकदण्डनाच्च गुणिभिः विद्वद्भिः त्यज्यते राजेति कर्मपदमध्याहा-र्य्यम् । पातकी पापी भवेच्च तत्कारी राजेति शेषः ॥ ५४ ॥

अल्पदानात् महत् पुण्यं दण्डप्रणयनात् फलम्।
शास्त्रेषूक्तं मुनिवरैः प्रवृत्त्यर्थं भयाय च ॥ ५५ ॥
अश्वमेधादिभिः पुण्यं तत् किं स्यात् स्तोत्रपाठतः।
तथा यत् तु पुण्यं स्यात् तत् किं दण्डनिपातनात् ५६
स्वप्रजादण्डनाच्छ्रेयः कथं राज्ञो भविष्यति।
तद् दण्डाज्जायते कीर्तिधनपुण्यविनाशनम् ॥ ५७ ॥
नृपस्य धर्मपूर्णत्वाद् दण्डः कृतयुगे न हि।
त्रेतायुगे पूर्णदण्डः पादाधर्माः प्रजा यतः ॥ ५८ ॥
द्वापरे चार्धधर्मत्वात् त्रिपाद् दण्डो विधीयते।
प्रजा निःस्वा राजदौष्ट्याद् दण्डार्धं तु कलौ यथा ॥५९॥

---

अल्पदानादिति। अल्पदानात् यस्मिन्कस्मिन्दानात् महत् पुण्यं प्रवृत्त्यर्थं दानादिधर्मकार्य्ये प्रवर्त्तनाय, तथा दण्डप्रणयनात् यथा-शास्त्रदण्डकरणात् महत् फलं भयाय लोकानां भयप्रदर्शनाय मुनि-वरैः शास्त्रेषु उक्तं कथितम् ॥ ५५ ॥

अश्वमेधादिभिरिति। अश्वमेधादिभिः यागैः यत् पुण्यं भवतीति शेषः तत् स्तोत्रपाठतः स्तवपाठात् किं स्यात् नैवेत्यर्थः। तथा अथवा यत् पुण्यं स्यात्, दण्डनिपातनात् तत् पुण्यं किं स्यात् नैवेत्यर्थः ॥ ५६ ॥

स्वप्रजेति। स्वस्य प्रजानां दण्डनात् राज्ञः श्रेयः कथं भवि-ष्यति? नैवेत्यर्थः। प्रत्युत तद्दण्डात् तासां दण्डनात् कीर्त्तिधन-पुण्यानां विनाशनं भवति ॥ ५७ ॥

नृपस्येति। कृतयुगे नृपस्य धर्मपूर्णत्वात् दण्डः न हि आसी-दित्यर्थः त्रेतायुगे यतः प्रजाः पादाधर्माः अधर्मैकपाददनिष्ठा इत्यर्थः अतः पूर्णदण्डः आसीत्। द्वापरे तु अर्द्धधर्मत्वात् त्रिपाद् दण्डः विधीयते व्यवस्थीयते। यथा यतः कलौ राज्ञः दौष्ट्यात् दोषात् प्रजा

युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ।
युगानां न प्रजानां न दोषः किन्तु नृपस्य हि ॥ ६० ॥
प्रसन्नो येन नृपतिस्तदाचरति वै जनः ।
लोभाद्भयाच्च किं तेन शिक्षितं नाचरेत् कथम् ॥ ६१ ॥
सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः ।
महापापी यत्र राजा तत्राधर्मपरो जनः ॥ ६२ ॥
न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला ।
जायते राष्ट्रनाशश्च शत्रुवृद्धिर्धनक्षयः ॥ ६३ ॥
सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान् ।
लोकांश्चण्डस्तापयति स्त्रैणो वर्णान् विलुम्पति ॥ ६४ ॥

---

निःस्वाः निर्धना भवन्ति अतः दुष्कार्येषु सर्वदुःखं निधीयते इति शेषः ॥ ५८ ॥ ५९ ॥

युगेति । राजैव धर्मस्य अधर्मस्य च प्रशिक्षणात् शिक्षादानात् युगप्रवर्तकः सत्यादियुगानां प्रवर्तयिता, अतः युगानां च प्रजानाञ्च न दोषः, किन्तु नृपस्य हि राज्ञ एव दोष इत्यर्थः ॥ ६० ॥

प्रसन्न इति । राजा येन कर्मणा प्रसन्नः प्रीतः भवति, जनः प्रजा लोभात् भयाच्च तत् आचरति वै करोत्येव, तेन राज्ञा शिक्षितम् उपदिष्टं किं किमपीत्यर्थः कथं न आचरेत् अपितु आचरेदेवेत्यर्थः ॥ ६१ ॥

सुपुण्य इति । यत्र नृपतिः सुपुण्यः धार्मिकः तत्र प्रजाश्च धर्मिष्ठाः हि । यत्र तु राजा महापापी तत्र जनः अधर्मपरः अधार्मिकः ॥ ६२ ॥

नेति । तत्र अधार्मिके राजनि सतीत्यर्थः पर्जन्यः मेघः न कालवर्षी यथासमये न वर्षतीत्यर्थः, भूः पृथ्वी न महाफला भवतीति शेषः । राष्ट्रस्य राज्यस्य नाशः शत्रुवृद्धिः धनक्षयश्च जायते ॥ ६३ ॥

सुरापोऽपि वरोपीति । राजा सुरापो सुरापायी अपि वरं

मद्यप्येकश्च भ्रष्टः स्याद् बुद्ध्या च व्यवहारतः ।
कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ॥ ६५ ॥
धनप्राणहरो राजा प्रजायाश्चातिलोभतः ।
तस्मादेतत् त्रयं त्यक्त्वा दण्डधारी भवेत् नृपः ॥ ६६ ॥
अन्तर्मृदुर्बहिः क्रूरो भूत्वा स्वां दण्डयेत् प्रजाम् ।
अत्युग्रदण्डकल्पः स्यात् स्वभावा हितकारिणः ॥ ६७ ॥
राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः ।
अतो नृपः सूचितोऽपि विमृशेत् कार्य्यमादरात् ॥ ६८ ॥

---

मद्यपः, स्त्रैणः स्त्रीपरतन्त्रः स, अतिकोपवान् च न वर इति शेषः तथाहि चण्डः अतिकोपनः लोकान् प्रजाः तापयति नितरां पीडयति, स्त्रैणः स्त्रीकामुकः वर्णान् ब्राह्मणादीन् विलुम्पति व्यभिचारेण वर्णसङ्करजात्युत्पादनेन दूषयतीत्यर्थः । मद्यपो सुरापायी एकश्च एव एतत् बुद्ध्या व्यवहारतश्च भ्रष्टः स्यात् प्रजाः न भ्रंशयेदिति भावः । कामक्रोधौ मद्यतमौ मद्यादधिकौ यतः तौ सर्वेषां मद्यानां मादकानां वस्तूनाम् अधिकौ श्रेष्ठौ ॥ ६४ ॥ ६५ ॥

धनेति । राजा अतिलोभतः लोभातिशयात् प्रजायाः जातावेकं वचनम् । प्रजानामित्यर्थः धनप्राणहरः भवति, तस्मात् नृपः एतेषां कामक्रोधलोभानां त्रयं त्यक्त्वा दण्डधारी दमनकारी भवेत् ॥ ६६ ॥

अन्तरिति । राजा अन्तर्मृदुः कोमलान्तःकरणः किन्तु बहिः-क्रूरः बाह्यकर्कशः भूत्वा स्वां प्रजां दण्डयेत् शासयेत् । अत्युग्रदण्ड-कल्पः बाह्ये अतितीव्रदण्डसदृशः स्यात् किन्तु स्वभावाः हितकारिणः भवेयुरिति शेषः ॥ ६७ ॥

राष्ट्रमिति । कर्णेजपैः जनैः स्वभावतः नित्यं राष्ट्रं राज्यं हन्यते परस्परमनोभङ्गजननेन उच्छेत्तुं चेष्ट्यते, अतः नृपः सूचितः तेषां परामर्शेन दूषितोऽपि आदरात् यत्नतः कार्य्यं विमृशेत् विचार्य्य कुर्य्यादित्यर्थः ॥ ६८ ॥

आत्मनश्च प्रजायाश्च दोषदृश्वोत्तमो नृपः ।
विनियच्छति चात्मानमादौ भृत्यांस्ततः प्रजाः ॥ ६९ ॥
कायिको वाचिको मानसिकः सांसर्गिकस्तथा ।
चतुर्विधोऽपराधः स बुद्धाबुद्धिकृतो द्विधा ॥ ७० ॥
पुनर्द्विधा कारितश्च तथा ज्ञेयोऽनुमोदितः ।
सकृदसकृदभ्यस्तस्वभावैः स चतुर्विधः ॥ ७१ ॥
नेत्रवक्त्रविकाराद्यैर्भावैर्मानसिकं तथा ।
क्रियया कायिकं वीक्ष्य वाचिकं क्रूरशब्दतः ॥ ७२ ॥
सांसर्गिकं साहचर्यैर्ज्ञात्वा गौरवलाघवम् ।
उत्पन्नोत्पद्यमानानां कार्याणां दण्डमावहेत् ॥ ७३ ॥

---

आत्मन इति । उत्तमः नृपः आत्मनः स्वस्य प्रजायाश्च दोषदर्शी भवति अतः राजा आदौ प्रथमतः आत्मानं ततः भृत्यान् राजपुरुषान् ततश्च प्रजाः विनियच्छति विशेषेण नियमयतीत्यर्थः ॥ ६९ ॥

कायिक इति । अपराधः कायिकः शरीरजः वाचिकः वाक्योत्पन्नः मानसिकः मनोजनितः तथा सांसर्गिकः संसर्गज इति चतुर्विधः, स च बुद्धिकृतः अबुद्धिकृतश्चेति द्विधा भवतीति शेषः ॥ ७० ॥

पुनरिति । सः अपराधः पुनर्द्विधा द्विप्रकारः ज्ञेयः, कारितः तथा अनुमोदितश्च । स च सकृत्कृतः, असकृत्कृतः तथा अभ्यस्तकृतः स्वभावकृत इति चतुर्विधः ॥ ७१ ॥

नेत्रेति । सांसर्गिकमिति । नेत्रवक्त्रविकाराद्यैः नयनमुखभङ्गि-प्रभृतिभिर्भावैः धर्मैः मानसिकं, क्रियया कार्य्येण कायिकं क्रूरशब्दतः कर्कशवाक्यात् वाचिकं साहचर्य्यैः सहवासैः सांसर्गिकं गौरवलाघवं गुरुं लघुञ्च अपराधं ज्ञात्वा उत्पन्नानां तथा उत्पद्यमानानां कार्य्याणां पापकर्मणां दण्डम् आवहेत् कुर्य्यात् ॥ ७२ ॥ ७३ ॥

प्रथमं साहसं कुर्वन्नुत्तमो दण्डमर्हति ।
न्याय्यं किमिति संपृच्छेत् तत्कैवेयमसत् कृतिः ॥ ७४ ॥
अपराधं यथोक्तं च द्विगुणं त्रिगुणं ततः ।
मध्यमं साहसं कुर्वन्नुत्तमो दण्डमर्हति ॥ ७५ ॥
धिग्दण्डं प्रथमं चाद्यसाहसं तदनन्तरम् ।
यथोक्तं तु तथा सम्यग् यथावधि चानन्तरम् ॥ ७६ ॥
उत्तमं साहसं कुर्वन्नुत्तमो दण्डमर्हति ॥ ७७ ॥
प्रथमं साहसं चादौ मध्यमं तदनन्तरम् ।
यथोक्तं त्रिगुणं पश्चादवरोधं ततः परम् ॥ ७८ ॥

---

प्रथममिति । उत्तमः उत्कृष्टोजनः कुर्वन् पापमिति शेषः प्रथमं साहसं दण्डम् अर्हति, किन्तु एतत्कार्य्यं किं न्याय्यं न्यायदनपेतं ? अत एव इयम् अपकृतिः अकार्य्यम् इति तं संपृच्छेत् ॥ ७४ ॥

अपराधमिति । उत्तमः जनः ततः तदपेक्षया पूर्वापेक्षयेत्यर्थः अधिकं पापं कुर्वन् मध्यमं साहसं दण्डं, यथोक्तम् एतत्कार्य्यं किं न्याय्यमित्यादिकम् अपराधं द्विगुणं त्रिगुणं वा पापानुसारेणेति भावः अर्हति ॥ ७५ ॥

धिग्दण्डमिति । प्रथमम् अल्पापराधे इति शेषः धिक् त्वां निन्दामीति दण्डं तदनन्तरं द्वितीयापराधे इत्यर्थः आद्यसाहसं प्रथमसाहसाख्यं दण्डं, तथा अनन्तरं यथावधि अपराधानामिति शेषः तदनुरूपं यथोक्तम् उक्तरूपं [सम्यक् दण्डं कुर्य्यादिति क्रियापद-मध्याहार्य्यम् ॥ ७६ ॥

उत्तममिति । उत्तमः जनः कुर्वन् अधिकापराधमिति शेषः उत्तमं साहसं दण्डं अर्हति ॥ ७७ ॥

प्रथममिति । आदौ अल्पापराधे प्रथमं साहसं, तदनन्तरं मध्यमं साहसं पश्चात् तदनन्तरमपि अपराधे इत्यर्थः यथोक्तम् उक्तरूपं

बुद्धिपूर्वं नृघातेन विनैतद्दण्डकल्पनम् ॥ ७९ ॥
उत्तमत्वं मध्यमत्वं नीचत्वं चात्र कीर्त्तिते ।
गुणेनैव तु मुख्यं हि कुलेनापि धनेन च ॥ ८० ॥
प्रथमं साहसं कुर्वन् मध्यमो दण्डमर्हति ।
धिग्दण्डमर्द्धदण्डं च पूर्वदण्डमनुक्रमात् ॥ ८१ ॥
द्विगुणं त्रिगुणं पश्चात् संरोधं नीचकर्म च ।
मध्यमं साहसं कुर्वन् मध्यमो दण्डमर्हति ॥ ८२ ॥
पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः ।
साहसं बन्धनं पश्चात् पुरान्निर्वासनाङ्कने ।

---

द्विगुणं दण्डं, ततः परम् अवरोधं कारानिरोधरूपं दण्डं अर्हतीति शेषः ॥ ७८ ॥

बुद्धीति । बुद्धिपूर्वकघातेन ज्ञानपूर्वकनरहत्यया विना ब्राह्मणनरहत्याव्यतिरिक्तस्थाने इत्यर्थः एतेषां पूर्वोक्तानां दण्डानां प्रथमसाहसादीनां प्रकल्पनं व्यवस्थापनं कार्यमिति शेषः ॥ ७९ ॥

उत्तमत्वमिति । अत्र प्रकरणे यत् उत्तमत्वं मध्यमत्वं नीचत्वम् अधमत्वञ्च कीर्त्यते, तत् गुणेन कुलेन धनेन च मुख्यं प्रधानं सम्यक् इत्यर्थः यथा तथा ज्ञेयमिति शेषः ॥ ८० ॥

प्रथममिति । मध्यमः कुर्वन् पापमिति शेषः प्रथमं साहसं धिग्दण्डं त्वां धिगिति निर्भर्त्सनरूपम् अर्द्धदण्डं वा पूर्वदण्डम् अनुक्रमात् अपराधस्य पौनःपुन्येन गौरवलाघवाभ्यां वा दण्डम् अर्हति ॥ ८१ ॥

द्विगुणमिति । मध्यमः पापं कुर्वन् मध्यमं साहसं द्विगुणं त्रिगुणं वा पश्चात् संरोधं कारावरोधं तत्र नीचकर्म निकृष्टकार्यकरणरूपञ्च दण्डम् अर्हति अपराधतारतम्येनेदमिति शेषम् ॥ ८२ ॥

पूर्वेति । मध्यमः पापं कुर्वन् आदौ पूर्वसाहसं प्रथमं साहसं ततः

उत्तमं साहसं कुर्वन् मध्यमो दण्डमर्हति ॥ ८३ ॥
मध्यमं साहसं चादौ यथोक्तं तदनन्तरम् ।
द्विगुणं त्रिगुणं पश्चाद् यावज्जीवं तु बन्धनम् ।
प्रथमं साहसं कुर्वन्नधमो दण्डमर्हति ॥ ८४ ॥
अर्द्धं यथोक्तं द्विगुणं त्रिगुणं बन्धनं ततः ।
मध्यमं साहसं कुर्वन्नधमो दण्डमर्हति ॥ ८५ ॥
पूर्वसाहसमादौ तु यथोक्तं द्विगुणं ततः ।
ततः संरोधनं नित्यं मार्गसंस्करणार्थकम् ।
उत्तमं साहसं कुर्वन् अधमो दण्डमर्हति ॥ ८६ ॥
मध्यमं साहसं चादौ यथोक्तं द्विगुणं ततः ।
यावज्जीवं बन्धनं च नीचकर्मैव केवलम् ॥ ८७ ॥

---

तदनन्तरं यथोक्तं द्विगुणं पश्चात् ताड़नं प्रहारं ततः बन्धनं पुरात् नगरात् निर्वासनं वहिष्कारणम् अङ्कनं गात्रे चिरचिह्नकरणम् उत्तमं साहसञ्च दण्डम् अर्हति ॥ ८३ ॥

मध्यममिति । अधमः पापं कुर्वन् आदौ प्रथमं साहसं ततः मध्यमं साहसं तदनन्तरं यथोक्तम् उक्तरूपं द्विगुणं त्रिगुणं पश्चात् यावज्जीवं बन्धनं कारावासरूपं दण्डम् अर्हति ॥ ८४ ॥

अर्द्धमिति । अधमः पापं कुर्वन् यथोक्तम् अर्द्धं द्विगुणं त्रिगुणं ततः बन्धनं मध्यमं साहसं दण्डम् अर्हति । एतच्च पापविशेषेऽपि ज्ञेयम् ॥ ८५ ॥

पूर्वसाहसमिति । मध्यममिति । अधमः पापं कुर्वन् आदौ पूर्वसाहसं प्रथमसाहसं ततः यथोक्तं द्विगुणं ततः नित्यं मार्गस्य पथः संस्करणार्थकम् परिष्कारकरणार्थमित्यर्थः संरोधनम् अवरोधम् उत्तमसाहसञ्च अथवा आदौ मध्यमं साहसं ततः यथोक्तं द्विगुणं याव-

हरेत् पादं धनात् तस्य यः कुर्याद्धनगर्वितः।
पूर्वं ततोऽर्द्धमखिलं यावज्जीवं तु बन्धनम्॥ ८८॥
सहायगौरवाद् विद्यामदाच्च बलदर्पतः।
पापं करोति यस्तं तु बन्धयेत् ताड़येत् सदा॥ ८९॥
भार्या पुत्रश्च भगिनी शिष्यो दासः स्नुषानुजः।
कृतापराधास्ताड्यास्ते तनुरज्जुसुवेणुभिः॥ ९०॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरंश्चोरवद् दण्डमर्हति॥ ९१॥
नीचकर्मकरं कुर्याद् बन्धयित्वा तु पापिनम्।

---

ज्जीवं बन्धनं केवलं नीचकर्म च निकृष्टकार्य्यकरणरूपञ्च दण्डम् अर्हति॥ ८६॥ ८७॥

हरेदिति। यः धनगर्वितः पापं कुर्य्यात् पूर्वं प्रथमापराधे इत्यर्थः तस्य धनात् पादं, ततः द्वितीयापराधे इत्यर्थः अर्द्धं ततः तृतीयापराधे अखिलं समस्तं धनमित्यर्थः हरेत्। तदनन्तरापराधे यावज्जीवं बन्धनं कारावरोधरूपं दण्डनं कर्त्तव्यमिति शेषः॥ ८८॥

सहायेति। यः सहायस्य गौरवात् विद्यामदात् विद्याजनिताहङ्कारात् तथा बलदर्पतः सामर्थ्याहङ्कारात् पापं करोति तं तु सदा बन्धयेत् कारायां अवरुन्ध्यात् ताड़येच्च॥ ८९॥

भार्य्येति। पृष्ठत इति। भार्य्या पुत्रः भगिनी शिष्यः दासः, स्नुषा पुत्रवधूः अनुजः कनिष्ठभ्राता, ते कृतापराधाः तनुभिः रज्जुभिः सुवेणुभिः शरीरस्य पृष्ठतस्तु पृष्ठभागे एव ताड्याः प्रहार्य्याः कदाचन उत्तमाङ्गे शिरसि न ताड्या इत्यर्थः अतः अस्मात् उक्तात् अन्यथा अन्यप्रकारेण तु प्रहरन् चोरवत् तस्कर इव दण्डम् अर्हति॥ ९०॥ ९१॥

नीचकर्मेति। कश्चित् पापिनं मासमात्रं त्रिमासं वा षण्मासं

मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरम् ।
यावज्जीवं तु वा कञ्चित् न कञ्चिद् वधमर्हति ॥ ८२ ॥
न निहन्याच्च भूतानि इति जागर्ति वै श्रुतिः ।
तस्मात् सर्वप्रयत्नेन वधदण्डं त्यजेत् नृपः ॥ ८३ ॥
अवरोधाद् बन्धनेन ताडनेन च कर्षयेत् ।
लोभान्न कर्षयेद्राजा धनदण्डेन वै प्रजाम् ॥ ८४ ॥
नासहायास्तु पित्राद्या दण्ड्याः स्युरपराधिनः ।
क्षमाशीलस्य वै राज्ञो दण्डग्रहणमीदृशम् ॥ ८५ ॥
नापराधं तु क्षमते प्रदण्डो धनहारकः ।
नृपो यदा तदा लोकः क्षुभ्यते भिद्यते परैः ॥ ८६ ॥

---

षा वत्सरं वा यावज्जीवं व्याप्य बन्धयित्वा कारायां निरुध्य नीच-कर्मकरं निकृष्टकर्मकारिणं कुर्यात्, किन्तु कञ्चित् कोऽपि वधं वधदण्डं न अर्हति ॥ ८२ ॥

नेति । भूतानि प्राणिनः न निहन्यात् इति श्रुतिः जागर्ति वै सत्योऽवधारणार्थः । तस्मात् नृपः सर्वप्रयत्नेन वधदण्डं त्यजेत् ॥ ८३ ॥

अवरोधादिति । राजा अवरोधात् बन्धनेन ताडनेन प्रहारेण च प्रजां कर्षयेत् पीडयेत्, लोभात् धनदण्डेन न कर्षयेत् ॥ ८४ ॥

नेति । अपराधिनः असहाः असहायाः पित्राद्याः परिजनाः न दण्ड्याः दण्डनीयाः स्युः । क्षमाशीलस्य राज्ञः ईदृशम् उक्तरूपं दण्डग्रहणं शासननिमित्तं ॥ ८५ ॥

नापराधमिति । यदा नृपः प्रदण्डः तीक्ष्णदण्डः तथा धन-हारकः सन् न क्षमते, तदा लोकः क्षुभ्यते विरज्यते परैः राज्ञः शत्रुभिः भिद्यते संभज्यते इति यावत् ॥ ८६ ॥

अतः सुभागदण्डी स्यात् क्षमावान् रञ्जको नृपः ॥ ९७ ॥

मद्यपः कितवः स्तेनो जारश्चण्डश्च हिंसकः ।
त्यक्तवर्णाश्रमाचारो नास्तिकः शठ एव हि ॥ ९८ ॥
मिथ्याभिशापकः कर्णेजपार्यदेवदूषकौ ।
असत्यवाङ्न्यासहारी तथा वृत्तिविघातकः ॥ ९९ ॥
अन्योदयासहिष्णुश्च ह्युत्कोचग्रहणेरतः ।
अकार्यकर्त्ता मन्त्राणां कार्य्याणां भेदकस्तथा ।
अनिष्टवाक् परुषवाग्जलारामप्रबाधकः ।
नक्षत्रसूची राजद्विट् कुमन्त्री कूटकार्यवित् ॥ १०० ॥
कुवैद्यामङ्गलाशौचशीलो मार्गनिरोधकः ।
कुसाक्ष्युत्कटवेशश्च स्वामिद्रोही व्ययाधिकः ॥ १०१ ॥

---

अत इति । अतः अस्मात् कारणात् नृपः सुभागदण्डी सुष्ठु विभज्य दण्डयतीति तथोक्तः, क्षमावान् तथा रञ्जकः प्रजानामिति शेषः स्यात् भवेत् ॥ ९७ ॥

मद्यप इत्यादि । मद्यपः सुरापायी, कितवः धूर्त्तः, स्तेनः तस्करः, जारः उपपतिः, चण्डः अतिकोपनः, हिंसकः, त्यक्तवर्णाश्रमाचारः वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनाञ्च आचारत्यागी, नास्तिकः, शठः, खलः, मिथ्याभिशापकः मिथ्यादोषारोपकः कर्णेजपः अन्यं प्रति अन्यस्य विरागोत्पादकः, आर्य्यान् साधून् देवांश्च दूषयतीति तथोक्तः, असत्यवाक् मिथ्यावादी, न्यासापहारी गच्छितधनापहारकः, वृत्तिविघातकः जीविकाव्याघातकारी, अन्यस्य उदयासहिष्णुः अभ्युदयासहनः उत्कोचग्रहणे रतः, अकार्य्यकर्त्ता दुष्कर्मी, मन्त्राणां तथा कार्य्याणां भेदकः भञ्जकः, अनिष्टवाक् अप्रियवादी, परुषवाक् निष्ठुरभाषी, जलस्य आरामस्य उद्यानस्य च प्रबाधकः बाधाकारी, नक्षत्रसूची दुष्टदैवज्ञः, राजद्विट् राजद्रोही, कुमन्त्री, कूटकार्य्यवित् कूटानां कपटानां कार्य्याणां वेत्ता,

अग्निदो गरदो वेश्यासक्तः प्रबलदण्डकृत् ।
तथा पार्षिकसभ्यश्च बलाल्लिखितग्राहकः ॥१०२॥
अन्यायकारी कलहशीलो युद्धे पराङ्मुखः ।
साध्यलोपी पितृमातृसतीस्त्रीमित्रद्रोहकः ॥ १०३ ॥
असूयकः शत्रुसेवी मर्मभेदी च वञ्चकः ।
स्वकीयद्विड्गुरुवृत्तिहृत् खलो ग्रामकण्टकः ॥ १०४ ॥
विना कुटुम्बभरणात् तपोविद्यार्थिनः सदा ।
तृणकाष्ठादिहरणे शक्तः सन् भैक्ष्यभोजकः ॥ १०५ ॥
कन्याया अपि विक्रेता कुटुम्बवृत्तिह्रासकः ।
अधर्मसूचकश्चापि राजानिष्टमुपेक्षकः ॥ १०६ ॥

---

कुवैद्यः कुचिकित्सकः, अमङ्गलशीलः अशुचिः, मार्गनिरोधकः पथ्य-प्रतिबन्धकः, कुवाची, छद्मवेशः, स्वामिद्रोही प्रभुद्वेष्टा; व्ययाधिकः, अपरिमितव्ययशीलः, अग्निदः अग्निदानेन गृहादिदाहकः, गरदः विषप्रयोगेण प्राणहन्ता, वेश्यासक्तः प्रबलदण्डकृत् तीक्ष्णदण्डकारी राजपुरुषः, पार्षिकः पक्षपाती सभ्यः विचारदर्शी पुरुषः, बलात् लिखितस्य लेख्यस्य ग्राहकः अपहरणकारी; अन्यायकारी अविचारकः कलहशीलः विवादप्रियः, युद्धपराङ्मुखः सैनिकपुरुषः, साध्यलोपी साध्यलोपकारी, पितृद्रोही, मातृद्रोही, सतीस्त्रीद्रोही, मित्रद्रोही, असूयकः परगुणेषु दोषारोपणकृत्, शत्रुसेवी शत्रुपक्षः, मर्मभेदी, असह्यकर्मकारी, वञ्चकः प्रतारकः, स्वकीयानाम् आत्मीयानां द्वेष्टा, गुरुवृत्तिः गुरुजीविका, खलः धर्मघाती ग्रामकण्टकः, कुटुम्बभरणात् कुटुम्बानां परिजनानां भरणात् विना, भरणमकृत्वा इत्यर्थः सदा तपोविद्यार्थिनः तपसि विद्यायां वा आसक्ताः पुरुषाः, कुटुम्बाना-मवश्यपोष्यत्वात् तेषां तपोविद्यानुष्ठानमकिञ्चित्करमिति भावः । तृण-काष्ठादीनां हरणे संग्रहणे शक्तः समर्थोऽपि भैक्ष्यभोजकः भिक्षावृत्तिः, कन्याया विक्रेता, कन्याविक्रयी, कुटुम्बानां पोष्यवर्गाणां वृत्तिह्रासकः

कुलटा प्रतिपुत्रघ्नी स्वतन्त्रा वृद्धनिन्दिता ।
गृहकृत्योज्झिता नित्यं दुष्टाचाराप्रियस्नुषा ।
स्वभावदुष्टानेतान् हि ज्ञात्वा राष्ट्राद् विवासयेत् ॥१०७॥
द्वीपे निवासितव्यास्ते बद्धा दुर्गोदरेऽथवा ।
मार्गसंस्करणे योज्याः कदन्न न्यूनभोजनाः ॥ १०८ ॥
तत् तत् जात्युक्तकर्माणि कारयीत च तैर्नृपः ॥१०९॥
एवंविधानसाधूंश्च संसर्गेण च दूषितान् ।
दण्डयित्वा च सन्मार्गे शिक्षयेत् तान् नृपः सदा ॥११०॥

---

जीविकाच्छेदकारी,, अधमो अधार्मिकः सूचकः दुर्जनः, राज्ञः अनिष्टम् उपेक्षकः केनचित् क्रियमाणस्य राजानिष्टस्य उपेक्षाकारीत्यर्थः तथा कुलटा, व्यभिचारिणी प्रतिपुत्रघ्नी, स्वामिपुत्रनाशिनी स्वतन्त्रा स्वेच्छाचारिणी वृद्धनिन्दिता प्राचीनगर्हिता, गृहकृत्योज्झिता, गृहकृत्यत्यक्ता, नित्यं सततं दुष्टाचाराः दुराचारा अप्रिया स्नुषा पुत्रवधूः, एतान् स्वभावदुष्टान् ज्ञात्वा राष्ट्रात् राज्यात् विवासयेत् निर्वासयेत् राजेति कर्तृपदमूह्यम् ॥९८॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥

द्वीपे इति । ते पूर्वोक्ताः मद्यपादयः द्वीपे द्वीपान्तरे निवासितव्याः अथवा दुर्गोदरे दुर्गाभ्यन्तरे बद्धा मार्गसंस्करणे अध्वपरिष्करणे कदन्नन्यूनभोजनाः कुत्सितान्नं तदपि न्यूनं भुञ्जते इति तथोक्ताः सन्तो योज्याः नियोक्तव्याः ॥ १०८ ॥

तत्तदिति । नृपः तैः मद्यपादिभिः तत्तज्जात्युक्त कर्माणि च कारयीत कारयेत् कारयीत इति आर्षोऽयं प्रयोगः ॥ १०९ ॥

एवंविधानिति । नृपः एवंविधान् उक्तप्रकारान् असाधून् दुर्जनान् तथा संसर्गेण तेषां पापिनां साहचर्येण दूषितांश्च जनान् दण्डयित्वा सदा सन्मार्गे सदाचारे तान् शिक्षयेत् ॥ ११० ॥

राज्ञो राष्ट्रस्य विकृतिं तथा मन्त्रिगणस्य च ।
इच्छन्ति शत्रुसम्बन्धात्ते तान् हन्याद्धि द्राङ्नृपः ॥१११॥
नेच्छेच्च युगपद् ध्वासं गणदौष्ट्ये गणस्य च ।
एकैकं घातयेद्राजा वत्सोऽश्नाति यथा स्तनम् ॥११२॥
अधर्मशीलो नृपतिर्यदा तं भीषयेज्जनः ।
धर्मशीलातिबलवद्रिपोराश्रयतः सदा ॥ ११३ ॥
यावत् तु धर्मशीलः स्यात् स नृपस्तावदेव हि ।
अन्यथा नश्यते लोको द्राङ्नृपोऽपि विनश्यति ॥११४॥
मातरं पितरं भार्यां यः सन्त्यज्य विवर्तते ।
निगडैर्बन्धयित्वा तं योजयेन्मार्गसंस्कृतौ ।

---

राज्ञ इति । ये जनाः शत्रुसम्बन्धात् शत्रोरुपजापात् परामर्शादित्यर्थः राज्ञः राष्ट्रस्य राज्यस्यजनस्य तथा मन्त्रिगणस्य विकृतिं वैपरीत्यम् इच्छन्ति, नृपः द्राक् झटिति तान् हन्यात् हि नाशयेदेव हिशब्दोऽवधारणार्थः ॥ १११ ॥

नेच्छेदिति । राजा गणानां समूहानां दौष्ट्ये दुष्टतायां गणस्य समूहस्य युगपत् समकालमेव ध्वासं विनाशं न इच्छेत्, यथा वत्सः शिशुः स्तनम् एकैकशित्यर्थः अश्नाति पिबति तथा एकैकं दुर्जनं क्रमशः घातयेत् तद्दर्शनेन अपरे तत्कार्य्यात् निवर्त्स्यन्तीति भावः ॥ ११२ ॥

अधर्मशील इति । यदा नृपतिः अधर्मशीलः दुराचारः भवेत् तदा जनः धर्मशीलस्य अतिबलवतः रिपोः राजविपक्षस्य आश्रयतः आश्रयेण तं नृपतिं सदा भीषयेत् भयं दर्शयेत् ॥ ११३ ॥

यावदिति । यावत् नृपः धर्मशीलः स्यात् तावदेव सः नृपः राजा चिरं तिष्ठतीति भावः । अन्यथा तस्य अधर्मशीलत्वे इत्यर्थः लोकः नश्यते, नृपोऽपि सः द्राक् झटिति विनश्यति ॥ ११४ ॥

मातरमिति । यः मातरं पितरं भार्याञ्च संत्यज्य विवर्त्तते

तद् भृत्यर्थं तु सन्दद्यात् तेभ्यो राजा प्रयत्नतः ॥ ११५ ॥
विद्यात् पणसहस्रं तु दण्ड उत्तमसाहसः ।
दशमाषमितं ताम्रं तत् पणो राजमुद्रितम् ।
वराटिसार्द्धशतकमूल्यः कार्षापणश्च सः ॥ ११६ ॥
तदर्द्धञ्च तदर्द्धञ्च मध्यमः प्रथमः क्रमात् ।
प्रथमे साहसे दण्डः प्रथमश्च क्रमात् परौ ॥ ११७ ॥
मध्यमे मध्यमो धार्य्यश्चोत्तमे तूत्तमो नृपैः ।
सोपायाः कथिता मिश्रे मित्रोदासीनशत्रवः ॥ ११८ ॥
इति शुक्रनीतौ चतुर्थाध्यायस्य सुहृदादिलक्षणं नाम
प्रथमं प्रकरणम् ।

---

यथेष्टं व्यवहरतीत्यर्थः राजा तं निगडैः पादशृङ्खलैः बन्धयित्वा ग्रामीणां पथां संस्कृतौ बन्धनादिकर्म्मणि योजयेत्, तथा तस्य भृत्यर्थं, तेभ्यः तत् पितृमात्रादिभ्यः प्रयत्नतः यत्नेन संदद्यात् ॥ ११५ ॥

विद्यादिति । पणानां सहस्रम् उत्तमसाहसः उत्तमसाहसाख्यः दण्डः, पणश्च दशभिर्माषैः मितं परिमितं राजमुद्रितं तत्-प्रचित्रं ताम्रं ताम्रमुद्रा इत्यर्थः । स पणः वराटीनां सार्द्धशतक-मूल्यं यस्य तादृशः कार्षापणश्च कथ्यते इति विद्यात् ॥ ११६ ॥

तदर्द्धमिति । तदर्द्धः तस्य उत्तमसाहसस्य अर्द्धः मध्यमः साहसः तदर्द्धञ्च प्रथमसाहसः क्रमात् बोद्धव्य इति शेषः । प्रथमे साहसे प्रथमो दण्डः, क्रमात् परौ मध्यमसाहसोत्तमसाहसौ ज्ञेयौ ॥ ११७ ॥

मध्यमे इति । नृपैः मध्यमे पापे मध्यमो दण्डः, उत्तमे उत्तमः दण्डः धार्य्यः कार्य्यः । मिश्रे मिश्राध्याये सोपायाः उपायैः सामा-दिभिः सहिताः मित्रोदासीनशत्रवः कथिताः उक्ताः ॥ ११८ ॥

इति श्रीजीवानन्दविद्यासागर भट्टाचार्य्य विरचितं
चतुर्थाध्यायस्य प्रथमप्रकरणव्याख्यानं समाप्तम् ।

---

# चतुर्थाध्यायस्य द्वितीयं प्रकरणम्।

अथ कोषप्रकरणं ब्रुवे मिश्रे द्वितीयकम्।
एकार्थसमुदायो यः स कोषः स्यात् पृथक् पृथक् ॥ १ ॥
येन केन प्रकारेण धनं सञ्चिनुयात् नृपः।
तेन संरक्षयेद्राष्ट्रं बलं यज्ञादिकाः क्रियाः ॥ २ ॥
बलप्रजारक्षणार्थं यज्ञार्थं कोषसंग्रहः।
परत्रेह च सुखदो नृपस्यान्यश्च दुःखदः ॥ ३ ॥
स्त्रीपुत्रार्थं कृतो यश्च स्वोपभोगाय केवलम्।
नरकायैव स ज्ञेयो न परत्र सुखप्रदः ॥ ४ ॥
अन्यायेनार्जितो यस्माद् येन तत् पापभाक् च सः।

---

अथेति। अथ अनन्तरं मिश्रे अध्याये द्वितीयकं कोषप्रकरणं ब्रुवे कथयामि, एकेषां कतिपयानाम् अर्थानां समुदायः समष्टिः यः, सः पृथक् पृथक् विविधप्रकारः कोषः स्यात् ॥ १ ॥

येनेति। नृपः येन केन प्रकारेण धनं सञ्चिनुयात् संगृह्णीयात् तेन च धनेन राष्ट्रं राज्यरक्षार्थं पुष्टं बलं सैन्यं यज्ञादिकाः क्रियाश्च संरक्षेत् ॥ २ ॥

बलेति। बलानां सैन्यानां प्रजानाञ्च रक्षणार्थं यज्ञार्थञ्च कोषसंग्रहः धनसञ्चयः नृपस्य परत्र परकाले इह च अस्मिन् काले च सुखप्रदः, अन्यः तद्व्यतिरिक्त इत्यर्थः धनसञ्चयः दुःखदः ॥ ३ ॥

स्त्रीपुत्रार्थमिति। केवलं स्त्रीपुत्रार्थं भार्यासुतभरणार्थं स्वस्य आत्मनः उपभोगाय च यः सञ्चयः कृतः, स नरकाय एव ज्ञेयः परत्र न सुखप्रदश्च ॥ ४ ॥

अन्यायेनेति। येन जनेन यः अर्थः अन्यायेन उपार्जितः स्यात्,

सुपात्रतो गृहीतं यद् दत्तं वा वर्धते च तत् ॥ ५ ॥
स्वागमी सद्व्ययी पात्रमपात्रं विपरीतकम्।
अपात्रस्य हरेत् सर्वं धनं राजा न दोषभाक् ॥ ६ ॥
अधर्मशीलनृपतेः सर्वतः संहरेद्धनम्।
छलाद् बलाद् दस्युवृत्त्या परराष्ट्राद्धरेत् तथा ॥ ७ ॥
त्यक्त्वा नीतिबलं स्वीयप्रजापीड़नतो धनम्।
सञ्चितं येन तत्तस्य सराज्यं शत्रुसाद्भवेत् ॥ ८ ॥
दण्डभूभागशुल्कानामाधिक्यात् कोशवर्धनम्।
अनापदि न कुर्वीत तीर्थदेवकरग्रहात् ॥ ९ ॥

---

यः जनः तस्य अन्यायोपार्जनस्य पापभाक् भवति। यत् धनं सुपात्रतः साधोः सकाशात् गृहीतं वा दत्तं सुपात्रे इति शेषः तत् वर्द्धते वृद्धिं प्राप्नोति ॥ ५ ॥

स्वागमीति। स्वागमी सुष्ठु आगमवान् न्यायोपार्जक इत्यर्थः तथा सद्व्ययी सत्कार्य्ये व्ययशीलः जनः पात्रं, तस्य विपरीतकम् अपात्रम् राजा अपात्रस्य सर्वं धनं हरेत् तत्र न दोषभाक् भवतीति शेषः ॥ ६ ॥

अधर्मेति। लोकः अधर्मशीलनृपतेः धनं सर्वतः सर्वैः प्रकारैः छलात् बलात् दस्युवृत्त्या वा हरेत्, तथा परराष्ट्रात् शत्रुराज्यात् हरेत् राजेति शेषः ॥ ७ ॥

त्यक्त्वेति। येन नीतिबलं त्यक्त्वा स्वीयप्रजानां पीड़नतः पीड़नात् धनं सञ्चितं, तस्य तत् धनं स राज्यं राज्यसहितं शत्रुसात् शत्रुसात् भवेत् ॥ ८ ॥

दण्डेति। अनापदि अविपदवस्थायां दण्डानां भूभागानां शुल्कानाञ्च आधिक्यात् वृद्धिकरणात् तथा तीर्थानां पुण्यक्षेत्राणां

दण्डभूभागशुल्कैस्तु विना कोशाद् बलस्य च ।
संरक्षणं भवेत् सम्यग् यावद्विंशतिवत्सरम् ।
तथा कोशस्तु सन्धार्य्यः स्वप्रजारक्षणक्षमः ॥ १३ ॥
बलमूलो भवेत् कोशः कोशमूलं बलं स्मृतम् ।
बलसंरक्षणात् कोशराष्ट्रवृद्धिररिक्षयः ॥ १४ ॥
जायते तत् त्रयं स्वर्गः प्रजासंरक्षणेन वै ॥ १५ ॥
यज्ञार्थं द्रव्यमुत्पन्नं यज्ञः स्वर्गसुखायुषे ।
अर्थभावी बलं कोशो राष्ट्रवृद्ध्यै त्रयं त्विदम् ॥ १६ ॥
तद्वृद्धिर्नीतिनैपुण्यात् क्षमाशीलनृपस्य च ।
जायतेऽतो यतेतैव यावद् बुद्धिबलोदयम् ॥ १७ ॥
मालाकारस्य वृत्त्यैव स्वप्रजारक्षणेन च ।

---

बलमूल इति । कोशः बलं मूलं यस्य तथाभूतः, बलानामेव सामर्थ्यात् कोशवृद्धिरिति भावः, बलञ्च कोशमूलं धनमूलं स्मृतं धनेनैव तेषां रक्षणसम्भवादिति भावः । बलानां संरक्षणात् कोशानां धनानां राष्ट्राणाञ्च वृद्धिः अरीणां शत्रूणां क्षयश्च भवतीति शेषः ॥ १४ ॥

जायत इति । प्रजानां संरक्षणेन सम्यक् पालनेन तत्त्रयं कोशानां राष्ट्राणां वृद्धिररिक्षयश्च एतत्त्रयं स्वर्गश्च जायते वैशब्दोऽवधारणार्थः ॥ १५ ॥

यज्ञार्थमिति । यज्ञार्थं यागानुष्ठानार्थं द्रव्यं धनम् उत्पन्नं यज्ञः स्वर्गाय सुखाय, आयुर्वर्द्धनाय च भवति । अर्थभावः अर्थोद्भावः बलं सैन्यं कोशः धनम् इदं त्रयन्तु राष्ट्रस्य वृद्ध्यै भवतीति शेषः ॥ १६ ॥

तदिति । क्षमाशीलस्य नृपस्य नीतिनैपुण्यात् तद्वृद्धिः तेषाम् अर्थभावादीनां वृद्धिः जायते, अतः अस्मात् कारणात् यावत् बुद्धिबलोदयं बुद्धिबलोदयानुसारेण यतेत एव तद्वृद्धये इति शेषः ॥ १७ ॥

अबं हि करदीकृत्य तद्धनैः कोशवर्धनम् ॥ १८ ॥
करोति स नृपः श्रेष्ठो मध्यमो वैश्यवृत्तितः।
अधमः सेवया दण्डतीर्थदेवकरग्रहैः ॥ १९ ॥
प्रजा हीनधना रक्ष्या भृत्या मध्यधनाः सदा।
यथाधिकृत् प्रतिभुवोऽधिकद्रव्यास्तथोत्तमाः ॥ २० ॥
धनिकाश्चोत्तमधना न हीना नाधिका नृपैः ॥ २१ ॥
द्वादशाब्दप्रपूरं यद्धनं तन्नीचसंज्ञकम्।
षड्विंश षोडशाब्दानां मध्यमं तद्धनं स्मृतम्।
त्रिंशदब्दप्रपूरं यत् कुटुम्बस्योत्तमं धनम् ॥ २२ ॥

---

मालाकारश्चेति। करोतीति। यः मालाकारस्य इत्था व्यवहारेण इव अप्रजारक्षणेन अबं करदीकृत्य अकरदान् करदान् कृत्वा अधिनीकृत्येत्यर्थः तस्य धनैः कोशवर्द्धनं करोति, सः नृपश्रेष्ठः। यः वैश्यवृत्तितः व्यवसायादिना इत्यर्थः कोशवर्द्धनं करोति स मध्यमः अधमः सेवया भृत्यभावेन दण्डदेवानां तीर्थदेवानां देवदर्शनदेवानां कराणां ग्रहैः ग्रहणैः कोशवर्द्धनं करोतीत्यर्थः ॥ १८ ॥ १९ ॥

प्रजेति। हीनधनाः तथा मध्यधनाः प्रजाः भृत्या वेतनादिना सदा रक्ष्याः पालनीयाः, अधिकद्रव्याः महाधनाः उत्तमास्तु प्रजाः अधिकृत् प्रभुर्यथा स्वामीव प्रतिभुवः कृत्वा रक्ष्याः राज्ञेति शेषः ॥ २० ॥

धनिका इति। उत्तमधना धनिकाः धनवन्तश्च नृपैः न हीनाः नच अधिकाः नृपतुल्या इत्यर्थः भवन्तीति शेषः ॥ २१ ॥

द्वादशेति। यत् धनं कुटुम्बस्य परिवारस्य द्वादशाब्दप्रपूरं द्वादशवर्षव्ययोपयुक्तं तत् नीचसंज्ञकम् अधममित्यर्थः, यत् षोडशाब्दानां षड्विंशं व्ययोपयुक्तं तत् मध्यमं, यच्च त्रिंशदब्दप्रपूरं त्रिंशद्वत्सरव्ययोपयुक्तं तत् उत्तमं धनम् ॥ २२ ॥

क्रमादर्थं रक्षयेद् वा स्वापत्तौ नृप एषु वै ॥ २३ ॥
मूलैर्व्यवहरन्त्यर्घैर्न वृद्ध्या वणिजः क्वचित्।
विक्रीणन्ति महार्घे तु हीनार्घे सञ्चयन्ति हि ॥ २४ ॥
व्यवहारे हृतं वैश्यैस्तद्धनेन विना सदा।
अन्यथा स्वप्रजातापो नृपं दहति सान्वयम् ॥ २५ ॥
धान्यानां संग्रहः कार्यो वत्सरत्रयपूर्तिदः।
तत् तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च।
चिरस्थायी समृद्धानामधिको वापि चेष्यते ॥ २६ ॥
सुपुष्टं कान्तिमज्जातिश्रेष्ठं शुष्कं नवीनकम्।

---

क्रमादिति। नृपः स्वस्य आपत्तौ आपदि एषु पूर्वोक्तेषु धनिकेषु क्रमात् अर्थं रक्षयेत् स्थापयेत् वा। वाशब्दः विकल्पार्थः ॥ २३ ॥

मूलैरिति। वणिजः व्यवसायिनः क्वचित् कदाचित् अर्घैः मूल्यभूतैः मूलैः मूलधनैः व्यवहरन्ति क्रयविक्रयव्यवहारान् कुर्वन्ति, न वृद्ध्या न लाभेनेत्यर्थः। किञ्च महार्घे महामूल्ये विक्रीणन्ति, हीनार्घे अल्पमूल्ये सञ्चयन्ति क्रीणन्तीत्यर्थः हिशब्दश्चावधारणार्थः ॥ २४ ॥

व्यवहारे इति। व्यवहारे वाणिज्यायेत्यर्थः यत् वैश्यैः वणिग्भिः हृतं वस्तु तत् धनेन मूल्येन विना सदा कदाचिदपीत्यर्थः न ग्रहणीयं बलात् राज्ञेति पदत्रयमध्याहार्य्यम्। अन्यथा बलात् हरणे इत्यर्थः स्वस्य प्रजानां वणिजामित्यर्थः तापः मनःक्षोभः सान्वयं सवंशं नृपं दहति ॥ २५ ॥

धान्यानामिति। नृपेण आत्महिताय स्वस्य राष्ट्ररक्षार्थं तत्तत् काले यथायथसमये वत्सरत्रयपूर्त्तिदः त्रिवर्षव्ययोपयुक्तः धान्यानां संग्रहः सञ्चयः कार्य्यः। वापि अपि वा अथवा इत्यर्थः समृद्धानाम् ऐश्वर्य्यशालिनां चिरस्थायी ततोऽपि अधिककालस्थायी अधिकः धान्यसंग्रहः इष्यते ॥ २६ ॥

संरक्षयेत् प्रयत्नेन संगृहीतं धनादिकम् ।
आर्जने तु महत् दुःखं रक्षणे तच्चतुर्गुणम् ॥ २२ ॥
क्षणं चोपेक्षितं यत्तद्विनाशं द्राक् समाप्नुयात् ॥ २३ ॥
आर्जकस्यैव दुःखं स्यात् तथार्जितविनाशने ।
स्त्रीपुत्राणामपि तथा नान्येषां तु कथं भवेत् ॥ २४ ॥
स्वकार्ये शिथिलो यः स्यात् किमन्ये न भवन्ति हि ।
जागरूकः स्वकार्ये यस्तत् सहायाश्च तत् समाः ॥ २५ ॥
यो जानात्यर्जितुं सम्यगर्जितं न हि रक्षितुम् ।

---

भवेत् कार्य्यसाधनार्थं भवति, तस्य तस्य अपि कार्य्यसिद्धिदः संग्रहः अवश्यः कर्त्तव्यः ॥ २० ॥ २१ ॥

संरक्षयेदिति । संगृहीतं धनादिकं प्रयत्नेन संरक्षयेत्, आर्जने उपार्जने तु महत् दुःखं अस्ति, परं रक्षणे तस्य आर्जनदुःखस्य चतुर्गुणं दुःखं भवतीति शेषः ॥ २२ ॥

क्षणमिति । यत् धनं क्षणम् उपेक्षितं, तत् द्राक् झटिति विनाशं समाप्नुयात् ॥ २३ ॥

आर्जकस्येति । आर्जकस्य उपार्जकस्य अर्जने इति शेषः दुःखं तथा अर्जितस्य विनाशनेऽपि दुःखं स्यात् । स्त्रीपुत्राणामपि विनाशेन यथा दुःखं भवेत् तथा अन्येषां वस्तूनां विनाशनेऽपि कथं न भवेत् अपि तु भवेदेवेत्यर्थः ॥ २४ ॥

स्वकार्य्ये इति । यः स्वस्य कार्य्ये शिथिलः अलसः स्यात् तस्य अन्ये अनुगामिनो लोकाः किं कथं शिथिलाः न भवन्ति अपितु भवन्त्येव । यः स्वकार्य्ये जागरूकः अशिथिल इत्यर्थः तस्य सहायाश्च तथा कार्य्यतत्पराः भवन्तीत्यर्थः ॥ २५ ॥

य इति । यः अर्जितुम् उपार्जयितुमित्यर्थः जानाति, परम् अर्जितं धनं सम्यक् रक्षितुं नहि जानाति, अतः अस्मात् अनात्

नातः परतरो मूर्खो वृथा तस्यार्जनश्रमः ॥ ३६ ॥
एकस्मिन्नधिकारे तु यो द्वावधिकरोति सः ।
मूर्खो जीवद्द्विभार्यश्च ह्यतिविस्रम्भवांस्तथा ॥ ३७ ॥
महाधनाशो ह्यलसः स्त्रीभिर्निर्जित एव हि ।
तथायं साक्षितां पृच्छेच्चोरजाराततायिषु ॥ ३८ ॥
संरक्षयेत् कृपणवत् काले दद्याद्विरक्तवत् ।
मूर्खत्वमन्यथा याति स्वधनव्ययतोऽपि च ॥ ३९ ॥
वस्तुयाथात्म्यविज्ञाने स्वयमेव यतेत् सदा ।
परीक्षकैः स्वयं राजा रत्नादीन् वीक्ष्य रक्षयेत् ॥ ४० ॥

---

परतरः श्रेष्ठतरः मूर्खः न अस्तीति शेषः यतः तस्य अर्जनश्रमः उपार्जनपरिश्रमः वृथा निष्फल इत्यर्थः ॥ ३६ ॥

एकस्मिन्निति । महाधनाश इति । यः एकस्मिन् अधिकारे द्वौ अधिकरोति सः एकाधिकारस्यैव रक्षणस्य दुःसाध्यत्वादिति भावः, यः जीवन् सन् द्विभार्यः भार्याद्वययुक्तः अथवा जीवन्त्यौ द्वे भार्ये यस्य सः, यः अतिविस्रम्भवान् अतिविश्वस्तः सर्वेषां सतामसतां चैव कृतविश्वासः सः, यः महाधनाशः अधिकधनस्पृहः अथच अलसः स्त्रीभिः निर्जितः अधीनीकृतश्च सः, तथा यः चोरजाराततायिषु तस्करेषु उपपतिषु आततायिषु महापराधिषु विषयेषु साक्षितां पृच्छेत् स च मूर्खः ॥ ३७ ॥ ३८ ॥

संरक्षयेदिति । कृपणवत् धनं संरक्षयेत् काले यथासमये विरक्तवत् दद्यात् अन्यथा एतद्वैपरीत्ये स्वधनानां अयतः व्ययेन मूर्खत्वं याति प्राप्नोति ॥ ३९ ॥

वस्त्विति । वस्तूनां द्रव्याणां याथात्म्यस्य स्वरूपस्य विज्ञाने विशेषज्ञाने सदा स्वयमेव यतेत् । राजा स्वयं परीक्षकैश्च रत्नादीन् वीक्ष्य परीक्ष्य रक्षयेत् न्यस्येदित्यर्थः ॥ ४० ॥

वज्रं मुक्ता प्रवालं च गोमेदश्चेन्द्रनीलकः।
वैदूर्यं पुष्परागश्च पाचिर्माणिक्यमेव च।
महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः॥ ४१॥
रवेः प्रियं रक्तवर्णं माणिक्यं त्विन्द्रगोपरुक्।
रक्तपीतसितश्यामच्छविर्मुक्ता प्रिया विधोः॥ ४२॥
सपीतरक्तरुग्भौमप्रियं विद्रुममुत्तमम्।
मयूरचाषपत्राभा पाचिर्बुधहिता हरित्॥ ४३॥
स्वर्णच्छविः पुष्परागः पीतवर्णो गुरुप्रियः।
अत्यन्तविशदं वज्रं तारकाभं कवेः प्रियम्॥ ४४॥
हितः शनेरिन्द्रनीलो ह्यसितो घनमेघरुक्।

---

वज्रमिति। वज्रं हीरकं, मुक्ता मौक्तिकं, प्रवालं, गोमेदः, इन्द्रनीलः वैदूर्यं, पुष्परागः पद्मरागः, पाचिः मरकतं तथा माणिक्यं एतानि नव सूरिभिर्विद्वद्भिः महारत्नानि प्रोक्तानि कथितानि॥४१॥

रवेरिति। इन्द्रगोपस्य कीटविशेषस्य रुक् कान्तिरिव कान्तिर्यस्य तादृशं रक्तवर्णं माणिक्यं रवेः सूर्यस्य प्रियम्। रक्ता पीता सिता श्यामा च छविः कान्तिर्यस्याः तथाभूता मुक्ता विधोः चन्द्रस्य प्रिया॥ ४२॥

सपीतेति। पीतया रक्तया च रुचा कान्त्या सहितम् उत्तमं विद्रुमं प्रवालं भौमस्य मङ्गलस्य प्रियम्। मयूरस्य चाषस्य पक्षिभेदस्य च पत्रस्य पक्षस्येव आभा यस्याः तथोक्ता हरित् हरितवर्णा पाचिः मरकतं बुधस्य हिता प्रिया॥ ४३॥

स्वर्णेति। स्वर्णस्येव छविः कान्तिर्यस्य तथोक्तः पीतवर्णः पुष्परागः गुरोः वृहस्पतेः प्रियः। अत्यन्तविशदम् अतिस्वच्छं तारकाभं तारासदृशं वज्रं हीरकं कवेः शुक्रस्य प्रियम्॥ ४४॥

हित इति। घनस्य निविडस्य मेघस्येव रुक् कान्तिर्यस्य तादृशः

गोमेदः प्रियकृद्राहोरीषत् पीतारुणप्रभः ॥ ४५ ॥
ओत्वक्ष्याभश्चलत्तन्तुर्वैदूर्यः केतुप्रीतिकृत् ॥ ४६ ॥
रत्नश्रेष्ठतरं वज्रं नीचे गोमेदविद्रुमे ।
गारुत्मतं तु माणिक्यं मौक्तिकं श्रेष्ठमेव हि ।
इन्द्रनीलं पुष्परागो वैदूर्यं मध्यमं स्मृतम् ॥ ४७ ॥
रत्नश्रेष्ठो दुर्लभश्च महाद्युतिरहिर्मणिः ॥ ४८ ॥
अजालगर्भं सद्वर्णं रेखाबिन्दुविवर्जितम् ।
सत्कोणं सुप्रभं रत्नं श्रेष्ठं रत्नविदो जगुः ॥ ४९ ॥
शर्कराभं दलाभं च चिपिटं वर्तुलं हि तत् ।
वर्णाः प्रभाः सिता रक्ताः पीतकृष्णास्तु रत्नजाः ॥ ५० ॥

---

कथितः ब्राह्मणः इन्द्रनीलः शनेः स्मृतः प्रियः । ईषत्पीता अरुणा रक्ता प्रभा यस्य तथाभूतः गोमेदः राहोः प्रियकृत् ॥ ४५ ॥

ओत्विति । ओतोर्विडालस्य अक्ष्ण इव आभा यस्य तथाभूतः चलन् तन्तुः शिखा यस्य तथोक्तः वैदूर्य्यः केतोः ग्रहस्य प्रीतिकृत् ॥ ४६ ॥

रत्नश्रेष्ठतरमिति । वज्रं रत्नेषु श्रेष्ठतरं सर्वश्रेष्ठं, गोमेदविद्रुमे नीचे सर्वरत्नाधमे, गारुत्मतं पाचिः माणिक्यं तथा मौक्तिकं श्रेष्ठम् । इन्द्रनीलं पुष्परागः तथा वैदूर्य्यं मध्यमं स्मृतम् कथितम् ॥ ४७ ॥

रत्नश्रेष्ठ इति । अहेः सर्पस्य मणिः महाद्युतिः अत्युज्ज्वलः रत्नश्रेष्ठः दुर्लभश्च ॥ ४८ ॥

अजेति । अजालगर्भं सद्वर्णम् रेखाभिः बिन्दुभिश्च विवर्जितं सत्कोणम् उत्तमकोणविशिष्टं सुप्रभं समुज्ज्वलं रत्नं, रत्नविदः रत्नतत्त्वज्ञाः जनाः श्रेष्ठं जगुः कीर्त्तयन्ति ॥ ४९ ॥

शर्कराभमिति । तत् रत्नं शर्कराभं शर्कराकृति, दलाभं पत्रकान्ति, चिपिटं चिपिटाकारं तथा वर्त्तुलञ्च । रत्नजा मणिजाः वर्णाः प्रभाश्च सिताः श्वेताः रक्ताः पीताः कृष्णाश्च ॥ ५० ॥

यथावर्णं यथाच्छायं रत्नं यद्दोषवर्जितम् ।
श्रीपुष्टिकीर्त्तिशौर्य्यायुःकरमन्यदसत् स्मृतम् ॥ ५१ ॥
वर्णमाक्रमते छाया प्रभा वर्णप्रकाशिनी ॥ ५२ ॥
पद्मरागस्तु माणिक्यभेदः कोकनदच्छविः ।
न धारयेत् पुत्रकामा नारी वज्रं कदाचन ॥ ५३ ॥
कालेन हीनं भवति मौक्तिकं विद्रुमं धृतम् ।
गुरुत्वात् प्रभया वर्णाद् विस्ताराद् आश्रयादपि ॥ ५४ ॥
आकृत्या चाधिमूल्यं स्याद्रत्नं यद्दोषवर्जितम् ।
नायसोल्लिख्यते रत्नं विना मौक्तिकविद्रुमात् ।
पाषाणेनापि च प्राय इति रत्नविदो जगुः ॥ ५५ ॥

---

यथेति । यत् रत्नं यथावर्णं वर्णेषु यथाच्छायं कान्तिषु दोषवर्जितं निर्दोषं तत् श्रीपुष्टिकीर्त्तिशौर्य्यायुःकरं श्रीवृद्धिकरं पुष्टिवर्द्धनं कीर्त्तिकरं शौर्य्यस्य आयुषश्च वर्द्धकम् । अन्यत् तद्भिन्नम् असत् मन्दं स्मृतम् ॥ ५१ ॥

वर्णमिति । छाया कान्तिः वर्णम् आक्रमते उज्ज्वलयति, प्रभा च कान्तिश्च वर्णप्रकाशिनी भवति ॥ ५२ ॥

पद्मराग इति । पद्मरागस्तु माणिक्यस्य भेदः विशेषः स च कोकनदच्छविः रक्तोत्पलकान्तिः, रक्तोत्पलं कोकनदमित्यमरः । पुत्रकामा पुत्रार्थिनी नारी कदाचन वज्रं हीरकं न धारयेत् ॥ ५३ ॥

कालेनेति । मौक्तिकं विद्रुमञ्च धृतं परिहितं कालेन समयक्रमेण गुरुत्वात्, प्रभया, वर्णात्, विस्तारात् तथा आश्रयात् उत्कृष्टाधारात् हीनं भवति ॥ ५४ ॥

आकृत्येति । यत् रत्नम् आकृत्या आकारेण दोषवर्जितं तत् अधिमूल्यम् अधिकमूल्यं स्यात् भवति । किञ्च विद्रुमात् मौक्तिकाच्च विना विद्रुममौक्तिकभिन्नमित्यर्थः रत्नम् अयसा लौहेन पाषाणेन

मूल्याधिक्याय भवति यद्रत्नं गुरुविस्तृतम् ।
गुर्वल्पं हीनमौल्याय स्याद्बहु लघ्वपि सद्गुणम् ॥ ५६ ॥
शर्कराभं हीनमौल्यं चिपिटं मध्यमं स्मृतम् ।
दलाभं श्रेष्ठमूल्यं स्याद् यथाकामात् तु वर्तुलम् ॥ ५७ ॥
न जरां यान्ति रत्नानि विद्रुमं मौक्तिकं विना ।
राजदौष्ट्याच्च रत्नानां मूल्यं हीनाधिकं भवेत् ॥ ५८ ॥
मत्स्याहिशङ्खवाराहवेणुजीमूतशुक्तितः ।
जायते मौक्तिकं तेषु भूरि शुक्त्युद्भवं स्मृतम् ॥ ५९ ॥

---

च प्राप्य न उज्झ्यते उद्धूयते इति रत्नविदः जनाः प्राहुः प्राय-न्तिका ॥ ५५ ॥

मूल्याधिक्यायेति । यत् रत्नं गुरु भारवत् च विस्तृतं विशालं तत् मूल्याधिक्याय अधिकमूल्याय भवति । यत्तु गुरु भारवत् अल्पं स्वल्पं लघु बहु स्थूलम् अत्युत्कृष्टगुणमपि हीनमौल्याय अल्पमूल्याय स्यात् ॥ ५६ ॥

शर्कराभमिति । शर्कराभं रत्नं हीनमूल्यं चिपिटं रत्नं मध्यमं मध्यममूल्यं स्मृतम् । दलाभं पत्रकान्ति रत्नं श्रेष्ठमूल्यं महामूल्यं तथा वर्तुलं यथाकामम् केवलमिच्छया इच्छानुसारात् मूल्यवत् स्यात् ॥ ५७ ॥

नेति । विद्रुमं प्रवालं मौक्तिकञ्च विना विद्रुममौक्तिकभिन्ना-नीत्यर्थः रत्नानि जरां वार्धक्यं हीनावस्थामित्यर्थः न यान्ति न प्राप्नुवन्ति । राज्ञः दौष्ट्यात् दोषात् रत्नानां मूल्यं हीनम् अधिकञ्च भवेत् ॥ ५८ ॥

मत्स्येति । मौक्तिकं मत्स्यात्, अहेः सर्पात्, शङ्खात्, वराहात्, वेणुतः वंशात्, जीमूतात् मेघात्, शुक्तितश्च जायते, तेषु मध्ये शुक्त्युद्-भवं शुक्तिजं भूरि प्रचुरं स्मृतम् ॥ ५९ ॥

तुलाकल्पितमूल्यं स्याद्रत्नं गोमेदकं विना ॥ ६५ ॥
सुमाविंशतिभी रत्ती रत्नानां मौक्तिकं विना ।
रत्तित्रयं तु गुञ्जायाश्चतुःक्षणकैर्भवेत् ॥ ६६ ॥
चतुर्विंशतिभिस्ताभी रत्नटङ्कस्तु रत्तिभिः ।
टङ्कैश्चतुर्भिस्तोलः स्यात् स्वर्णविद्रुमयोः सदा ॥ ६७ ॥
एकस्यैव हि वज्रस्य त्वेकरत्तिमितस्य च ।
सुविस्तृतदलस्यैव मूल्यं पञ्चसुवर्णकम् ॥ ६८ ॥
रत्तिकादलविस्ताराच्छ्रेष्ठं पञ्चगुणं यदि ।
यथा यथा भवेन्न्यूनं हीनमौल्यं तथा तथा ॥ ६९ ॥

---

शुक्लिजं विद्यात् । मध्याभं मध्यविधप्रभायुक्तम् इतरत् कनिष्ठं विदुः जानन्ति ॥ ६३ ॥ ६४ ॥

तुलेति । गोमेदकं रत्नं विना अन्यत् रत्नं तुलया तुलादण्डेन कल्पितं मूल्यं यस्य तथाभूतं स्यात् तुलया अन्येषां मूल्यं कल्पनीयमित्यर्थः ॥ ६५ ॥

सुमेति । मौक्तिकं विना अन्येषां रत्नानां सुमाविंशतिभिः विंशतिसुमाभिरित्यर्थः रत्तिः स्यात् । चतुःक्षणकैः चतुर्भिः क्षणकैः परिमाणविशेषैः गुञ्जायाः रत्तित्रयं भवेत् ॥ ६६ ॥

चतुरिति । चतुर्विंशतिभिः ताभिः रत्तिभिः रत्नटङ्कः भवेदिति शेषः । चतुर्भिः टङ्कैः सदा स्वर्णस्य विद्रुमस्य च तोलः स्यात् ॥ ६७ ॥

एकस्येति । एकरत्तिमितस्य सुविस्तृतदलस्य एकस्यैव वज्रस्य हीरकस्य मूल्यं पञ्चसुवर्णकं सुवर्णानाम् अशीतिरतिकस्वर्णानां पञ्चकम् ॥ ६८ ॥

रत्तिकेति । यदि रत्तिकादलविस्तारात् रत्तिकायाः दलात् विस्ताराच्च श्रेष्ठं वज्रं भवति तदा पञ्चगुणं पूर्वोक्तात् पञ्चगुणं मूल्यं भवति । किन्तु यथा यथा न्यूनं रत्तिकादलविस्तारादिति भावः तथा तथा हीनमौल्यं मूल्यहानिर्भवेदित्यर्थः ॥ ६९ ॥

अत्राष्टरत्तिको माषो दशमाषैः सुवर्णकः।
स्वर्णस्य तत् पद्ममूल्यं राजताशीतिकर्षकम्॥ ७०॥
यथा गुरुतरं वज्रं तन्मूल्यं रत्तिवर्गतः।
तृतीयांशविहीनं तु चिपिटस्य प्रकीर्तितम्॥ ७१॥
अर्द्धन्तु शर्करामस्य चोत्तमं मूल्यमीरितम्।
रत्तिकायाश्च द्वे वज्रे तदर्द्धं मूल्यमर्हतः॥ ७२॥
तदर्द्धं बहवोऽर्हन्ति मध्या हीना यथा गुणैः।
उत्तमार्द्धं तदर्द्धं वा हीरका गुणहानतः॥ ७३॥
वर्गरत्तिषु सन्धार्य्यं कलानां नवकं पृथक्।

---

अत्रेति। अत्र रत्नतौलनविषये अष्टरत्तिकः माषः भवेत्, दशभिः माषैः सुवर्णकः। राजताशीतिकर्षकम् अशीतिकर्षपरिमितरजतं स्वर्णस्य सुवर्णस्य तत् प्रसिद्धं पद्ममूल्यं पद्मरागाणां सुवर्णाणां मूल्यमित्यर्थः॥ ७०॥

यथेति। वज्रं यथा यादृशं गुरुतरं तन्मूल्यं तस्य मूल्यं रत्तिवर्गतः रत्तिगणनया वेदितव्यमिति शेषः, चिपिटस्य चिपिटाकारस्य वज्रस्य मूल्यं तृतीयांशेन विहीनं प्रकीर्त्तितम्॥ ७१॥

अर्द्धमिति। शर्करामस्य वज्रस्य उत्तमं मूल्यम् अर्द्धम् उत्कृष्टवज्रमूल्यादिति भावः ईरितं कथितम्। द्वे वज्रे रत्तिकायाः हेतुना एकरत्तिपरिमिते इत्यर्थः तस्य उत्कृष्टस्य वज्रस्य अर्द्धं मूल्यम् अर्हतः॥ ७२॥

तदर्द्धमिति। यथागुणैः उपयुक्तगुणैरित्यर्थः मध्याः मध्यमाः, हीनाश्च बहवः हीरकाः तदर्द्धं तस्य मूल्यस्य अर्द्धं अर्हन्ति। हीरकाः गुणहानतः गुणह्रासात् उत्तमार्द्धम् उत्तममूल्यं तदर्द्धं तस्य उत्तमस्य अर्द्धं वा अर्हन्तीति शेषः॥ ७३॥

वर्गेति। सन्धार्य्यमिति। वर्गरत्तिषु समाहृतासु रत्तिषु पृथक् पृथक्

तथांशपञ्चकं पूर्वं त्रिंशद्भिस्तद्भजेत् ततः ॥ ७४ ॥
लब्धं कलासु संयोज्य कलानां षोड़शांशकैः ।
मुक्तानां कल्पयेन्मूल्यं हीनमध्योत्तमं यथा ॥ ७५ ॥
सहस्रादधिके मुक्तारक्तिवर्गशते शते ।
कलात्रिंशतकं त्यक्त्वा शेषान्मूल्यं प्रकल्पयेत् ॥ ७६ ॥
शतादूर्ध्वं रक्तिवर्गाद्ध्रसो विंशतिरक्तिकाः ।
प्रतिशतात् तु वज्रस्य सुविस्तृतदलस्य च ।
तथैव चिपिटस्यापि विस्तृतस्य च ह्रासयेत् ॥ ७७ ॥
शर्कराभस्य पञ्चाशच्चत्वारिंशच्च वैकतः ॥ ७८ ॥
रत्नं न धारयेत् कृष्णरक्तबिन्दुयुतं सदा ॥ ७९ ॥

---

कलानां नवकं नवकला इत्यर्थः, तथा अंशपञ्चकं पञ्चार्थं रत्नं, तत्र पूर्वं कलानवकमित्यर्थः त्रिंशद्भिः भजेत् विभक्तं कुर्य्यात् । ततः लब्धं विभागलब्धं कलासु संयोज्यम् । कलानां षोड़शांशकैः षोड़शभिः अंशैः मुक्तानां हीनमध्योत्तमं यथा हीनमध्यमोत्तमानुसारेणेत्यर्थः मूल्यं कल्पयेत् ॥ ७४ ॥ ७५ ॥

सहस्रादिति । मुक्तारक्तीनां यो वर्गः समद्विघातः तस्य शते शतगुणिते तत्राभिन्नित्यर्थः । सहस्रादधिके शते सति कलानां त्रिंशतकं त्यक्त्वा तस्मादिति भावः शेषात् अवशिष्टात् मूल्यं प्रकल्पयेत् ॥ ७६ ॥

शतादिति । शर्कराभस्येति । सुधः सुखावटुः जनः सुविस्तृत-दलस्य वज्रस्य शतात् रक्तिवर्गात् रक्तीनां वर्गात् समभिघातात् ऊर्द्ध्वं विंशतिरक्तिकाः, विस्तृतस्य चिपिटस्य चिपिटाकारस्य वज्रस्य प्रतिशतात् ऊर्द्ध्वं पञ्चाशत् रक्तिकाः तथा शर्कराभस्य शर्करासदृशस्य वज्रस्य प्रतिशतात् एकतः चत्वारिंशत् एकाधिकचत्वारिंशत् रक्तिकाः ह्रासयेत् न्यूनयेत् ॥ ७७ ॥ ७८ ॥

रत्नमिति । कृष्णैः श्यामवैः रक्तैश्च बिन्दुभिर्युतं रत्नं सदा न धारयेत् ॥ ७९ ॥

गारुत्मतं तूत्तमं चेन्माणिक्यं मूल्यमर्हतः।
सुवर्णं रक्तिमात्रं चेद् यथारक्तिस्तथा गुरु ॥ ८० ॥
रक्तिमात्रः पुष्परागो नीलः स्वर्णार्घमर्हतः।
चलतन्तिसूत्रो वैदूर्य्यश्चोत्तमं मूल्यमर्हति ॥ ८१ ॥
प्रवालं तोलकमितं स्वर्णार्द्धं मूल्यमर्हति।
अत्यल्पमूल्यो गोमेदो नोन्मानं तु यतोऽर्हति ॥ ८२ ॥
संख्यातः स्वल्परत्नानां मूल्यं स्याद्धीरकाद् विना।
अत्यन्तरमणीयानां दुर्लभानां च कामतः।
भवेन्मूल्यं न मानेन तथातिगुणशालिनाम् ॥ ८३ ॥
व्यङ्घ्रिचतुर्दशगुणतो वर्गो मौक्तिकरत्नजः।
चतुर्विंशतिभिर्भक्तो लब्धान्मूल्यं प्रकल्पयेत् ॥ ८४ ॥

---

गारुत्मतमिति। रक्तिमात्रं रक्तिपरिमितं गारुत्मतं माणिक्यञ्च रत्नम् उत्तमं चेत् तदा सुवर्णं मूल्यं अर्हतः। यथा यावती रक्तिः तथा गुरु मूल्यं भवेदित्यर्थः ॥ ८० ॥

रक्तिमात्र इति। रक्तिमात्रः रक्तिपरिमितः पुष्परागः नीलश्च स्वर्णस्य अर्घं मूल्यम् अर्हतः। चलन्ति तीणि सूत्राणि यस्य तादृशः वैदूर्य्यः उत्तमं मूल्यम् अर्हति ॥ ८१ ॥

प्रवालमिति। तोलकमितं तोलकपरिमितं प्रवालं स्वर्णस्य अर्द्धं मूल्यम् अर्हति। गोमेदः अत्यल्पमूल्यः, यतः उन्मानं तोलनं न अर्हति ॥ ८२ ॥

संख्यात इति। हीरकात् विना स्वल्पानां क्षुद्राणां रत्नानां संख्यातः गणनया मूल्यं स्यात्। अत्यन्तरमणीयानां दुर्लभानाञ्च रत्नानां कामतः इच्छानुसारेण मूल्यं स्यात्। किञ्च अतिगुणशालिनां रत्नानां मानेन परिमाणेन मूल्यं न भवेत् ॥ ८३ ॥

व्यङ्घ्रीति। मौक्तिकरत्नजः वर्गः व्यङ्घ्रिः पादहीनः चतु

उत्तमं तु सुवर्णार्धमूनमूनं यथागुणम् ॥ ८५ ॥
रक्तं पीतं वर्त्तुलं चेन्मौक्तिकं चोत्तमं सितम् ।
अधमं चिपिटं शर्कराभमन्यत् तु मध्यमम् ॥ ८६ ॥
रत्ने स्वाभाविका दोषाः सन्ति धातुषु कृत्रिमाः ।
अतो धातून् सम्परीक्ष्य तन्मूल्यं कल्पयेद् बुधः ॥ ८७ ॥
सुवर्णं रजतं ताम्रं वङ्गं सीसं च रङ्गकम् ।
लोहं च धातवः सप्त ह्येषामन्ये तु सङ्कराः ॥ ८८ ॥
यथापूर्वं तु श्रेष्ठं स्यात् स्वर्णं श्रेष्ठतरं मतम् ।
वङ्गताम्रभवं कांस्यं पित्तलं ताम्ररङ्गजम् ॥ ८९ ॥

---

ईषद्भिर्हतः त्रुटितः तथा बहुभिः प्रतिभिः भग्नः यत् यो यस्मो भवेत् तस्मात् तस्मात् मूल्यं प्रकल्पयेत् ॥ ८४ ॥

उत्तममिति । उत्तमं मौक्तिकं सुवर्णार्धं स्वर्णमूल्यम्, अतः ततः अपकृष्टं मध्यममित्यर्थः पुनश्च अतः ततोऽप्यपकृष्टम् अधममित्यर्थः यथागुणं गुणानुसारेण मूल्यवदित्यर्थः ॥ ८५ ॥

रक्तमिति । रक्तं पीतं तथा सितं श्वेतवर्णं मौक्तिकं वर्त्तुलं चेत् उत्तमम् । चिपिटं चिपिटाकारं तथा शर्कराभं मौक्तिकम् अधमम् । अन्यत् एतद्व्यतिरिक्तन्तु मध्यमम् ॥ ८६ ॥

रत्ने इति । रत्ने स्वाभाविकाः अकृत्रिमाः दोषाः सन्ति, किन्तु धातुषु खनिजेषु द्रव्येषु तु कृत्रिमाः सन्तीति शेषः । अतः अस्मात् कारणात् बुधः धातून् संपरीक्ष्य तेषां मूल्यं कल्पयेत् ॥ ८७ ॥

धातूनाह सुवर्णमिति । धातवः सप्त यथा सुवर्णं, रजतं, ताम्रं, वङ्गं, सीसं, रङ्गकं, लोहञ्च । अन्ये एतद्व्यतिरिक्तास्तु सङ्कराः मिश्राः ॥ ८८ ॥

यथापूर्वमिति । यथापूर्वम् एषां पूर्वं पूर्वं श्रेष्ठं स्यात्, स्वर्णन्तु श्रेष्ठतरं मतम् । कांस्यं वङ्गताम्रभवं वङ्गताम्राभ्यां मिश्राभ्यां जातम् । किञ्च पित्तलं ताम्ररङ्गजं ताम्ररङ्गाभ्याम् मिश्राभ्याम् उत्पन्नमित्यर्थः ॥ ८९ ॥

मानसममपि स्वर्णं तनु स्यात् पृथुलाः परे ॥ ८० ॥
एकच्छिद्रसमाकृष्टे समखण्डे द्वयोर्यदा।
धातोः सूत्रं मानसमं निर्दुष्टस्य भवेत् तदा ॥ ८१ ॥
यन्मयस्याखरूपं यन्महामूल्यं भवेदयः।
रजतं षोड़शगुणं भवेत् स्वर्णस्य मूल्यकम् ॥ ८२ ॥
ताम्रं रजतमूल्यं स्यात् प्रायोऽशीतिगुणं तथा।
ताम्राधिकं सार्धगुणं वङ्गं वङ्गात् तथा परे ॥ ८३ ॥
वङ्गसीसे द्वित्रिगुणे ताम्रात्लौहं तु षड्गुणम्।
मूल्यमेतद्विनिर्दिष्टं तु श्रुतं प्राक्मूल्यकल्पनम् ॥ ८४ ॥

---

मानसममिति। स्वर्णं मानेन परिमाणेन समं तुल्यमपि तनु स्वल्पं स्यात् अन्यापेक्षयेति शेषः, परे अन्ये धातवः स्वर्णसमपरिमाणा अपि पृथुलाः स्थूलाः स्युः अन्यापेक्षयेति भावः ॥ ८० ॥

एकेति। यदा द्वयोः धात्वोः समे तुल्ये खण्डे एकेन छिद्रेण समाकृष्टे भवतः, तदा निर्दुष्टस्य दोषरहितस्य धातोः सूत्रं मानसमं परिमाणेन तुल्यं भवेत् ॥ ८१ ॥

यन्मेति। यन्मरूपं यन्त्ररूपस्य अयः लौहं महामूल्यं महार्घं भवेत्। किन्तु स्वर्णस्य मूल्यकं षोड़शगुणं रजतं भवेत् ॥ ८२ ॥

ताम्रमिति। रङ्गेति। प्रायः बाहुल्येन अशीतिगुणं रजतापेक्षयेति शेषः ताम्रं रजतस्य मूल्यं स्यात्। सार्धगुणम् अर्धसहितैकगुणितं वङ्गं ताम्राधिकं ताम्रस्य अधिकं मूल्यमित्यर्थः। तथा परे अन्ये धातवः वङ्गात् सार्धैकगुणितात् मूल्यवन्त इति शेषः। रङ्गसीसे रङ्गं सीसकञ्चेत्यर्थः ताम्रात् द्वित्रिगुणे क्रमेण रङ्गं ताम्रस्य द्विगुणं सीसं ताम्रस्य त्रिगुणं ताम्रेण सममिति भावः। लौहन्तु षड्गुणं ताम्रादिति शेषः षड्गुणं लौहं एकगुणेन ताम्रेण तुल्यमिति भावः। एतत्

चतुर्मासमितं स्वर्णं निष्क इत्यभिधीयते ।
पञ्चरक्तिमितो माषो गजमौक्ये प्रकीर्तितः ॥ १०५ ॥
रत्नभूतं तु तत्तत् स्याद् यद्यदप्रतिमं भुवि ।
यथादेशं यथाकालं मूल्यं सर्वस्य कल्पयेत् ॥ १०६ ॥
न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च ।
नीचमध्योत्तमत्वं तु सर्वस्मिन् मूल्यकल्पने ।
चिन्तनीयं बुधैर्लोकाद् वस्तुजातस्य सर्वदा ॥ १०७ ॥
विक्रेतृक्रेतृतो राजभागः शुल्कमुदाहृतम् ।
शुल्कदेशा हट्टमार्गाकरसीमाः प्रकीर्त्तिताः ॥ १०८ ॥
वस्तुजातस्यैकवारं शुल्कं ग्राह्यं प्रयत्नतः ।

---

चतुरिति । चतुर्भिः माषैः मितं परिमितं स्वर्णं निष्क इति अभिधीयते कथ्यते, गजमौक्ये हस्तिमूल्यविषये पञ्चरक्तिमितः पञ्चरक्तिपरिमाणः वस्तुविशेषः माषः प्रकीर्त्तितः कथितः ॥ १०५ ॥

रत्नभूतमिति । भुवि पृथिव्यां यत् यत् वस्तु अप्रतिमम् अनुपमम् असाधारणमित्यर्थः तत् तत् रत्नभूतं रत्नतुल्यम् । अतः यथादेशं देशानुसारेण यथाकालं कालानुसारेण सर्वस्य रत्नभूतस्य वस्तुनः मूल्यं कल्पयेत् ॥ १०६ ॥

नेति । गुणहीनस्य व्यवहाराक्षमस्य कार्य्यायोग्यस्य वस्तुनः मूल्यं नास्ति, किञ्च बुधैः विद्वद्भिः सर्वस्मिन् मूल्यकल्पने लोकात् लोकपरम्परातः वस्तुजातस्य समस्तस्य वस्तुनः नीचमध्योत्तमत्वम् अधमत्वं मध्यमत्वम् उत्तमत्वञ्च सर्वदा चिन्तनीयम् ॥ १०७ ॥

विक्रेत्रिति । विक्रेतुः क्रेतुश्च सकाशात् राजभागः राजग्राह्यांशः शुल्कम् उदाहृतं कथितं विधेयप्राधान्यात् नपुंसकत्वमेवम् । शुल्कदेशाः शुल्कग्रहणस्थानानि हट्टमार्गाः क्रयविक्रयस्थानानि आकरसीमाः आकरस्य शुल्कस्य सीमाः निर्दिष्टा अवधयश्च प्रकीर्त्तिताः ॥१०८॥

वस्तुजातस्येति । क्रये: वस्तुजातस्य रत्नादिमूल्यस्य प्रयत्नतः प्रयत्नेन

क्वचिन्नैवासकृच्छुल्कं राष्ट्रे ग्राह्यं नृपेच्छलात् ॥१०९॥
द्वात्रिंशांशं हरेद्राजा विक्रेतुः क्रेतुरेव वा ।
विंशांशं वा षोडशांशं शुल्कं मूल्याविरोधकम् ॥ ११० ॥
न हीनसममूल्याद्धि शुल्कं विक्रेततो हरेत् ।
लाभं दृष्ट्वा हरेच्छुल्कं क्रेततश्च सदा नृपः ॥ १११ ॥
बहुमध्याल्पफलितां भुवं मानमितां सदा ।
ज्ञात्वा पूर्वं भागमिच्छुः पश्चाद्भागं विकल्पयेत् ॥११२॥
हरेच्च कर्षकाद्भागं यथा नष्टो भवेन्न सः ।
मालाकार इव ग्राह्यो भागो नाङ्गारकारवत् ॥ ११३ ॥

---

न सकृद्वारं शुल्कं ग्राह्यं, क्वचित् राष्ट्रे छलात् कपटाचिततोऽपि तावत् असकृत् वारं वारं शुल्कं नैव ग्राह्यम् ॥ १०९ ॥

द्वात्रिंशांशमिति । राजा विक्रेतुः क्रेतुः वा सकाशात् मूल्याविरोधकं मूल्याविरुद्धं यथा तथा द्वात्रिंशांशं विंशांशं षोडशांशं वा शुल्कं हरेत् गृह्णीयात् विषयभेदेन: द्रव्यस्य मूल्यस्य च तारतम्यानुसारेण वेदितव्यः ॥ ११० ॥

नेति । विक्रेततः विक्रेतुः सकाशात् हीनात् क्रयमूल्यतः न्यूनात् समात् तुल्याच्च शुल्कं न हरेत् हि नैव गृह्णीयादित्यर्थः नृपः लाभम् अल्पमूल्येन अधिकद्रव्य लाभं दृष्ट्वा क्रेततश्च क्रेतुः सकाशात् सदा शुल्कं हरेत् ॥ १११ ॥

बह्विति । सदा भागमिच्छुः शुल्कभागाकाङ्क्षी राजा पूर्वं प्रथमं बहुफलां मध्यफलां वा अल्पफलां मानमितां परिमाणेन ज्ञातमानां भुवं भूमिं ज्ञात्वा पश्चात् भागं शुल्कस्येति शेषः विकल्पयेत् विशेषेण निर्दिशेत् ॥ ११२ ॥

हरेदिति । यथा सः भूशुल्कदाता नष्टः व्यसनग्रस्तः न भवेत् कर्षकात् कृषीवलात् तथा भागं हरेत् मालाकार इव ग्राह्यो यथा

लघुमध्याल्पफलतस्तारतम्यं विचिन्त्य च ।
राजभागादिव्ययतो द्विगुणं लभ्यते यतः ।
कृषिकृत्यं तु तच्छ्रेष्ठं तन्न्यूनं दुःखदं नृणाम् ॥ ११४ ॥
तडागवापिकाकूपमातृकाद्देवमातृकात् ।
देशान्नदीमातृकात् तु राजानुक्रमतः सदा ॥ ११५ ॥
तृतीयांशं चतुर्थांशमर्धांशं तु हरेत् फलम् ।
षष्ठांशमूषरात् तद्वत् पाषाणादिसमाकुलात् ॥ ११६ ॥
राजभागस्तु रजतशतकर्षमितो यतः ।
कर्षकाल्लभ्यते तस्मै त्रिंशांशमुत्सृजेन्नृपः ॥ ११७ ॥

---

उद्धताश्च: अल्पम् अल्पं पुष्पं चिनोति तथेति भावः । अङ्गारकार-वत् अङ्गारकारेण तुल्यं यथा तथा भागः शुल्करूपांशः च ग्राह्यः ॥ ११३ ॥

लघ्विति । लघुमध्याल्पफलतः लघुफलानुसारेण मध्यफलानुसारेण अल्पफलानुसारेण च तारतम्यं भूमेर्गुणागुणमित्यर्थः विचिन्त्य विचिन्त्य यतः कृषिकृत्यात् कृषिकार्यात् राजभागादिव्ययतः राज-देयशुल्कादीनां व्ययात् द्विगुणं लभ्यते तत् तु तदेव कृषिकृत्यं श्रेष्ठं, तस्मात् न्यूनं यत्किञ्चिल्लाभकरमित्यर्थः कृषिकृत्यं नृणां दुःखदं दुःख-दायकम् ॥ ११४ ॥

तडागेति । तृतीयांशमिति । राजा सदा तडागवापिकाकूप-मातृकात् सरोवरदीर्घिकाकूपजलैः सम्पाद्यफलैः देवमातृकात् वृष्टि-जलसम्पाद्यफलैरित्यर्थः नदीमातृकात् नदीजलैः सम्पाद्यफलेन देशात् तृतीयांशं चतुर्थांशं तथा अर्धांशम् अनुक्रमतः यथाक्रमेण तद्वत् तथा ऊषरात् अनुर्वरात् वा पाषाणादिसमाकुलात् प्रस्तरप्रधानात् देशात् षष्ठांशं फलं हरेत् ॥ ११५ ॥ ११६ ॥

राजभागमिति । यतः कर्षकात् कृषीवलात् रजतानां शतकर्ष-

स्वर्णादर्धं च रजतात् तृतीयांशं च ताम्रतः ।
चतुर्थांशं तु षष्ठांशं लोहाद् वङ्गाच्च सीसकात् ॥११८॥
रत्नार्धं चैव क्षारार्धं खनिजाद् व्ययशेषतः ।
लाभाधिक्यं कर्षकादेर्यथा दृष्ट्वा हरेत् फलम् ।
त्रिधा वा पञ्चधा कृत्वा सप्तधा दशधापि वा ॥११९॥
तृणकाष्ठादिहरकाद् विंशत्यंशं हरेत् फलम् ।
अजाविगोमहिष्यश्ववृद्धितोऽष्टांशमाहरेत् ।
महिष्यजाविगोदुग्धात् षोड़शांशं हरेन्नृपः ॥ १२० ॥
कारुशिल्पिगणात् पक्षे दैनिकं कर्म कारयेत् ।
तस्य हृद्यै तड़ागं वा वापिकां कृत्रिमां नदीम् ॥१२१॥

---

मितः शतरजतकर्षपरिमितः राजभागः लभ्यते, नृपः तस्मै कर्षकाय विंशांशं स्वप्राप्यात् विंशतिभागैकभागम् उत्सृजेत् त्यजेत् ॥ ११७ ॥

स्वर्णादिति । रत्नार्धमिति । व्ययशेषत इति सर्वत्र सम्बध्यते । खनिजात् व्ययशेषतः व्ययावशिष्टात् स्वर्णात् अर्द्धं रजतात् तृतीयांशं, ताम्रतः ताम्रात् चतुर्थांशं, लोहात् वङ्गात् सीसकाच्च षष्ठांशं, रत्नानां हीरकादीनाम् अर्द्धं क्षाराणां लवणानाञ्च अर्द्धं तथा कर्षकादेः लाभाधिक्यं दृष्ट्वा विविच्येत्यर्थः त्रिधा पञ्चधा सप्तधा वा दशधा कृत्वा यथा यथोपयुक्तं फलं हरेत् राजेति शेषः ॥ ११८ ॥ ११९ ॥

तृणेति । नृपः तृणकाष्ठादिहरकात् तृणकाष्ठानाम् आहरण-कारिणः जनात् विंशत्यंशं फलं हरेत् । अजानां छागानाम् अवीनां मेषाणां गवां महिषीणाम् अश्वानाञ्च वृद्धितः वृद्धेः अष्टांशम् अष्टमं भागं हरेत् । तथा महिषीणाम् अजानां छागीनाम् अवीनां मेषीणां गवाञ्च दुग्धात् षोड़शांशं हरेत् ॥ १२० ॥

कार्विति । कुर्वन्तीति । कारुगणात् शिल्पिगणाच्च पक्षे पञ्च-दशदिनाभ्यन्तरे दैनिकम् एकदिनसाध्यं कर्म कारयेत् एतदेव तेषां

कुर्वन्त्यन्यत् तद्विधं वा कर्षन्त्यभिनवां भुवम्।
तद्व्ययद्विगुणं यावन्न तेभ्यो भागमाहरेत्॥ १२२॥
भुवि भागं वृत्तिं हृत्वा कृषिमुत्कोचकं करम्।
सद्य एव हरेत् सर्वं न तु कालविलम्बनैः॥ १२३॥
दद्यात् प्रतिकर्षकाय भागपत्रं स्वचिह्नितम्।
नियम्य ग्रामभूभागमेकस्माद् धनिकाद्धरेत्॥ १२४॥
गृहीत्वा तत्प्रतिभुवं धनं प्राक् तत्समं तु वा।
विभागशो गृहीत्वाथ मासि मासि ऋतौ ऋतौ॥ १२५॥

---

राजभागदानमिति भावः। ये च तत्र राज्ञः राष्ट्रे राज्योन्नत्यै तडागं वापिकां दीर्घिकां वा कृत्रिमां नदीम् अथवा अन्यत् तद्विधं तद्रूपं कर्म कुर्वन्ति, ये च अभिनवां नवोत्थितां भुवं कर्षन्ति कर्षणेन उर्वरां कुर्वन्तीत्यर्थः यावत् तद्व्ययात् तत्र कर्मणः व्ययात् द्विगुणं लभ्यते इति शेषः तावत् तेभ्यः कर्मकरेभ्यः भागं राजांशं न आहरेत्, द्विगुणातिरिक्ते तु आहरेदेवेत्यर्थः॥ १२१॥ १२२॥

भुवीति। भुवि पृथिव्यां भागं वृत्तिं वेतनं शुल्कं हट्टे कुसीदम् उत्कोचकं आधिविहितकार्यकरणोत्साहदानार्थं देयं धनं तथा करं राजस्वम् एतत् सर्वं सद्य एव हरेत् कालविलम्बनैः न तु नैव॥ १२३॥

दद्यादिति। गृहीत्वेति। प्रतिकर्षकाय प्रत्येकं कृषिकारिणे इत्यर्थः स्वचिह्नितं स्वाक्षरितं भागस्य राजांशस्य पत्रं लेख्यं दद्यात्। वा अथवा ग्रामभूभागं नियम्य निरूप्य निर्धार्य इत्यर्थः एकस्मात् धनिकात् धनवतः जनात् तस्य धनिकस्य प्रतिभुवं प्रतिरूपं गृहीत्वा वा तत्समं राजदेयधनसमानं धनं प्राक् लेख्यदानात् पूर्वं गृहीत्वा किंवा मासि मासि प्रतिमासं ऋतौ ऋतौ प्रतिद्विमासं विभागशः विभागक्रमेण उक्तं ग्रामभुवो भागं राजस्वमित्यर्थः हरेत् गृह्णीयात्॥ १२४॥ १२५॥

षोड़शद्वादशदशाष्टांशतो वाधिकारिणः ।
स्वांशात् षष्ठांशभागेन ग्रामपान् सन्नियोजयेत् ॥१२६॥
गवादिदुग्धान्न फलं कुटुम्बार्थाद्धरेन्नृपः ।
उपभोगे धान्यवस्त्रं क्रेतृतो नाहरेत् फलम् ॥ १२७ ॥
वार्धुषिकाच्च कौसीदाद् द्वात्रिंशांशं हरेन्नृपः ।
गृहाद्याधारभूशुल्कं कृष्टभूमेरिवाहरेत् ॥ १२८ ॥
तथा चापणिकेभ्यस्तु पण्यभूशुल्कमाहरेत् ।
मार्गसंस्काररक्षार्थं मार्गगेभ्यो हरेत् फलम् ॥ १२९ ॥
सर्वतः फलभुग्भूत्वा दासवत् स्यात् तु रक्षणे ।

---

षोड़शेति । षोड़शांशात् द्वादशांशात् दशांशात् अष्टांशाच्च स्वांशात् राजप्राप्यांशात् षष्ठांशभागेन यथायथषष्ठभागरूपेण वेतनेन ग्रामपान् ग्रामपालकान् अधिकारिणः भृत्यान् वा सन्नियोजयेत् ॥ १२६ ॥

गवादीति । नृपः कुटुम्बार्थात् परिवारभरणार्थात् गवादीनां दुग्धात् फलं करं न हरेत् । तथा उपभोगे स्वव्यवहारार्थं न तु व्यवसायार्थमित्यर्थः धान्यं वस्त्रञ्च क्रेतृतः क्रेतुः सकाशात् फलं शुल्कं न आहरेत् ॥ १२७ ॥

वार्धुषिकादिति । नृपः वार्धुषिकात् वृद्धिजीविनः कौसीदात् कुसीदात् सकाशात् द्वात्रिंशांशं करं हरेत् । तथा कृष्टभूमेरिव गृहादीनां आधारभुवः वासभूम्याः शुल्कं हरेत् ॥ १२८ ॥

तथेति । राजा आपणिकेभ्यः विपणिजीविभ्यः पण्यभूशुल्कं विक्रयस्थानशुल्कम् आहरेत् । तथा मार्गगेभ्यः पथिकेभ्यः मार्गसंस्काररक्षार्थं फलं शुल्कं हरेत् ॥ १२९ ॥

सर्वत इति । राजा सर्वतः सर्वस्मात् जनात् रक्षणे रक्षणार्थं

इति कोषप्रकरणं समासात् कथितं किल ॥ १३० ॥
इति शुक्रनीतौ चतुर्थाध्यायस्य कोषनिरूपणं नाम
द्वितीयप्रकरणम् ।

---

## चतुर्थाध्यायस्य तृतीयप्रकरणम् ।

अथ मिश्रे तृतीयं तु राष्ट्रं वच्मे समासतः ।
स्थावरं जङ्गमं चापि राष्ट्रशब्देन गीयते ॥ १ ॥
यस्याधीनं भवेद् यावत् तद्राष्ट्रं तस्य वै भवेत् ॥ २ ॥
कुवेरता शतगुणाधिका सर्वगुणात् ततः ।
ईशता चाधिकतरा सा नाल्पतपसः फलम् ॥ ३ ॥

---

तावत् भत्यवत् फलभुक् राजस्वरूपवेतनभोगी स्यात् । इति अनेन प्रकारेण समासात् संक्षेपात् कोषप्रकरणं किल निश्चितं कथितम् ॥१३०॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चतुर्थाध्यायस्य द्वितीयप्रकरणव्याख्या
समाप्ता ।

---

अथेति । अथ अनन्तरं मिश्रे अध्याये तृतीयं राष्ट्रं राष्ट्रप्रकरणं समासतः संक्षेपेण वच्मे कथयिष्यामि । राष्ट्रशब्देन स्थावरं स्थितिशीलं वृक्षपर्वतादि जङ्गमं गोमनुष्यादिकञ्च गीयते कथ्यते ॥ १ ॥

यस्येति । यस्य राज्ञः यावत् यत्परिमितं राज्यम् अधीनं तस्य तत् राष्ट्रं भवेत् ॥ २ ॥

कौवेरतेति । कुवेरता धनपतित्वं शतगुणेभ्यः अधिका श्रेष्ठा; ईशता स्वामित्वन्तु ततः सर्वगुणात् अधिकतरा श्रेष्ठतरा । सा कुवेरता ईशता च अल्पतपसः फलं न, बहुतपस्यायाः फलमित्यर्थः ॥३॥

स दीव्यति पृथिव्यां तु नान्यो देवो यतः स्मृतः ॥ ४ ॥
यस्याश्रितो भवेल्लोकस्तद्वदाचरति प्रजा।
भुङ्क्ते राष्ट्रफलं सम्यगतो राष्ट्रकृतं त्वघम् ॥ ५ ॥
स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्त्तते।
धर्मनीतिपरो राजा चिरं कीर्त्तिं स चाश्नुते ॥ ६ ॥
भूमौ यावद् यस्य कीर्त्तिस्तावत् स्वर्गे स तिष्ठति ॥७॥
अकीर्त्तिरेव नरको नान्योऽस्ति नरको दिवि।
नरदेहाद् विना त्वन्यो देहो नरक एव सः ॥ ८ ॥
महत् पापफलं विद्यादाधिव्याधिस्वरूपकम्।

---

स इति। सः धनस्वामी प्रभुश्च पृथिव्यां दीव्यति क्रीडति विराजते इत्यर्थः। यतः अन्यः जनः देवः न स्मृतः न कथितः, धनवान् प्रभुरेव देवशब्देनाभिधीयते इति भावः ॥ ४ ॥

तस्येति। लोकः यस्य प्रभोः आश्रितः भवेत्, प्रजा तद्वत् प्रभुवत् प्रभुमतानुसारेणेत्यर्थः आचरति। अतः कारणात् स्वामी राष्ट्रफलं सुखादिकं राष्ट्रकृतम् अघं पापञ्च, तुशब्दश्चार्थः। सम्यक् भुङ्क्ते ॥ ५ ॥

स्वेति। यस्य राष्ट्रे लोकः स्वस्वधर्मपरः निजनिजानुष्ठानतत्परः प्रवर्त्तते चलति, सः राजा धर्मनीतिपरः भवतीति शेषः चिरं कीर्त्तिञ्च अश्नुते लभते ॥ ६ ॥

भूमाविति। यस्य भूमौ पृथिव्यां यावत् यावत्कालं कीर्त्तिस्तिष्ठतीति शेषः, सः तावत् तावत्कालं स्वर्गे तिष्ठति ॥ ७ ॥

अकीर्त्तिरिति। अकीर्त्तिः अयश एव नरकः दुर्गतिकारणं; दिवि परलोके अन्यः अपरः अकीर्त्तिभिन्न इत्यर्थः नरकः न अस्ति। नरदेहात् विना अन्यो यो देहः, सः नरक एव ॥ ८ ॥

महदिति। आधिः मानसी व्यथा, व्याधिः शरीरपीडा तयोः

स्वयं धर्मपरो भूत्वा धर्मे संस्थापयेत् प्रजाः ।
प्रमाणभूतं धर्मिष्ठमुपसर्पन्त्यतः प्रजाः ॥ ९ ॥
देशधर्मा जातिधर्माः कुलधर्माः सनातनाः ।
मुनिप्रोक्ताश्च ये धर्माः प्राचीना नूतनाश्च ये ॥ १० ॥
ते राष्ट्रगुप्त्यै सन्धार्या ज्ञात्वा यत्नेन सन्नृपैः ।
धर्मसंस्थापनाद्राजा श्रियं कीर्त्तिं प्रविन्दति ॥ ११ ॥
चतुर्धा भेदिता जातिर्ब्रह्मणा कर्मभिः पुरा ।
तत्तत्साङ्कर्यसाङ्कर्यात् प्रतिलोमानुलोमतः ।
जात्यानन्त्यं तु सम्प्राप्तं तद्वक्तुं नैव शक्यते ॥ १२ ॥

---

स्वरूपकं तत्तद्रूपमित्यर्थः अन्यत् पापस्य फलं विद्यात्, अतः राजा स्वयं धर्मपरः धर्मनिष्ठः भूत्वा प्रजाः धर्मे संस्थापयेत् । अतः धर्मसंस्थापनात् प्रजाः प्रमाणभूतं निदर्शनस्वरूपं धर्मिष्ठं राजानम् उपसर्पन्ति अनुवर्त्तन्ते ॥ ९ ॥

देशधर्मा इति । ते इति । सनातनाः चिरं प्रचलिताः ये देशधर्माः जातिधर्माः कुलधर्माः तथा मुनिभिः प्रोक्ताः कथिताः प्राचीनाः नूतनाश्च ये धर्माः नियमाः, सन्नृपैः साधुभिः राजभिः ते धर्माः ज्ञात्वा राष्ट्रस्य गुप्त्यै रक्षायै यत्नेन सन्धार्याः पालनीयाः । राजा धर्मसंस्थापनात् तत्तद्धर्मप्रतिपालनात् श्रियं लक्ष्मीं कीर्त्तिञ्च प्रविन्दति प्रकर्षेण लभते ॥ १० ॥ ११ ॥

चतुर्धेति । पुरा पूर्वकाले ब्रह्मणा कर्मणा तत्तज्जातिविशेषनिष्ठकार्येण चतुर्धा जातिः भेदिता ब्राह्मणक्षत्रियवैश्यशूद्ररूपेण विभक्ता । तेषां तेषाञ्च साङ्कर्यासाङ्कर्यात् परस्परमिश्रणामिश्रणात् तथा प्रतिलोमानुलोमतः प्रातिलोम्येन आनुलोम्येन च जात्यानन्त्यं जातीनाम् आनन्त्यं असंख्यत्वं सम्प्राप्तं जातं, तत् वक्तुं कथयितुं नैव शक्यते ॥ १२ ॥

मन्यन्ते जातिभेदं ये मनुष्याणां तु जन्मना।
त एव हि विजानन्ति पार्थक्यं नामकर्मभिः॥ १३॥
जरायुजाण्डजा स्वेदोद्भिज्जा जातिः सुसंग्रहात्।
उत्तमो नीचसंसर्गाद् भवेन्नीचस्तु जन्मना॥ १४॥
नीचो भवेन्नोत्तमस्तु संसर्गाद् वापि जन्मना।
कर्मणोत्तमनीचत्वं कालतस्तु भवेद् गुणैः।
विद्याकलाश्रयेणैव तन्नाम्ना जातिरुच्यते॥ १५॥
इज्याध्ययनदानानि कर्माणि तु द्विजन्मनाम्।
प्रतिग्रहोऽध्यापनं च याजनं ब्राह्मणेऽधिकम्॥ १६॥

---

मन्यन्त इति। ये जन्मना जननानुसारेण मनुष्याणां जातिभेदं मन्यन्ते, ते एव नामकर्मभिः नामभिः कर्मभिश्च मनुष्याणामिति शेषः पार्थक्यं विभिन्नतां विजानन्ति हि॥ १३॥

जरायुजेति। जातिः सुसंग्रहात् सुसंक्षेपात् जरायुजा, अण्डजा, स्वेदजा तथा उद्भिज्जा इति चतुर्धा भवतीति शेषः। उत्तमः उत्कृष्ट-जातिः नीचसंसर्गात् जन्मना उत्पत्त्या नीचस्तु नीच एव भवेत्॥ १४॥

नीच इति। नीचस्तु संसर्गात् जन्मना वा उत्तमः न भवेत्। कर्मणा कार्य्येण उत्तमनीचत्वम् उत्कर्षापकर्षभावः स्थिरमिति शेषः तथा गुणैः विद्याविद्यादिभिस्तु कालतः कालक्रमेण उत्तमनीचत्वं भवेत्। किन्तु विद्यानां कलानां सङ्गीतादीनाञ्च आश्रयेण एव तन्नाम्ना तत्तद्-विद्याकलानां नाम्ना जातिः उच्यते कथ्यते यथा अयं दार्शनिकः, अयं नैयायिकः, अयं गायक इत्यादि॥ १५॥

इज्येति। द्विजन्मनां द्विजानां ब्राह्मणक्षत्रियवैश्यानां संस्कारात् द्विज उच्यते इति वचनेन ब्राह्मणादिवर्णत्रयस्य द्विजत्वेनाभिधानात्। इज्याध्ययनदानानि इज्या यज्ञानुष्ठानम् अध्ययनं दानञ्च एतानि त्रीणि

सद्रक्षणं दुष्टनाशः स्वांशादानं तु क्षत्रिये ।
कृषिगोगुप्तिवाणिज्यमधिकं तु विशां स्मृतम् ॥ १७ ॥
दानं सेवैव शूद्रादेर्नीचकर्म प्रकीर्त्तितम् ॥ १८ ॥
क्रियाभेदैस्तु सर्वेषां वृत्तिर्वृत्तिरनिन्दिता ।
सीरभेदैः कृषिः प्रोक्ता मन्वाद्यैर्ब्राह्मणादिषु ॥ १९ ॥
ब्राह्मणैः षोडशगवं चतुरूनं यथा परैः ।
द्विगवं वान्त्यजैः सीरं दृष्ट्वा भूमार्दवं तथा ॥ २० ॥

---

कर्माणि । ब्राह्मणे तु प्रतिग्रहः यजनम् अध्यापनं तथा याजनं परार्थे यज्ञकरणम् एतत्त्रयम् अधिकम् ॥ १६ ॥

सद्रक्षणमिति । क्षत्रिये तु सद्रक्षणं सतां साधूनां रक्षणं, दुष्टनाशः दुष्टानां दमनं तथा स्वांशस्य राजस्वांशस्य आदानं ग्रहणञ्च एतत्त्रयम् अधिकम् । विशां वैश्यजातानान्तु कृषिः गोगुप्तिः गवां पशूनां गुप्तिः पालनं तथा वाणिज्यम् एतत्त्रयम् अधिकं स्मृतम् ॥ १७ ॥

दानमिति । शूद्रादेः शूद्रस्य तत्समानजातेश्च दानं, सेवा दासवृत्तिः, तथा नीचकर्म निकृष्टकार्य्यं पदसेवामलमार्जनादिकञ्च प्रकीर्त्तितम् ॥ १८ ॥

क्रियेति । क्रियाणां कार्य्याणां भेदैः प्रभेदैः सर्वेषां ब्राह्मणादीनां वृत्तिर्वृत्तिः भरणार्थं निर्दिष्टा वृत्तिः जीवनोपायः अनिन्दिता । यथा मन्वाद्यैः मुनिभिः सीराणां लाङ्गलानां भेदैः विशेषैः ब्राह्मणादिषु कृषिः प्रोक्ता कथिता ॥ १९ ॥

ब्राह्मणैरिति । ब्राह्मणैः कृषिजीविभिरिति भावः षोडशगवं षोडशभिः गोभिः वाह्यं सीरं, तथा परैः अन्यैः क्षत्रियादिभिरित्यर्थः क्रमशः चतुरूनं क्षत्रियैः द्वादशगवं, वैश्यैः अष्टगवं, शूद्रैः चतुर्गवमित्यर्थः सीरं तथा अन्त्यजैः चाण्डालादिभिः भूमार्दवं भुवः भूमेर्मार्दवं मृदुत्वं दृष्ट्वा द्विगवं सीरं कर्त्तव्यमिति शेषः ॥ २० ॥

ब्राह्मणेन विनान्येषां भिक्षावृत्तिर्विगर्हिता ॥ २१ ॥
तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ २२ ॥
योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत्।
न च जात्यानधीतो गुरुर्भवितुमर्हति ॥ २३ ॥
विद्या ह्यनन्ताश्च कलाः संख्यातुं नैव शक्यते।
विद्या मुख्याश्च द्वात्रिंशच्चतुःषष्टिः कलाः स्मृताः ॥ २४ ॥
यद् यत् स्याद् वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम्।
शक्तो मूकोऽपि यत् कर्त्तुं कलासंज्ञं तु तत् स्मृतम् ॥२५॥

---

ब्राह्मणेनेति। ब्राह्मणेन विना अन्येषां क्षत्रियादीनां भिक्षावृत्तिः विगर्हिता विशेषेण निन्दिता ॥ २१ ॥

तपोविशेषैरिति। द्विजन्मना द्विजेन विविधैः विधिचोदितैः विहितैः तपोविशेषैः व्रतैश्च सरहस्यः उपनिषत्सहितः कृत्स्नः समग्रः वेदः अधिगन्तव्यः वेदितव्यः ॥ २२ ॥

य इति। यः अधीतविद्यः तथा सकलः कलाभिः लौकिकविद्यादिभिः सहितः, सः सर्वेषां गुरुः भवेत्। यस्तु अनधीतः अकृतविद्यः, सः जात्या केवलयेति शेषः गुरुः भवितुं न अर्हति ॥ २३ ॥

विद्या इति। विद्याः कलाश्च अनन्ता हि ताः संख्यातुम् इयत्तया परिच्छेत्तुं नैव शक्यते शक्यन्ते आर्षोऽयं प्रयोगः। तत्र मुख्याः विद्याः द्वात्रिंशत्, तथा कलाश्च चतुःषष्टिः स्मृताः ॥ २४ ॥

यदिति। यत् यत् कर्म सम्यक् सम्पूर्णरूपेण वाचिकं वाचा निष्पाद्यं, तत्तत् विद्याभिसंज्ञकं विद्येति नाम्ना कथितम्। यत्तु मूकोऽपि वर्णोच्चारणासमर्थोऽपि कर्त्तुं शक्तः, (यथा नृत्यादिकमिति भावः) तत्तु कलासंज्ञं कलेति नाम्ना कथितम् ॥ २५ ॥

उक्तं संक्षेपतो लक्ष्म विशिष्टं पृथगुच्यते ।
विद्यानां च कलानां च नामानि तु पृथक् पृथक् ॥ २६ ॥
ऋग्यजुः साम चाथर्वा वेदा आयुर्धनुः क्रमात् ।
गान्धर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्त्तिताः ॥ २७ ॥
शिक्षा व्याकरणं कल्पो निरुक्तं ज्योतिषं तथा ।
छन्दःषडङ्गानीमानि वेदानां कीर्त्तितानि हि ॥ २८ ॥
मीमांसातर्कसांख्यानि वेदान्तो योग एव च ।
इतिहासाः पुराणानि स्मृतयो नास्तिकं मतम् ॥ २९ ॥
अर्थशास्त्रं कामशास्त्रं तथा शिल्पमलङ्कृतिः ।
काव्यानि देशभाषावसरोक्तिर्यावनं मतम् ।
देशादिधर्मा द्वात्रिंशदेता विद्याभिसंज्ञिताः ॥ ३० ॥

---

उक्तमिति । विद्यानाम् कलानाञ्च लक्ष्म लक्षणं संक्षेपतः उक्तं विशिष्टन्तु पृथक् उच्यते कथ्यते, आसां नामानि पृथक् पृथक् इतीति शेषः ॥ २६ ॥

ऋगिति । ऋक्, यजुः, साम तथा अथर्व्व एते चत्वारः वेदाः । आयुर्वेदः, धनुर्वेदः गान्धर्वः तन्त्राणि च एते उपवेदाः प्रकीर्त्तिताः ॥ २७ ॥

शिक्षेति । शिक्षा व्याकरणं कल्पः निरुक्तं ज्योतिषं तथा छन्दः इमानि षट् वेदानाम् अङ्गानि, कीर्त्तितानि, हिशब्दोऽवधारणार्थः ॥ २८ ॥

मीमांसेति । अर्थेति । मीमांसा, तर्कः सांख्यं, वेदान्तः, योगः, इतिहासाः, पुराणानि, स्मृतयः नास्तिकमतम्, अर्थशास्त्रं, कामशास्त्रं, शिल्पम्, अलङ्कृतिः, काव्यानि, देशभाषा, अवसरोक्तिः, यावनं मतं, तथा देशादिप्रचलितधर्माः एताः द्वात्रिंशत् विद्याभिसंज्ञिताः विद्यानाम्ना ख्याता इत्यर्थः ॥ २९ ॥ ३० ॥

मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु ॥ २१ ॥
जपहोमार्चनं यस्य देवताप्रीतिदं भवेत् ।
उच्चारान्मन्त्रसंज्ञं तद् विनियोगि च ब्राह्मणम् ॥ २२ ॥
ऋग्रूपा यत्र ये मन्त्राः पादशोऽर्धर्चशोऽपि वा ।
येषां होत्रं स ऋग्भागः समाख्यानं च यत्र वा ॥ २३ ॥
अश्लिष्टपठिता मन्त्रा वृत्तगीतिविवर्जिताः ।
आध्वर्यवं यत्र कर्म त्रिगुणं यत्र पाठनम् ।
मन्त्रब्राह्मणयोरेव यजुर्वेदः स उच्यते ॥ २४ ॥
उद्गीथं यस्य प्रस्तावादेर्यज्ञे तत् सामसंज्ञकम् ॥ २५ ॥

---

मन्त्रेति । ऋगादिषु ऋग्यजुःसामाथर्वसु मन्त्रब्राह्मणयोः वेदनाम वेद इति नाम प्रोक्तं कथितं तथाच वेदः द्विविधः मन्त्रात्मकः ब्राह्मणश्चेति भावः ॥ २१ ॥

जपेति । यस्य वेदभागस्य उच्चारात् उच्चारणात् जपः होमः अर्चनं देवपूजनं देवतानां प्रीतिदं भवेत् तत् मन्त्रसंज्ञं मन्त्रनाम्ना ख्यातम् । विनियोगि तदुच्चारणनिरतं वा मन्त्रभागव्याख्यानं ब्राह्मणं ख्यातमिति शेषः ॥ २२ ॥

ऋगिति । यत्र ऋग्रूपाः ये मन्त्राः पादशः अर्धर्चशः वा पठिता इति शेषः, येषां मन्त्राणां होत्रं होमसम्पादकत्वं, यत्र वा समाख्यानं ऋचां व्याख्यानं कथनं सः ऋग्भागः ऋग्वेदः ॥ २३ ॥

अश्लिष्टेति । यत्र मन्त्राः अश्लिष्टं यथा तथा पठिताः तथा वृत्तेन छन्दसा गीत्या च विवर्जिताः विरहिताः, यत्र च आध्वर्यवम् अध्वर्यु-विहितं कर्म प्रोक्तमिति शेषः, यत्र च मन्त्रब्राह्मणयोरुभयोरेव त्रिगुणं त्रिरावृत्तं पठितं सः यजुर्वेदः उच्यते ॥ २४ ॥

उद्गीथमिति । प्रस्तावादेः यज्ञे यस्य उद्गीथम् उच्चैर्गीतिं विहितमिति शेषः तत् सामसंज्ञकं साममान्ना कथितम् ॥ २५ ॥

अथर्वाङ्गिरसो नाम ह्युपास्योपासनात्मकः ।
इति वेदचतुष्कं तु ह्युद्दिष्टं च समासतः ॥ ३६ ॥
विन्दत्यायुर्वेत्ति सम्यगाकृत्यौषधिहेतुतः ।
यस्मिन् ऋग्वेदोपवेदः स चायुर्वेदसंज्ञकः ॥ ३७ ॥
युद्धशस्त्रास्त्रव्यूहादिरचनाकुशलो भवेत् ।
यजुर्वेदोपवेदोऽयं धनुर्वेदस्तु येन सः ॥ ३८ ॥
स्वरैरुदात्तादिधर्मैस्तन्त्रीकण्ठोत्थितैः सदा ।
सतालैर्गानविज्ञानं गान्धर्वो वेद एव सः ॥ ३९ ॥

---

अथर्वेति । उपास्यानाम् आराध्यानां देवानाम् उपासनात्मकः वेदभागः अथर्वाङ्गिरसः नाम । इति उक्तप्रकारं वेदचतुष्कं समासतः संक्षेपेण उद्दिष्टं कथितं हि विस्तरतोऽवधारणार्थं ॥ २६ ॥

विन्दतीति । यस्मिन् विदिते इति भावः आयुः विन्दति लभते जन इति शेषः तद्विहितस्य अनुष्ठानात् दीर्घायुर्लाभ इति भावः, यस्मिंश्च आकृत्या रोगाणामाकारज्ञानेन औषधिहेतुतः औषधिविज्ञानेन च हेतुना सम्यक् आयुः वेत्ति जानाति रोगिणामिति शेषः सः ऋग्वेदस्य उपवेदः आयुर्वेदसंज्ञक आयुर्वेद इति नाम्ना प्रसिद्धः ॥ २७ ॥

युद्धेति । येन ज्ञातेन सम्यक् युद्धेषु शस्त्रेषु अस्त्रेषु व्यूहादिरचनासु च कुशलः निपुणः भवेत् यजुर्वेदस्य उपवेदः, स च धनुर्वेद इति ख्यातः ॥ २८ ॥

स्वरैरिति । येन उदात्तादिधर्मैः उदात्तानुदात्तस्वरितैः तथा तन्त्रीकण्ठोत्थितैः निषादादिभिः सप्तभिः स्वरैः सतालैः तालसहितैः गानविज्ञानं भवति स गान्धर्वो वेदः स तु सामवेदस्य उपवेद इति बोद्धव्यः ॥ ३९ ॥

विविधोपास्यमन्त्राणां प्रयोगाः सुविभेदतः ।
कथिताः सोपसंहारास्तद्धर्मनियमैश्च षट् ।
अथर्वणां चोपवेदस्तन्त्ररूपः स एव हि ॥ ४० ॥
स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः ।
सवनाद्यैश्च सा शिक्षा वर्णानां पाठशिक्षणात् ॥ ४१ ॥
प्रयोगो यत्र यज्ञानामुक्तो ब्राह्मणशेषतः ।
श्रौतकल्पः स विज्ञेयः स्मार्त्तकल्पस्तथेतरः ॥ ४२ ॥
व्याकृताः प्रत्ययाद्यैश्च धातुसन्धिसमासतः ।
शब्दा यत्र व्याकरणमेतद्धि बहुलिङ्गतः ॥ ४३ ॥
शब्दनिर्वचनं यत्र वाक्यार्थैकार्थसंग्रहः ।

---

विविधेति । यत्र विविधानाम् उपास्यानां मन्त्राणां सोपसंहाराः उपसंहारसहिताः षट् प्रयोगाः तेषां धर्मनियमैश्च सह सुविभेदतः विशिष्टप्रभेदानुसारेण कथिताः सः अथर्वणाम् उपवेदः तन्त्ररूपः हि तन्त्रस्वरूप एव ॥ ४० ॥

स्वरत इति । यत्र स्वरतः उदात्तादिभेदेन कालतः कालक्रमेण स्थानात् कण्ठतात्वादिप्रदेशात् प्रयत्नानुप्रदानतः प्रयत्नसहकारेण सवनाद्यैः उत्पन्नादिभिः उच्चारणादिभिरित्यर्थः पाठस्य शिक्षणं सा शिक्षा तादृशशिक्षासमन्वितः सन्दर्भः शिक्षाग्रन्थ इति भावः ॥ ४१ ॥

प्रयोग इति । यत्र ब्राह्मणशेषतः ब्राह्मणस्य मन्त्रेतरवेदभागस्य शेषतः शेषांशात् यज्ञानां प्रयोगः उक्तः सः श्रौतकल्पः विज्ञेयः, तथा इतरः अन्यः स्मार्त्तकल्पः ॥ ४२ ॥

व्याकृता इति । यत्र शब्दाः प्रत्ययाद्यैः धातुभिः सन्धिभिः समासैश्च बहुभिः पुंस्त्रीक्लीबभेदैः लिङ्गैश्च व्याकृताः साधिताः, एतत् हि एतदेव व्याकरणम् ॥ ४२ ॥

शब्दनिर्वचनमिति । यत्र शब्दानां निर्वचनं निरुक्तैश्च कथनं तस्

निरुक्तं तत् समाख्यानाद् वेदाङ्गं श्रोत्रसंज्ञकम् ॥४४॥
नक्षत्रग्रहगमनैः कालो येन विधीयते ।
संहिताभिश्च होराभिर्गणितैर्ज्योतिषं हि तत् ॥ ४५ ॥
म्यरस्तजभनैर्लान्तैः पद्यं यत्र प्रमाणतः ।
कल्प्यते छन्दःशास्त्रं तद् वेदानां पादरूपकम् ॥४६॥
यत्र व्यवस्थिता चार्थकल्पना विधिभेदतः ।
मीमांसा वेदवाक्यानां सैव न्यायश्च कीर्त्तितः ॥ ४७ ॥
भावाभावपदार्थानां प्रत्यक्षादिप्रमाणतः ।
सविवेको यत्र तर्कः कणादादिमतं च यत् ॥ ४८ ॥

---

शाकाद्यर्थानाम् एकार्थसंग्रहः, तत् निरुक्तं नाम वेदाङ्गं, तत्र समाख्यानात् सम्यक् शब्दार्थकथनात् श्रोत्रसंज्ञकं श्रोत्राख्यया कथितम् ॥ ४४ ॥

नक्षत्रेति। येन नक्षत्राणां ग्रहाणाञ्च गमनैः संहिताभिः होराभिः गणितैश्च कालः विधीयते पृथक् पृथक् निर्दिश्यते, तत् हि तदेव, ज्योतिषम् ॥ ४५ ॥

म्यरस्तजभनैरिति। मः त्रिगुरुः, यः आदिगुरुः, रः लघुमध्यः, सः अन्तगुरुः, तः अन्तलघु, जः गुरुमध्यः, भः आदिगुरुः, नः त्रिलघुः, गः गुरुः, लः लघुः एभिः प्रमाणतः परिमाणैः यत्र पद्यं कल्प्यते, तत् छन्दःशास्त्रं तच्च वेदानां पादरूपकं चरणस्वरूपज्ञापकमित्यर्थः ॥ ४६ ॥

यत्रेति। भावेति। यत्र वेदवाक्यानां विधिभेदतः अनुष्ठानभेदात् अर्थकल्पना व्यवस्थिता, सा एव मीमांसा। यत्र च भावानाम् अभावानाञ्च पदार्थानां प्रत्यक्षादिप्रमाणतः प्रत्यक्षानुमानादिभिः प्रमाणैः सविवेकः सविचारः तर्कः भवति, तत्र कणादादीनां वैशेषिकदार्शनिकानां मतं, सः न्यायः कीर्त्तितः। एतेन न्यायदर्शनं वैशेषिकदर्शनञ्च द्वयं समरूपत्वात् एकत्वेनैव अभिहितमिति बोध्यम् ॥ ४७ ॥ ४८ ॥

तत् कामशास्त्रं सत्त्वादेर्लक्ष्म यत्रास्ति योषितोः ॥५७॥
प्रासादप्रतिमारामगृहवाप्यादिसत्कृतिः।
कथिता यत्र तच्छिल्पशास्त्रमुक्तं महर्षिभिः ॥ ५८ ॥
समन्यूनाधिकत्वेन सादृश्यादिप्रभेदतः।
अन्योऽन्यगुणभूषा तु वर्ण्यतेऽलङ्कृतिश्च सा ॥ ५९ ॥
सरसालङ्कृतादुष्टशब्दार्थं काव्यमेव तत्।
विलक्षणचमत्कारबीजं पद्यादिभेदतः ॥ ६० ॥
लोकसङ्केततोऽर्थानां सुग्रहा वाक् तु दैशिकी ॥ ६१ ॥

---

शशाश्ववृषहस्तिजातिभेदात् तथा अनुकूलादिभेदतः अनुकूलदक्षशठादिविशेषात् किञ्च स्त्रीणां पद्मिन्यादिभेदेन पद्मिनीचित्रिणीशङ्खिनीहस्तिनीरूपजातिभेदेन तथा स्वीयादिभेदतः स्वीयापरकीयासाधारणीरूपविशेषेण उभयोः स्त्रीपुंसयोः सत्त्वादेः अनुरागादेः लक्ष्म लक्षणम् अस्ति, तत् कामशास्त्रम् ॥ ५७ ॥

प्रासादेति। यत्र प्रासादानां राजभवनानां देवालयानां वा प्रतिमानाम् आरामगृहाणाम् उद्यानगृहाणां वाप्यादीनां सरोवरादीनाञ्च सत्कृतिः सुनिर्माणं संस्कारश्च कथिता, महर्षिभिः तत् शिल्पशास्त्रम् उक्तम् ॥ ५८ ॥

समेति। समत्वेन न्यूनत्वेन आधिक्येन वा सादृश्यादिप्रभेदतः सादृश्यादिभेदेन अन्योऽन्यस्य परस्परस्य गुणानां भूषा वैचित्र्यमित्यर्थः यत् वर्ण्यते सा अलङ्कृतिः तद्वर्णनञ्च अलङ्कार इति व्यपदिश्यते ॥५९॥

सरसेति। सरसौ रसयुक्तौ अलङ्कृतौ अलङ्कारयुक्तौ अदुष्टौ दोषरहितौ शब्दार्थौ यत्र तत् काव्यमेव, तच्च पद्यादीनां भेदतः वैचित्र्यात् विलक्षणस्य अलौकिकस्य चमत्कारस्य सातिशयानन्दस्य बीजं कारणम् ॥ ६० ॥

लोकेति। लोकानां सङ्केततः सङ्केतेन अर्थानां सुग्रहा सुखग्राह्या इत्यर्थः वाक् तु दैशिकी देशभाषारूपा ॥ ६१ ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं यस्मिन् पुराणं तद् विकीर्त्तितम् ॥ ५२ ॥
वर्णादिधर्मस्मरणं यत्र वेदाविरोधकम् ।
कीर्त्तनं चार्थशास्त्राणां स्मृतिः सा च प्रकीर्त्तिता ॥५४॥
युक्तिर्बलीयसी यत्र सर्वं स्वाभाविकं मतम् ।
कस्यापि नेश्वरः कर्त्ता न वेदो नास्तिकं हि तत् ॥५५॥
श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनम् ।
सुयुक्त्यार्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते ॥ ५६ ॥
शशादिभेदतः पुंसामनुकूलादिभेदतः ।
पद्मिन्यादिप्रभेदेन स्त्रीणां स्वीयादिभेदतः ।

---

सर्ग इति । यस्मिन् सर्गः सृष्टिः, प्रतिसर्गः, प्रलयः, वंशः महापुरुषाणां कुलं, मन्वन्तराणि तथा वंशानुचरितं कथितमिति शेषः, तद् पुराणं विकीर्त्तितम् ॥ ५२ ॥

वर्णादीति । यत्र वेदाविरोधकं श्रुत्यविरुद्धं वर्णादीनां ब्राह्मणादीनाम् आदिपदेन आश्रमादीनाञ्च धर्मस्य स्मरणं तथा अर्थशास्त्राणां कीर्त्तनञ्च, सा स्मृतिः प्रकीर्त्तिता ॥ ५४ ॥

युक्तिरिति । यत्र युक्तिः तर्कः बलीयसी अतिप्रबला, सर्वं वस्तु स्वाभाविकं स्वभावसिद्धं मतं कथितं, कस्यापि कर्त्ता कारकः ईश्वरः न अस्तीति शेषः, तथा वेदश्च न अकिञ्चित्कर इत्यर्थः, इत्येवं व्यवस्था इति शेषः तत् हि नास्तिकं नास्तिकग्रन्थ इत्यर्थः ॥ ५५ ॥

श्रुतीति । यत्र श्रुतीनां स्मृतीनाञ्च अविरोधेन राज्ञः वृत्तादीनाम् आचरितादीनां शासनम् उपदेशः तथा सुयुक्त्या सदुपायेन अर्थानां धनानाञ्च अर्जनम् उपार्जनं वर्णितमिति शेषः तत् अर्थशास्त्रम् उच्यते ॥ ५६ ॥

शशादीति । यत्रेत्यध्याहार्य्यम् । यत्र पुंसां शशादिभेदतः शशक-

हावभावादिसंयुक्तं नर्त्तनं तु कला स्मृता ।
अनेकवाद्यविकृतौ ज्ञानं तद्वादने कला ॥ ६७ ॥
वस्त्रालङ्कारसन्धानं स्त्रीपुंसोश्च कला स्मृता ।
अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥ ६८ ॥
शय्यास्तरणसंयोगपुष्पादिग्रथनं कला ।
द्यूताद्यनेकक्रीडाभी रञ्जनं तु कला स्मृता ॥ ६९ ॥
अनेकासनसन्धानै रतेर्ज्ञानं कला स्मृता ।
कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम् ॥ ७० ॥
मकरन्दासवादीनां मद्यादीनां कृतिः कला ।

---

ज्ञानैः कलाभेदस्तु जायते, यां यां क्रियां समाश्रित्य तन्नाम्ना तत्तदाख्येत्यर्थः जातिः कलानामिति शेषः उच्यते ॥ ६६ ॥

हावेति । हावभावादिभिः संयुक्तं नर्त्तनं नृत्यं कला स्मृता । तथा अनेकेषां वाद्यानां विकृतौ वैपरीत्ये, तेषां वाद्यानां वादने च ज्ञानं कला स्मृतेति शेषः ॥ ६७ ॥

वस्त्रेति । स्त्रीपुंसोः स्त्रीपुरुषयोः वस्त्राणाम् अलङ्काराणाञ्च सन्धानं सम्यक् सुचारुतयेत्यर्थः धानं परिधानं कला स्मृता । तथा अनेकरूपाणां विविधानाम् आविर्भावाणां प्रकाशानां कृतौ अनुष्ठाने ज्ञानं कला स्मृता ॥ ६८ ॥

शय्येति । शय्यानाम् आस्तरणानाञ्च संयोगः सम्यक् योगः अनुष्ठानं पुष्पादीनाञ्च ग्रथनं कला स्मृता । तथा द्यूतादिभिः अनेकाभिः क्रीडाभिः रञ्जनं लोकानामिति शेषः कला स्मृता ॥ ६९ ॥

अनेकेति । अनेकैः विविधैः आसनैः सन्धानैश्च रतेः सुरतस्य ज्ञानं कला स्मृता । एतत् उक्तरूपं कलानां सप्तकं गान्धर्वे गान्धर्ववेदे समुदाहृतं हि, हिशब्दोऽवधारणार्थः ॥ ७० ॥

मकरन्देति । मकरन्दः पुष्परसः तेन आसवादीनां मादकद्रव्याणां

शस्त्रसन्धानविक्षेपः पदादिन्यासतः कला ।
सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धं कला स्मृता ॥ ७६ ॥
बाहुयुद्धं तु मल्लानामशस्त्रं मुष्टिभिः स्मृतम् ।
मृतस्य तस्य न स्वर्गो यशो नैहापि विद्यते ॥ ७७ ॥
बलदर्पविनाशान्तं नियुद्धं यशसे रिपोः ।
न कस्यासीत् कुर्य्याद् वा प्राणान्तं बाहुयुद्धकम् ॥ ७८ ॥
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः ।
सन्निपातावघातैश्च प्रमादोन्मथनैस्तथा ।
कृतं निपीडनं ज्ञेयं तन्मुक्तिस्तु प्रतिक्रिया ७९ ॥

---

अपूर्वं प्रथमं विज्ञानं कला स्मृता । तथा क्षाराणां लवणादीनां निष्काशने आविष्करणे वा द्रव्यान्तरात् बहिष्करणे यत् ज्ञानं तत् कलासंज्ञं कलेति नाम्ना स्मृतम् । एतत् कलानां द्वयकम् आयुर्वेदागमे आयुर्वेदशास्त्रे अन्तर्भूतमिति शेषः हिशब्दोऽवधारणार्थः ॥ ७५ ॥

शस्त्रेति । पदादीनां न्यासतः विन्यासक्रमेण शस्त्राणां सन्धानं सम्यक् लक्ष्यीकरणं विक्षेपश्च कला । तथा सन्धिषु स्थानविशेषेषु ये आघाताः प्रहाराः आकृष्टयः आकर्षणानि च तेषां भेदैः यत् मल्लयुद्धं मल्लयोः वीरयोः युद्धं परस्परसंग्रामः तत् कला स्मृता ॥ ७६ ॥

बाहुयुद्धमिति । मल्लानां वीराणाम् अशस्त्रं शस्त्राघातरहितं यत् बाहुयुद्धं तत् मुष्टिभिः मुष्टिप्रहारैः स्मृतं कथितं, तत्र मृतस्य तस्य वीरस्य स्वर्गः तथा यशश्च इह न विद्यते ॥ ७७ ॥

बलेति । रिपोः शत्रोः बलदर्पयोः विनाशान्तं विनाशावधिकं नियुद्धं कस्य यशसे न आसीत ? अपितु सर्वस्यैव यशसे इत्यर्थः, अतः प्राणान्तं बाहुयुद्धकं कुर्य्यात् वा कुर्य्यादेव वाशब्दोऽवधारणार्थः ॥ ७८ ॥

कृतेति । कृतैः प्रतिकृतैः चित्रैः विविधैः सुसङ्कटैः अति-भीषणैः बाहुभिः बाहुप्रहारैरित्यर्थः सन्निपातैः सम्यक् पतनैः शत्रोः

कलाभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम् ।
वाद्यसङ्केततो व्यूहरचनादि कला स्मृता ॥ ८० ॥
गजाश्वरथगत्या तु युद्धसंयोजनं कला ।
कलापञ्चकमेतद्धि धनुर्वेदागमे स्थितम् ॥ ८१ ॥
विविधासनमुद्राभिर्देवतातोषणं कला ।
सारथ्यं च गजाश्वादेर्गतिशिक्षा कला स्मृता ॥ ८२ ॥
मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया ।
पृथक् कलाचतुष्कं तु चित्राद्यालेखनं कला ॥ ८३ ॥

---

रूपरीति शेषः अवघातै आघातैः तथा प्रमादे अनवधानतायां मल्लो-रिति शेषः उन्मर्दनैः मर्दनैः यत् कृतं तत् निपीडनं निःशेषेण पीडनं शेषं, तस्मात् ... प्रतिक्रिया प्रतीकारः सा कला। चिह्न अभिलक्षिते चिह्नीकृते देशे यन्त्रादीनां ... निपातनं तथा वाद्यानां रणवाद्यानां सङ्केततः इङ्गितेन व्यूहरचनादि सैन्यरचनादि कला स्मृता ॥ ७९ ॥ ८० ॥

गजेति। गजानाम् अश्वानां रथानाञ्च गत्या गमनवैचित्र्येण युद्धसंयोजनं संग्रामायोजनं कला। एतत् कलापञ्चकं धनुर्वेदागमे धनुर्वेदशास्त्रे स्थितं हि निश्चयोऽवधारणार्थः ॥ ८१ ॥

विविधेति। विविधेन आसनेन उपवेशनेन मुद्राभिः हस्तादीनां रचनाविशेषैः देवतानां सन्तोषणं प्रीणनं कला। तथा सारथ्यं सूतकार्यं गजानाम् अश्वानाञ्च गतिशिक्षा च कला स्मृता ॥ ८२ ॥

मृत्तिकेति। मृत्तिकानां काष्ठानां पाषाणानां धातूनाञ्च ये भाण्डादयः तेषां सत्क्रिया सुनिर्माणं कला। तथा चित्रादीनाम् आलेखनं लेखनं कला। एतत् कलाचतुष्कं पृथक् भिन्नमिति शेषः ॥ ८३ ॥

तडागवापीप्रासादसमभूमिक्रिया कला ।
घट्याद्यनेकयन्त्राणां वाद्यानां तु कृतिः कला ॥ ८४ ॥
हीनमध्यादिसंयोगवर्णाद्यै रञ्जनं कला ।
जलवाय्वग्निसंयोगनिरोधैश्च क्रिया कला ॥ ८५ ॥
नौकारथादियानानां कृतिज्ञानं कला स्मृता ।
सूत्रादिरज्जुकरणविज्ञानं तु कला स्मृता ॥ ८६ ॥
अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता ।
वेधादिसदसज्ज्ञानं रत्नानां च कला स्मृता ॥ ८७ ॥
स्वर्णादीनां तु याथार्थ्यविज्ञानं च कला स्मृता ।
कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता ॥ ८८ ॥

---

तडागेति । तडागानां सरसां वापीनां दीर्घिकाणां प्रासादानां हर्म्याणां समभूमीनाञ्च क्रिया करणं कला । तथा घट्यादीनां समय-निरूपकादीनाम् अनेकेषां विविधानां यन्त्राणां वाद्यानाञ्च कृतिः निर्माणं कला ॥ ८४ ॥

हीनेति । हीनमध्यादयः अधममध्योत्तमाः संयोगाः येषां तैः वर्णाद्यैः रञ्जनं वस्त्रादीनामिति शेषः कला । तथा जलानां वायूनाम् अग्नीनाञ्च संयोगैः निरोधैश्च यत् रचनं कौशलानामिति शेषः तच्च कला ॥ ८५ ॥

नौकेति । नौकानां रथानां यानादीनां शकटादीनाञ्च कृतौ निर्माणे ज्ञानं कला स्मृता । तथा सूत्रादीनां रज्जूनाञ्च करणे विज्ञानं विशेषेण ज्ञानं कला स्मृता ॥ ८६ ॥

अनेकेति । अनेकेषां तन्तूनां सूत्राणां संयोगैः पटबन्धः वस्त्र-वयनं कला स्मृता । तथा रत्नानां वेधादिषु छिद्रादिषु सदसज्ज्ञानम् उत्कर्षापकर्षज्ञानं कला स्मृता ॥ ८७ ॥

स्वर्णादीनामिति । स्वर्णादीनां याथार्थ्यस्य यथार्थस्वरूपस्य विज्ञानं

स्वर्णाद्यलङ्कारकृतिः कला लेपादिसत्कृतिः ।
मार्दवादिक्रियाज्ञानं चर्मणां तु कला स्मृता ॥ ८९ ॥
पशुचर्माङ्गनिर्हारक्रियाज्ञानं कला स्मृता ।
दुग्धदोहादिविज्ञानं घृतान्तं तु कला स्मृता ॥ ९० ॥
सीवने कञ्चुकादीनां विज्ञानं तु कलात्मकम् ।
बाह्वादिभिश्च तरणं कलासंज्ञं जले स्मृतम् ॥ ९१ ॥
मार्जने गृहभाण्डादेर्विज्ञानं तु कला स्मृता ।
वस्त्रसम्मार्जनं चैव क्षुरकर्म कले शुभे ॥ ९२ ॥
तिलमांसादिस्नेहानां कला निष्कासने कृतिः ।
सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥ ९३ ॥

---

वि शेषेण ज्ञानं कला स्मृता । तथा कृत्रिमाणां स्वर्णरत्नादीनां क्रियाज्ञानं करणविज्ञानं कला स्मृता ॥ ८८ ॥

स्वर्णेति । स्वर्णादीनाम् अलङ्कारकृतिः अलङ्कारनिर्माणं लेपादिसत्कृतिः प्रलेपाद्यनुष्ठानञ्च कला, चर्मणां मार्दवादीनां क्रियायां ज्ञानं कला स्मृता ॥ ८९ ॥

पश्विति । पशुचर्मणाम् अङ्गेभ्यः पशूनामिति भावः निर्हारश्च निष्कासनञ्च क्रियायां ज्ञानं कला स्मृता । दुग्धदोहादीनां पशुदोहनादीनां घृतान्तं घृतसम्पादनपर्य्यन्तं विज्ञानं कला स्मृता ॥ ९० ॥

सीवने इति । कञ्चुकादीनां गात्राच्छादनीभूतानां सीवने स्यूतीकरणे विज्ञानं कलात्मकं कलेति प्रसिद्धम् । बाह्वादिभिरिति । जले बाहुप्रभृतिभिः तरणं सन्तरणं कलासंज्ञं स्मृतम् ॥ ९१ ॥

मार्जने इति । गृहभाण्डादेः गृहतैजसपात्रादेः मार्जने शोधने विज्ञानं कला स्मृता । वस्त्राणां सम्मार्जनं सम्यक् शोधनं तथा क्षुरकर्म एते उभे कले ॥ ९२ ॥

तिलेति । तिलानां मांसादीनाञ्च ये स्नेहाः तैलानि, तेषां

मनोऽनुकूलसेवायाः कृतिज्ञानं कला स्मृता ।
वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥ ९४ ॥
काचपात्रादिकरणविज्ञानं तु कला स्मृता ।
संसेचनं संहरणं जलानां तु कला स्मृता ॥ ९५ ॥
लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला स्मृता ।
गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥ ९६ ॥
शिशोः संरक्षणे ज्ञानं धारणे क्रीडने कला ।
सुयुक्तताडनज्ञानमपराधिजने कला ॥ ९७ ॥
नानादेशीयवर्णानां सुसम्यग्लेखने कला ।

---

निष्कासने परिष्करणे कृतिः कला । किञ्च वीरादीनां वाहनादीनाम् आकर्षणे तथा हस्त्यादीनाम् आरोहणे ज्ञानं कला ॥ ९२ ॥

मन इति । मनोऽनुकूलायाः चित्तानुसारिण्याः सेवायाः परिचर्यायाः कृतौ अनुष्ठाने ज्ञानं कला स्मृता । तथा वेणूनां वंशानां तृणादीनाञ्च यानि पात्राणि तेषां कृतौ करणे ज्ञानं कला स्मृता ॥ ९४ ॥

काचेति । काचपात्रादीनां करणे विज्ञानं कला स्मृता । तथा जलानां संसेचनं सम्यक् सेचनं संहरणञ्च कला स्मृता ॥ ९५ ॥

लोहेति । लोहाः अभिसाराः उपादानानि येषां तादृशानां शस्त्राणाम् अस्त्राणाञ्च कृतौ ज्ञानं कला स्मृता । तथा गजानाम् अश्वानां वृषभानाम् उष्ट्राणाञ्च पल्याणादीनां पृष्ठास्तरणविशेषाणां क्रिया अनुष्ठानं कला ॥ ९६ ॥

शिशोरिति । शिशोः बालकस्य संरक्षणे क्रीडने च ज्ञानं कला । तथा अपराधिजने सुयुक्तं यथोपयुक्तं यत् ताडनं दण्डनं तस्य ज्ञानं कला ॥ ९७ ॥

नानेति । नानादेशीयानां वर्णानाम् अक्षराणां सुसम्यक् लेखनं

ताम्बूलरक्षादिकृतिविज्ञानं तु कला स्मृता ॥ ९८ ॥
आदानमाशुकारित्वं प्रतिदानं चिरक्रिया ।
कलासु द्वौ गुणौ ज्ञेयौ द्वे कले परिकीर्त्तिते ॥ ९९ ॥
चतुःषष्टिकला ह्येताः संक्षेपेण निदर्शिताः ।
यां यां कलां समाश्रित्य तां तां कुर्य्यात् स एव हि ॥१००॥
इति शुक्रनीतौ राष्ट्रे चाद्यं चतुर्थाध्यायस्य विद्याकला-
निरूपणं नाम तृतीयप्रकरणम् ।

---

कलेति । तथा ताम्बूलानां रक्षादौ या कृतिः तस्या विज्ञानं कला स्मृता ॥ ९८ ॥

आदानमिति । कलासु आशुकारित्वम् आदानं, चिरक्रिया प्रतिदानम् । कलासु एतौ द्वौ गुणौ ज्ञेयौ, तस्मात् द्वे कले परिकीर्त्तिते ॥ ९९ ॥

चतुरिति । एताः चतुःषष्टिः कलाः संक्षेपेण निदर्शिताः । कः यां यां कलां समाश्रित्य तिष्ठतीति शेषः सः तां तां कुर्य्यात् एव, हिशब्दः पादपूरणार्थः ॥ १०० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चतुर्थाध्यायस्य तृतीयप्रकरणव्याख्या
समाप्ता ।

# चतुर्थाध्यायस्य चतुर्थं प्रकरणम् ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिः क्रमात् ।
चत्वार आश्रमाश्चैते ब्राह्मणस्य सदैव हि ।
अन्येषामन्त्यहीनाश्च क्षत्रविट्शूद्रकर्मणाम् ॥ १ ॥
विद्यार्थं ब्रह्मचारी स्यात् सर्वेषां पालने गृही ।
वानप्रस्थः संदमने सन्न्यासी मोक्षसाधने ॥ २ ॥
वर्तयन्त्यन्यथा दण्ड्या या वर्णाश्रमजातयः ॥ ३ ॥
कुलान्यकुलतां यान्ति ह्यकुलानि कुलीनताम् ।
यदि राज्ञोपेक्षितानि दण्डतोऽभिरक्षितानि च ॥ ४ ॥

---

ब्रह्मचारीति । ब्रह्मचारी, गृहस्थः, वानप्रस्थः तथा यतिः, एते चत्वारः आश्रमाः ब्राह्मणस्य सदैव, हिशब्दः पादपूरणार्थः । अन्येषां क्षत्त्रियाणां विशां शूद्राणाञ्च अन्त्येन यत्याश्रमेण हीनाः त्रयः ब्रह्मचर्यादयः आश्रमाः वेदितव्या इति शेषः ॥ १ ॥

विद्यार्थमिति । विद्यार्थं विद्योपार्जनार्थं ब्रह्मचारी, सर्वेषां पालने पालनार्थमित्यर्थः गृही, संदमने सम्यक् इन्द्रियदमनार्थं वानप्रस्थः, तथा मोक्षसाधने मुक्तिलाभार्थं सन्न्यासी स्यात् ॥ २ ॥

वर्त्तयन्तीति । याः वर्णानां ब्राह्मणादीनाम् आश्रमाणाञ्च जातयः अन्यथा अन्येन प्रकारेण शास्त्रवाह्यमार्गेणेत्यर्थः वर्त्तयन्ति व्यवहरन्ति ताः दण्ड्याः राज्ञेति शेषः ॥ २ ॥

कुलानीति । यदि राज्ञा उपेक्षितानि तथा दण्डतः दण्डेन अभिरक्षितानि, तदा कुलानि अकुलतां तथा अकुलानि कुलीनतां यान्ति प्राप्नुवन्ति सर्वे यथेच्छचारिणो भवन्तीत्यर्थः ॥ ४ ॥

जपं तपस्तीर्थसेवां प्रव्रज्यां मन्त्रसाधनम् ।
देवपूजां नैव कुर्यात् स्त्रीशूद्रस्तु पतिं विना ।
न विद्यते पृथक् स्त्रीणां त्रिवर्गविधिसाधनम् ॥ ५ ॥
पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च ।
उत्थाप्य शयनीयानि कृत्वा वेश्मविशोधनम् ॥ ६ ॥
मार्जनैर्लेपनैः प्राप्य सानलं यज्ञसाङ्गणम् ।
शोधयेद् यज्ञपात्राणि स्निग्धान्युष्णेन वारिणा ॥ ७ ॥
प्रोक्षणीयानि तान्येव यथास्थानं प्रकल्पयेत् ।
शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत् ॥ ८ ॥
महानसस्थपात्राणि बहिः प्रक्षाल्य सर्वशः ।
मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं सेन्धनं न्यसेत् ॥ ९ ॥

---

जपमिति । तदन्वयार्थः । स्त्री शूद्रस्तु शूद्रश्च जपं तपः तपस्यां तीर्थसेवां प्रव्रज्यां संन्यासं मन्त्रसाधनं तथा देवपूजां नैव कुर्यात् । किञ्च स्त्रीणां पतिं पतिसेवां विना पृथक् अन्यत् त्रिवर्गाणां धर्मार्थकामानां साधनं न विद्यते ॥ ५ ॥

पत्युरिति । मार्जनैरिति । प्रोक्षणीयानीति । स्त्रीति प्रकरणाद्ध्याहार्यम् । स्त्री पत्युः स्वामिनः पूर्वं समुत्थाय शय्याया इति शेषः, देहशुद्धिं मुखप्रक्षालनादिकं विधाय कृत्वा, शयनीयानि शय्याः उत्थाप्य, मार्जनैः लेपनैश्च वेश्मनः गृहस्य विशोधनं कृत्वा तथा सानलम् अग्नियुक्तं यज्ञाङ्गणं यागयज्ञितचत्वरभूमिं प्राप्य यज्ञपात्राणि शोधयेत् । तानि च स्निग्धानि आर्द्राणि पुनः उष्णेन वारिणा प्रोक्षणीयानि कृत्वा यथास्थानं कल्पयेत् स्थापयेत् । किञ्च तानि पात्राणि शोधयित्वा शुष्कीकृत्य पुनः पूरयित्वा धारयेत् यथास्थानं रक्षेत् ॥ ६ ॥ ७ ॥ ८ ॥

महानसस्थेति । महानसस्य रन्धनागारस्य सर्वशः सर्वाणि

कृत्वा नियोगपात्राणि रक्षाद्रविणानि च ।
कृतपूर्वाह्णकार्यैवं श्वशुरावभिवादयेत् ॥ १० ॥
ताभ्यां भर्त्रा पितृभ्यां वा भ्रातृमातुलबान्धवैः ।
वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् ॥ ११ ॥
मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्त्तिनी ।
छायेवानुगता स्वच्छा सखीव हितकर्मसु ।
दासीव दिष्टकार्येषु भार्या भर्त्तुः सदा भवेत् ॥ १२ ॥
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य सा ।
वैश्वदेवोद्धृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ १३ ॥

---

पात्राणि वहिः मार्जयेत् प्रक्षाल्य मृद्भिः लिप्त्वाभिः चुल्लीं शोधयेत् । ततः तत्र चुल्ल्यां सेन्धनं काष्ठवह्नितम् अग्निं न्यसेत् ॥ ९ ॥

कृत्विति । इत्थं कृतपूर्वाह्णकृत्या सम्पादितप्रातःकृत्या इयं स्त्री नियोगपात्राणि व्यावहारिकभाजनानि, रक्षान् पेयद्रव्याणि धनानि द्रविणानि धनानि च कृत्वा यथायथं कार्य्योपयोगित्वेन चिन्तयित्वा श्वशुरौ श्वश्रूं श्वशुरञ्च अभिवादयेत् प्रणमेत् ॥ १० ॥

ताभ्यामिति । ताभ्यां श्वश्रूश्वशुराभ्यां भर्त्रा स्वामिना पितृभ्यां मातापितृभ्यां भ्रातृमातुलबान्धवैश्च प्रदत्तानि वस्त्राणि अलङ्कारान् रत्नानि च धारयेत् ॥ ११ ॥

मन इति । भार्या मनसा वाचा कर्म्मणा च शुद्धा पवित्रा स्वच्छा निर्मला, पत्युः देशानुवर्त्तिनी आज्ञापरा, भर्त्तुः छाया इव अनुगता सङ्गिनी हितकर्मसु सखी इव सदा दिष्टकार्य्येषु निर्दिष्टकर्मसु दासी इव भवेत् ॥ १२ ॥

ततइति । ततः अभिवादनानन्तरं सा अन्नसाधनं रन्धनमित्यर्थः कृत्वा पतये विनिवेद्य दत्त्वा वैश्वदेवोद्धृतैः वैश्वदेवबलिप्रदाना-

पतिं च तदनुज्ञाता शिष्टमन्नाद्यमात्मना ।
भुक्त्वा नयेदहःशेषं सदायव्ययचिन्तया ॥ १४ ॥
पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च ।
कृतान्नसाधना साध्वी सभृत्यं भोजयेत् पतिम् ॥ १५ ॥
नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च ।
आस्तृत्य साधु शयनं ततः परिचरेत् पतिम् ॥ १६ ॥
सुप्ते पत्यौ तदभ्याशे स्वयं तद्गतमानसा ।
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥ १७ ॥
नोच्चैर्वदेन्न परुषं न बह्वाह्वतिमप्रियम् ।
न केनचिच्च विवदेदप्रलापविवादिनी ॥ १८ ॥

---

अन्तरम् उद्धृतैः उद्धृतैः अन्नैः भोजनीयान् श्वशुरादीन् भोजयेत् ॥ १२ ॥

पतिमिति । पतिञ्च भोजयेदिति पूर्वेण सम्बन्धः । ततः तेन पत्या अनुज्ञाता आत्मना स्वयं शेषम् अवशिष्टम् अन्नाद्यं भुक्त्वा सदा आयव्ययानां चिन्तया अहःशेषम् अपराह्णभागं नयेत् ॥ १४ ॥

पुनरिति । साध्वी स्त्री पुनः सायं, पुनः प्रातः गृहशुद्धिं विधाय कृतान्नसाधना कृतरन्धना सती सभृत्यं भरणीयवर्गसहितं पतिं भोजयेत् ॥ १५ ॥

नेति । ततः स्वयं भुक्त्वा नातितृप्ता नातिप्रचुरभोजना इत्यर्थः सती गृहनीतिं गृहस्य शेषकार्य्यं विधाय, शयनं शय्यां आस्तृत्य प्रातयित्वा पतिं साधु सम्यक् परिचरेत् सेवेत ॥ १६ ॥

सुप्ते इति । पत्यौ सुप्ते निद्रिते सति तद्गतमानसा भर्तृगतचित्ता सती तत् शयनम् अध्यास्य अनग्ना अविवसना अप्रमत्ता अवहिता निष्कामा निराकाङ्क्षा जितेन्द्रिया च शयीत इति शेषः ॥ १७ ॥

नेति । उच्चैः न, परुषं कर्कशं न, बहवः आह्वतयः आह्वा-

न चास्य व्ययशीला स्यान धर्मार्थप्रतिरोधिनी ।
प्रमादोन्मादरोषेर्ष्यावचनान्यतिनिन्दिताम् ॥ १९ ॥
पैशुन्यहिंसाविद्वेषमोहाहङ्कारदर्पताम् ।
नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत् ॥ २० ॥
एवं परिचरन्ती सा पतिं परमदैवतम् ।
यशस्त्विह यात्येव परत्रैषा सलोकताम् ॥ २१ ॥
योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते ।
रजसो दर्शनादेषा सर्वमेव परित्यजेत् ॥ २२ ॥

---

नानि यत्र तादृशीं वाचं न, तथा अप्रियं न वदेत् । विद्वेति चार्थः । विद्य अनर्थितं न विवदेत् विवादे कर्त्तव्ये च नास्ति प्रलापः अन- र्थक वचः यस्मिन् तद् यथा तथा विवादिनी न भवेदिति शेषः ॥ १८ ॥

न चेति । पैशुन्येति । अस्य स्वामिनः व्ययशीला अतिव्ययका- रिणीत्यर्थः न, धर्मार्थयोः विरोधिनी विरुद्धचारिणी च न स्यात् । किन्तु साध्वी स्त्री प्रमादस्य अनवधानतायाः उन्मादस्य रोषस्य ईर्ष्यायाश्च वचनानि, अतिनिन्दितां पैशुन्यहिंसाविद्वेषमोहाहङ्कारदर्पतां पैशुन्यं कापट्यं, हिंसां विद्वेषं, विषयमोहं धनमदम् अहङ्कारं दर्पताम् आत्मगौरवमित्यर्थः, तथा नास्तिक्यं, साहसं, स्तेयं चौर्यं, दम्भञ्च विवर्जयेत् त्यजेत् ॥ १९ ॥ २० ॥

एवमिति । सा एषा नारी एवं प्रकारेण परमदैवतं परमदेवता- स्वरूपं पतिं परिचरन्ती शुश्रूषमाणा इह अस्मिन् लोके यशः यशं एव यशस्तु दुःखातिमित्यर्थः स्यादेव स्यात्प्रत्ययः । परत्र च परलोके सलोकतां पत्युरिति शेषः पतिलोकमित्यर्थः याति प्राप्नोति एव ॥ २१ ॥

योषित इति । योषितः नार्याः नित्यकर्म उक्तम्, अथ अनन्तरं नैमित्तिकं कर्म उच्यते । एषा नारी रजसः दर्शनात् आत्मनः रज- स्वलात्वं दृष्ट्वेत्यर्थः सर्वमेव कार्यं पूर्वोक्तं परित्यजेत् ॥ २२ ॥

सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ।
एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता ॥ २३ ॥
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ।
स्नायीत सा त्रिरात्रान्ते सचेलाभ्युदिते रवौ ॥ २४ ॥
विलोक्य भर्तृवदनं शुद्धा भवति धर्मतः ।
कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥ २५ ॥
द्विजस्त्रीणामयं धर्मः प्रायोऽन्यासामपीष्यते ।
कृषिपण्यादिपुंकृत्ये भवेयुस्ताः प्रसाधिकाः ॥ २६ ॥
सङ्गीतैर्मधुरालापैः स्वायत्तस्तु पतिर्यथा ।

---

सर्वैरिति । सर्वैः जनैः अलक्षिता अदृष्टा, एकाम्बरा एकवसना, कृशा दीना कातरा स्नानेन अलङ्कारेण च वर्जिता अस्नाता अनलङ्कारा चेत्यर्थः तथा लज्जिता सती शीघ्रम् अन्तर्गृहे गृहमध्ये वसेत् ॥ २३ ॥

स्वपेदिति । किञ्च अप्रमत्ता प्रमादरहिता सती भूमौ स्वपेत् । एवं प्रकारेण अहस्त्रयं दिनत्रयं क्षपेत् यापयेत् । अथ सा त्रिरात्रान्ते त्रिरात्रावसाने रवौ सूर्ये अभ्युदिते सति सचेला वस्त्रसहिता स्नायीत स्नानं कुर्यात् ॥ २४ ॥

विलोक्येति । ततः भर्त्तुः वदनं विलोक्य दृष्ट्वा धर्मेण शुद्धा पवित्रा भवति । पुनश्च कृतशौचा शुद्धिमती सती पूर्ववत् कर्म समाचरेत् ॥ २५ ॥

द्विजस्त्रीणामिति । द्विजस्त्रीणां ब्राह्मणक्षत्रियवैश्यस्त्रीणाम् अयं धर्मः, अन्यासाम् अपरजातिस्त्रीणाम् अपि प्रायः बाहुल्येन इष्यते । ताः शूद्रादीनां स्त्रियः इत्यर्थः कृषिपण्यादिषु पुंकृत्येषु पुरुषकार्य्येषु प्रसाधिकाः सहकारिण्यः भवेयुः ॥ २६ ॥

सङ्गीतैरिति । पतिः यथा येन प्रकारेण स्वायत्तः स्वाधीनः भवेत्,

भवेत् तथाऽऽचरेयुर्वै मायाभिः कामकेलिभिः ॥ २७ ॥
मृते भर्त्तरि सङ्गच्छेद्भर्तुर्वा पालयेद् व्रतम्।
परवेश्मरुचिर्न स्याद् ब्रह्मचर्ये स्थिता सती ॥ २८ ॥
मण्डनं वर्जयेन्नित्यं तथा प्रोषितभर्तृका।
देवताराधनपरा तिष्ठेद्भर्तृहिते रता।
धारयेन्मङ्गलार्थानि किञ्चिदाभरणानि च ॥ २९ ॥
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम्।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ ३० ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य प्रदातारं भर्तारं का न पूजयेत् ॥ ३१ ॥

---

सङ्गीतैः मधुरैः आलापैः मायाभिः छलरूपाभिः मोहनप्रकाराभिरित्यर्थः कामकेलिभिः सुरतप्रसङ्गैश्च तथा आचरेयुः ॥ २७ ॥

मृते इति। भर्त्तरि मृते सति संगच्छेत् सहगमनं कुर्य्यात् प्रत्या वर्त्तेतेति शेषः, वा अथवा भर्त्तुः व्रतं गार्हस्थ्यं नियमं पालयेत्। किञ्च ब्रह्मचर्य्ये स्थिता सती परवेश्मरुचिः परगृहवासिनी न स्यात् ॥ २८ ॥

मण्डनमिति। प्रोषितभर्तृका प्रवासस्थपतिका नारी मण्डनं भूषणं वर्जयेत् तथा देवतानाम् आराधने रता भर्त्तुः हिते रता च तिष्ठेत्। किञ्च मङ्गलार्थानि न तु विलासार्थानीत्यर्थः किञ्चित् अल्पानि किञ्चिदित्यव्ययम् आभरणानि कङ्कणादीनि धारयेत् ॥ २९ ॥

नास्तीति। भर्तृसमः पत्या तुल्यः नाथः आश्रयः न अस्ति, तथा भर्तृसमं पत्युः सदृशं सुखं न अस्ति। किञ्च विसृज्य अन्यत् सर्वं त्यक्त्वा स्थितायाः इति शेषः स्त्रियाः भर्त्ता वै पतिरेव शरणम् आश्रय इत्यर्थः धनसर्वस्वं धनं सर्वस्वं सर्वं वस्तु च ॥ ३० ॥

मितमिति। पिता मितं परिमितं, भ्राता मितं, सुतश्च मितं

तदाचार्यैश्च तच्छास्त्रं निर्मितं तद्धितार्थकम्।
व्यवहाराय या नीतिरुभयोरविवादिनी ॥ २६ ॥
कदाचिद् बीजमाहात्म्यात् क्षेत्रमाहात्म्यतः क्वचित्।
नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रबीजतः ॥ २७ ॥
विश्वामित्रश्च वशिष्ठो मतङ्गो नारदादयः।
तपोविशेषैः सम्प्राप्ता उत्तमत्वं न जातितः ॥ २८ ॥
स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा।
तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः ॥ २९ ॥

---

चतुर्वर्णाः चत्वारः वर्णा ब्राह्मणादयः, एकत्र अन्यत्रेत्यर्थः यावनाः तिष्ठन्तीति शेषः। ते यावनाः वेदभिन्नप्रमाणाः वेदविरुद्धधर्मिणः तथा प्रत्यग्उत्तरवासिनः पश्चिमोत्तरप्रदेशस्थिता इत्यर्थः ॥ २५ ॥

तदाचार्यैरिति। तेषां यवनानाम् आचार्यैः गुरुभिः तद्धितार्थकं तेषां हितार्थं तेषां शास्त्रञ्च निर्मितं प्रणीतम्। तथा व्यवहाराय उभयोर्लोकयोरित्यर्थः अविवादिनी अविरोधिनी नीतिश्च निर्मितेति शेषः ॥२६॥

कदाचिदिति। कदाचित् बीजानां पुरुषाणामित्यर्थः माहात्म्यात् गौरवात्, क्वचित् क्षेत्राणां नारीणां माहात्म्यात् गौरवात् नीचोत्तमत्वम् अपकर्षोत्कर्षभावः, कदाचिच्च क्षेत्रबीजतः क्षेत्रस्य बीजस्य च उभयोरित्यर्थः माहात्म्यात् श्रेष्ठत्वं भवति ॥ २७ ॥

विश्वामित्र इति। विश्वामित्रः वशिष्ठः मतङ्गः नारदादयश्च तपोविशेषैः उत्तमत्वं श्रेष्ठत्वं संप्राप्ताः जातितः जात्या न, विश्वामित्रस्य क्षत्रजत्वात् वशिष्ठस्य वेश्याजत्वात् मतङ्गस्य चाण्डाल्योनिजत्वात् नारदस्य दासीगर्भजत्वाच्चेति भावः ॥ २८ ॥

स्वेति। यः पूर्वैः पूर्वपुरुषैः स्वस्वजातिविहितः धर्मः आचरितः सा जातिः तज्जातीयो नरः सदा तं धर्मम् आचरेत्, अन्यथा नृपैः दण्ड्या दण्डनीया स्यात् ॥ २९ ॥

जातिवर्णाश्रमात् सर्वान् पृथक् चिह्नैः सुलक्षयेत् ।
यन्त्राणि धातुकाराणां संरक्षेद् वीक्ष्य सर्वदा ॥ ४० ॥
कारुशिल्पिगणान् राष्ट्रे रक्षेत् कार्य्यानुमानतः ।
अधिकान् कृषिकृत्ये वा भृत्यवर्गे नियोजयेत् ॥ ४१ ॥
चौराणां पिशुभूतास्ते स्वर्णकारादयस्ततः ।
गञ्जागृहं पृथग् ग्रामात् तस्मिन् रक्षेत् तु मद्यपान् ॥ ४२ ॥
न दिवा मद्यपानं हि राष्ट्रे कुर्य्यात्तु कर्हिचित् ॥ ४३ ॥
ग्रामे ग्राम्यान् वने वन्यान् वृक्षान् संरोपयेन्नृपः ।
उत्तमान् विंशतिकरैर्मध्यमांस्त्रिंशहस्ततः ॥ ४४ ॥

---

जातिवर्णाश्रमादिति । पृथक् चिह्नैः जातीनां मूर्द्धाभिषिक्तानां वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचार्य्यादीनां सर्वान् जनान् सुलक्षयेत् । तथा धातुकाराणां स्वर्णादिशिल्पकराणां यन्त्राणि वीक्ष्य परीक्ष्य सर्वदा संरक्षेत् नृप इति शेषः ॥ ४० ॥

कारुशिल्पीति । कार्य्यानुमानतः कार्य्याणाम् अनुमानेन गौरव-लाघवविवेचनेन इत्यर्थः राष्ट्रे राज्ये कारुशिल्पिगणान् रक्षेत् वासयेत् । तथा कृषिकृत्ये भूमिकर्षणादिकार्य्ये वा भृत्यवर्गे भृत्यवर्गसाध्ये कर्मणि निमित्ते अधिकान् जनान् नियोजयेत् राजेति शेषः ॥ ४१ ॥

चौराणामिति । स्वर्णकारादयः चौराणां पिशुभूताः पिशु-नायीयाः पिशुवत् चौरान् पालयन्तीत्यर्थः अतः ते ग्रामात् पृथक् रक्षणीया राज्ञा इति शेषः । यत्र तस्मिन् ग्रामात् पृथक् प्रदेशे गञ्जा: महाभाण्डं मदिरागृहम् अस्ति, तस्मिन् मद्यपान् रक्षेत् राजेति शेषः ॥ ४२ ॥

नेति । राष्ट्रे राज्ये कर्हिचित् दिवा दिवसे मद्यपानं न हि कुर्य्यात् ॥ ४२ ॥

ग्रामे इति । ग्रामान्यार्थमपि । नृपः ग्रामे ग्राम्यान्, वने वन्यान् वृक्षान् संरोपयेत् । तेषु उत्तमान् वृक्षान् विंशतिकरैः, मध्यमान्

सामान्यान् दशहस्तैश्च कनिष्ठान् पञ्चभिः करैः।
अजाविगोशकृद्भिर्वा जलैर्मांसैश्च पोषयेत् ॥ ४५ ॥
उदुम्बराश्वत्थवटचिञ्चाचन्दनजम्बुकाः।
कदम्बाशोकबकुलबिल्वाम्रतकपित्थकाः ॥ ४६ ॥
राजादनाम्रपुन्नागतूदकाञ्चनचम्पकाः।
नीपकोकाम्रसरलदाडिमाक्षोटभिसटाः ॥ ४७ ॥
शिंशपाशिम्बुबदरनिम्बजम्बीरखीरिकाः।
खर्जूरदेवकरजफल्गुतापिच्छसिम्बलाः ॥ ४८ ॥
कुद्दालो लवली धात्री क्रमुको मातुलुङ्गकः।
लकुचो नारिकेलश्च रम्भान्ये सत्फला द्रुमाः।
सुपुष्पाश्चैव ये वृक्षा ग्रामाभ्यर्णे नियोजयेत् ॥ ४९ ॥

---

हस्तान् तिथिहस्ततः पञ्चदशकरैरित्यर्थः, सामान्यान् ततो निकृष्टान् दशहस्तैः तथा कनिष्ठान् अधमान् हस्तान् पञ्चभिः करैः विच्छिद्य वापयेदिति शेषः। तांश्च अजानां छागानाम् अवीनां मेषाणां गवाञ्च शकृद्भिः पुरीषैः जलैः मांसैश्च पोषयेत् पुष्टिं नयेत् ॥ ४४ ॥ ४५ ॥

उदुम्बरेत्यादि। उदुम्बराः, अश्वत्थाः, वटाः, चिञ्चाः, चन्दनाः, जम्बुकाः, कदम्बाः, अशोकाः, बकुलाः, बिल्वाः, आम्रताः, कपित्थकाः, राजादनाः, आम्राः, पुन्नागाः, तूदकाञ्चाः, चम्पाः, चम्पकाः, नीपाः, कोकाम्राः, सरलाः, दाडिमाः, अक्षोटाः, भिसटाः, शिंशपाः, शिम्बवः, बदराः, निम्बाः, जम्बीराः, खीरिकाः, खर्जूराः, देवकरजाः, फल्गवः, तापिच्छाः, सिम्बलाः, कुद्दालः, लवली, धात्री, क्रमुकः, मातुलुङ्गकः, लकुचः, नारिकेलः, रम्भा तथा अन्ये ये सत्फलाः उत्तमफलशालिनः सुपुष्पाश्च वृक्षाः सन्ति, तान् ग्रामाभ्यर्णे ग्रामसमीपे नियोजयेत् रोपयेत् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

वामभागेऽथवोद्यानं कुर्य्याद् वासगृहे शुभम् ।
सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे ।
वसन्ते पञ्चमेऽह्नस्तु सेव्या वर्षासु न क्वचित् ॥ ५० ॥
फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः ।
शृतशीतपयः सेकः फलपुष्पाय सर्वदा ॥ ५१ ॥
मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनाम् ॥ ५२ ॥
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ।
गोमांसमुदकं चेति सप्तरात्रं निधापयेत् ।
उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥ ५३ ॥
ये च कण्टकिनो वृक्षाः खदिराद्यास्तथापरे ।

---

वामभागे इति । वामभागे वासगृहस्येति शेषः अथवा वासगृहे वासभूम्यन्तरे इत्यर्थः शुभम् उद्यानं कुर्य्यात् । किञ्च घर्मान्ते निदाघावसाने सायं प्रातश्च, शीतकाले दिनान्तरे दिनावसाने वसन्ते च ऋतुः दिवसस्य पञ्चमे मुहूर्ते इति शेषः सेव्याः उद्यानवृक्षा इति शेषः, वर्षासु क्वचिदपि न सेव्या इति शेषः ॥ ५० ॥

फलनाशे इति । फलानां नाशे सत्यपीति शेषः कुलत्थैः, माषैः, मुद्गैः, यवैः, तिलैर्वा सह शृतशीतपयोभिः उष्णीकृतैः पश्चात् शीतलैः पयोभिः जलैः सेकः सर्वदा फलपुष्पाय फलानां पुष्पाणाञ्च जननाय भवति ॥ ५१ ॥

मत्स्याम्भसेति । मत्स्याम्भसा मत्स्यक्षालनजलेन सेकेन शाखिनां वृक्षाणां वृद्धिः भवति ॥ ५२ ॥

आविकेति । आविकाजानां मेषच्छागलानां यानि शकृन्ति पुरीषाणि तेषां चूर्णं यवचूर्णं तिलानि गोमांसम् उदकञ्च सप्तरात्रं निधापयेत् वृक्षमूलेषु दद्यादित्यर्थः । उत्सेकः उक्तचूर्णादिदानं सर्वेषां वृक्षाणां फलानां पुष्पाणाञ्च वृद्धिदः वर्द्धकः ॥ ५३ ॥

आरण्यकास्ते विज्ञेयास्तेषां तत्र नियोजनम् ॥ ५४ ॥
खदिराश्मन्तशाकाग्निमन्थश्योनाकबब्बुलाः ।
तमालशालकुटजधवार्जुनपलाशकाः ॥ ५५ ॥
सप्तपर्णशमीतुन्नदेवदारुविकङ्कताः ।
करमर्देङ्गुदीभूर्जविषमुष्टिकरीरकाः ॥ ५६ ॥
शल्लकी काश्मरी पाठा तिन्दुको बीजसारकः ।
हरीतकी च भल्लातः शम्पाकोऽर्कश्च पुष्करः ॥ ५७ ॥
अरिमेदश्च पीतद्रुः शाल्मलिश्च विभीतकः ।
नरवेलो महावृक्षोऽपरे ये मधुकादयः ॥ ५८ ॥
प्रतानवल्यः स्तम्बिन्यो गुल्मिन्यश्च तथैव च ।
ग्राम्या ग्रामे वने वन्या नियोज्यास्ते प्रयत्नतः ॥ ५९ ॥
कूपवापीपुष्करिण्यस्तडागाः सुगमास्तथा ।

---

ये चेति । ये वृक्षाः कण्टकिनः कण्टकावृताः, तथा अपरे खदिराद्याश्च ते आरण्यकाः वन्याः विज्ञेयाः, तेषां वृक्षाणां तत्र अरण्ये नियोजनं रोपणं कार्यमिति शेषः ॥ ५४ ॥

खदिरेत्यादि । खदिरः, अश्मन्तशाकः, अग्निमन्थः, श्योनाकः, बब्बुलः, तमालः, शालः, कुटजः, धवः, अर्जुनः, पलाशः, सप्तपर्णः, शमी, तुन्नः, देवदारुः, विकङ्कतः, करमर्दः इङ्गुदी, भूर्जः, विषमुष्टिः, करीरकः, शल्लकी, काश्मरी, पाठा, तिन्दुकः, बीजसारकः, हरीतकी, भल्लातः, शम्पाकः, अर्कः, पुष्करः, अरिमेदः, पीतद्रुः, शाल्मलिः, विभीतकः, नरवेलः, महावृक्षः, तथा मधूकादयः अपरे ये वृक्षाः, याश्च प्रतानवल्यः विस्तारवल्यः स्तम्बिन्यः गुच्छवल्यः गुल्मिन्यः मूलवल्यश्च, लताः, ते ताश्च ग्राम्याश्चेत् ग्रामे, वन्याश्चेत् वने प्रयत्नतः नियोज्याः रोपणीयाः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

कार्याः खातात् द्विविगुणविस्तारपद्धतिकाः ।
यथा तथा ह्यनेकाश्च राष्ट्रे स्यात् विपुलं जलम् ॥६०॥
नदीनां सेतवः कार्या विविधाः सुमनोहराः ।
नौकादिजलयानानि पारगानि नदीषु च ॥ ६१ ॥
यज्जातिपूज्यो यो देवस्तद्विद्यायाश्च यो गुरुः ।
तदालयानि तज्जातिस्वरूपं त्रिमुखे न्यसेत् ॥ ६२ ॥
शृङ्गाटके ग्राममध्ये विष्णोर्वा शङ्करस्य च ।
गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत् ॥ ६३ ॥
मेर्वादिषोडशविधलक्षणान् सुमनोहरान् ।
वर्तुलांश्चतुरस्रान् वा यन्त्राकारान् समण्डपान् ॥ ६४ ॥

---

कूपेति । कूपाः वाप्यः दीर्घिकाः पुष्करिण्यः तडागाश्च तथा कार्याः, यथा खातात् द्विविगुणाः विस्ताराः यासां तादृश्यः पद्धतिकाः पादसञ्चारस्थानानि येषां यासां वा तादृशाः तादृश्यश्च कूपाश्च अनेकाश्च स्युः । तथा यति राष्ट्रे स्निग्धं मधुरं जलं स्यात् ॥ ६० ॥

नदीनामिति । नदीनां विविधाः सुमनोहराः सेतवः कार्याः, तथा नदीषु पारगानि पारगमनसाधनानि नौकादिजलयानानि रक्षणीयानीति शेषः ॥ ६१ ॥

यदिति । यो देवः यज्जातिपूज्यः यस्याः जातेः पूजनीयः, तद्विद्याया तद्देवसम्बन्धिन्याः विद्यायाः यो गुरुः, तदालयानि तत्स्वरूपाणि तज्जातीनां स्वरूपं त्रिमुखे त्रिपथे चतुष्पथे न्यसेत् कुर्यात् ॥ ६२ ॥

शृङ्गाटके इति । शृङ्गाटके चतुष्पथे वा ग्राममध्ये विष्णोः शङ्करस्य गणेशस्य रवेः सूर्यस्य देव्याश्च प्रासादान् भवनानि क्रमात् न्यसेत् कुर्यात् ॥ ६३ ॥

प्राकारगोपुरगणयुतान् द्वित्रिगुणोच्छ्रितान् ।
यथोक्तान्तः सुप्रतिमान् अग्रमूलान् विचित्रितान् ॥ ६५ ॥
रम्यः सहस्रशिखरः सपादशतभूमिकः ।
सहस्रहस्तविस्तारोच्छ्रायः स्यान्मेरुसंज्ञकः ॥ ६६ ॥
ततस्ततोऽष्टांशहीना अपरे मन्दरादयः ॥ ६७ ॥
मन्दरो रत्नमाली च द्युमणिश्चन्द्रशेखरः ।
माल्यवान् पारियात्रश्च रत्नशीर्षश्च धातुमान् ॥ ६८ ॥
पद्मकोशः पुष्पहासः श्रीकरः स्वस्तिकाभिधः ।
महापद्मः पद्मकूटः षोडशो विजयाभिधः ॥ ६९ ॥

---

प्रासादान् विवक्षति मेर्वादीनिति । प्राकारेति । मेरुः आदिर्येषां तादृशानि षोडशविधानि लक्षणानि येषां तान् । सुमनोहरान्, वस्तुतान् मेरुप्रभृतीन् चतुरस्रान् चतुष्कोणान् समाकारान् समानपरान् समुच्छ्रितान् प्राकारैः प्राचीरैः, गोपुरैः पुरद्वारैः गणैः परिवारदेवैश्च युतान् द्वित्रिगुणोच्छ्रितान् दैर्घ्यविस्तारापेक्षयेति शेषः यथोक्तान्तः यथोक्तान्तरन्तः मध्ये शोभना प्रतिमा येषां तान् अग्रमूलान् अग्रयुक्तान् तथा विचित्रितान् विशेषेण चित्रितान् प्रासादानिति पूर्वेणान्वयः ॥ ६४ ॥ ६५ ॥

मेरुप्रभृतीन् क्रमशः लक्षयति रम्य इति । सहस्रं शिखरं यस्य सः सहस्रशिखरः इत्यर्थः पादशतैः सह शतमानेन भूमिः यस्य तथाभूतः, सहस्रहस्तविस्तारः तथा सहस्रहस्तोन्नतः रम्यः प्रासादः मेरुसंज्ञकः स्यादिति शेषः ॥ ६६ ॥

ततस्तत इति । अपरे मेरुभिन्नाः मन्दरादयः ततः ततः अष्टांशहीनाः, तथाच मन्दरः मेरोः अष्टांशहीनः, रत्नमाली मन्दरात् अष्टांशहीनः, द्युमणिः रत्नमालिनः अष्टांशहीन इत्यादि ॥ ६७ ॥

अपरान् पञ्चदश मन्दरादीन् निर्दिशति मन्दर इत्यादि । मन्दरः

तन्मण्डपञ्च तत्तुल्यः पादन्यूनोच्छ्रितः पुरः ।
स्वाराध्यदेवताध्यानैः प्रतिमास्तेषु योजयेत् ॥ ७० ॥
ध्यानयोगस्य संसिद्ध्यै प्रतिमालक्षणं स्मृतम् ।
प्रतिमाकारको मर्त्यो यथा ध्यानरतो भवेत् ।
तथा नान्येन मार्गेण प्रत्यक्षेणापि वा खलु ॥ ७१ ॥
प्रतिमा सैकती पैष्टी लेख्या लेप्या च मृण्मयी ।
वार्क्षी पाषाणधातूत्था स्थिरा ज्ञेया यथोत्तरा ॥ ७२ ॥

---

रत्नमाली, द्युमणिः, चन्द्रशेखरः, माल्यवान्, पारियात्रः, रत्नशीर्षः, धातुमान्, पद्मकोषः, पुष्पहासः, श्रीकरः, स्वस्तिकाभिधः स्वस्तिक इति प्रसिद्धः, महापद्मः, पद्मकूटः तथा विजयाभिधः विजय इति प्रसिद्धः बोद्धव्यः ॥ ६८ ॥ ६९ ॥

तदिति । तेषु मेरुप्रभृतिषु मण्डपः देवताभवनं तत्तुल्यः तदनुरूपः पादन्यूनोच्छ्रितः चतुर्थांशेन हीनोच्छ्रायः पुरः पुरतः अग्रे कार्य्य इति शेषः अत्र मण्डप इति पुंलिङ्गनिर्देश आर्षः । तेषु मण्डपेषु स्वाराध्यायाः देवतायाः ध्यानैः चिन्तनैः प्रतिमाः योजयेत् विन्यसेत् ॥ ७० ॥

ध्यानेति । ध्यानयोगस्य संसिद्ध्यै सम्यक् सिद्धये प्रतिमाकारकः प्रतिमाप्रतिष्ठाता मर्त्यः यथा ध्यानपरः भवेत् तथा प्रतिमालक्षणं स्मृतं निरूपितम् अन्येन मार्गेण यथा प्रकारेणेत्यर्थः प्रत्यक्षेणापि दृष्टेनापि न खलु नैव ॥ ७१ ॥

सम्प्रति प्रतिमाया उपादानान्याह प्रतिमेति । प्रतिमा सैकती सिकतामयी, पैष्टी पिष्टमयी, लेख्या चित्रिता, लेप्या लेपमयी, मृण्मयी, वार्क्षी दारुमयी, पाषाणमयी, धातूत्था धातुमयी च यथोत्तरा स्थिरा स्थायिनी ज्ञेया, तथाच सैकतीमपेक्ष्य पैष्टी, पैष्टीमपेक्ष्य लेख्या, लेख्यामपेक्ष्य लेप्या, लेप्यामपेक्ष्य मृण्मयी, मृण्मयीमपेक्ष्य वार्क्षी,

यथोक्तावयवैः पूर्णा पुत्त्रदा सुमनोहरा।
अन्यथायुर्धनहरा नित्यं दुःखविवर्द्धिनी॥ ७३॥
देवानां प्रतिबिम्बानि कुर्याच्छ्रेयस्कराणि च।
स्वर्ग्याणि मानवादीनामस्वर्ग्याण्यशुभानि च॥ ७४॥
मानतो नाधिकं हीनं तद् बिम्बं रम्यमुच्यते॥ ७५॥
अपि श्रेयस्करं नृणां देवबिम्बमलक्षणम्।
सलक्षणं मर्त्यबिम्बं न हि श्रेयस्करं सदा॥ ७६॥
सात्त्विकी राजसी देवप्रतिमा तामसी त्रिधा।
विष्णवादीनां च या यत्र योग्या पूज्या तु तादृशी॥७७॥

---

वाक्यमिदेश्च पाषाणमयी, पाषाणमयीमपेक्ष्य धातुमयी स्थिरेति निष्कर्षः॥ ७२॥

यथोक्तेति। यथोक्तेन यथाशास्त्रमर्चितेन अवयवेन पूर्णा प्रतिमा पुत्त्रदा सुमनोहरा च। अन्यथा आयुर्धनहरा जीवनहारिणी धनहारिणी चेत्यर्थः तथा नित्यं सततं दुःखविवर्द्धिनी भवति॥ ७३॥

देवानामिति। देवानां प्रतिबिम्बानि प्रतिमाः श्रेयस्कराणि शुभकराणि कुर्यात्, तानि मानवादीनां स्वर्ग्याणि स्वर्गसाधनानि, अशुभानि तु अस्वर्ग्याणि भवन्तीति शेषः॥ ७४॥

मानत इति। तद्बिम्बं तेषां देवानां बिम्बं प्रतिमा मानतः परिमाणात् अधिकं हीनं वा रम्यं श्रेयस्करं न उच्यते, तस्मात् यथोक्तानुरूपमेव कर्त्तव्यमिति भावः॥ ७५॥

अपीति। अलक्षणं विरुद्धलक्षणमपि देवबिम्बं देवमूर्त्तिः नृणां श्रेयस्करं, किन्तु सलक्षणं शुभलक्षणयुक्तमपि मर्त्यबिम्बं मानवप्रतिमूर्त्तिः सदा नहि नैव श्रेयस्करं, तस्मात् मानवप्रतिमूर्त्तिर्नैव रचणीयेति भावः॥ ७६॥

सात्त्विकीति। देवप्रतिमा त्रिधा, सात्त्विकी राजसी तामसी च।

योगमुद्रान्विता स्वस्था वराभयकरान्विता ।
देवेन्द्रादिस्तुतनुता सात्त्विकी सा प्रकीर्त्तिता ॥ ७८ ॥
तिष्ठन्ती वाहनस्था वा नानाभरणभूषिता ।
या शस्त्रास्त्राभयवरकरा सा राजसी स्मृता ॥ ७९ ॥
शस्त्रास्त्रैर्दैत्यहन्त्री या युग्ररूपधरा सदा ।
युद्धाभिनन्दिनी सा तु तामसी प्रतिमोच्यते ॥ ८० ॥
संक्षेपतस्तु ध्यानादि विष्णुादीनां तथोच्यते ।
प्रमाणं प्रतिमानां च तदङ्गानां सुविस्तरम् ॥ ८१ ॥
स्वस्वमुष्टेश्चतुर्थोऽंशो ह्यङ्गुलं परिकीर्त्तितम् ।
तदङ्गुलैर्द्वादशभिर्भवेत् तालस्य दीर्घता ॥ ८२ ॥

---

यत्र विष्णुादीनां विष्णुप्रभृतीनां या मूर्त्तिः योग्या यद्गुणरूपा तादृशी पूज्या तद्गुणरूपा पूजा कार्य्येत्यर्थः ॥ ७७ ॥

योगमुद्रेति । या मूर्त्तिः योगमुद्रान्विता योगेन मुद्रया मुद्रया यथोक्तमुद्रया च अन्विता, स्वस्था स्वभावस्थिता वराभयकरान्विता वरदानाभयदानोद्यतभुजा, तथा देवेन्द्रादिभिः स्तुता नता प्रणता, सा सात्त्विकी प्रकीर्त्तिता ॥ ७८ ॥

तिष्ठन्तीति । या मूर्त्तिः वाहने सिंहादौ स्थिता नानाभरणभूषिता तथा शस्त्रास्त्राभयवरैः करैः शस्त्रधारिणी अस्त्रधारिणी अभयदायिनी वरदायिनी चेत्यर्थः सा राजसी स्मृता ॥ ७९ ॥

शस्त्रास्त्रैरिति । या प्रतिमा शस्त्रैः अस्त्रैश्च दैत्यहन्त्री दितिजसंहारिणी, सदा उग्ररूपधरा भीषणाकृतिः युद्धाभिनन्दिनी समरोत्सुका, सा तामसी उच्यते ॥ ८० ॥

संक्षेपत इति । विष्णुादीनां ध्यानादि, तथा प्रतिमानां तदङ्गानां सुविस्तरं प्रमाणं संक्षेपतः उच्यते ॥ ८१ ॥

स्वस्वेति । स्वस्वमुष्टेः आत्मनः आत्मनः मुष्टेः चतुर्थः अंशः

वामनी सप्तताला स्यादष्टताला तु मानुषी।
नवताला स्मृता दैवी राक्षसी दशतालिका ॥ ८३ ॥
सप्ततालाद्युक्ता वा मूर्त्तीनां देशभेदतः।
सदैव स्त्री सप्तताला सप्ततालस्तु वामनः ॥ ८४ ॥
नरो नारायणो रामो नृसिंहो दशतालकः।
दशतालः स्मृतो बाणो बलीन्द्रो भार्गवोऽर्जुनः ॥ ८५ ॥
चण्डी भैरववेतालनरसिंहवराहकाः।
क्रूरा द्वादशतालाः स्युर्हयशीर्षादयस्तथा।
ज्ञेया षोड़शताला तु पैशाची वासुरी सदा ॥ ८६ ॥
हिरण्यकशिपुर्वृत्रो हिरण्याक्षश्च रावणः।
कुम्भकर्णोऽथ नमुचिर्निशुम्भः शुम्भ एव हि।

---

ङ्गुलं परिकीर्त्तितम्। द्वादशभिः तैः अङ्गुलैः तालस्य दीर्घता भवेत् तालाख्यं परिमाणं भवेदित्यर्थः ॥ ८२ ॥

वामनीति। सप्तताला सप्ततालपरिमिता मूर्त्तिः वामनी स्यात्, अष्टताला तु मानुषी, नवताला दैवी, तथा दशतालिका राक्षसी स्मृता ॥ ८३ ॥

सप्तेति। वा अथवा देशभेदतः देशभेदेन मूर्त्तीनां सप्ततालाद्युक्तता, तथाच कुत्रचित् देशे सप्तताला, कुत्रचित् अष्टताला, क्वचिद्वा नवताला इत्यादि। स्त्री देवमूर्त्तिरित्यर्थः सदैव सप्तताला सप्ततालपरिमिता कार्य्येति शेषः। किन्तु वामनः वामनमूर्त्तिः विष्णुः सप्ततालः कार्य्य इति शेषः ॥ ८४ ॥

नर इति। नरः नराख्यः मूर्त्तिभेदः, नारायणः रामः नृसिंहश्च दशतालकः दशतालपरिमितः। तथा बाणः बली इन्द्रः भार्गवः अर्जुनश्च तत्तदाख्यमूर्त्तिभेद इत्यर्थः दशतालः स्मृतः ॥ ८५ ॥

इति षोडशतालाः स्युर्महिषो रक्तबीजकः ॥ ८७ ॥
पञ्चतालाः स्मृता बालाः षट्तालाश्च कुमारकाः ॥८८॥
दशताला कृतयुगे त्रेतायां नवतालिका ।
अष्टताला द्वापरे तु सप्तताला कलौ स्मृता ॥ ८९ ॥
नवतालप्रमाणे तु मुखं तालमितं स्मृतम् ।
चतुरङ्गुलं ललाटं स्याद्धो नासा तथैव च ॥ ९० ॥
नासिकाधश्च हन्वन्तं चतुरङ्गुलमीरितम् ।
चतुरङ्गुला भवेद् ग्रीवा तालेन हृदयं पुनः ॥ ९१ ॥

---

प्रचण्डीति । प्रचण्डी, भैरवः, वेतालः, नरसिंहः वराहः, तथा हयग्रीवादयः क्रूराः भीषणाः मूर्त्तिभेदाः द्वादशतालाः स्युः । पैशाची तथा राक्षसी मूर्त्तिः सदा षोडशताला ज्ञेया ॥ ८६ ॥

हिरण्येति । हिरण्यकशिपु, बलः, हिरण्याक्षः, रावणः, कुम्भकर्णः, नमुचिः, निशुम्भः, शुम्भः, महिषः महिषासुरः तथा रक्तबीजकः एते असुरमूर्त्तिभेदाः षोडशतालाः स्युः । किञ्च बालाः शिशुमूर्त्तयः पञ्चतालाः, तथा कुमारकाः शैशवातिक्रान्ताः अतरुणाश्च मूर्त्तयः षट्तालाः स्मृताः ॥ ८७ ॥ ८८ ॥

अथ सामान्येन मूर्त्तिभेदं निरूपयति दशेति । कृतयुगे सर्वा मूर्त्तिः दशताला, त्रेतायां नवतालिका, द्वापरे अष्टताला, कलौ सप्तताला स्मृता ॥ ८९ ॥

नवेति । नवतालप्रमाणे नवतालपरिमितमूर्त्तिनिर्माणे इत्यर्थः मुखं तालमितम् एकतालपरिमितं स्मृतं, ललाटं चतुरङ्गुलं, तदधः नासा तथैव चतुरङ्गुला इत्यर्थः स्यात् ॥ ९० ॥

नासिकाध इति । नासिकाया अधः निम्ने च हन्वन्तं हनुपर्य्यन्तं चतुरङ्गुलम् ईरितम् उक्तम् । ग्रीवा च चतुरङ्गुला भवेत्, हृदयं पुनः वक्षःस्थलन्तु तालेन परिमाणेन भवेदिति शेषः ॥ ९१ ॥

नाभिस्तस्मादधः कार्या तालेनैकेन शोभिता ।
नाभ्यधश्च भवेन्मेढ्रं भागेनैकेन वा पुनः ॥ ९२ ॥
द्वितालौ चायतावूरू जानुनी चतुरङ्गुले ।
जङ्घे ऊरुसमे कार्ये गुल्फाधश्चतुरङ्गुलम् ॥ ९३ ॥
नवतालात्मकमिदमूर्ध्वमानं बुधैः स्मृतम् ॥ ९४ ॥
शिखावधि तु केशान्तं त्र्यङ्गुलं सर्वमानतः ।
दिशानया च विभजेत् सप्ताष्टदशतालिकम् ॥ ९५ ॥
चतुस्तालात्मकौ बाहू अङ्गुल्यन्तावुदाहृतौ ।
स्कन्धादिकूर्परान्तं च विंशत्यङ्गुलमुत्तमम् ॥ ९६ ॥

---

नाभिरिति । तस्मात् हृदयात् अधः एकेन तालेन शोभिता शोभना नाभिः कार्य्या । नाभेः अधश्च एकेन भागेन केनचित् अनुरूपेण अंशेन इत्यर्थः मेढ्रं लिङ्गं भवेत् ॥ ९२ ॥

द्वितालाविति । ऊरू द्वितालौ तालद्वयपरिमितौ आयतौ दीर्घौ, जानुनी च चतुरङ्गुले, जङ्घे च ऊरुसमे कार्य्ये । गुल्फयोश्च अधः चतुरङ्गुलम् अङ्गुलचतुष्टयपरिमितं कार्य्यमिति शेषः ॥ ९२ ॥

नवेति । इदं नवतालात्मकं बुधैः पण्डितैः ऊर्द्ध्वमानं दैर्घ्यपरिमाणं स्मृतम् ॥ ९४ ॥

शिखावधीति । सर्वमानतः सर्वस्मिन् परिमाणे शिखावधि केशान्तं परिमाणं त्र्यङ्गुलम् अङ्गुलत्रयं ज्ञेयमिति शेषः । अनया दिशा नवतालप्रमाणोक्तया रीत्या इत्यर्थः सप्ताष्टदशतालिकं सप्ततालप्रमाणम् अष्टतालप्रमाणं दशतालप्रमाणञ्च विभजेत् त्रैराशिकक्रमेण विभक्तं कुर्य्यादित्यर्थः ॥ ९५ ॥

चतुरिति । अङ्गुल्यन्तौ अङ्गुलिपर्य्यन्तौ बाहू चतुस्तालात्मकौ तालचतुष्टयपरिमितौ उदाहृतौ कथितौ । स्कन्धादि कूर्परान्तं कफोणिपर्य्यन्तं विंशत्यङ्गुलं विंशत्या अङ्गुलैः परिमितम् उत्तमं ज्ञेयमिति अध्याहार्य्यम् ॥ ९६ ॥

त्रयोदशाङ्गुलं चाधः कलाया: कूर्परान्तकम् ।
अष्टाविंशत्यङ्गुलस्तु मध्यमान्तः करः स्मृतः ॥ ९७ ॥
समाङ्गुलं करतलं मध्या पञ्चाङ्गुला मता ।
सार्धत्रयाङ्गुलोऽङ्गुष्ठस्तर्जनीमूलपर्वभाक् ॥ ९८ ॥
पर्वद्वयात्मकोऽन्यासां पर्वाणि त्रीणि त्रीणि तु ।
अर्धाङ्गुलेनाङ्गुलेन हीनानामा च तर्जनी ।
कनिष्ठिकानामिकातोऽङ्गुलोना च प्रकीर्तिता ॥ ९९ ॥
चतुर्दशाङ्गुलौ पादौ अङ्गुष्ठो द्व्यङ्गुलो मतः ।
सार्धद्वयाङ्गुलोऽङ्गुष्ठसम्मिता वा प्रदेशिनी ।

---

त्रयोदशेति । कलायाः अधः कूर्परान्तकं कफोणिपर्यन्तं त्रयोदशाङ्गुलं त्रयोदशभिरङ्गुलैः परिमितं स्यादित्यर्थः, तथा मध्यमान्तः मध्यमाङ्गुलिपर्यन्तः अष्टाविंशत्या अङ्गुलैः परिमितः करः स्मृतः ॥९७॥

समाङ्गुलमिति । पर्वद्वयात्मक इति । करतलं समाङ्गुलं सप्तभिरङ्गुलैः परिमितं, मध्या मध्यमा अङ्गुलिः पञ्चाङ्गुला पञ्चभिः अङ्गुलैः परिमिता, अङ्गुष्ठः सार्धत्रयाङ्गुलः सार्धेन अङ्गुलत्रयेण परिमितः, तर्जन्या मूलपर्वभाक् प्रथमपर्वपर्यन्तोन्नतः पर्वद्वयात्मकः पर्वद्वितययुक्तः भवेदिति शेषः । अन्यासां तर्जनीप्रभृतीनां त्रीणि त्रीणि पर्वाणि भवन्ति । अनामा अनामिका अङ्गुलिः अर्धाङ्गुलेन, तर्जनी अङ्गुलेन हीना मध्यमाया इति शेषः । तथा कनिष्ठिका कनिष्ठा अङ्गुलिस्तु अनामिकातः अनामायाः अङ्गुलोना एकाङ्गुलहीना प्रकीर्तिता ॥ ९८ ॥
॥ ९८ ॥ ९९ ॥

चतुर्दशाङ्गुलाविति । पादौ चतुर्दशाङ्गुलौ चतुर्दशाङ्गुलपरिमितौ, तत्र अङ्गुष्ठः द्व्यङ्गुलः अङ्गुलद्वयपरिमितः मतः कथितः । गुल्फः सार्धद्वयाङ्गुलः सार्धद्वितयाङ्गुलपरिमितः । प्रदेशिनी तर्जनी अङ्गुष्ठसम्मिता सार्ध-

अष्टोंगिनी द्व्यङ्गुला तु सार्धाङ्गुलमथेतरा: ॥१००॥
शिरोज्झितौ पाणिपादौ गूढगुल्फौ प्रकीर्त्तितौ ॥१०१॥
तद्विधैः प्रस्तुता ये ये मूर्त्तेरवयवा: सदा।
न हीना नाधिका मानात् ते ते ज्ञेया: सुशोभना: ॥१०२
न स्थूला न कृशा वापि सर्वे सर्वमनोरमा: ॥ १०३ ॥
सर्वाङ्गैः सर्वरम्यो हि कश्चिल्लक्षे प्रजायते।
शास्त्रमानेन यो रम्य: स रम्यो नान्य एव हि ॥ १०४ ॥
शास्त्रमानविहीनं यदरम्यं तद्विपश्चिताम्।
एकेषामेव तद्रम्यं लग्नं यत्र च यस्य हृत् ॥ १०५ ॥

---

द्वितयाङ्गुलपरिमिता वा द्व्यङ्गुला अङ्गुलद्वयपरिमिता। इतरा: मध्य-मादय: सार्धाङ्गुलं सार्धाङ्गुलपरिमिता इत्यर्थ: ॥ १०० ॥

शिरोज्झितौ इति। पाणिपादौ शिराभि: उज्झितौ विरहितौ, तथा गुल्फौ गूढौ अप्रकाशौ प्रकीर्त्तितौ कथितौ ॥ १०१ ॥

तद्विधैरिति। ये ये मूर्त्तेः अवयवा: अङ्गानि सदा तद्विधैः अन्यैर्भिन्नैः प्रस्तुता: प्रशंसिता:, ते ते मानात् परिमाणात् न हीना अन्यूना इत्यर्थः तथा नाधिका: अनधिका: अनुरूपा इत्यर्थ: अत एव सुशोभना: ज्ञेया: ॥ १०२ ॥

नेति। किञ्च सर्वे अवयवा: न स्थूला: तथा न कृशाश्चेत् तथा सर्वमनोरमा: भवन्तीति शेष: ॥ १०३ ॥

सर्वाङ्गैरिति। कश्चित् मूर्त्तिभेद: लक्षे दर्शने सर्वाङ्गैः सर्वेषां रम्य: मनोरम: प्रजायते हि भवत्येव किन्तु शास्त्रमानेन शास्त्रपरि-माणेन य: रम्य:, स एव रम्य:, अन्य: शास्त्राप्रमाणेन न हि नैव रम्य इत्यर्थ: ॥ १०४ ॥

शास्त्रेति। शास्त्रमानविहीनं शास्त्रीयपरिमाणविरहं यत् प्रति-बिम्बं तत् विपश्चितां विदुषाम् अरम्यं न मनोरममित्यर्थ:। यत्र

षडङ्गुलं ललाटं स्यात् तावन्मात्रौ भ्रुवौ मतौ ॥ १०६ ॥
अर्धाङ्गुला भ्रुवोर्लेखा मध्ये धनुरिवायता ।
नेत्रे च त्र्यङ्गुलायामे द्व्यङ्गुले विस्तृते शुभे ॥ १०७ ॥
तारका तत्तृतीयांशा नेत्रयोः कृष्णरूपिणी ।
द्व्यङ्गुलं तु भ्रुवोर्मध्यं नासामूलमथाङ्गुलम् ॥ १०८ ॥
नासाग्रविस्तरं तद्वद् द्व्यङ्गुलं तद्बिलद्वयम् ।
शुकनासाकृतिर्नासा पुष्पवद् द्विविधा शुभा ॥ १०९ ॥
निष्पावसदृशं नासापुटयुग्मं सुशोभनम् ॥ ११० ॥

---

यत्र इव इदं वर्मं तत् तत्र रम्यम् इति एकेषां केषाञ्चित् मतमिति शेषः ॥ १०५ ॥

षडङ्गुलमिति । ललाटम् षडङ्गुलम् षडङ्गुलपरिमितं स्यात् । भ्रुवौ च तावन्मात्रे षडङ्गुलपरिमाणे मते ॥ १०६ ॥

अर्धाङ्गुलेति । भ्रुवोः लेखा रेखा मध्ये अर्धाङ्गुला अङ्गुलार्धपरिमिता तथा धनुरिव आयता विस्तृता । नेत्रे च त्र्यङ्गुलायामे अङ्गुलत्रयदैर्घ्ये तथा विस्तृते विस्तारे च द्व्यङ्गुले अङ्गुलद्वयमिते शुभे शोभने च कार्ये इति शेषः ॥ १०७ ॥

तारकेति । नेत्रयोः तारका कृष्णरूपिणी कृष्णवर्णा तत्तृतीयांशा तस्य नेत्रस्य तृतीयांशपरिमिता कार्या इति शेषः । भ्रुवोः मध्यन्तु द्व्यङ्गुलम् अङ्गुलद्वयपरिमितम् । नासामूलञ्च अङ्गुलम् एकाङ्गुलमितं कार्यमिति शेषः ॥ १०८ ॥

नासेति । नासाग्रस्य विस्तरं (स्थौल्यमात्रं बोध्यं) द्व्यङ्गुलं तद्वत् तथा तस्य बिलद्वयञ्च द्व्यङ्गुलमित्यर्थः । नासा नासिका शुकस्य पक्षिणः नासाकृतिः शुकवत् पुष्पाकृतिश्च इति द्विविधा शुभा शुभंकरी ॥ १०९ ॥

निष्पावेति । निष्पावेन शस्यविशेषेण सदृशं नासापुटयोः युग्मं द्वयं सुशोभनम् अतिसुन्दरम् ॥ ११० ॥

कर्णौ च भ्रूसमौ ज्ञेयौ दीर्घौ च चतुरङ्गुलौ ।
कर्णपाली त्र्यङ्गुला स्यात् स्थूला चार्धाङ्गुला मता ॥ १११ ॥
नासावंशोऽर्धाङ्गुलस्तु स्थूलः सार्धाङ्गुलोन्नतः ॥ ११२ ॥
ग्रीवामूलाच्च स्कन्धान्तमष्टाङ्गुलमुदाहृतम् ।
बाह्वन्तरं द्वितालं स्यात् तालमात्रं स्तनान्तरम् ॥ ११३ ॥
षोडशाङ्गुलमात्रं तु कर्णयोरन्तरं स्मृतम् ।
कर्णच्छिद्राग्रान्तरं तु सदैवाष्टाङ्गुलं मतम् ॥ ११४ ॥
नासाकर्णान्तरं तद्वत् तदर्धं कर्णनेत्रयोः ।
मुखं तालतृतीयांशमोष्ठावर्धाङ्गुलौ मतौ ॥ ११५ ॥

---

कर्णाविति । कर्णौ भ्रूसमौ भ्रुवां सदृशौ दीर्घौ चतुरङ्गुलौ च ज्ञातव्यौ । कर्णपाली कर्णायतनं त्र्यङ्गुला अङ्गुलत्रयपरिमिता स्यात् तथा स्थौल्ये स्थूलतायाम् अर्धाङ्गुला मता ॥ १११ ॥

नासेति । नासावंशः नासिकादण्डः त्र्यङ्गुलः अङ्गुलत्रयपरिमितः सार्धाङ्गुलोन्नतः उच्चविशिष्टश्च स्यात् ॥ ११२ ॥

ग्रीवेति । ग्रीवामूलात् स्कन्धान्तं स्कन्धपर्यन्तम् अष्टाङ्गुलम् उदाहृतं कथितम् । किञ्च बाह्वोः भुजयोरन्तरं मध्य द्वितालं तालद्वयपरिमितं तथा स्तनयोरन्तरं मध्यभागः तालमात्रम् एकतालपरिमितं स्यात् ॥ ११३ ॥

षोडशेति । कर्णयोरन्तरं मध्यभागः षोडशाङ्गुलमात्रं स्मृतम् । किञ्च कर्णस्य छिद्रयोरग्रस्य च अन्तरं सदैव अष्टाङ्गुलम् अङ्गुलाष्टकपरिमितं मतम् ॥ ११४ ॥

नासेति । नासाकर्णयोरन्तरं तद्वत् अष्टाङ्गुलमित्यर्थः । कर्णनेत्रयोस्तु अन्तरं तदर्धं चतुरङ्गुलमित्यर्थः । मुखं तालस्य तालकपरिमाणस्य तृतीयांशम् । ओष्ठौ तु अर्धाङ्गुलौ मतौ ॥ ११५ ॥

द्वात्रिंशदङ्गुलः प्रोक्तः परिधिर्मस्तकस्य च ।
दशाङ्गुला विस्तृतिस्तद् द्वादशाङ्गुलदीर्घता ॥ ११६ ॥
ग्रीवामूलस्य परिधिर्द्वाविंशत्यङ्गुलात्मकः ।
कुचमध्यपरिधिश्च चतुःपञ्चाशदङ्गुलः ॥ ११७ ॥
हीनाङ्गुलचतुस्तालपरिधिर्हृदयस्य च ।
आस्तनात् पृष्ठदेशान्ता पृथुता द्वादशाङ्गुला ॥ ११८ ॥
सार्धत्रितालपरिधिः कटग्राश्च द्व्यङ्गुलाधिकः ।
चतुरङ्गुल उत्सेधो विस्तारः स्यात् षडङ्गुलः ॥ ११९ ॥
पश्चाद्भागे नितम्बस्य स्त्रीणामङ्गुलतोऽधिकः ।

---

द्वात्रिंशदिति । मस्तकस्य परिधिः वेष्टनमित्यर्थः द्वात्रिंशदङ्गुलः प्रोक्तः कथितः । तदित्यव्ययं, तत् तस्य मस्तकस्येत्यर्थः विस्तृतिः विस्तारः दशाङ्गुला, द्वादशाङ्गुलदीर्घता च दैर्घ्यं द्वादशाङ्गुलता इत्यर्थः स्यादिति शेषः ॥ ११६ ॥

ग्रीवेति । ग्रीवामूलस्य परिधिः द्वाविंशतिः अङ्गुलाः आत्मानः यस्य तथोक्तः द्वाविंशत्यङ्गुलपरिमित इत्यर्थः । कुचमध्यस्य कुचोमध्यस्येत्यर्थः परिधिः चतुःपञ्चाशदङ्गुलपरिमित इत्यर्थः ॥ ११७ ॥

हीनेति । हृदयस्य परिधिः हीनाङ्गुलचतुस्तालः एकाङ्गुलहीनतालचतुष्टयपरिमित इत्यर्थः । किञ्च आस्तनात् स्तनावधिः पृष्ठदेशान्ता पृष्ठपर्यन्ता पृथुता स्थूलता द्वादशाङ्गुला द्वादशाङ्गुलपरिमिता स्यादित्यर्थः ॥ ११८ ॥

सार्धेति । कटग्राश्च सार्धत्रितालपरिधिः अर्धसहिततालत्रयमितः परिधिः द्व्यङ्गुलाधिकः अङ्गुलद्वयाधिकः, उत्सेधः उच्छ्रायः चतुरङ्गुलः अङ्गुलचतुष्टयमितः तथा विस्तारः षडङ्गुलः अङ्गुलषट्कमितः स्यात् ॥ ११९ ॥

पश्चादिति । स्त्रीणां देवीमूर्तीनां नितम्बस्य पश्चात् भागे परिधिः

बाह्वग्रमूलपरिधिः षोडशाष्टादशाङ्गुलः ॥ १२० ॥
हस्तमूलाग्रपरिधिश्चतुर्दशदशाङ्गुलः ।
पञ्चाङ्गुला पादकरतलयोर्विस्तृतिः स्मृता ॥ १२१ ॥
ऊरुमूलस्य परिधिर्द्वात्रिंशदङ्गुलात्मकः ।
ऊनविंशत्यङ्गुलः स्यादूर्वग्रपरिधिः स्मृतः ॥ १२२ ॥
जङ्घामूलाग्रपरिधिः षोडशद्वादशाङ्गुलः ।
मध्यमामूलपरिधिर्विज्ञेयश्चतुरङ्गुलः ॥ १२३ ॥
तर्जन्यनामिकामूलपरिधिः सार्द्धत्र्यङ्गुलः ।
कनिष्ठिकायाः परिधिर्मूले त्र्यङ्गुल एव हि ॥ १२४ ॥

---

अङ्गुलतः एकाङ्गुलेन अधिकः सार्द्धत्रितालपरिमितः पुंमूर्त्तीनान्तु सार्द्धत्रिताल एव इत्यर्थः । बाह्वोः अग्रस्य मूलस्य च परिधिः क्रमात् षोडशाङ्गुलः अष्टादशाङ्गुलश्च भवति ॥ १२० ॥

हस्तेति । हस्तस्य मूले अग्रे च परिधिः क्रमात् चतुर्दशाङ्गुलः दशाङ्गुलश्च भवति । पादकरतलयोः चरणस्य करतलस्य च विस्तृतिः विस्तारः पञ्चाङ्गुला अङ्गुलपञ्चकपरिमिता स्मृता ॥ १२१ ॥

ऊरुमूलस्येति । ऊरुमूलस्य परिधिः द्वात्रिंशदङ्गुलात्मकः द्वात्रिंशदङ्गुलपरिमितः । ऊर्वोः अग्रयोः परिधिः ऊनविंशत्यङ्गुलः स्यात् ॥ १२२ ॥

जङ्घेति । जङ्घायाः मूलस्य अग्रस्य च परिधिः क्रमात् षोडशाङ्गुलः द्वादशाङ्गुलश्च भवति । मध्यमायाः अङ्गुल्याः मूलपरिधिः चतुरङ्गुलः विज्ञेयः ॥ १२२ ॥

तर्जनीति । तर्जन्याः अनामिकायाश्च मूलपरिधिः सार्द्धत्र्यङ्गुलः अर्द्धसहिताङ्गुलत्रयपरिमितः । कनिष्ठिकायाः मूले परिधिः त्र्यङ्गुलः अङ्गुलत्रितयमित एव हिशब्दः पादपूरणार्थः ॥ १२४ ॥

स्वमूलपरिधेः पादहीनोऽग्रे परिधिः स्मृतः ।
हस्तपादाङ्गुष्ठयोश्च चतुःपञ्चाङ्गुलं क्रमात् ॥ १२५ ॥
पादाङ्गुलीनां परिधिस्त्र्यङ्गुलः समुदाहृतः ।
मण्डलं स्तनयोर्नाभेः सार्धाङ्गुलमथाङ्गुलम् ॥ १२६ ॥
सर्वाङ्गानां यथाशोभि पाटवं परिकल्पयेत् ।
नोर्ध्वदृष्टिमधोदृष्टिं मीलिताक्षीं प्रकल्पयेत् ।
नोग्रदृष्टिन्तु प्रतिमां प्रसन्नाक्षीं विचिन्तयेत् ॥ १२७ ॥
प्रतिमायास्तृतीयांशमर्धांशं तत् सुपीठकम् ॥ १२८ ॥

---

स्वेति । स्वस्य मूले यः परिधिः तस्मात् इति शेषः अग्रे तस्येति शेषः पादहीनः चतुर्थांशन्यूनः परिधिः स्मृतः एतच्च अङ्गुल्यग्रपरिधे-रिति बोध्यम् । हस्तपादाङ्गुष्ठयोः हस्ताङ्गुष्ठस्य पादाङ्गुष्ठस्य च परिधे-र्मानं क्रमात् चतुःपञ्चाङ्गुलं चतुरङ्गुलं पञ्चाङ्गुलमित्यर्थः ॥ १२५ ॥

पादाङ्गुलीनामिति । पादाङ्गुलीनाम् अङ्गुष्ठव्यतिरिक्तानामित्यर्थः अङ्गुष्ठस्य पूर्वमुक्तत्वादिति भावः परिधिः त्र्यङ्गुलः अङ्गुल-त्रयमितः समुदाहृतः । स्तनयोः नाभेश्च मण्डलं परिधिः सार्धाङ्गुलम् अर्धसहितैकाङ्गुलम् अङ्गुलम् एकाङ्गुलपरिमितञ्च क्रमात् विधेय-मिति शेषः ॥ १२६ ॥

सर्वाङ्गानामिति । यथाशोभि यथा शोभते इत्यर्थः तथा सर्वाङ्गानां पाटवं सौष्ठवं परिकल्पयेत् । तथा ऊर्ध्वदृष्टिम् अधोदृष्टिं वा मीलि-ताक्षीं मुद्रितनयनां मूर्त्तिमिति शेषः न प्रकल्पयेत् । किञ्च उग्रदृष्टिं भीषणाक्षीं प्रतिमां प्रसन्नाक्षीं प्रसन्ननयनां न विचिन्तयेत् ॥ १२७ ॥

प्रतिमाया इति । प्रतिमायाः तत् प्रसिद्धमित्यर्थः सुपीठकं शोभनं पीठं आसनमित्यर्थः तृतीयांशम् अर्धांशं वा यादृशी प्रतिमा तत्तृ-तीयांशं तदर्धांशं वा इत्यर्थः कल्पयेदिति पूर्वेणान्वयः ॥ १२८ ॥

द्विगुणं त्रिगुणं द्वारं प्रतिमायाश्चतुर्गुणम् ।
एकद्वित्रिचतुर्हस्तं पीठं देवालयस्य च ॥ १२९ ॥
पीठतस्तु समुच्छ्रायो भित्तेर्द्वयकराधिकः ।
द्वारात् तु द्विगुणोच्छ्रायः प्रासादस्योर्ध्वभूमिभाक् ।
शिखरं चोच्छ्रायसमं द्विगुणं त्रिगुणं तु वा ॥१३०॥
एकभूमिं समारभ्य सपादशतभूमिकम् ॥ १३१ ॥
प्रासादं कारयेच्छक्त्या अष्टास्रं पद्मसन्निभम् ।
चतुर्दिङ्मुखरूपं वापि चतुःशालं समन्ततः ॥ १३१ ॥
सहस्रस्तम्भसंयुक्तश्चोत्तमोऽन्यः समोऽधमः ॥ १३२ ॥

---

द्विगुणमिति । देवालयस्य द्वारं प्रतिमायाः द्विगुणं त्रिगुणं वा चतुर्गुणं कार्य्यमिति शेषः । पीठञ्च एकद्वित्रिचतुर्हस्तम् एकहस्तं द्विहस्तं त्रिहस्तं चतुर्हस्तं वा प्रतिमाभेदेन कल्पनीयमिति शेषः ॥ १२९ ॥

पीठत इति । भित्तेः देवगृहस्येति शेषः समुच्छ्रायः औन्नत्यं पीठतः पीठात् द्वयकराधिकः द्विहस्ताधिकः कार्य्य इति शेषः । प्रासादस्य द्वारात् द्विगुणोच्छ्रायः द्विगुणमौन्नत्यम् ऊर्ध्वभूमिभाक् उपरितनगामी स्यात् । किञ्च शिखरं प्रासादस्येति शेषः उच्छ्रायेण समं सदृशम् तत्तुल्यमित्यर्थः द्विगुणं त्रिगुणं वा कल्पयेदिति शेषः ॥ १३० ॥

एकभूमिमिति । एकभूमिम् एकां भूमिं समारभ्य सपादशतभूमिकं पादाधिकशतभूमिपर्य्यन्तम् अष्टास्रम् अष्टकोणं पद्मसन्निभं पद्माकारं चतुर्दिङ्मुखरूपं चतुर्दिक्षु सर्व्वासु मुखसमन्वितं समन्ततः चतुःशालं मुखचतुष्टययुक्तं वा प्रासादं यथाशक्ति शक्त्यनुसारेण कारयेत् ॥ १३१ ॥

सहस्रेति । सहस्रस्तम्भेन संयुक्तः प्रासादः उत्तमः, ततो न्यूनः समः मध्यमः, ततोऽपि न्यूनः अधमः ॥ १३२ ॥

प्रासादे मण्डपे वापि शिखरं यदि कल्प्यते ।
स्तम्भास्तत्र न कर्त्तव्या भित्तिस्तत्र सुखप्रदा ॥ १२२ ॥
प्रासादमध्यविस्तारः प्रतिमायाः समन्ततः ।
षड्गुणोऽष्टगुणो वापि पुरतो वा सुविस्तरः ॥ १२४ ॥
वाहनं मूर्त्तिसदृशं सार्द्धं वा द्विगुणं स्मृतम् ।
यत्र नोक्तं देवताया रूपं तत्र चतुर्भुजम् ॥ १२५ ॥
अभयं च वरं दद्यात् यत्र नोक्तं यदायुधम् ।
अधःकरे तूर्ध्वकरे शङ्खं चक्रं तथाङ्कुशम् ॥ १२६ ॥
पाशं वा डमरुं शूलं कमलं कलसं स्रुवम् ।
खड्गकं मातुलुङ्गं वा वीणां मालां च पुस्तकम् ॥ १२७ ॥

---

प्रासादे इति । प्रासादे मण्डपे वापि यदि शिखरं कल्प्यते, तदा तत्र स्तम्भाः न कर्त्तव्याः, तत्र भित्तिरेव सुखप्रदा शोभना इत्यर्थः ॥ १२२ ॥

प्रासादेति । प्रासादमध्यस्य प्रासादाभ्यन्तरभागस्य समन्ततः विस्तारः प्रतिमायाः षड्गुणः अष्टगुणो वा, पुरतः अग्रतस्तु प्रतिमाया इति शेषः विस्तारः सुविस्तरः समधिकः कल्प्य इति शेषः ॥ १२४ ॥

वाहनमिति । वाहनं देवताया इति शेषः मूर्त्तिसदृशं सार्द्धम् अर्द्धसहितं वा द्विगुणं मूर्त्तेरिति शेषः स्मृतं कथितम् । यत्र देवतायाः रूपं न उक्तं तत्र चतुर्भुजं ज्ञेयमिति शेषः ॥ १२५ ॥

अभयमिति । पाशमिति । यत्र यस्य देवस्य आयुधम् अस्त्रं न उक्तं, तत्र अधःकरे अभयं वरञ्च यथाक्रमेण, ऊर्द्ध्वकरे तु शङ्खं चक्रम् अङ्कुशं पाशं डमरुं शूलं कमलं कलसं स्रुवं यज्ञाङ्गविशेषं, खड्गकं, मातुलुङ्गं, वीणां, मालां वा पुस्तकं यथारुचि दद्यात् ॥ १२६ ॥ १२७ ॥

मुखानां यत्र बाहुल्यं तत्र पंक्त्या निवेशनम् ।
तत् पृथग् ग्रीवमुकुटं सुमुखं स्वक्षिकर्णयुक् ॥ १३८ ॥
भुजानां यत्र बाहुल्यं न तत्र स्कन्धभेदनम् ॥ १३९ ॥
कूर्परोर्ध्वन्तु सूक्ष्माणि चिपिटानि दृढानि च ।
भुजमूलानि कार्याणि पक्षमूलानि वै यथा ॥ १४० ॥
अष्टास्तु चतुर्दिक्षु मुखानां विनियोजनम् ॥ १४१ ॥
हयग्रीवो वराहश्च नृसिंहश्च गणेश्वरः ।
मुखैर्विना नराकारो नृसिंहश्च नखैर्विना ॥ १४२ ॥

---

मुखानामिति । यत्र मुखानां बाहुल्यं बहुत्वमित्यर्थः, तत्र पङ्क्त्या श्रेणीक्रमेण निवेशनं मुखानामिति कार्यमिति च शेषः । तत् प्रत्येकं मुखमित्यर्थः पृथग्ग्रीवमुकुटं पृथग्ग्रीवं पृथङ्मुकुटं सुमुखं सुप्रसन्नवदनं स्वक्षिकर्णयुक् शोभननयनकर्णयुतं कार्यमिति शेषः ॥ १३८ ॥

भुजानामिति । यत्र भुजानां बाहुल्यं बहुभुजमूर्त्तिरित्यर्थः तत्र मूर्त्तौ स्कन्धयोः भेदनं बाहुल्यं न कार्यम् ॥ १३९ ॥

कूर्परोर्ध्वमिति । कूर्परस्य कफोणेः ऊर्ध्वन्तु भुजमूलानि यथा पक्षयोः पार्श्वयोः मूलानि, तथा सूक्ष्माणि चिपिटानि दृढानि च कार्याणि ॥ १४० ॥

अष्टास्य इति । अष्टास्यस्तु मुखानां चतुर्णां विनियोजनं विनिवेशनं चतुर्दिक्षु कर्त्तव्यं न तु पङ्क्तिक्रमेणेत्यर्थः ॥ १४१ ॥

हयग्रीव इति । हयग्रीवः वराहः नृसिंहः गणेश्वरश्च मुखैर्विना नराकारः मानवाकृतिः कार्यः तथाच हयग्रीवस्य मुखम् अश्वस्येव, वराहस्य मुखं शूकरस्येव, नृसिंहस्य मुखं सिंहस्येव, गणेश्वरस्य मुखं हस्तिन इवेति बोध्यम् । नृसिंहः नखैश्च विना नराकारः कार्यः नृसिंहस्य नखाः सिंहस्येवेति भावः ॥ १४२ ॥

मृगवाद्याभयवरहस्ता सोमस्य सात्त्विकी ॥ १४७ ॥
वराभयाब्जलड्डुकहस्तेभास्यस्य सात्त्विकी ।
पद्ममालाभयवरकरा सत्त्वाधिका रवेः ॥ १४८ ॥
वीणालुङ्गाभयवरकरा सत्त्वगुणा श्रियः ॥ १४९ ॥
शङ्खचक्रगदापद्मैरायुधैरादितः पृथक् ।
षट् षड्भेदाश्च मूर्त्तीनां विष्ण्वादीनां भवन्ति हि ॥१५०॥
यथोपाधिप्रभेदेन ससंयोगविभागतः ।
समस्तव्यस्तवर्णादिभेदज्ञानं प्रजायते ॥ १५१ ॥
लेख्या लेप्या सैकती च मृण्मयी पैष्टिकी तथा ।

---

अभयम्, अब्जं पद्मं, शङ्खञ्च क्रमेण दधतीत्यर्थः मूर्त्तिः सात्त्विकी सत्त्वगुणा। सोमस्य चन्द्रस्य मृगवाद्याभयवरहस्ता भुजचतुष्टयेन मृगं वाद्यम् अभयं वरञ्च क्रमेण दधतीत्यर्थः मूर्त्तिः सात्त्विकी । इभास्यस्य हस्तिमुखस्य गणेशस्य इत्यर्थः वराभयाब्जलड्डुकहस्ता भुजचतुष्टयेन वरम् अभयम् अब्जं लड्डुकञ्च दधतीत्यर्थः मूर्त्तिः सात्त्विकी । रवेः सूर्य्यस्य पद्ममालाभयवरकरा भुजचतुष्टयेन पद्मं मालाम् अभयं वरञ्च दधतीत्यर्थः मूर्त्तिः सत्त्वाधिका सात्त्विकीत्यर्थः । श्रियः लक्ष्म्याः वीणालुङ्गाभयवरकरा भुजचतुष्टयेन वीणां लुङ्गम् अभयं वरञ्च दधतीत्यर्थः मूर्त्तिः सत्त्वगुणा सात्त्विकीत्यर्थः ॥ १४७ ॥ १४८ ॥ १४९ ॥

शङ्खेति । विष्ण्वादीनां मूर्त्तीनां शङ्खचक्रगदापद्मैः पृथक् विभिन्नैः आयुधैरस्त्रैश्च आदितः प्रथमतः षट् षट् भेदाश्च भवन्ति हि-शब्दोऽवधारणार्थः ॥ १५० ॥

यथेति । उपाधीनां नाम्नां प्रभेदेन यथा इव ससंयोगविभागतः सह संयोगानां वाहनास्त्रादियोगानां विभागेन पार्थक्येन समस्तानां समग्राणां व्यस्तानाम् एकैकेषाञ्च वर्णादीनां भेदज्ञानं प्रजायते भवति ॥ १५१ ॥

लेख्येति । लेख्या चित्रिता, लेप्या लेपमयी, सैकती सिकतामयी,

एतासां लक्षणाभावे न कश्चिद्दोष ईरितः ॥ १५२ ॥
बाणलिङ्गे स्वयम्भूते चन्द्रकान्तसमुद्भवे ।
रत्नजे गण्डकोद्भूते मानदोषो न सर्वथा ।
पाषाणधातुजायां तु मानदोषान् विचिन्तयेत् ॥ १५३ ॥
श्वेतपीतारक्तकृष्णपाषाणैर्युगभेदतः ।
प्रतिमां कल्पयेच्छिल्पी यथारुच्यपरैः स्मृता ॥ १५४ ॥
श्वेता स्मृता सात्त्विकी तु पीता रक्ता तु राजसी ।
तामसी कृष्णवर्णा तु युक्तलक्षणयुता यदि ॥ १५५ ॥
सौवर्णी राजती ताम्री रैतिकी वा कृतादिषु ॥ १५६ ॥

---

मृन्मयी शर्करामयी तथा पैष्टिकी पिष्टमयी च याः प्रतिमाः उक्ताः, एतासां लक्षणाभावे वर्णस्य अभावे अरक्तायां कश्चित् जनैः दोषः न ईरितः उक्तः, एता यथारुचि कर्त्तव्या इति भावः ॥ १५२ ॥

बाणलिङ्ग इति । स्वयम्भूते, चन्द्रकान्तसमुद्भवे चन्द्रमणिसम्भूते रत्नजे, गण्डकोद्भूते च बाणलिङ्गे सर्वथा सर्वप्रकारेण मानदोषः परिमाणदोषः न अस्तीति शेषः । केवलं पाषाणधातुजायां पाषाणमय्यां धातुमय्याञ्च प्रतिमायां मानदोषान् विचिन्तयेत् ॥ १५३ ॥

श्वेतेति । शिल्पी युगभेदतः युगभेदानुसारेण श्वेतैः पीतैः आरक्तैः आलोहितैः कृष्णैश्च पाषाणैः प्रतिमां कल्पयेत् । यथारुचि अपरैः द्वापरादिभिश्च कृता यद्वा कथिता प्रतिमेति शेषः ॥ १५४ ॥

श्वेतेति । यदि उक्तैः पूर्वकथितैः लक्षणैः युता, तदा श्वेता श्वेतवर्णा प्रतिमा सात्त्विकी स्मृता । पीता पीतवर्णा रक्ता रक्तवर्णा च राजसी । कृष्णवर्णा तु तामसी स्मृता ॥ १५५ ॥

सौवर्णीति । कृतादिषु सत्यत्रेताद्वापरकलिषु यथाक्रमं सौवर्णी, राजती, ताम्री, रैतिकी विधातव्या ॥ १५६ ॥

शाङ्करी श्वेतवर्णा वा कृष्णवर्णा तु वैष्णवी ।
सूर्य्यशक्तिगणेशानां ताम्रवर्णा स्मृतास्ति च ।
लोहसीसमयी वापि यथोद्दिष्टा स्मृता बुधैः ॥ १५७ ॥
चलार्चायां स्थिरार्चायां प्रासादादिषु लक्षणाम् ।
प्रतिमां स्थापयेन्नान्यां सर्वसौख्यविनाशिनीम् ॥ १५८ ॥
सेव्यसेवकभावेषु प्रतिमालक्षणं स्मृतम् ॥ १५९ ॥
प्रतिमायाश्च ये दोषा ह्यर्चकस्य तपोबलात् ।
सर्वत्रेश्वरचित्तस्य नाशं यान्ति क्षणात् किल ॥ १६० ॥

---

शाङ्करीति । शाङ्करी शिवमूर्त्तिः श्वेतवर्णा, वैष्णवी विष्णुमूर्त्तिः कृष्णवर्णा, सूर्य्यशक्तिगणेशानां सूर्य्यस्य शक्तेः गणेशस्य च इत्यर्थः मूर्त्तिः ताम्रवर्णा स्मृता, अपि अथवा लोहसीसमयी लोहमयी सीसमयी च यथा उद्दिष्टा शास्त्रे कथिता तथा बुधैः स्मृता ॥ १५७ ॥

चलार्चायामिति । चलार्चायां चलदिनकृतिपूजायां वा स्थिरार्चायां चिरपूजायां प्रासादादिषु लक्षणवतीं प्रतिमां स्थापयेत् न अन्याम् लक्षणविहीनामित्यर्थः अत एव सर्वसौख्यविनाशिनीम् अखिलसुखविध्वंसिनीं प्रतिमामिति शेषः ॥ १५८ ॥

सेव्येति । सेव्यसेवकभावेषु विषयेषु न तु आमोदप्रमोदार्थेषु तत्र यथेच्छकल्पनायाः सम्भवादिति भावः प्रतिमायाः लक्षणम् उक्तरूपं स्मृतं कथितम् ॥ १५९ ॥

प्रतिमाया इति । प्रतिमायाश्च ये दोषाः, ते सर्वथा सर्वप्रकारेण ईश्वरचित्तस्य ईश्वरानुरक्तस्य अर्चकस्य सेवकस्य तपोबलात् क्षणात् किल निश्चितं नाशं यान्ति विनश्यन्तीत्यर्थः, यदि प्रतिमायां कश्चित् दोषः अस्ति तदा सेवकः तपोबलेन तत्क्षणात् तद्दुरदृष्टं नाशयितुं शक्नोतीति भावः ॥ १६० ॥

देवतायाश्च पुरतो मण्डपे वाहनं न्यसेत् ।
द्विबाहुर्गरुड़: प्रोक्तः सुचक्षुः स्वच्छपक्षयुक् ॥ १६१ ॥
नराकृतिश्चञ्चुमुखो मुकुटी कवचाङ्गदी ।
बद्धाञ्जलिर्नम्रशीर्षः सेव्यपादाब्जलोचनः ॥ १६२ ॥
वाहनत्वं गता ये ये देवतानां च पक्षिणः ।
कामरूपधरास्ते ते तथा सिंहवृषादयः ॥ १६३ ॥
स्वनामाकृतयश्चैते कार्या दिव्या बुधैः सदा ।
सुभूषिता देवताग्रमण्डपे ध्यानतत्पराः ॥ १६४ ॥
मार्जाराकृतिकः पीतः कृष्णचिह्नो बृहद्वपुः ।
सघटो व्याघ्र इत्युक्तः सिंहः सूक्ष्मकटिर्महान् ॥ १६५ ॥

---

देवतायाश्चेति । नराकृतिरिति । देवतायाः पुरतः अग्रतः मण्डपे वाहनं न्यसेत् स्थापयेत् । गरुड़ः विष्णुवाहनं द्विबाहुः द्विभुजः सुचक्षुः शोभनचक्षुः, स्वच्छपक्षयुक् शोभनपक्षः सुनयनः नराकृतिः मानवावयवः चञ्चुमुखः मुकुटी मुकुटधारी कवचाङ्गदी कवची अङ्गदवान्, बद्धाञ्जलिः कृताञ्जलिः नम्रशीर्षः नतशिराः तथा सेव्यस्य स्वप्रभोः पादाब्जे पादपद्मे लोचने नयने यस्य तथाभूतः स्थाप्य इति शेषः ॥ १६१ ॥ १६२ ॥

वाहनत्वमिति । स्वनामाकृतय इति । ये ये पक्षिणः तथा सिंहवृषादयः देवतानां वाहनत्वं गताः, ते ते कामरूपधराः स्वेच्छाधीनविग्रहाः । एते च बुधैः विद्वद्भिः स्वनामाकृतयः स्वनाम्ना निजनामानुसारेण आकृतयः येषां तथाभूताः दिव्याः सुभूषिताः सुष्ठु अलङ्कृताः तथा ध्यानतत्पराः ध्याननिष्ठाः देवतानाम् अग्रे सदा कार्याः ॥ १६३ ॥ १६४ ॥

मार्जाराकृतिक इति । इत्यादि । मार्जारस्य आकृतिरिव आकृतिर्यस्य तादृशः पीतः पीतवर्णः कृष्णचिह्नः श्यामवर्णचिह्नविशिष्टः

बृहद्भ्रू गण्डनेत्रस्तु बालवेशो मनोहरः।
सटावान् धूसरोऽलक्ष्यलाञ्छनश्च महाबलः॥ १६६॥
भेदः सटालाञ्छनतो नाकृत्या व्याघ्रसिंहयोः॥ १६७॥
गजाननं नराकारं ध्वस्तकर्णं पृथूदरम्।
बृहत्संश्लिष्टगहनपीनस्कन्धाङ्घ्रिपाणिनम्॥ १६८॥
बृहत्कुण्डं मत्तकामरदमोपिततवाहनम्।
ईषत्कुटिलदण्डाग्रवामशुण्डमदक्षिणम्।
सत्त्वस्थिधमनीगूढं कुर्यान्मानमितं सदा॥ १६९॥

---

बृहद्वपुः महाकायः, असटः जटारहितः जन्तुः व्याघ्र इति चक्षुः कथितः। लम्बकटिः लम्बमध्यभागः महान् बृहदाकारः बृहद्भ्रू गण्डनेत्रः विशालभ्रूः बृहद्गण्डः दीर्घचक्षुः बालवेशः शिशुवेशधरः मनोहरः सटावान् जटावान् धूसरः धूसरवर्णः अलक्ष्यलाञ्छनः अदृश्यचिह्नः महाबलश्च सिंहः इति चक्षुः॥ १६५॥ १६६॥

भेद इति। सटाभिः जटाभिः लाञ्छनैः लक्षणचिह्नैश्च व्याघ्रसिंहयोः भेदः, आकृत्या अवयवेन न, आकृतिरनयोः प्रायशस्तुल्यैव केवलं जटाचिह्नैः भेद इत्यर्थः॥ १६७॥

कथ्यति गणेशाकृतिं निरूपयति गजाननमिति। बृहदिति। नराकारं ध्वस्तकर्णं लम्बकर्णं पृथूदरं स्थूलोदरं बृहन्तः, संश्लिष्टाः, गहनाः घनाः, पीनाः स्थूलाश्च स्कन्धौ अङ्घ्री चरणौ पाणयः कराश्च यस्य तथोक्तं बृहत्कुण्डं विशालशुण्डादण्डं मत्तकामरदं कामदन्तहीनम् ईषत्सित-वाहनं प्रियवाहनम् ईषत्कुटिलेन दण्डाग्रेण वामा शोभना शुण्डा यस्य तम् अदक्षिणं नास्ति दक्षिणः अपरवर्णो यस्य मूषकोऽयः अथात् वाहनं यस्य मूषकमित्यर्थः सत्त्वास्थिधमनीगूढं सन्धिषु अवयवसंश्लेषु अस्थिषु, धमनीषु शिरासु च गूढम् अव्यक्तसन्धिम् अव्यक्तास्थिम् अव्यक्त-धमनीकमित्यर्थः तथा सदा मानमितं यथाप्रमाणं गजाननं गणेशं कुर्यात्॥ १६८॥ १६९॥

सार्द्धचतुस्तालमितः शुण्डादण्डः समन्ततः ।
दशाङ्गुलं मस्तकं च मुगण्डश्चतुरङ्गुलः ॥ १७० ॥
नासोत्तरोष्ठरूपा च शेषा शुण्डा सपुष्करा ।
दशाङ्गुलं कर्णदैर्घ्यं तदष्टाङ्गुलविस्तृतम् ॥ १७१ ॥
कर्णयोरन्तरे व्यासो द्व्यङ्गुलस्तालसम्मितः ।
मस्तकेऽस्यैव परिधिर्ज्ञेयः षट्त्रिंशदङ्गुलः ॥ १७२ ॥
नेत्रोपान्ते च परिधिः शीर्षतुल्यः सदा मतः ।
सद्व्यङ्गुलद्वितालः स्यान्नेत्राधःपरिधिः करे ॥१७३॥
कराग्रे परिधिर्ज्ञेयः पुष्करे च दशाङ्गुलः ।
त्र्यङ्गुलं कण्ठदैर्घ्यं तत्परिधिस्त्रिंशदङ्गुलः ॥ १७४ ॥

---

सार्द्धेति । समन्ततः सर्वतः सार्द्धैः चतुर्भिः तालैः मितः परिमितः शुण्डादण्डः, दशाङ्गुलम् अङ्गुलदशकमितं मस्तकं, चतुरङ्गुलः भ्रूदण्डश्च कार्य्य इति शेषः ॥ १७० ॥

नासेति । शुण्डा नासाया उत्तरः परवर्त्ती य ओष्ठः तद्रूपा कियतीत्यर्थः शेषा अवशिष्टा सपुष्करा: पुष्करसहिता कार्य्या इति शेषः, कर्णयोः दैर्घ्यं दशाङ्गुलं तयोः कर्णयोः अष्टाङ्गुलविस्तृतम् अङ्गुलाष्टकं विस्तार इत्यर्थः ॥ १७१ ॥

कर्णयोरिति । कर्णयोः अन्तरे मध्ये व्यासः वेधपरिमाणमित्यर्थः द्व्यङ्गुलः अङ्गुलद्वयाधिकः तालसम्मितः तालप्रमाणः । अस्यैव गणेशस्य मस्तके परिधिः षट्त्रिंशदङ्गुलः ज्ञेयः ॥ १७२ ॥

नेत्रोपान्ते इति । कराग्रे इति । नेत्रयोः उपान्ते च यः परिधिः सः सदा शीर्षतुल्यः मस्तकसदृशः मतः कथितः । नेत्रयोः अधः निम्नदेशे परिधिश्च सद्व्यङ्गुलद्वितालः अङ्गुलद्वयसहितद्वितालः स्यात् । करे शुण्डादण्डे कराग्रे शुण्डाग्रे पुष्करे च परिधिः दशाङ्गुलः

परिणाहस्तूदरे च चतुस्तालान्विकः सदा।
षडङ्गुलो नियोक्तव्योऽष्टाङ्गुलो वापि शिल्पिभिः ॥१७५॥
दन्तः षडङ्गुलो दीर्घस्तन्मूलपरिधिस्तथा।
षडङ्गुलश्चाधरोष्ठः पुष्करं कमलान्वितम् ॥ १७६ ॥
जङ्घमूलस्य परिधिः षट्त्रिंशदङ्गुलो मतः।
त्रयोविंशत्यङ्गुलः स्यादूर्वंशपरिधिस्तथा ॥ १७७ ॥
जङ्घामूले तु परिधिर्विंशत्यङ्गुलसम्मितः।
परिधिर्बाहुमूलादेरधिको द्व्यङ्गुलोऽङ्गुलः ॥ १७८ ॥
कर्णनेत्रान्तरं नित्यं विज्ञेयं चतुरङ्गुलम्।
मूलमध्याग्रान्तरं तु दशसप्तषडङ्गुलम्।

---

ज्ञेयः। कण्ठस्य दैर्घ्यं त्र्यङ्गुलम् अङ्गुलत्रयपरिमितं तस्य कण्ठस्य परिधिश्च त्रिंशदङ्गुलः ज्ञेय इति शेषः ॥ १७३ ॥ १७४ ॥

परिणाह इति। उदरे च परिणाहः दैर्घ्यं चतुस्तालान्विकः तालचतुष्टयप्रमाणः षडङ्गुलः अङ्गुलषट्काधिकः वा अष्टाङ्गुलः अङ्गुलाष्टकाधिकः शिल्पिभिः निर्मातृभिः सदा नियोक्तव्यः कार्य्य इत्यर्थः ॥ १७५ ॥

दन्त इति। दन्तः दैर्घ्ये षडङ्गुलः, तत्र दन्तस्य मूलपरिधिः मूलवेष्टनञ्च तथा षडङ्गुल इत्यर्थः, अधरोष्ठश्च षडङ्गुलः तथा पुष्करं कमलेन पद्मेन अन्वितं युक्तं कार्य्यमिति शेषः ॥ १७६ ॥

जङ्घमूलस्येति। जङ्घमूलस्य परिधिः षट्त्रिंशदङ्गुलः मतः, तथा ऊर्वोः वंशस्य परिधिः त्रयोविंशत्यङ्गुलः स्यात् ॥ १७७ ॥

जङ्घेति। जङ्घयोर्मूले परिधिः विंशत्यङ्गुलसम्मितः, तथा बाहुमूलादेः परिधिः अधिकद्व्यङ्गुलः अङ्गुलः अङ्गुलत्रयपरिमित इत्यर्थः ॥ १७८ ॥

कर्णेति। कर्णनेत्रयोः अन्तरं मध्यभागः नित्यं सततं चतु-

नेत्रयोः कथितं तज्ज्ञैर्गम्भपद्म विशेषतः ॥ १७९ ॥
उत्सेधः पृथुता स्त्रीणां स्तने षडङ्गुला मता ॥ १८० ॥
स्त्रीकट्यां परिधिः प्रोक्तस्त्रिताल्नो द्वाङ्गुलाधिकः ।
स्त्रीणामवयवान् सर्वान् सप्ततालैर्विभावयेत् ॥ १८१ ॥
सप्ततालादिमानेऽपि मुखं स्याद् द्वादशाङ्गुलम् ।
बाल्वादीनामपि सदा दीर्घता तु पृथक् पृथक् ॥१८२॥
शिशोस्तु कन्धरा ह्रस्वा पृथु शीर्षं प्रकीर्त्तितम् ।
कण्ठाधो वर्द्धते यादृक् तादृक् शीर्षं न वर्द्धते ॥ १८३ ॥
कण्ठाधो मुखमानेन बालः सार्द्धचतुर्गुणः ।

---

दङ्गुलं, तथा अनयोः नुवान्तरं मध्यान्तरम् अग्रान्तरन्तु द्वयष्ट-षडङ्गुलं क्रमेण द्वयाङ्गुलं षष्ठाङ्गुलं षडङ्गुलञ्चेत्यर्थः विशेषतः। तज्ज्ञैः तद्विज्ञैः पण्डितैः गम्भपद्म गर्भपद्म नेत्रयोः विशेषतः विशेषेण नेत्रयोः इत्थं कथितम् ॥ १७९ ॥

उत्सेध इति। स्त्रीणां शक्तिमूर्त्तीनां स्तने उत्सेधः उच्चतायः पृथुता स्थूलता च षडाङ्गुला षडङ्गुलपञ्चपरिमिता मता ॥ १८० ॥

स्त्रीकट्यामिति। स्त्रीणां शक्तिमर्त्तीणां कट्यां परिधिः द्व्यङ्गुला-धिकः अङ्गुलद्वयाधिकः त्रितालः तावन्मवमितः प्रोक्तः कथितः। स्त्रीणां सर्वान् अवयवान् सप्ततालैः सप्तभिः तालाख्यपर्यायैः विभावयेत् निश्चिनुयात् सप्ततालपरिमितान् कुर्य्यादित्यर्थः ॥ १८१ ॥

सप्तेति। सप्ततालादिमाने तालसप्तकादिपरिमाणे सत्यपि मुखं द्वादशाङ्गुलं स्यात् स्त्रीणामिति शेषः। किन्तु बाल्वादीनां देवमूर्त्तिभेदानाम् अपि सदा पृथक् पृथक् दीर्घता ज्ञेया इति शेषः ॥ १८२ ॥

शिशोरिति। शिशोः बालकस्य देवमूर्त्तिभेदस्य कन्धरा ग्रीवा ह्रस्वा खर्वा, तथा शीर्षं मस्तकं पृथु विशालं प्रकीर्त्तितं यतः कण्ठाधः कण्ठस्य अधः निम्नदेशः यादृक् वर्द्धते शीर्षं तादृक् न वर्द्धते ॥ १८३ ॥

कण्ठाध इति। बालः शिशुः देवमूर्त्तिभेदः मुखमानेन मुखस्य

द्विगुणः शिश्नपर्य्यन्तो ह्यधः शेषं तु सक्थितः ॥ १८४ ॥
सपादद्विगुणौ हस्तौ द्विगुणौ वा सुखेन हि ।
स्थौल्ये तु नियमो नास्ति यथाशोभि प्रकल्पयेत् ॥१८५॥
नित्यं प्रवर्द्धते बालः पञ्चाब्दात् परतो भृशम् ।
स्यात् षोड़शेऽब्दे सर्वाङ्गपूर्णा स्त्री विंशतौ पुमान् ॥१८६
ततोऽर्हति प्रमाणं तु सप्ततालादिकं सदा ।
कश्चिद् बाल्येऽपि शोभाढ्यस्तारुण्ये वार्द्धके क्वचित् ॥१८७
मुखाधस्त्र्यङ्गुला ग्रीवा हृदयं तु नवाङ्गुलम् ।
तथोदरं च वस्तिश्च सक्थि त्वष्टादशाङ्गुलम् ॥ १८८ ॥

---

परिमाणापेक्षयेत्यर्थः कण्ठस्य अधः निम्नदेशे सार्द्धचतुर्गुणः अर्द्धवर्द्धितचतुर्गुणप्रमाण इत्यर्थः । सक्थितः ऊरुदेशात् शेषम् अवशिष्टम् अधः निम्नभागः शिश्नपर्य्यन्तं लिङ्गपर्य्यन्तं द्विगुणः कार्य्य इति शेषः ॥१८४॥

सपादेति । हस्तौ मुखेन मुखपरिमाणापेक्षयेत्यर्थः सपादद्विगुणौ वा द्विगुणौ कार्य्यौ इति शेषः । स्थौल्ये स्थूलतायान्तु नियमः नास्ति, यथाशोभि तथा प्रकल्पयेत् कुर्य्यादित्यर्थः ॥ १८५ ॥

नित्यमिति । बालः पञ्चाब्दात् पञ्चवत्सरात् परतः ऊर्द्ध्वं नित्यं भृशम् अतिशयेन प्रवर्द्धते वृद्धिं गच्छति । स्त्री षोड़शे अब्दे वत्सरे सर्वाङ्गपूर्णा, पुमान् पुरुषः विंशतौ अब्दे सर्वाङ्गपूर्णः स्यात् ॥ १८६ ॥

तत इति । ततः यौवने इत्यर्थः सप्ततालादिकं प्रमाणम् अवयवपरिमाणं सदा अर्हति । कश्चित् मूर्त्तिभेदः बाल्येऽपि शैशवेऽपि शोभाढ्यः शोभनः, तारुण्ये यौवने, वार्द्धके वृद्धावस्थायाञ्च कश्चित् शोभाढ्य इति शेषः ॥ १८७ ॥

सप्ततालस्य मूर्त्तिभेदस्य प्रकारमाह मुखाध इति । त्र्यङ्गुलमिति च । मुखस्य अधः निम्नतः ग्रीवा त्र्यङ्गुला अङ्गुलत्रयमिता, हृदयं वक्षः नवाङ्गुलं नवाङ्गुलप्रमाणं, तथा उदरं वस्तिः नाभ्यधोभागश्च

त्र्यङ्गुलं तु भवेज्जानु जङ्घा त्वष्टादशाङ्गुला ।
गुल्फाधस्त्र्यङ्गुलं ज्ञेयं सप्ततालस्य सर्वदा ॥ १८९ ॥
वेदाङ्गुला भवेद् ग्रीवा हृदयं तु दशाङ्गुलम् ।
दशाङ्गुलं चोदरं स्याद् वस्तिश्चैव दशाङ्गुलः ॥ १९० ॥
एकविंशाङ्गुलं सक्थि जानु स्याच्चतुरङ्गुलम् ।
एकविंशाङ्गुला जङ्घा गुल्फाधश्चतुरङ्गुलम् ॥ १९१ ॥
अष्टतालप्रमाणस्य मानमुक्तमिदं सदा ॥ १९२ ॥
त्रयोदशाङ्गुलं ज्ञेयं मुखञ्च हृदयं तथा ॥ १९३ ॥
उदरं च तथा वस्तिर्दशतालेषु सर्वदा ।
गुल्फाधश्च तथा ग्रीवा जानु पञ्चाङ्गुलं स्मृतम् ॥१९४॥
षड्विंशत्यङ्गुलं सक्थि तथा जङ्घा प्रकीर्त्तिता ।
एकाङ्गुलो मूर्ध्नि मणिर्दशताले प्रकल्पयेत् ।
पञ्चाशदङ्गुलौ बाहू दशताले स्मृतौ सदा ॥ १९५ ॥

---

नवाङ्गुलमिति शेषः, सक्थि ऊरुस्तु अष्टादशाङ्गुलं विज्ञेयमिति । जानु त्र्यङ्गुलं, जङ्घा अष्टादशाङ्गुला तथा गुल्फस्य अधः निम्नभागः त्र्यङ्गुलम् एतत् सप्ततालस्य सप्ततालमूर्त्तिभेदस्य प्रमाणं सर्वदा ज्ञेयम् ॥ १८८ ॥ १८९ ॥

अष्टतालप्रमाणमाह वेदेत्यादि । ग्रीवा वेदाङ्गुला चतुरङ्गुला तथा हृदयं दशाङ्गुलं भवेत् । उदरं दशाङ्गुलं, वस्तिश्च दशाङ्गुलः स्यात् । सक्थि एकविंशाङ्गुलं तथा जानु चतुरङ्गुलं स्यात् । जङ्घा एकविंशाङ्गुला तथा गुल्फस्य अधः चतुरङ्गुलं स्यात् । अष्टतालप्रमाणस्य मूर्त्तिभेदस्य इदं मानं सदा उक्तम् ॥ १९० ॥ १९१ ॥ १९२ ॥

दशतालप्रमाणमाह त्रयोदशाङ्गुलमित्यादि । दशतालेषु मूर्त्तिभेदेषु मुखं हृदयम् जठरं तथा वस्तिश्च सर्वदा त्रयोदशाङ्गुलं ज्ञेयम् । गुल्फस्य अधः, ग्रीवा तथा जानु पञ्चाङ्गुलं स्मृतम् । सक्थि षड्-

द्व्यङ्गुलौ त्र्यङ्गुलौ चोनौ ततो हीनप्रमाणके।
पाटवं तु यथाशोभि सर्वमानेषु कल्पयेत् ॥ १८६ ॥
नवतालप्रमाणेन न्यूनाधिक्यं प्रकल्पयेत् ॥ १८७ ॥
दशताले तु विज्ञेयौ पादौ पञ्चदशाङ्गुलौ ।
एकैकाङ्गुलहीनौ स्तस्ततो न्यूनप्रमाणके ।
दशतालोर्ध्वमाने तु ताले तालेऽधिकाङ्गुलम् ।
कल्पयेन्मुखलो धीमान् शिल्पवित् सु यथा तथा ॥१८८॥
दीर्घोरुजङ्घा विकटा क्रूरा स्याद्भीषणासुरी ।

---

विंशत्यङ्गुलं तथा जङ्घा षड्विंशत्यङ्गुला प्रकीर्त्तिता । दशताले मूर्ध्नि शिरसि स्थितं मणिम् एकाङ्गुलं प्रकल्पयेत् । तथा दशताले बाहू पञ्चाशदङ्गुलौ सदा स्मृतौ । १८३ ॥ १८४ ॥ १८५ ॥

द्व्यङ्गुलाविति । ततः तेभ्यः दशतालादिभ्यः हीनप्रमाणके न्यूनपरिमाणे इति द्व्यङ्गुलौ त्र्यङ्गुलौ प्रत्येकाङ्गम् अङ्गुलद्वयमित्यर्थः ऊनौ कार्यौ इति शेषः । पाटवं पारिपाट्यं सौष्ठवादिकमित्यर्थः सर्वमानेषु सर्वप्रकारपरिमाणेषु यथाशोभं कल्पयेत् ॥ १८६ ॥

नवतालेति । नवतालप्रमाणे तु ऊनाधिक्यं नहि नैव ऊनाधिक्यं प्रकल्पयेत् कुर्य्यादित्यर्थः ॥ १८७ ॥

दशताले इति । दशताले तु पादौ पञ्चदशाङ्गुलौ कार्य्यौ इति शेषः । ततः दशतालात् न्यूनप्रमाणके न्यूनपरिमाणे पादौ एकाङ्गुलहीनौ एकैक अङ्गुलेन हीनौ स्तः भवत इत्यर्थः । ध्रतितम् इति । दशतालात् ऊर्द्ध्वमाने तु ताले ताले प्रतितालम् अधिकाङ्गुलम् एकाङ्गुलाधिकं कार्य्यमिति शेषः । धीमान् शिल्पवित् शिल्पज्ञः सुखतः सुखादारभ्य इत्यर्थः यथा युक्तं भवेत् तथा कल्पयेत् ॥ १८८ ॥

दीर्घेति । दीर्घोरुजङ्घा विकटा क्रूरा तथा भीषणा प्रतिमा

पैशाची प्रतिमा ज्ञेया राक्षसी सुखदापि वा ॥१९९॥
न पञ्चाङ्गुलतो हीना न षडङ्गुलतोऽधिका ।
करस्य मध्यमा प्रोक्ता सर्वमानेषु तद्विदैः ॥ २०० ॥
क्वचित् तु बालसदृशं सदैव तरुणं वपुः ।
मूर्त्तीनां कल्पयेच्छिल्पी न वृद्धसदृशं क्वचित् ॥ २०१ ॥
एवंविधान् नृपो राष्ट्रे देवान् संस्थापयेत् सदा ।
प्रतिसंवत्सरं तेषामुत्सवान् सम्यगाचरेत् ॥ २०२ ॥
देवालये मानहीनां मूर्त्तिं भग्नां न धारयेत् ।
प्रासादांश्च देवाञ्जीर्णानुद्धृत्य यत्नतः ॥ २०३ ॥
देवतां तु पुरस्कृत्य नृत्यादीन् वीक्ष्य सर्वदा ।

---

आसुरी स्यात् । तादृशी अपि सुखदा अतिक्षीणा प्रतिमा पैशाची वा राक्षसी ज्ञेया ॥ १९९ ॥

नेति । तद्विदैः तज्ज्ञैः पण्डितैः सर्वमानेषु करस्य मध्यमा पञ्चाङ्गुलतः न हीना, षडङ्गुलतश्च नाधिका प्रोक्ता कथिता ॥ २०० ॥

क्वचिदिति । शिल्पी शिल्पकारकः सदैव बालसदृशं वा तरुणं वपुः देवमूर्त्तिशरीरं कल्पयेत्, क्वचित् कदाचित् वृद्धसदृशं न कल्पयेदित्यर्थः ॥ २०१ ॥

एवंविधानिति । नृपः राष्ट्रे सदा एवंविधान् देवान् संस्थापयेत् तथा प्रतिसंवत्सरं तेषां देवानाम् उत्सवांश्च सम्यक् आचरेत् अनुतिष्ठेत् ॥ २०२ ॥

देवालये इति । देवतामिति । नृपः देवालये मानहीनाम् अप्रमाणां तथा भग्नां मूर्त्तिं न धारयेत् न रक्षेत् तथा जीर्णान् प्रासादान् देवांश्च यत्नतः उद्धृत्य संस्कृत्य सर्वदा देवतां पुरस्कृत्य संपूज्य नृत्यादीन् नृत्यवादित्रव्यापारान् वीक्ष्य दृष्ट्वा मनः चित्तं स्वोपभोगार्थं स्वस्य

न पुनः स्वोपभोगार्थं विदध्याद् व्रतती नृपः॥ २०४॥
प्रजाभिर्विधृता ये ये ऋतूत्सवास्तांश्च पालयेत्।
प्रजानन्देन सन्तुष्येत् तद्दुःखैर्दुःखितो भवेत्॥ २०५॥
इति शुक्रनीतौ राष्ट्रे मध्ये चतुर्थाध्यायस्य लोकधर्म-
निरूपणं नाम चतुर्थं प्रकरणम्।

---

## चतुर्थाध्यायस्य पञ्चमं प्रकरणम्।

दुष्टनिग्रहणं कुर्य्याद् व्यवहारानुदर्शनैः।
स्वाज्ञया वर्त्तितुं प्राप्त स्वाधीना च सदा प्रजा॥ १॥
स्वेष्टहानिकरः शत्रुर्दुष्टः पापप्रचारवान्।

---

स्वभोगाय व्रततः स्वयं न विदध्यात् न निर्मूल्यात् भोगार्थं न कुर्य्यादित्यर्थः॥ २०३॥ २०४॥

प्रजाभिरिति। प्रजाभिश्च ये ये उत्सवाः विधृताः कृताः तांश्च पालयेत् रक्षेत्, प्रजानाम् आनन्देन सन्तोषेण सन्तुष्टो भवेत् तथा तासां दुःखेन दुःखितः भवेत्॥ २०५॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चतुर्थांशस्य चतुर्थप्रकरणव्याख्या
समाप्ता।

---

दुष्टेति। व्यवहाराणां विवादविषयाणाम् अनुदर्शनैः सम्यक् दर्शनैः दुष्टानां निग्रहं कुर्य्यात्, प्रजा स्वाधीना चेत् स्वाज्ञया निजाज्ञया स्वेच्छया इत्यर्थः दुष्टा कर्त्तितुं व्यवहर्त्तुं प्राप्ता भवति, तस्मात् प्रजा यथा स्वेच्छया न व्यवहरेयुः तथा कार्य्यमिति भावः॥ १॥

स्वेष्टेति। दुष्टः पापप्रचारवान् पापाशयः शत्रुः स्वस्य इष्ट-

इष्टसम्पादनं न्याय्यं प्रजानां पालनं हि तत् ॥ २ ॥
अघोरनिष्टकरणान्निवृत्तिः शत्रुनाशनम् ।
पापाचारनिवृत्तिश्च दुष्टनिग्रहणं हि तत् ॥ ३ ॥
स्वप्रजाधर्मसंस्थानं सदसत्प्रविचारतः ।
जायते चार्थसंसिद्धिर्व्यवहारस्तु येन सः ॥ ४ ॥
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ।
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
समाहितमतिः पश्येद् व्यवहाराननुक्रमात् ॥ ५ ॥
नैकः पश्येच्च कार्याणि वादिनोः शृणुयाद् वचः ।
रहसि च नृपः प्राज्ञः सभ्याश्चैव कदाचन ॥ ६ ॥

---

हानिकरः, इष्टस्य अभिलषितस्य च सम्पादनं सम्यक् साधनं न्याय्यं न्यायादनपेतं राज्ञ इति शेषः यथा प्रजाभिरिष्टलाभो न क्रियते तथा कार्यमिति भावः, तत् हि तदेव इष्टसम्पादनमेव प्रजानां पालनम् ॥ २ ॥

अघोरिति । अघोः अनिष्टकरणात् निवृत्तिः, शत्रुनाशनं पापाचारात् निवृत्तिश्च अघोरिति शेषः तत् हि तदेव दुष्टनिग्रहणम् ॥ ३ ॥

स्वेति । येन सदसत्प्रविचारतः सतः असतश्च प्रविचारतः सम्यक् विचारेण स्वस्य प्रजानां धर्मसंस्थानं धर्मे सम्यक् स्थितिः अर्थानां कार्याणां संसिद्धिः समीचीना सिद्धिः जायते सः व्यवहारः ॥ ४ ॥

धर्मशास्त्रेति । राजा क्रोधलोभविवर्जितः, सप्राड्विवेकः प्राड्विवेकेन सहितः सामात्यः अमात्यपरिवृतः सब्राह्मणपुरोहितः ब्राह्मणैः पुरोहितेन च सहितः तथा समाहितमतिः अवहितचित्तः सन् धर्मशास्त्रानुसारेण अनुक्रमात् यथाक्रमं व्यवहारान् पश्येत् ॥ ५ ॥

नैक इति । प्राज्ञः नृपः एकः एकाकी रहसि निर्जने वादिनोः

पक्षपाताधिरोपस्य कारणानि च पञ्च वै ।
रागलोभभयद्वेषा वादिनोश्च रहः श्रुतिः ॥ ७ ॥
पौरकार्याणि यो राजा न करोति सुखे स्थितः ।
व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥ ८ ॥
यस्त्वधर्मेण कार्य्याणि मोहात् कुर्य्यान्नराधिपः ।
अचिरात् तं दुरात्मानं वशे कुर्व्वन्ति शत्रवः ॥ ९ ॥
अस्वर्ग्या लोकनाशाय परानीकभयावहा ।
आयुर्बीजहरी राज्ञामस्ति वाक्ये स्वयं कृतिः ॥ १० ॥
तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ॥ ११ ॥

---

कार्य्याणि कदाचन न पश्येत्, तेषाञ्च वचनञ्च न शृणुयात्, सभ्याश्च न पश्येयुः नापि शृणुयुरित्यर्थः ॥ ६ ॥

पक्षेति । रागलोभभयद्वेषाः वादिनोः अर्थिप्रत्यर्थिनोः रहःश्रुतिः विजने वाक्यश्रवणञ्च एतानि पञ्च पक्षपाताधिरोपस्य पक्षपातरूपदोषस्य कारणानि वैशब्दोऽवधारणे ॥ ७ ॥

पौरेति । यः राजा सुखे स्थितः सुखासक्तः सन् पौराणां पुरवासिनां प्रजानामित्यर्थः कार्य्याणि न करोति, स व्यक्तं निश्चितं घोरे नरके पच्यते, अत्र संशयः नास्ति ॥ ८ ॥

य इति । यः नराधिपः मोहात् अज्ञानात् अधर्मेण कार्य्याणि कुर्य्यात्, शत्रवः अचिरात् तं दुरात्मानं वशे कुर्वन्ति ॥ ९ ॥

अस्वर्ग्येति । वाक्ये वादिनोर्वचने स्वयं कृतिः शास्त्रनिरपेक्षेण स्वयं विचारदर्शनं राज्ञाम् अस्वर्ग्या स्वर्गबाधनी तथा परानीकभयावहा परानीकेभ्यः शत्रुसैन्येभ्यः भयम् आवहतीति तथोक्ता शत्रुवृद्धिकरीत्यर्थः अत एव आयुर्बीजहरी आयुःक्षयकरीत्यर्थः अतो लोकानां प्रजानां नाशाय अस्ति भवतीत्यर्थः ॥ १० ॥

तस्मादिति । तस्मात् राजा शास्त्रानुसारेण कार्य्याणि साधयेत् सम्पादयेत् ॥ ११ ॥

यदा न कुर्य्यान्नृपतिः स्वयं कार्य्यविनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं वेदपारगम् ॥ १२ ॥
दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥ १३ ॥
यदा विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥ १४ ॥
यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा ।
तद्वर्णं एव गुणिनः प्रायशः सम्भवन्ति हि ॥ १५ ॥
व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः ।
रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥ १६ ॥

---

यदेति । दान्तमिति । यदा नृपतिः स्वयं न कुर्य्यात् तदा तत्र कार्य्यविनिर्णये विप्रं वेदपारगं, दान्तं विनीतं, कुलीनं सद्वंशजातं मध्यस्थम् उदासीनम् अपक्षपातिनमित्यर्थः अनुद्वेगकरं शान्तप्रकृतिं स्थिरम् अचञ्चलं परत्र भीरुं परलोकभयशीलं धर्मिष्ठं धार्मिकम् उद्युक्तं सयत्नं तथा क्रोधवर्जितं ब्राह्मणं नियुञ्जीत ॥ १२ ॥ १३ ॥

यदेति । यदा विद्वान् विप्रः ब्राह्मणः न स्यात् तदा तत्र कार्य्यनिर्णये धर्मशास्त्रज्ञं क्षत्रियं वा वैश्यं योजयेत् नियुञ्ज्यात्, शूद्रन्तु यत्नेन वर्जयेत् त्यजेत्, शूद्रो विचारदर्शने न नियोक्तव्य इति भावः ॥ १४ ॥

यदिति । राजा यद्वर्णजः यस्मिन् वर्णे ब्राह्मणादौ जातः भवेत्, तद्वर्णजः तस्मिन् वर्णे जातः सभ्यादिः सदा तत्र योज्यः नियोक्तव्यः, हि यतः तस्मिन् वर्णे एव प्रायशः बाहुल्येन गुणिनः गुणवन्तः जनाः सम्भवन्ति जायन्ते ॥ १५ ॥

व्यवहारविद इति । रिपाविति । [illegible] ज्ञातिषु मध्ये ये जनाः व्यवहारविदः विचारदर्शनाभिज्ञाः प्राज्ञाः बुद्धिमन्तः वृत्तशील-

निरालसा जितक्रोधकामलोभाः प्रियंवदाः ।
राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु ॥ १७ ॥
कीनाशाः कारुकाः शिल्पिकुसीदिश्रेणिनर्त्तकाः ।
लिङ्गिनस्तस्कराः कुर्युः स्वेन धर्मेण निर्णयम् ॥ १८ ॥
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥ १९ ॥
आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।
न विब्रूयान्नृपो धर्मं चिकीर्षुर्हितमात्मनः ॥ २० ॥
तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥ २१ ॥

---

गुणान्विताः सच्चरित्राः सत्स्वभावाश्च इत्यर्थः, रिपौ मित्रे मित्रे शत्रुर्हृदि च समाः समदर्शिनः धर्मज्ञाः, सत्यवादिनः निरालसाः आलस्यवर्जिताः जितक्रोधकामलोभाः कामक्रोधलोभविरहिता इत्यर्थः तथा प्रियंवदाः प्रियभाषिणः, ते राज्ञा नियोक्तव्याः ॥ १६ ॥ १७ ॥

कीनाशा इति । कीनाशाः कृषीवलाः कारुकाः कर्मकरविशेषाः शिल्पिनः कुसीदिनः वृद्धिजीविनः श्रेणयः निकृष्टजातीनां वर्गाः नर्त्तकाः नटजातयः लिङ्गिनः भक्तयोगिप्रभृतयः तथा तस्कराः जातिविशेषाश्च स्वेन निजेन धर्मेण निर्णयं स्वस्वजात्युक्तकार्य्यनिरूपणं कुर्युः ॥ १८ ॥

अशक्य इति । अन्यैः तत्तज्जात्युक्तधर्मानभिज्ञैः निर्णयः अशक्यः कर्त्तुमिति शेषः, तस्मात् तज्ज्ञैः तद्धर्माभिज्ञैरेव कारयेत् कार्य्यनिर्णयं राजेति शेषः ॥ १९ ॥

आश्रमेष्विति । आत्मनः हितं चिकीर्षुः नृपः आश्रमेषु ब्रह्मचर्य्यादिषु स्थितानामिति शेषः मिथः परस्परं कार्य्ये विवदतां द्विजातीनां धर्मे विषये न विब्रूयात् विरुद्धं न ब्रूयादित्यर्थः ॥ २० ॥

तपस्विनामिति । तपस्विनां मायायोगविदां मायिनां योगिना-

सम्यग्विज्ञानसम्पन्नो नोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥ २२ ॥
आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैः सह ।
सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥ २३ ॥
अभियुक्ताश्च ये यत्र यन्निबन्धनियोजनाः ।
तत्रत्यगुणदोषाणां त एव हि विचारकाः ॥ २४ ॥
राजा तु धार्मिकान् सभ्यान् नियुञ्ज्यात् सुपरीक्षितान् ।
व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव ॥ २५ ॥
लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।

---

चेत्यर्थः कार्य्योऽपि त्रैविद्यैः त्रिवेदिभिः त्रयीविद्यापारगैरित्यर्थः इव नतत्त्वैरित्यर्थः कारयेत्, कोपकारणात् यदि तेषां कोपो भवेदिति आलोच्येत्यर्थः स्वयं न कुर्य्यादिति शेषः ॥ २१ ॥

सम्यगिति । सम्यक् विज्ञानसम्पन्नः राजा उत्कृष्टजातिशीलानाम् अत्युत्कर्षवतामित्यर्थः गुरूणाम् आचार्याणां तपस्विनाम् उपदेशं न प्रकल्पयेत् न दद्यादित्यर्थः ॥ २२ ॥

आरण्या इति । अभियुक्ता इति । आरण्याः वन्याः किराता-दयः स्वकैः आरण्यैः सार्थिकाः वस्त्रव्यापारिणः सार्थिकैः, सैनिकाः सैनिकैश्च सह कार्य्यनिर्णयं कुर्य्युरित्यर्थः, किन्तु ग्रामेऽपि उभय-वासिभिः उभयैः वादिभिः विवादिभिः यत्र विषये ये अभियुक्ताः तथा यन्निबन्धनियोजनाः यदर्थनियुक्ताः ते एव तत्रत्यानां गुणदोषाणां विचारकाः भवन्तीत्यर्थः ॥ २२ ॥ २४ ॥

राजेति । ये जनाः पुङ्गवाः वृषभा इव व्यवहारधुरं वोढुं शक्ताः समर्थाः भवन्ति, राजा तान् धार्मिकान् सुपरीक्षितान् सभ्यान् नियुञ्ज्यात् ॥ २५ ॥

लोकेति । यत्र सभायां सप्त पञ्च अपि वा अथवा त्रयः लोक-

यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥ २६ ॥
श्रोतारो वणिजस्तत्र कर्त्तव्याः सुविचक्षणाः ॥ २७ ॥
अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥ २८ ॥
सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी ॥ २९ ॥
राज्ञा ये विदिताः सम्यक् कुलश्रेणिगणादयः ।
साहसस्तेयवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥ ३० ॥

---

वेदधर्मज्ञाः लोकाचारज्ञाः वेदज्ञाः धर्मज्ञाश्च विप्राः उपविष्टाः सा सभा यज्ञसदृशी यज्ञस्थानसमा अतिपवित्रा इत्यर्थः ॥ २६ ॥

श्रोतार इति । तत्र विचारदर्शनस्थाने सुविचक्षणाः वणिजः श्रोतारः कर्त्तव्याः नियोक्तव्या इत्यर्थः, ते हि यथा स्वर्णादिपरीक्षकाः तथा कार्य्यनिर्णयस्यापि परीक्षकाः भवन्तीति भावः ॥ २७ ॥

अनियुक्त इति । धर्मज्ञः धर्मशास्त्रज्ञः जनः अनियुक्तः नियुक्तो वा वक्तुमर्हति, यतः यः शास्त्रम् उपजीवति शास्त्रमनुसृत्य वर्त्तते इत्यर्थः सः दैवीं वाचं देववाणीं वदति, तद्वाक्ये असत्यतायाः असम्भवादिति भावः ॥ २८ ॥

सभेति । सभा विचारसभा न प्रवेष्टव्या वा, समञ्जसं यथार्थं वा सत्यमेव वक्तव्यं यदि प्रविशति सभायामिति शेषः । अब्रुवन् सत्यमिति शेषः वा विब्रुवन् विरुद्धं ब्रुवन्नित्यर्थः नरः किल्बिषी पापी भवति ॥ २९ ॥

राज्ञेति । ये कुलानि श्रेणयः गणादयश्च राज्ञा सम्यक् विदिताः न्यायपरायणत्वेन विज्ञाताः, ते नृणां मानवानां तज्जातीयानामित्यर्थः साहसस्तेयवर्ज्जानि दस्युतादोषातिरिक्तानि कार्य्याणि कुर्य्युः ॥ ३० ॥

विचार्य्यं श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम् ।
गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ॥ २१ ॥
कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः ।
सर्वेषामधिको राजा धर्माधर्मनियोजकः ॥ २२ ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥ २३ ॥
एकं शास्त्रमधीयानो न विन्द्यात् कार्य्यनिर्णयम् ।
तस्माद् बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः ॥ २४ ॥

---

विचार्य्येति । कुलैः प्रथमविचारनियुक्तैः जातिविशेषैः यत् कार्य्यं न विचारितं विज्ञानितं, तत् श्रेणिभिः तत्परवर्त्तिभिः विचारकैः जातिविशेषैः विचार्य्यम् । श्रेणिभिः अविज्ञातम् अविदितं कार्य्यं गणैश्च तदुत्तरविचारदर्शिभिः जातिविशेषैः विचार्य्यं, गणाज्ञातं गणैः अज्ञातञ्च नियुक्तकैः राजनियुक्तकैः प्राड्विवाकादिभिः विचार्य्यमित्यर्थः ॥ २१ ॥

कुलादिभ्य इति । उत्तमेति । सभ्याः विचारनियुक्ताः पुरुषाः कुलादिभ्यः अधिकाः श्रेष्ठाः, अध्यक्षः प्रधानविचारपतिः तेभ्यः सभ्येभ्यः अधिकः कृतः । धर्माधर्मनियोजकः धर्माधर्मविवेचका राजा तु उत्तमाधममध्यानाम् उत्तमानाम् अधमानां मध्यमानाञ्च विवादानां विचारणात् सर्वेषाम् अधिकः श्रेष्ठतमः, यतः ईश्वरबुद्धयः प्रभूनां मतयः बुद्धीनां सामान्यजनधियाम् उपरि उपरि चरन्ति ॥ २२ ॥ २३ ॥

एकमिति । एकम् एकमात्रं शास्त्रम् अधीयानः पठन् जनः कार्य्यनिर्णयं न विन्द्यात् न जानीयात्, तस्मात् नृपैः विवादेषु विषयेषु बह्वागमः बहुशास्त्रदर्शनमित्यर्थः कार्य्यः ॥ २४ ॥

स भूते यं स धर्मः स्यादेको वाध्यात्मचिन्तकः ॥ २५ ॥
एकद्वित्रिचतुर्वारं व्यवहारानुचिन्तनम्।
कार्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठोत्तरैः सह ॥२६॥
अर्थिप्रत्यर्थिनौ सभ्यान् लेखकप्रेक्षकांश्च यः।
धर्मवाक्यै रञ्जयति स सभास्तारतामियात् ॥ २७ ॥
नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥ २८ ॥
एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः।
न्यायान् पश्येत् कृतमतिः सा सभाध्वरसम्मिता ॥ २९ ॥

---

स इति। यस्तु अध्यात्मचिन्तकः आत्मतत्त्वज्ञानवान्, स एकः एकाकी यं धर्मं ब्रूते स वा स एव धर्मः स्यात् ॥ २५ ॥

एकेति। राज्ञा श्रेष्ठोत्तरैः श्रेष्ठेषु प्रधानैः सभ्यैः सह पृथक् पृथक् एकद्वित्रिचतुर्वारम् एकवारं द्विवारं त्रिवारं चतुर्वारं वा कार्यगौरवलाघवापेक्षयेति भावः व्यवहारस्य अनुचिन्तनं तत्त्वनिर्णय इत्यर्थः कार्यम् ॥ २६ ॥

अर्थीति। यः विचारपतिः अन्यो वा सभ्यः अर्थिप्रत्यर्थिनौ वादिप्रतिवादिनौ सभ्यान् लेखकान् प्रेक्षकान् दर्शकांश्च धर्मवाक्यैः रञ्जयति प्रीणयति सः सभास्तारतां सभाः तारयति पापात् मोचयतीति सभास्तारः अलुक् उपपदसमासः। तस्य भावः ताम् इयात् प्राप्नुयात् ॥ २७ ॥

नृप इति। नृपः, अधिकृतसभ्याः, स्मृतिः धर्मशास्त्रं, गणकः, लेखकः, हेम काञ्चनम्, अग्निः, अम्बु जलं स्वं धनं, पुरुषः स्वपुरुषः एतानि दश साधनस्य कार्यनिर्वाहस्य अङ्गानि साधकानीत्यर्थः ॥ २८ ॥

एतदिति। कृतमतिः मार्जितबुद्धिः पार्थिवश्च यस्यां सभायाम्

दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्।
वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ॥ ४० ॥
स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा ॥ ४१ ॥
शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः।
गणको गणयेदर्थं लिखेन्न्याय्यं च लेखकः ॥ ४२ ॥
शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥ ४३ ॥
धर्मशास्त्रानुसारेण ह्यर्थशास्त्रविवेचनम्।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥ ४४ ॥

---

एतत् पूर्वोक्तं दशाङ्गकरणम् अभ्युदयकरूपं साधनम् अध्यक्ष आश्रित्य न्यायान् विचारान् कुर्य्यात्; सा सभा अध्वरसन्निभा यज्ञसदृशी ॥ ३९ ॥

दशानामिति। एतेषां दशानाञ्च पृथक् पृथक् कर्म प्रोक्तम्। अध्यक्षः अधिकृतः पुरुषः वक्ता कार्य्यनिर्णयस्य प्रकाशकः, नृपः शास्ता शासकः, तथा सभ्याः कार्य्यस्य परीक्षकाः ॥ ४० ॥

स्मृतिरिति। स्मृतिः धर्मसंहिता विनिर्णयं कार्य्यनिश्चयं, जयं धर्मजयं, दानं, तथा दमम् इन्द्रियादिनिग्रहम् ब्रूते उपदिशति ॥ ४१ ॥

शपथार्थे इति। शपथार्थे दिव्यकरणार्थं हिरण्यम् अग्निश्च साधनं, अम्बु जलं तृषितक्षुब्धयोः तृष्णार्त्तस्य क्षुब्धस्य वायुरोगग्रस्तस्य साधनम्। गणकः अर्थं कार्य्यस्य शुभाशुभं गणयेत्, लेखकश्च न्याय्यं प्रकृतं विषयं लिखेत् ॥ ४२ ॥

शब्देति। शब्दाभिधानतत्त्वज्ञौ शब्दतत्त्वज्ञौ अर्थतत्त्वज्ञौ चेत्यर्थः गणनायां कुशलौ निपुणौ शुची निर्दोषौ नानालिपिज्ञौ विविधलेखनविज्ञौ गणकलेखकौ कर्त्तव्यौ नियोक्तव्यौ ॥ ४२ ॥

धर्मेति। यत्र स्थाने धर्मशास्त्रानुसारेण अर्थशास्त्राणां विवेचनम् अधिक्रियते अधिकं यथा तथा क्रियते, तत् हि तदेव धर्माधिकरणम् ॥ ४४ ॥

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम्॥ ४५॥
धर्मासनमधिष्ठाय कार्यदर्शनमारभेत्।
पूर्वोत्तरसमो भूत्वा राजा पृच्छेद् विवादिनौ॥ ४६॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
जातिजानपदान् धर्मान् श्रेणिधर्मांस्तथैव च।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत्॥ ४७॥
देशजातिकुलानां च ये धर्माः प्राक् प्रवर्त्तिताः।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा॥ ४८॥
उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः॥ ४९॥

---

व्यवहारानिति। व्यवहारान् दिदृक्षुः द्रष्टुमिच्छुः पार्थिवः विनीतः सन् मन्त्रज्ञैः मन्त्रणाकुशलैः ब्राह्मणैः मन्त्रिभिश्च सह सभां प्रविशेत्॥ ४५॥

धर्मासनमिति। राजा धर्मासनं विचारासनम् अधिष्ठाय कार्यदर्शनम् आरभेत्। पूर्वोत्तरसमः अर्थिप्रत्यर्थिषु समदर्शी भूत्वा विवादिनौ अर्थिप्रत्यर्थिनौ पृच्छेत्॥ ४६॥

प्रत्यहमिति। प्रत्यहं प्रतिदिनं देशदृष्टैः लौकिकैरित्यर्थः शास्त्रदृष्टैः शास्त्रीयैश्च हेतुभिः जातिजानपदान् जातीयान् जानपदान् देशिकांश्चेत्यर्थः धर्मान् श्रेणीनां धर्मान् कुलधर्मांश्च समीक्ष्य सम्यक् दृष्ट्वा स्वधर्मं राजधर्मं विचारदर्शित्वरूपं प्रतिपालयेत्॥ ४७॥

देशेति। देशानां जातीनां कुलानाञ्च ये धर्माः प्राक् पूर्वं प्रवर्त्तिताः प्रचलिताः, ते तथैव पूर्ववदेव पालनीयाः रक्षणीयाः, अन्यथा तदपालने इत्यर्थः प्रजा प्रक्षुभ्यते प्रकर्षेण क्षोभं प्राप्नोति॥ ४८॥

उद्वह्यते इति। दाक्षिणात्यैः दक्षिणदिग्वासिभिः द्विजैः ब्राह्-

यथार्हमेनमभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥ ५९ ॥
काले कार्य्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्य्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ! ॥६०॥
केन कस्मिन् कदा कस्मात् पीडितोऽसि दुरात्मना ।
एवं पृष्टा स्वभावोक्तं तस्य संशृणुयाद् वचः ॥ ६१ ॥
प्रसिद्धलिपिभाषाभिस्तदुक्तं लेखको लिखेत् ॥ ६२ ॥
अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः ।
चौरवत् शासयेद्राजा लेखकं द्रागतन्द्रितः ॥ ६३ ॥

---

यथार्हमिति । पार्थिवः ब्राह्मणैः सभ्यैः सह एनम् अर्थिनं यथार्हं यथायोग्यम् अभ्यर्च्य सम्मान्य सान्त्वेन सान्त्ववादेन आदौ प्रथमम् प्रबोध्य आश्वास्य इत्यर्थः स्वधर्मं प्रतिपादयेत् ॥ ५९ ॥

काले इति । काले यथासमये प्रणतं पुरतः अग्रतः स्थितं कार्य्यार्थिनं पृच्छेत्, हे मानव ! किं कार्य्यं ते तव पीडा च का, मा भैषीः, ब्रूहि वद ॥ ६० ॥

केनेति । कस्मिन् स्थाने कदा कस्मिन् समये केन दुरात्मना कस्मात् कारणात् पीडितोऽसि, एवं पृष्टा तस्य वादिनः स्वभावोक्तं नतु काल्पनिकमित्यर्थः वचः वचनं संशृणुयात् ॥ ६१ ॥

प्रसिद्धेति । लेखकः तदुक्तं तेन वादिना उक्तं कथितं प्रसिद्धाभिः प्रचलिताभिः लिपिभिः अक्षरैः भाषाभिश्च लिखेत् ॥ ६२ ॥

अन्यदुक्तमिति । यः लेखकः अर्थिनां प्रत्यर्थिनाञ्च अन्यत् उक्तं वचः वाक्यम् अन्यत् अन्यथेत्यर्थः लिखेत्, राजा अतन्द्रितः अनलसः क्षिप्रकारीत्यर्थः सन् तं लेखकं द्राक् झटिति चौरवत् शासयेत् दण्डयेत् ॥ ६३ ॥

लिखितं तादृशं सभ्या न विब्रूयुः कदाचन।
बलाद् गच्छन्ति लिखितं दण्डयेत् तांस्तु चौरवत् ॥६४॥
प्राड्विवाको नृपाभावे पृच्छेदेवं सभागतम् ॥ ६५ ॥
वादिनौ पृच्छति प्राड् वा विवाको विविनक्त्यतः।
विचारयति सभ्यैर्वा धर्माधर्मान् विवक्ति वा ॥ ६६ ॥
सभायां ये स्थिता योग्याः सभ्यास्ते चापि साधवः ॥६७॥
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ६८ ॥
नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः।

---

लिखितमिति। सभ्याश्च तादृशं लिखितं कदाचन न विब्रूयुः न अनुमोदेरन्नित्यर्थः यदि ते सभ्याः तादृशं लिखितं बलात् बलमाश्रित्य इत्यर्थः गच्छन्ति तांस्तु तांश्च चौरवत् दण्डयेत् ॥ ६४ ॥

प्राड्विवाक इति। प्राड्विवाकः विचारपतिः नृपस्य अभावे सभागतम् अर्थिनम् एवं पूर्ववत् पृच्छेत् ॥ ६५ ॥

वादिनाविति। वादिनौ अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट्, विविनक्ति विचारयतीति विवाकः, अतः असौ विचारपतिः प्राड्विवाक इत्यर्थः। सः वा स एव राजाभावे इत्यर्थः सभ्यैः सह धर्माधर्मान् विचारयति वा विवक्ति विशेषेण वदति ॥ ६६ ॥

सभायामिति। सभायां ये स्थिताः योग्याः असंदुष्टाः साधवः सुजनाः सभ्याः, ते च कार्यं पश्येयुरिति शेषः ॥ ६७ ॥

स्मृतीति। स्मृतिः धर्मशास्त्रम् आचारः सज्जनानुष्ठितः व्यवहारः तद्व्यपेतेन तद्विरुद्धेन मार्गेण यथा कार्यं चेत्यर्थः परैः अन्यैः आधर्षितः पीड़ितः जनः चेत् यदि राज्ञे आवेदयति तत् आवेदनं व्यवहारपदं विवादस्थानं हि निश्चयेऽवधारणार्थः ॥ ६८ ॥

नोत्पादयेदिति। राजा स्वयं न, अस्य राज्ञः पुरुषोऽपि न कार्यं नु

निपानस्य विनाशी च तथा चायतनस्य च ॥ ७३ ॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥ ७४ ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते ।
विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपाग्रतः ॥ ७५ ॥
पर्यङ्कासनबन्धी चाप्यग्रस्थानविरोधकः ।
नृपातिरिक्तवेशश्च विधृतः प्रविशेत् तु यः ॥ ७६ ॥
यश्चापद्वारेण विशेद्वेलायां तथैव च ।
शय्यासने पादुके च शयनासनरोहणे ॥ ७७ ॥

पराक्षेपी परस्य अन्यस्य आक्षेपकारी अवमाननाकरः २, प्राकारस्य उपरि लङ्घकः प्राचीरलङ्घनकारी ३, निपानस्य पानशालायाः तथा आयतनस्य आवासस्य विनाशी नाशकः ४ । ५, परिखानां नगरवेष्टनीभूतजलाधारस्य पूरकः मृत्तिकाक्षेपादिति शेषः ६, राज्ञः छिद्रस्य दोषस्य प्रकाशकः ७, यश्च अनियुक्तः अननुमतः सन् अन्तःपुरं वासगृहं भाण्डागारं धनगृहं वा महानसं रन्धनशालां प्रविशति ८ । ९ । १० । ११, यश्च भोजनं निरीक्षते भोजनदर्शनस्य निषिद्धत्वादिति भावः १२, विण्मूत्रश्लेष्मवातानां विष्ठामूत्रश्लेष्मणाम् अधोवातानाञ्च कामात् क्षेप्ता प्रयोक्ता १३ । १४ । १५ । १६, नृपस्य अग्रतः समक्षं पर्य्यङ्कासनबन्धी वीरासनोपविष्टः १७, अग्रस्थानस्य सम्मुखावस्थानस्य विरोधकारी १८, नृपातिरिक्तवेशः राजाधिकवेशधरः १९, तथा यः विधृतः विशेषेण धृतः नतु नियोगमात्रेणेति भावः प्रविशेत् प्रभुसन्निधिमिति शेषः २०, यश्च अपद्वारेण द्वारव्यतिरिक्तेन मार्गेणेत्यर्थः तथा अवेलायाम् असमये इत्यर्थः विशेत् परगृहमिति शेषः २१ । २२, शय्यासने शय्यायाम् आसने च तथा पादुके इति नपुंसकनिर्देश आर्षः । पादुकायामित्यर्थः शयनासनरोहणे शयने आसने उपवेशने

राजन्यासनशयने यस्तिष्ठति समीपतः ।
राज्ञो विशिष्टवेषी चाप्यदत्तविहितासनः ॥ ७८ ॥
अन्यवस्त्राभरणयोः स्वस्य परिधायकः ।
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत् तु यः ॥ ७९ ॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवकुण्ठितः ॥ ८० ॥
विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः ।
शिरःप्रच्छादकश्चैव छिद्रान्वेषणतत्परः ॥ ८१ ॥
आसक्ती मुक्तवेशश्च प्राक्कर्णाक्षिप्रदर्शकः ।
दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ।
राज्ञः समीपे षट्त्रिंशच्छलान्येतानि सन्ति हि ॥ ८२ ॥

---

शोक्ये पादस्पर्शने च सर्वत्र परकीये इति शेषश्चम् अननुमत्या तत्तत्कारीत्यर्थः २३ । २४ । २५, यत्र आसनशयने शयनाद्दे राज्ञि समीपतः तद्दक्षिणो तिष्ठति २६, राज्ञः विशिष्टवेषी मत्तवेषकः २७, अदत्तं विहितं स्वीकृतम् आसनम् अवस्थानं येन तथोक्तः अननुज्ञया परस्थानावस्थायीत्यर्थः २८, अन्यस्य वस्त्राभरणयोः स्वस्य च परिधायकः २९ । ३० । ३१ यत्र स्वयं ग्राहेण बलेन ताम्बूलं परकीयमिति भावः गृहीत्वा भक्षयेत् ३२, अनियुक्तः सन् प्रभाषी वक्ता ३३, नृपाक्रोशकः राजनिन्दकः ३४ एकवासाः एकवस्त्रः ३५, अभ्यक्तः तैलाक्तदेहः ३६, मुक्तकेशः अबद्धशिराः ३७, अवकुण्ठितः ३८, विचित्रिताङ्गः चित्रितशरीरः ३९, स्रग्वी ४०, परिधानस्य परिधेयवसनस्य विधूनकः कम्पकः ४१, शिरःप्रच्छादकः अवगुण्ठितः ४२, छिद्रान्वेषणतत्परः, परदोषानुसन्धायी ४३, आसक्ती व्यसनासक्तः ४४, मुक्तवेशः मुक्तपरिच्छदः ४५, प्राक्कर्णाक्षिप्रदर्शकः नासाकर्णनेत्राणां प्रदर्शनकारी ४६ । ४७ । ४८, दन्तोल्लेखनकः दन्तानाम् उल्लेखनकारी ४९, तथा कर्ण-

आज्ञोल्लङ्घनकारित्वं स्त्रीवधो वर्णसङ्करः।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥ ८३ ॥
वाक्पारुष्यमवाच्याद्यं दण्डपारुष्यमेव च।
गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥ ८४ ॥
उत्कृत्ती शस्त्रघाती चाप्यग्निदश्च तथैव च।
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा ॥ ८५ ॥
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः।
अस्वामि विक्रयं दानं भागं दण्डं विचिन्वति ॥ ८६ ॥
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत्।
राजावलीढद्रव्यं च यच्चैवाङ्गविनाशनम् ॥ ८७ ॥

---

मायाविशोधकः ५०, राज्ञः समीपे एतानि पञ्चाशत् छलानि दोषाः सन्ति हिंसकोऽवधारणार्थः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥

आज्ञेति। वागिति। आज्ञाया उल्लङ्घनकारित्वम् आज्ञोल्लङ्घनं १, स्त्रीवधः २, वर्णसङ्करः ३, परस्त्रीगमनं ४, चौर्यं ५, पतिं विना गर्भः अन्येनेति भावः ६, वाक्पारुष्यं ७, अवाच्याद्यम् अवक्तव्यवाक्यप्रयोगादि ८, दण्डपारुष्यं प्रहारः ९, गर्भस्य पातनञ्च १०, एते दश अपराधाः ॥ ८३ ॥ ८४ ॥

उत्कृत्तीत्यादि। उत्कृत्ती उद्वेधकः १, शस्त्रघाती शस्त्रनाशकः २, अग्निदः गृहादिषु अग्निदायी ३, राज्ञः द्रोहकर्त्ता अनिष्टकारकः ४, तन्मुद्राभेदकः तस्य राज्ञः मुद्राभेदकः चिह्ननाशकः ५, तस्य मन्त्रस्य प्रभेत्ता प्रकाशकः ६, बद्धस्य कारास्थितस्य विमोचकः विमोचनकारी ७, यः अस्वामिविक्रयं स्वामिशून्यस्य द्रव्यस्य विक्रयं दानं भागं दण्डञ्च विचिन्वति अन्विच्छति सः ८, पटहेन वाद्यविशेषेण यत् आघोषणं तस्य आच्छादी गोपनकारकः ९, एतेषां कार्य्याणीति शेषः किञ्च अस्वामिकं द्रव्यं १०,

द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पण्डिताः ॥ ८८ ॥
उद्धतः क्रूरवाग्वेशो गर्वितश्चण्ड एव हि ।
सहासनश्चातिमानी वादी दण्डमवाप्नुयात् ॥ ८९ ॥
अर्थिना कथितं राज्ञे तदावेदनसंज्ञकम् ।
कथितं प्राड्विवाकादौ सा भाषाखिलबोधिनी ॥ ९० ॥
स पूर्वपक्षः सभ्यादिस्तं विमृश्य यथार्थतः ।
अर्थितः पूरयेद्धीनं तत्साध्यमधिकं त्यजेत् ॥ ९१ ॥
वादिनश्चिह्नितं साध्यं कृत्वा राजा विमुद्रयेत् ॥ ९२ ॥

---

राजावज्ञोद्रव्यं राजग्रस्तम् अन्यस्वामिकं द्रव्यमित्यर्थः ११, तथा वस्तु-विनाशनम् वस्तुहानिकरणं १२, एतानि पूर्वोक्तदशापराधसहितानि द्वाविंशतिपदानि विवादस्थानानि नृपेण ज्ञेयानि इति पण्डिताः आहुः कथयन्ति ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥

उद्धत इति । वादी उद्धतः कर्कशः, क्रूरवाक् निष्ठुरभाषी, क्रूर-वेशः निष्ठुरकार्यकरणोपयोगिवेशः, गर्वितः चण्डः कोपनः सहासनः विचारपतिना सहासनोपविष्टः, अतिमानी च चेत् तदा दण्डम् अवाप्नुयात् ॥ ८९ ॥

अर्थिनेति । स इति । अर्थिना राज्ञे यत् कथितं तत् आवेदन-संज्ञकम् आवेदनमिति कथितमित्यर्थः, प्राड्विवाकादौ कथितं यत् सा अखिलबोधिनी समस्तप्रबोधिका भाषा । स पूर्वपक्षश्च उच्यते इति शेषः । सभ्यादिः विचारालयनियुक्तः पुरुषादिः अर्थितः प्रार्थितः सन् अर्थिनेति शेषः तं पूर्वपक्षं यथार्थतः विमृश्य विविच्य हीनं चेत् पूरयेत्, अधिकञ्च तत्साध्यं तस्य पूर्वपक्षस्य साध्यं त्यजेत् ॥९०॥९१॥

वादिन इति । राजा साध्यं वादिनः चिह्नितं कृत्वा विमुद्रयेत् विशेषेण मुद्राङ्कितं कुर्यात् ॥ ९२ ॥

असाधयित्वा पक्षं ये ह्युत्तरं दापयन्ति तान् ।
रागाल्लोभाद्भयाद्वापि स्मृत्यपेताधिकारिणः ।
सभ्यादीन् दण्डयित्वा तु ह्यधिकारान्निवर्त्तयेत् ॥ ८२ ॥
ग्राह्याग्राह्यं विवादं तु सुविमृश्य समाश्रयेत् ।
सञ्जातपूर्वपक्षं तु वादिनं संनिरोधयेत् ॥ ८४ ॥
राजाज्ञया स्वपुरुषैः सान्त्ववाग्भिर्मनोहरैः ।
निरालस्यैरिङ्गितज्ञैश्च दण्डशस्त्रास्त्रधारिभिः ॥ ८५ ॥
वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ।
प्रत्यर्थिनं तु शपथै राज्ञया वा नृपस्य च ॥ ८६ ॥
स्थानासेधः कालकृतः प्रवासात् कर्मणस्तथा ।

---

असाधयित्वेति । ये अधिकारिणः राजपुरुषाः रागात् लोभात् भयाद् वा पक्षं पूर्वपक्षम् असाधयित्वा उत्तरं दापयन्ति तान् सभ्यादीन् स्मृत्यपेतं एतत् गर्हितं कर्मापि आचारार्थमित्यर्थः दण्डयित्वा अधिकारात् तत्तत्पदात् निवर्त्तयेत् भ्रंशयेत् ॥ ८२ ॥

ग्राह्येति । राजेति । राजा विवादं ग्राह्याग्राह्यं ग्राह्यं अग्राह्यं वा सुविमृश्य सुविविच्य ग्राह्यमेव समाश्रयेत् गृह्णीयात् । किञ्च सञ्जातपूर्वपक्षं जातपूर्वपक्षं वादिनम् आज्ञया स्वस्य आदेशेन सान्त्ववाग्भिः मनोहरैः निरालस्यैः इङ्गितज्ञैः दण्डशस्त्रास्त्रधारिभिः स्वपुरुषैः संनिरोधयेत् आसेधयेत् ॥ ८४ ॥ ८५ ॥

वक्तव्ये इति । विवादार्थी जनः वक्तव्ये अर्थे अतिष्ठन्तं तद्वचः तस्य वचनम् उत्क्रामन्तम् अतिक्रामन्तं प्रत्यर्थिनं यावदाह्वानदर्शनम् आह्वानानन्तरदर्शनकालं यावदित्यर्थः शपथैः वा नृपस्य आज्ञया आसेधयेत् अवरोधयेत् ॥ ८६ ॥

स्थानासेध इति । आसेधः चतुर्विधः, स्थानासेधः, कालकृतः,

चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ ९७ ॥
यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वासनादिभिः ।
आसेधयेदनासेधैः स दण्ड्यो न त्वतिक्रमी ॥ ९८ ॥
आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते ।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग् भवेत् ॥ ९९ ॥
यस्याभियोगं कुरुते तत्त्वेनाशङ्कयाथवा ।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥ १०० ॥
अज्ञासतां तु संसर्गादनुभूतक्षतेस्तथा ।
क्रीडाभिर्दर्शनात् तत्त्वं विजानाति विचक्षणः ॥ १०१ ॥

प्रवासात् प्रवासासेधं इत्यर्थः तथा कर्मणः कर्मासेधं इत्यर्थः । आसिद्धः तथा अवरुद्धः जनः तम् आसेधं न विलङ्घयेत् ॥ ९७ ॥

य इति । यस्तु इन्द्रियनिरोधेन इन्द्रियाणां चक्षुरादीनां निरोधेन व्याहारेण कटुवाक्येन उच्छ्वासनादिभिः उद्वाटयासना- दिभिश्च अनासेधैः अयोग्यासेधप्रकारैरित्यर्थः आसेधयेत् अवरोधयेत् वादिनं प्रतिवादिनं वा इति शेषः सः दण्ड्यः दण्डनीयः, न तु अतिक्रमी एतद्वैपरीत्येन आसेधकारी न तु दण्ड्य इति भावः ॥ ९८ ॥

आसेधकाल इति । यः आसेधकाले अवरोधकाले आसिद्धः अव- रुद्धः आसेधम् अतिवर्त्तते लङ्घयतीत्यर्थः सः विनेयः दण्ड्यः, आसेद्धा च अन्यथा कुर्वन् दण्डभाक् भवेत् ॥ ९९ ॥

यस्येति । तत्त्वेन याथार्थ्येन अथवा आशङ्कया सन्देहेन यस्य अभियोगं कुरुते, राजा मुद्रया स्वनामाङ्कितलेख्येन वा पुरुषेण राज- पुरुषेण तम् एव आह्वानयेत् आहूयेदित्यर्थः ॥ १०० ॥

अज्ञेति । असतां दुर्जनानां संसर्गात् तथा अनुभूतक्षतेः अनुभूता अनुमिता वा क्षतिः क्रिया तया अनुमापकक्रियादिभिः यद्वा तथा

अकल्यबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ।
मत्तोन्मत्तप्रमत्तार्त्तभृत्यान् नाह्वानयेन्नृपः ॥ १०२ ॥
न हीनपक्षां युवतीं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां नाज्ञातप्रभुकाः स्त्रियः ॥ १०३ ॥
निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥ १०४ ॥
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः ।
शिल्पिनश्चापि तत्काले मायुधीयाश्च विग्रहे ॥ १०५ ॥

---

होढाभिदर्शनात् होढा लोप्त्रम् अपहृतद्रव्यमित्यर्थः; तस्य अभिदर्शनात् विपश्चितः विज्ञो जनः तत्त्वं निश्चयं विजानन्ति ॥ १०१ ॥

अकल्येति । नृपः अकल्यान् रोगिणः बालान् शिशून् स्थविरान् वृद्धान् विषमस्थान् विपन्नान् क्रियाकुलान् बह्वीभिः क्रियाभिरनतिक्रमणीयाभिः आकुलान् व्यस्तान् कार्यातिपातिनः अभियोगकाले अनुपस्थितान् व्यसनिनः कामादिव्यसनाक्रान्तान् नृपकार्यैः वा उत्सवैः आकुलान् मत्तान् सुरापानमत्तान् उन्मत्तान् क्षिप्तान् प्रमत्तान् अनवधायिनः आर्त्तान् तथा भृत्यान् न आह्वानयेत् ॥ १०२ ॥

नेति । हीनपक्षाम् अनाथां युवतीं, कुले जातां कुलीनां कन्यां, प्रसूतिकां प्रसविनीं सर्ववर्णोत्तमां सर्वजातिश्रेष्ठां कन्यां न, तथा अज्ञातः प्रभुः पतिर्यासां तादृशीः स्त्रियश्च न आह्वानयेदिति पूर्वेण सम्बन्धः ॥ १०३ ॥

निर्वेष्टुकाम इत्यादि । निर्वेष्टुकामः विवाहार्थी, रोगार्त्तः यियक्षुः यागार्थी, व्यसने मृगयादौ स्थितः आसक्तः, अन्येन अभियुक्तः, राजकार्योद्यतः, गवां प्रचारे गोचारणकाले गोपालाः, सस्यावापे सस्यवपनकर्मकाले कृषीवलाः कर्षकाः, तत्काले शिल्पकर्मकाले शिल्पिनः,

अग्राम्यव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥ १०६ ॥
नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात् ॥ १०७ ॥
कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥ १०८ ॥
ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ १०९ ॥

---

'विवहे संग्रामकाले आयुधीयाः सैनिकमुख्याः, अग्राम्यव्यवहारः अन-[illegible], दूतः दौत्यकार्यनियतः, दानोन्मुखः दानकर्मणि उद्युक्तः, व्रती, वेधकर्मणि नियुक्तः तथा विषमस्थाः विपद्ग्रस्ताः जनाः न आसेध्याः न अवरोधनीयाः । नृपः एतान् निर्देशकालादौ न आह्वानयेत् । अत्र च आसेधांशे विधिराह्वानांशे अनुवादो विशेषबोधार्थ इति सुधीभिर्भाव्यम् ॥ १०४ ॥ १०५ ॥ १०६ ॥

नद्दीति । नदीसन्तरणे, कान्तारे दुर्गमवनमार्गे, दुर्देशे उपप्लवादिषु राजोपद्रवादिषु आसिद्धः जनः तं परासेधं परस्य आसेधं परकर्तृकमवरोधम् उत्क्रामन् अतिक्रामन् न अपराध्नुयात् न अपराधी भवेदित्यर्थः ॥ १०७ ॥

कालमिति । नृपः कालं देशं कार्याणां बलाबलं गौरवलाघवं च विज्ञाय अकल्पादीन् रोगिप्रभृतीनपि यानैः शिबिकादिभिः शनैः मन्दं मन्दम् आह्वानयेत् ॥ १०८ ॥

ज्ञात्वेति । ये जनाः अभियोगं ज्ञात्वा वने प्रव्रजितादयः [illegible] आदिपदेन वानप्रस्थब्रह्मचारिप्रभृतयः स्युः भवेयुः, राजा गुरुकार्येषु तान् अपि अकोपयन् सन् आह्वानयेत् ॥ १०९ ॥

व्यवहारानभिज्ञेन ह्यन्यकार्याकुलेन च।
प्रत्यर्थिनार्थिना तज्ज्ञः कार्यः प्रतिनिधिस्तदा ॥ ११० ॥
अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम्।
पूर्वोत्तरं वदेद् बन्धुर्नियुक्तो वाथवा नरः ॥ १११ ॥
पिता माता सुहृद् बन्धुर्भ्राता सम्बन्धिनोऽपि च।
यदि कुर्य्युरुपस्थानं वादं तत्र प्रवर्त्तयेत् ॥ ११२ ॥
यः कश्चित् कारयेत् किञ्चिन्नियोगाद् येन केनचित्।
तत् तेनैव कृतं ज्ञेयमनिवार्य्यं हि तत् स्मृतम् ॥ ११३ ॥
नियोगितस्यापि भृतिं विवादात् षोडशांशिकीम्।
विंशत्यंशां तदर्द्धं वा तदर्द्धं च तदर्द्धिकाम् ॥ ११४ ॥

---

व्यवहारानभिज्ञेनेति। प्रत्यर्थिना प्रतिवादिना अर्थिना वादिना च व्यवहारानभिज्ञेन व्यवहारे अभियोगव्यापारे अनभिज्ञेन अविचक्षणेन वा अन्यकार्य्याकुलेन कार्य्यान्तरासक्तेन सता तदा तज्ज्ञः व्यवहारज्ञः प्रतिनिधिः कार्य्यः ॥ ११० ॥

अप्रगल्भेति। बन्धुः पितृसपिण्डादिः अथवा नियुक्तः प्रतिनिधित्वेनेति भावः नरः अप्रगल्भानाम् अचतुराणां जडानाम् उन्मत्तानां वृद्धानां स्त्रीणां बालानां रोगिणाञ्च पूर्वोत्तरम् अभियोगं प्रत्यभियोगञ्च वदेत् ॥ १११ ॥

पितेति। पिता, माता, सुहृत्, बन्धुः भ्राता अथवा सम्बन्धिनः यदि उपस्थानम् अभियोगादेरुपस्थितिं कुर्य्युः तदा तत्र वादं विचारं प्रवर्त्तयेत् चालयेत् ॥ ११२ ॥

य इति। येन केनचित् अनेन नियोगात् यः कश्चित् जनः किञ्चित् कार्य्यं कारयेत् तत् तेनैव नियोजकेनेत्यर्थः कृतं ज्ञेयम् तत् नियुक्तकृतम् अनिवार्य्यं ग्राह्यमित्यर्थः स्मृतम् ॥ ११३ ॥

नियोगितस्येति। नियोगितस्य नियुक्तस्य भृतिं वेतनं विवादात्

परार्थवादी दण्ड्यः स्याद् व्यवहारेषु विब्रुवन्॥ ११८॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते॥ ११९॥
प्रवर्त्तयित्वा वादं तु वादिनौ तु मृतौ यदि।
तत्पुत्रो विवदेत् तज्ज्ञो ह्यन्यथा तु निवर्त्तयेत्॥१२०॥
मनुष्यमारणे स्तेये परदाराभिमर्षने।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे॥ १२१॥
पारुष्ये कूटकरणे नृपद्रोहे च साहसे।
प्रतिनिधिर्न दातव्यः कर्ता तु विवदेत् स्वयम्॥ १२२॥

---

न विवादिन इति शेषः यः चेत् परार्थवादी परार्थे अन्यार्थे वादी सन् व्यवहारेषु विब्रुवन् विरुद्धं वदन् विरुद्धवादी भवतीत्यर्थः तदा दण्ड्यः स्यात् ॥ ११८ ॥

तदधीनेति। याः स्त्रियः तदधीनकुटुम्बिन्यः स्वाधीनपरिजनाः, स्वैरिण्यः स्वेच्छावर्त्तिन्यः गणिकाः वेश्या निष्कुलाः अकुलीनाश्च तथा याश्च पतिताः ब्रह्महत्यादिपञ्चविधान्यतमपापकारिण्यः, तासाम् आह्वानं विचारार्थे इति भावः इष्यते ॥ ११९ ॥

प्रवर्त्तयित्वेति। वादं विवादं प्रवर्त्तयित्वा पश्चात् वादिनौ अर्थिप्रत्यर्थिनौ यदि मृतौ भवतः, तदा तज्ज्ञः विवादज्ञः तत्पुत्रः तयोः वादिनः प्रतिवादिनश्च पुत्रः विवदेत् वादं चालयेत् अन्यथा अनभिज्ञत्वे तु निवर्त्तयेत् विरमेदित्यर्थः ॥ १२० ॥

मनुष्यमारण इति। पारुष्य इति। मनुष्यमारणे नरहत्यायां, स्तेये चौर्य्ये, परदाराभिमर्षणे परस्त्रीबलात्कारे, अभक्ष्यभक्षणे, कन्याहरणदूषणे कन्यायाः अनूढायाः हरणे वा, पारुष्ये वाक्पारुष्यदण्डपारुष्योभयरूपे, कूटकरणे मायानुष्ठाने नृपद्रोहे राजाभिद्रोहे

आहूतो यत्र नागच्छेद् दर्पाद् बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥ १२३ ॥
दूतेनाह्वानितं प्राप्ताधर्षकं प्रतिवादिनम् ।
दृष्ट्वा राज्ञा तयोश्चिन्त्यो यथार्हप्रतिभूस्ततः ॥ १२४ ॥
दास्याम्यदत्तमेतेन दर्शयामि तवान्तिके ।
एनमाधिं दापयिष्ये ह्यस्मात् ते न भयं क्वचित् ॥१२५॥
अकृतं च करिष्यामि ह्यनेनायं च वृत्तिमान् ।
अस्तीति न च निथ्यैतदङ्गीकुर्यादतन्द्रितः ॥ १२६ ॥

---

तथा साहसे दस्युहत्यादौ विवादविषये प्रतिनिधिः न दातव्यः कर्त्ता तु कर्त्ता एव स्वयं विवदेत् ॥ १२१ ॥ १२२ ॥

आहूत इति । यत्र विवादे विषये आहूतः राज्ञेति शेषः बन्धुबलान्वितः बन्धुबलसहायवान् जनः दर्पात् अहङ्कारात् न आगच्छेत् विचारालयमिति शेषः, तस्य अनागतस्य जनस्य अभियोगानुसारेण अभियोगस्य गौरवलाघवापेक्षया इत्यर्थः दण्डं प्रकल्पयेत् ॥ १२३ ॥

दूतेनेति । दूतेन राजवार्त्ताहरेण आह्वानितं कृताह्वानं प्राप्ताधर्षकं प्राप्तपीडं वादिनमित्यर्थः तथा प्रतिवादिनं दृष्ट्वा ततः अस्मात् परमित्यर्थः राज्ञा तयोः वादिनोः यथार्हप्रतिभूः यथायोग्यप्रतिभूः चिन्त्यः ॥ १२४ ॥

प्रतिभूप्रकारमाह दास्यामीत्यादि । अहम् एतेन अदत्तं दास्यामि अतेन दानप्रतिभूरुक्तः । अहम् एनं तव अन्तिके समीपे दर्शयामि अतेन दर्शनप्रतिभूरुक्तः । एनं जनम् आधिं द्रव्यं दापयिष्ये बन्धकत्वेनेति शेषः, अस्मात् जनात् क्वचित् कदाचिदपीत्यर्थः ते तव भयं न अस्तीति शेषः, अनेन अकृतं कार्य्यम् अहं करिष्यामि, अयञ्च वृत्तिमान् संस्थानसम्पन्नः अतन्द्रितः अनलसः अस्ति इति हेतोः एतत् न च

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ १२१ ॥
न केनचिच्छ्रुतो दृष्टः सोऽप्रसिद्ध उदाहृतः ।
अहं मूकेन संशप्तो वन्ध्यापुत्रेण ताड़ितः ॥ १२२ ॥
अधीते सुस्वरं गाति स्वगेहे विहरत्ययम् ।
धत्ते मार्गमुखद्वारं मम गेहसमीपतः ।
इति ज्ञेयं निराबाधं निष्प्रयोजनमेव तत् ॥ १२३ ॥
सदा मद्दत्तकन्यायां जामाता विहरत्ययम् ।
गर्भं धत्ते न वन्ध्येयं मृतोऽयं न प्रभाषते ।
किमर्थमिति तज्ज्ञेयमसाध्यञ्च विरुद्धकम् ॥ १२४ ॥

---

वर्जितं संख्याहीनाधिकं हीनसंख्यम् अधिकसंख्यं वा भ्रष्टं च्युतं केनापि अंशेनेत्यर्थः एते भाषादोषाः आवेदकाः प्रतिज्ञावाक्यस्य दोषाः उदाहृताः उक्ताः ॥ १२० ॥

अप्रसिद्धमिति । अप्रसिद्धं निराबाधं निर्बाधं निष्प्रयोजनम् असाध्यं साध्यातीतं वा विरुद्धं साध्यं पक्षाभास उच्यते इति शेषः तं पक्षाभासं विवर्जयेत् न गृह्णीयात् राजेति शेषः ॥ १२१ ॥

नेति । यः केनचित् न श्रुतः दृष्टश्च सः अप्रसिद्ध उदाहृतः उक्तः, यथा अहं मूकेन वर्णोच्चारणरहितेन शप्तः, तथा वन्ध्यापुत्रेण वन्ध्यायाः अजातपुत्रायाः पुत्रेण ताड़ित इति ॥ १२२ ॥

अधीते इति । निराबाधं यत् निष्प्रयोजनञ्च तत् यथा अयं स्वगेहे निजगृहे सुस्वरम् अधीते पठति गाति गायतीत्यर्थः आर्षोऽयं प्रयोगः । तथा विहरति, किञ्च मम गेहसमीपतः मद्गृहसमीपे मार्गस्य पथः मुखे द्वारं धत्ते दधाति इति ॥ १२३ ॥

सदेति । अयं जामाता मद्दत्तकन्यायां सदा विहरति, तथापि

मद्दुःखसुखतो लोको दूयते न न नन्दति।
निरर्थमिति वा ज्ञेयं निष्प्रयोजनमेव वा ॥ १२५ ॥
श्रावयित्वा तु यत् कार्य्यं त्यजेदन्यद् वदेदसौ।
अन्यपक्षाश्रयाद् वादी हीनो दण्ड्यश्च स स्मृतः ॥१२६॥
विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते।
प्रतिज्ञाते स्थिरीभूते लेखयेदुत्तरं ततः ॥ १२७ ॥
तत्राभियोक्ता प्राक् पृष्टो ह्यभियुक्तस्त्वनन्तरम्।
प्राड्विवाकः सदस्याद्यैर्दाप्यते ह्युत्तरं ततः ॥ १२८ ॥
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ।

---

गर्भं न धत्ते, इत्थञ्च वन्ध्या किमर्थमिति वक्तव्यम्। अयं सुतः न भाषते न कथयति किमर्थमिति विरुद्धकं ज्ञेयम् ॥ १२४ ॥

मद्दुःखेति। लोकः मम दुःखेन सुखेन च न दूयते न दुःखितो भवति न च नन्दति इति निरर्थं वा निष्प्रयोजनं वा ज्ञेयम् ॥ १२५ ॥

श्रावयित्वेति। यः वादी कार्य्यम् एकमित्यर्थः श्रावयित्वा त्यजेत् तत् इति शेषः, असौ वादी अन्यत् वदेत् सः वादी अन्यपक्षाश्रयात् हीनः अभियोगात् भ्रष्टः अपराद्धाभियोग इत्यर्थः दण्ड्यश्च स्मृतः ॥ १२६ ॥

विनिश्चिते इति। प्रतिज्ञाते पूर्वपक्षे ग्राह्याग्राह्याभ्याम् अंशाभ्यां विशोधिते संस्कृते अत एव विनिश्चिते तथा स्थिरीभूते सति ततः उत्तरं लेखयेत् प्रतिवादिनेति शेषः ॥ १२७ ॥

तत्रेति। तत्र विवादे प्राक् अभियोक्ता अर्थी, तदनन्तरम् अभियुक्तः प्रत्यर्थी पृष्टः जिज्ञासितः स्यात्, ततः उभयोः पृच्छानन्तरं सदस्याद्यैः विचारनियुक्तपुरुषादिभिः प्राड्विवाकः उत्तरं दाप्यते विज्ञापयमानिस्त्य प्राड्विवाको विचारयेदिति भावः ॥ १२८ ॥

श्रुतार्थस्येति। प्रतिवादिना पूर्वावेदकस्य वादिनः सन्निधौ श्रुता-

सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनं तथा।
पूर्व्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्व्विधम्॥ १४४॥
अङ्गीकृतं यथार्थं यद्वाद्युक्तं प्रतिवादिना।
सत्योत्तरन्तु तज्ज्ञेयं प्रतिपत्तिश्च सा स्मृता॥ १४५॥
श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम्॥ १४६॥
मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः।
अजातश्चास्मि तत्काले इति मिथ्या चतुर्व्विधम्॥ १४७॥
अर्थिना लिखितो ह्यर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत्॥ १४८॥

---

सर्व्वम् उभयोः वादिप्रतिवादिनोः सकाशात् प्रश्नैः पृच्छाभिः प्राड्विवाकः प्रश्नचातुर्य्येण गोप्यस्खलितं वा वाक्यविजृम्भितं वहिष्करणीयमिति भावः॥ १४३॥

सत्यमिति। उत्तरं चतुर्व्विधं स्यात्। यथा—सत्यं, मिथ्योत्तरं तथा प्रत्यवस्कन्दनं, पूर्व्वन्यायविधिश्च॥ १४४॥

अङ्गीकृतमिति। वादिना उक्तं यथार्थं यत् वाक्यं प्रतिवादिना अङ्गीकृतञ्चेत् तत् सत्योत्तरं विज्ञेयं सा च प्रतिपत्तिः स्मृता॥ १४५॥

श्रुत्वेति। अन्यस्तु प्रतिवादी तु भाषार्थं पूर्व्वपक्षं श्रुत्वा अर्थतः शब्दतश्च यदि तं प्रतिषेधति न स्वीकरोतीत्यर्थः तदा तत् मिथ्योत्तरं ज्ञेयम्॥ १४६॥

मिथ्येति। मिथ्या च चतुर्व्विधम् यथा—एतत् मिथ्या, एतत् अहं न अभिजानामि, तदा तत्कालिकः अभियोग इत्यर्थः तत्र तस्मिन् स्थाने न मम सन्निधिः सन्निधानम् अवस्थानमित्यर्थः, तत् काले अहं अजातश्च अस्मि इति॥ १४७॥

अर्थिनेति। अर्थिना यः अर्थः लिखितः, प्रत्यर्थी यदि तं

अस्मिन्नर्थे मयानेन वादः पूर्वमभूत् तदा ।
जितोऽयमिति चेद् ब्रूयात् प्राङ्न्यायः स उदाहृतः ॥१४९
जयपत्रेण सभ्यैर्वा साक्षिभिर्भावयाम्यहम् ।
मया जितः पूर्वमिति प्राङ्न्यायस्त्रिविधः स्मृतः ॥१५०॥
अन्योऽन्ययोः समक्षन्तु वादिनोः पक्षमुत्तरम् ।
न हि गृह्णन्ति ये सभ्या दण्ड्यास्ते चोरवत् सदा ॥१५१
लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे ।
अर्थिप्रत्यर्थिनोर्वापि क्रिया कारणमिष्यते ॥ १५२ ॥
पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरात्मकः ।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयाभिधः ॥ १५३ ॥

---

लिखितम् अर्थं तथा सर्वं स्वीकृत्य वादुयं ब्रूयात् तदा तत् प्रत्यव-स्कन्दनं हि, हि यस्मात् अवधारणार्थः ॥ १४८ ॥

अस्मिन्निति । अस्मिन् अर्थे विषये पूर्वम् अनेन मम वादः अभूत्, तदा अयं जितः मया पराजित इति प्रत्यर्थी यदि ब्रूयात् तदा सः प्राङ्न्यायः उदाहृतः उक्तः ॥ १४९ ॥

जयपत्रेणेति । प्राङ्न्यायः त्रिविधः स्मृतः—यथा । अयं मया पूर्वं जित इति जयपत्रेण, सभ्यैः, वा साक्षिभिः भावयामि प्रति-पादयामि, उपायत्रयं विद्यादिति भावः ॥ १५० ॥

अन्योऽन्ययोरिति । ये सभ्याः विचारनियुक्ताः पुरुषाः वादिनोः अर्थिप्रत्यर्थिनोः अन्योऽन्ययोः परस्परयोः समक्षं पक्षं वा उत्तरं न हि गृह्णन्ति, ते चोरवत् सदा दण्ड्याः ॥ १५१ ॥

लिखिते इति । लिखिते उत्तरे सम्यक् शोधिते अत एव निर्दोषे सति अतःपरमित्यर्थः अर्थिप्रत्यर्थिनोः क्रिया साक्षिलेख्यादिप्रमाण-प्रदर्शनादिरूपा कारणं जयपत्रस्येति भावः इष्यते ॥ १५२ ॥

पूर्वपक्ष इति । पूर्वपक्षः पादः प्रथम इति भावः, उत्तरात्मकः

कार्य्यं हि साध्यमित्युक्तं साधनन्तु क्रियोच्यते ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥ १५४ ॥
चतुष्पाद् व्यवहारः स्यात् प्रतिपत्त्युत्तरं विना ॥१५५॥
क्रमागतान् विवादांस्तु पश्येद् वा कार्य्यगौरवात् ॥१५६॥
यस्य वाभ्यधिका पीड़ा कार्य्यं वाभ्यधिकं भवेत् ।
वर्णानुक्रमतो वापि नयेत् पूर्वं विवादयेत् ॥ १५७ ॥
कल्पयित्वोत्तरं सभ्यैर्दातव्यैकस्य भावना ॥ १५८ ॥

---

द्वितीयः पादः, क्रियापादः तृतीयः, चतुर्थस्तु पादः निर्णयाभिधः सिद्धान्तरूप इत्यर्थः एतेन व्यवहारस्य चतुष्पादत्वमुक्तम् ॥ १५३ ॥

कार्य्यमिति । साध्यं कार्य्यमिति उक्तं, क्रिया साक्षिलेख्यादिः साधनं साध्यस्य प्रमाणम् उच्यते, तस्मात् अर्थी तृतीयपादे व्यवहारस्य तृतीयचरणे क्रियया [illegible] प्रतिपादयेत् साध्यं प्रमापयेदित्यर्थः ॥ १५४ ॥

चतुष्पादिति । प्रतिपत्तिरूपम् उत्तरं विना अपरेषु त्रिषु उत्तरेषु इत्यर्थः व्यवहारः चतुष्पाद् स्यात्, प्रतिपत्त्युत्तरेषु द्विपादे च तत्र क्रियापादस्य निर्णयपादस्य वा प्रयोजनाभावादिति भावः ॥ १५५ ॥

क्रमागतानिति । क्रमागतान् यथाक्रमेण उपस्थितान् विवादान् क्रमेण वा कार्य्यस्य गौरवात् गौरवमपेक्ष्य इत्यर्थः यथार्थे [illegible] पश्येत् ॥ १५६ ॥

यस्येति । यस्य या पीड़ा अभ्यधिका, वा कार्य्यम् अभ्यधिकम् अत्यधिकं भवेत् एवं [illegible] वापि अथवा वर्णानुक्रमतः ब्राह्मणादिक्रमेण पूर्वं नयेत् विवादयेत् [illegible] विचारयेदित्यर्थः ॥ १५७ ॥

कल्पयित्वेति । सभ्यैः राजपुरुषैः उत्तरं कल्पयित्वा यथोक्तरूपेण प्रतिवादिनः सकाशात् आदाय इत्यर्थः एकस्य वादिनः भावना चिन्ता साध्यसाधनार्थं चिन्तामपर इत्यर्थः दातव्या ॥ १५८ ॥

साध्यस्य साधनार्थं हि निर्दिष्टा यस्य भावना ।
विभावयेत् प्रतिज्ञातं सोऽखिलं लिखितादिना ॥१५९॥
न चैकस्मिन् विवादे तु क्रिया स्याद् वादिनोर्द्वयोः ॥१६०
मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ॥१६१
कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ॥ १६२ ॥
ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् ।
तत् साधनन्तु द्विविधं मानुषं दैविकं तथा ॥१६३॥
क्रिया स्याल्लिखितं भुक्तिः साक्षिणश्चेति मानुषम् ।
दैवं धटादि तन्नव्यं भूतालाभान्नियोजयेत् ॥ १६४ ॥

---

साध्यस्येति । साध्यस्य पक्षस्य साधनार्थं प्रामाण्यार्थं यस्य वादिनः भावना निर्दिष्टा कथिता, सः लिखितादिना साधनेन अखिलं समस्तं प्रतिज्ञातं विभावयेत् प्रतिपादयेत् समापयेदित्यर्थः ॥ १५९ ॥

न चेति । एकस्मिन् विवादे द्वयोः वादिनोः अर्थिप्रत्यर्थिनोः क्रिया साधननिर्देशार्थं प्रयासः न च स्यात् एकेनैव क्रिया निर्देश्या इति भावः ॥ १६० ॥

मिथ्येति । मिथ्योत्तरे पूर्ववादे प्रथमवादिनि, तथा कारणे प्रत्यवस्कन्दने उत्तरे प्रतिवादिनि क्रिया साधननिर्देशभारः स्यादित्यर्थः, प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी प्रतिवादी क्रियां निर्दिशेत् ॥ १६१ ॥

कारणादिति । पूर्वपक्षोऽपि कारणात् कस्मादपि हेतोरित्यर्थः कदाचित् उत्तरत्वम् उत्तरपक्षत्वं प्रपद्यते अवलम्बते ॥ १६२ ॥

तत इति । ततः उत्तरदानानन्तरम् अर्थी सद्यः तत्क्षणात् प्रतिज्ञातस्य अर्थस्य विषयस्य साधनं प्रमाणभूतं कारणं लेखयेत्, तत् साधनन्तु द्विविधं, मानुषं तथा दैविकम् ॥ १६३ ॥

क्रियेति । लिखितं, भुक्तिः भोगः, साक्षिणश्च इति त्रिविधा

तत्त्वच्छलानुसारित्वाद् भूतं भव्यं द्विधा स्मृतम्।
तत्त्वं सत्यार्थाभिधायि कूटाद्यभिहितं छलम्॥ १६५॥
छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः।
युक्त्यानुमानतो नित्यं सामादिभिरुपक्रमैः॥ १६६॥
न कालहरणं कार्य्यं राजा साधनदर्शने।
महान् दोषो भवेत् कालाद्धर्मव्यापत्तिलक्षणः॥ १६७॥
अर्थिप्रत्यर्थिप्रत्यक्षं साधनानि प्रदर्शयेत्।
अप्रत्यक्षं तयोर्नैव गृह्णीयात् साधनं नृपः॥ १६८॥
साधनानाञ्च ये दोषा वक्तव्यास्ते विवादिना।
गूढ़ास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात्॥ १६९॥

---

क्रिया मानुषं, घटादि तुलादग्न्यादिरूपं दैवम्। भूतस्य यथार्थस्य अलाभात् अप्राप्तेः तद् भव्यं घटादि नियोजयेत्॥ १६४॥

तत्त्वेति। तत्त्वस्य छलस्य च अनुसारित्वात् साधनं द्विविधं भूतं भव्यञ्च। सत्यार्थस्य अभिधायि प्रतिपादकं साधनं तत्त्वं, कूटाद्यभिहितं कपटादियुक्तं साधनं छलम्॥ १६५॥

छलमिति। नृपः युक्त्या अनुमानतः अनुमानेन च सामादिभिः उपक्रमैः उपायैश्च छलं निरस्य भूतेन याथार्थ्येन व्यवहारान् नित्यं सदा नयेत् पश्येदित्यर्थः॥ १६६॥

नेति। राज्ञा साधनदर्शने कालहरणं न कार्य्यं, कालात् कालहरणात् धर्मव्यापत्तिलक्षणः धर्महानिरूपः महान् दोषः भवेत्॥ १६७॥

अर्थीति। नृपः अर्थिप्रत्यर्थिनोः प्रत्यक्षं साधनानि प्रदर्शयेत्, तयोः अप्रत्यक्षम् असमक्षं साधनं नैव गृह्णीयात्॥ १६८॥

साधनानामिति। साधनानां प्रमाणानां ये दोषाः, ते विवादिना अर्थिना प्रत्यर्थिना वा वक्तव्याः; गूढ़ाः गुप्तास्तु दोषाः सभ्यैः विचार्य्य

अन्यथा दूषयन् दण्ड्यः साध्यार्थाच्चैव हीयते ।
विमृश्य साधनं सम्यक् कुर्य्यात् कार्य्यविनिर्णयम् ॥ १७०
कूटसाधनकारी तु दण्ड्यः कार्य्यानुरूपतः ।
द्विगुणं कूटसाक्षी तु साक्ष्यलोपी तथैव च ॥ १७१ ॥
अधुना लिखितं वक्ष्मि यथावदनुपूर्वशः ।
अनुभूतस्मारकन्तु लिखितं ब्रह्मणा कृतम् ॥ १७२ ॥
राजकीयं लौकिकञ्च द्विविधं लिखितं स्मृतम् ।
स्वहस्तलिखितं वान्यहस्तेनापि विलेखितम् ।
असाक्षिमत् साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ १७३ ॥

---

निर्युक्तैः दुष्टैः काले विचारकाले साक्ष्याणां प्रदूषणात् प्रवृत्ताः प्रस्फुटाः यथा तथा वक्तव्या इति शेषः ॥ १६९ ॥

अन्यथेति । अन्यथा अन्येन प्रकारेण अयथार्थमार्गेणेत्यर्थः दूषयन् दण्ड्यः दण्डनीयः भवति, साध्यार्थात् साधनीयात् विषयात् हीयते भ्रश्यते च । तस्मात् साधनं सम्यक् विमृश्य विविच्य कार्य्यनिर्णयं कुर्य्यात् ॥ १७० ॥

कूटेति । कूटं कपटं साधनं करोतीति तथोक्तः वादी वा प्रतिवादी कार्य्यानुरूपतः कार्य्यस्य अनुरूपात् गौरवलाघवानुसारादित्यर्थः दण्ड्यः । कूटसाक्षी तथा साक्ष्यलोपी साक्ष्यमन्यथा कुर्वन्नित्यर्थः अतः द्विगुणं यथा तथा दण्ड्यः इति शेषः ॥ १७१ ॥

अधुनेति । अधुना सम्प्रति यथावत् अनुपूर्वशः आनुक्रमेण लिखितं साधनमित्यर्थः वक्ष्मि ब्रवीमि । ब्रह्मणा विधात्रा अनुभूतस्मारकं पूर्वकृतकार्य्यस्मारकमित्यर्थः लिखितं कृतं निर्मितम् ॥ १७२ ॥

राजकीयमिति । लिखितं द्विविधं स्मृतं राजकीयं लौकिकञ्च । लौकिकं द्विविधं स्वकर्त्तृकलिखितम् अन्यहस्तलिखितं वा । पुनश्च द्वि-

भागदानक्रियादानसंविद्दास ऋणादिभिः ।
सप्तधा लौकिकं चैवं त्रिविधं राजशासनम् ।
शासनार्थं ज्ञापनार्थं निर्णयार्थं तृतीयकम् ॥ १७४ ॥
साक्षिमद्रिक्थ्यभिमतं भागपत्रं शुभक्तियुक् ।
सिद्धिकृच्चान्यथा सिद्धं कृतमप्यकृतं स्मृतम् ॥ १७५ ॥
दायाद्यभिमतं दानक्रयविक्रयपत्रकम् ।
स्थावरस्य ग्रामपादिसाक्षिकं सिद्धिकृत् स्मृतम् ॥ १७६ ॥
राज्ञा स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं प्रकृतिभिश्च मुद्रितम् ॥ १७७ ॥

---

धम् असाक्षिकं साक्षिमच्च, देशस्थितेः लोकाचारानुसारेण उभयोः ससाक्षिकासाक्षिकयोः सिद्धिः भवेदित्यर्थः ॥ १७३ ॥

भागेति । लौकिकञ्च लिखितम् एतत् भागदानक्रयादानसंविद्दासऋणादिभिः निमित्तभूतैः सप्तधा सप्तविधमित्यर्थः, राजशासनन्तु त्रिविधं, शासनार्थम् एकं, ज्ञापनार्थं द्वितीयं, निर्णयार्थं तृतीयम् ॥ १७४ ॥

साक्षिमदिति । साक्षिमत् ससाक्षिकं रिक्थिभिः दायादैः अभिमतं शुभक्तियुक् सुष्ठु रचनायुक्तं भागपत्रं बण्टनलेख्यं सिद्धिकृत्, अन्यथा अतथात्वे इत्यर्थः सिद्धं कृतमपि भागपत्रम् अकृतं स्मृतम् अप्रामाणिकमित्यर्थः ॥ १७५ ॥

दायादेति । स्थावरस्य भूम्यादेः दानविक्रयपत्रं दानपत्रं विक्रयपत्रं क्रयपत्रञ्च दायाद्यभिमतं दायादैः अभिमतं सम्मतं ग्रामपादिसाक्षिकं ग्रामाध्यक्षसाक्ष्ययुतलेख्यं सत् सिद्धिकृत् स्मृतम् ॥ १७६ ॥

राज्ञेति । राजकीयं लेख्यं राज्ञा स्वहस्तसंयुक्तं स्वहस्ताक्षरितं वा स्वस्य मुद्रया चिह्नितं अथवा राजानुमत्या प्रकृतिभिः राजपुरुषैः मुद्रितं भवतीति शेषः ॥ १७७ ॥

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः॥ १७८॥
साध्यं प्रमाणं द्रव्यं च संख्यां नाम तथात्मनः।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च॥ १७९॥
क्रमात् पितॄणां नामानि पीडामाहर्तृदायकौ।
क्षमालिङ्गानि चान्यानि पक्षे संकीर्त्य लेखयेत्॥ १८०॥
यत्रैतानि न लिख्यन्ते हीनं लेख्यं तदुच्यते।
भिन्नक्रमं व्युत्क्रमार्थं प्रकीर्णार्थं निरर्थकम्॥ १८१॥
अतीतकाललिखितं न स्यात् तत् साधनक्षमम्।
अप्रगल्भेन च स्त्रिया बलात्कारेण यत् कृतम्॥१८२॥

---

पक्षेति। लेखनप्रकारमाह निवेश्येत्यादि पक्षे साध्ये कालं वर्षं मासं पक्षं तिथिं वेलां प्रदेशं विषयं स्थानं जात्याकृती जातिम् आकृतिञ्चेत्यर्थः वयः यौवनादिकं साध्यं प्रमाणं द्रव्यं संख्याम् आत्मनः नाम च निवेश्य, तथा क्रमशः यथाक्रमं राज्ञां नाम, निवासं साध्यनाम, पितॄणाम् आत्मनः राज्ञश्चेति शेषः नामानि, पीडाम् अभियोगहेतुभूतामित्यर्थः, आहर्तृदायकौ ग्राहकं दातारञ्चेत्यर्थः, क्षमालिङ्गानि क्षमायाः चिह्नानि अन्यानि आवश्यकानि च संकीर्त्य लेखयेत्॥ १७८॥ १७९॥ १८०॥

यत्रेति। अतीतेति। यत्र एतानि उक्तानि न लिख्यन्ते तत् लेख्यं हीनम् अप्रमाणमित्यर्थः उच्यते। यत् भिन्नक्रमं क्रमभङ्गयुतं व्युत्क्रमार्थं विपरीतार्थं प्रकीर्णार्थं विक्षिप्तप्रतिपाद्यं निरर्थकम् अर्थशून्यं वा अतीतकाललिखितं कालान्तरे लिखितं, यच्च अप्रगल्भेन अचतुरेण निर्बोधेनेत्यर्थः, वा स्त्रिया स्त्रीलोकेन अथवा बलात्कारेण कृतं लिखितं तत् लेख्यं साधनक्षमं प्रामाणिकं न स्यात्॥ १८१॥१८२॥

सद्भिर्लेख्यैः साक्षिभिश्च भोगैर्दिव्यैः प्रमाणताम् ।
व्यवहारे नरो याति चेहामुत्राश्नुते सुखं ॥ १८३ ॥
स्वेतरः कार्य्यविज्ञानी यः स साक्षी त्वनेकधा ।
दृष्टार्थश्च श्रुतार्थश्च कृतश्चैवाकृतो द्विधा ॥ १८४ ॥
अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु प्राग् यथा ।
दर्शनैः श्रवणैर्येन स साक्षी तुल्यवाग् यदि ॥ १८५ ॥
यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥ १८६ ॥
अनुभूतः सत्यवाक्यः सैकः साक्षित्वमर्हति ।
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ॥ १८७ ॥

---

सद्भिरिति । नरः सद्भिः निर्दोषैः लेख्यैः साक्षिभिः भोगैश्च तथा दिव्यैः घटादिभिश्च व्यवहारे प्रमाणतां याति प्राप्नोति, इह अस्मिन् लोके अमुत्र परलोके च सुखम् अश्नुते ॥ १८३ ॥

स्वेतर इति । यः स्वेतरः स्वस्मात् आत्मनः इतरः अन्यः सन् कार्य्यविज्ञानी कार्य्यज्ञानवान् भवति सः साक्षी, स तु अनेकधा, दृष्टार्थः श्रुतार्थश्चेति द्विविधः, स पुनः कृतः अकृतश्चेति द्विविधः ॥१८४॥

अर्थीति । येन प्राक् पूर्व्वम् अर्थिप्रत्यर्थिसान्निध्यात् वादिप्रतिवादिसकाशात् दर्शनैः श्रवणैर्वा यथा अनुभूतम् अनुभवविषयीकृतं सः यदि तुल्यवाक् अविरुद्धवाक् भवति तदा साक्षी भवति ॥ १८५ ॥

यस्येति । यस्य बुद्धिः स्मृतिः श्रोत्रञ्च सुदीर्घेणापि बहुनापि कालेन न उपहता न विलुप्ता भवति, स वै स एव नित्यशः सततं साक्षित्वम् अर्हति ॥ १८६ ॥

अनुभूत इति । यः अनुभूतः अनुभवशक्तिसम्पन्नः तथा सत्यवाक् चैकः स एव (सन्निरपेक्षः) साक्षित्वम् अर्हति । यश्च धर्मवित्

यथाजाति यथावर्णं सर्वे सर्वेषु साक्षिणः ।
गृहिणो नपराधीनाः सूरयश्चाप्रवासिनः ॥ १८८ ॥
युवानः साक्षिणः कार्य्याः स्त्रियः स्त्रीषु च कीर्त्तिताः ॥१८९
साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ १९० ॥
बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद् बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥ १९१ ॥
अभिमानाच्च लोभाच्च विजातिश्च शठस्तथा ।
उपजीवनसङ्कोचाद्भृत्यश्चैते ह्यसाक्षिणः ।

---

धार्मिकः उभयानुमतः वादिप्रतिवादिभ्यां सम्मतः, स एकोऽपि साक्षी भवति ॥ १८७ ॥

यथेति । यथाजाति जात्यनुसारेण यथावर्णं वर्णानुसारेण सर्वेषु विषयेषु सर्वे गृहिणः गृहस्थाः नपराधीनाः स्वाधीना इत्यर्थः सूरयः विद्वांसः तथा अप्रवासिनः जनाः साक्षिणः भवन्तीति शेषः ॥ १८८ ॥

युवान इति । युवानः न तु बालका वा वृद्धा इत्यर्थः साक्षिणः, तथा स्त्रीषु विषयेषु स्त्रियः साक्षिण्य इत्यर्थः कीर्त्तिताः ॥ १८९ ॥

साहसेष्विति । सर्वेषु साहसेषु दस्युव्यवहारेषु स्तेयसंग्रहणेषु चौर्य्येषु बलात्कारेषु च तथा वाक्दण्डयोः पारुष्ये साक्षिणः न परीक्षेत ये केचन साक्षिणो भवन्तीति भावः ॥ १९० ॥

बाल इत्यादि । बालः शिशुः अज्ञानात्, स्त्री असत्यात्, कूटकृत् कपटकारी पापाभ्यासात् पापानुष्ठानशीलत्वात्, बान्धवः स्नेहात्, अरिः शत्रुः वैरनिर्य्यातनात्, विजातिः अपकृष्टजातिः अभिमानात् आत्मनः मानवत्त्वमप्रत्याख्यायोगादित्यर्थः, शठः लोभात्, तथा भृत्यः उपजीवनसंकोचात् उपजीवनस्य जीविकायाः सङ्कोचो भवेदिति भयादित्यर्थः

नार्थसम्बन्धिनो विद्यायौनसम्बन्धिनोऽपि न ॥ १८२ ॥
श्रेण्यादिषु च वर्गेषु कश्चिच्चेद् द्वेष्यतामियात्।
तस्य तेभ्यो न साक्ष्यं स्याद् द्वेष्टारः सर्व एव ते ॥ १८३ ॥
न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे।
अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थेऽपि च सन्निधौ ॥ १८४ ॥
प्रत्यक्षं वादयेत् साक्ष्यं न परोक्षं कथञ्चन।
नाङ्गीकरोति यः साक्ष्यं दण्ड्यः स्याद्देशितो यदि ॥ १८५ ॥
यः साक्षान्नैव निर्दिष्टो नाहूतो नैव देशितः।
ब्रूयात् मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥ १८६ ॥

---

विरुद्धत्वात् विरुद्धं वदेत्, तस्मात् एते बान्धवादयः असाक्षिणः साक्षित्वं नार्हन्तीत्यर्थः, किञ्च अर्थसम्बन्धिनः अर्थेन सम्बन्धवन्तः न, तथा विद्यायौनसम्बन्धिनः सहाध्यायिनः जामात्रादयश्चेत्यर्थः न साक्षिणो भवन्तीत्यर्थः ॥ १८१ ॥ १८२ ॥

श्रेण्यादिष्विति। श्रेण्यादिषु जातिविशेषेषु वर्गेषु गणेषु सम्प्रदायविशेषेषु च मध्ये चेत् यदि कश्चित् जनः द्वेष्यतां शत्रुताम् इयात् तदा तेभ्यः श्रेण्यादिभ्यः वर्गेभ्यश्च सकाशात् तस्य विद्वेषिणः जनस्य साक्ष्यं न स्यात्, यस्मात् ते सर्व एव द्वेष्टारः विद्वेषिणः भवन्तीति शेषः ॥ १८३ ॥

नेति। राज्ञा अर्थिप्रत्यर्थिनोः सान्निध्ये समक्षं साक्षिप्रभाषणे साक्षिणां प्रभाषणे वचने तथा सन्निधौ तयोः समक्षमित्यर्थः साध्यार्थे साधनीये अर्थे विषयेऽपि कालहरणं न कार्य्यम्। किञ्च प्रत्यक्षम् उभयोः समक्षं साक्ष्यं वादयेत्, कथञ्चन परोक्षं न वादयेदित्यर्थः। यस्तु देशितः यदि आदिष्टोऽपीत्यर्थः साक्ष्यं न अङ्गीकरोति, सः दण्ड्यः स्यात् ॥ १८४ ॥ १८५ ॥

य इति। यः साक्षात् विचारकसन्निधाने इत्यर्थः निर्दिष्टः साक्षि-

द्वैधे बहूनां वचनं समेषु गुणिनां वचः ।
तत्राधिकगुणानां च गृह्णीयाद्वचनं सदा ॥ १९७ ॥
यत्रानियुक्तोऽपीक्षेत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि सो ब्रूयाद् यथादृष्टं यथाश्रुतम् १९८ ॥
विभिन्नकाले यज्ज्ञातं साक्षिभिश्चांशतः पृथक् ।
एकैकं वादयेत्तत्र विधिरेष सनातनः ॥ १९९ ॥
स्वभावोक्तं वचस्तेषां गृह्णीयान्न बलात् क्वचित् ।
उक्ते तु साक्षिणा साक्ष्ये न प्रष्टव्यं पुनः पुनः ॥ २०० ॥

---

र्येण प्रदर्शित इत्यर्थः न, आहूतः न, ईप्सितः आदिष्टश्च न, स चेत् मिथ्या वा तथ्यं ब्रूयात् तदा सः अपि नराधमः दण्ड्यः दण्ड्यनीयो भवतीत्यर्थः ॥ १९६ ॥

द्वैधे इति । द्वैधे साक्षिणां वचनेषु अनैकमत्यात् संशये सतीत्यर्थः बहूनां वचनं, समेषु तुल्येषु समसंख्येषु भिन्नवचनेष्वित्यर्थः मध्ये गुणिनां गुणवतां वचः, तत्रापि सर्वेषु गुणिष्वित्यर्थः अधिकगुणानां वचनं सदा गृह्णीयात् ॥ १९७ ॥

यत्रेति । यत्र अनियुक्तोऽपि जनः यदि किञ्चन ईक्षेत वा शृणुयात् तत्र सः पृष्टः सन् यथादृष्टं यथाश्रुतं ब्रूयात् ॥ १९८ ॥

विभिन्नकाले इति । विभिन्नकाले पृथक् पृथक् समये साक्षिभिः अंशतः पृथक् पृथक् यत् ज्ञातं, तत् एकैकं वादयेत्, वाचयेत्, तत्र एषः विधिः एकैकवादनरूपः सनातनः चिरप्रचलितः ॥ १९९ ॥

स्वभावोक्तमिति । तेषां साक्षिणां स्वभावोक्तं स्वाभाविकं वचः गृह्णीयात् बलात् बलमाश्रित्य इत्यर्थः क्वचित् कदाचित् न गृह्णीयादित्यर्थः । साक्षिणा च साक्ष्ये उक्ते सति पुनः पुनः न प्रष्टव्यं तं साक्षिणं प्रतीति शेषः ॥ २०० ॥

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
पौराणैः सत्यवचने धर्ममाहात्म्यकीर्त्तनैः ।
अनृतस्यातिदोषैश्च भृशमुत्त्रासयेच्छनैः ॥ २०१ ॥
देशे काले कथं कस्मात् किं दृष्टं वा श्रुतं त्वया ।
लिखितं लेखितं यत् तद्वद सत्यं तदेव हि ॥ २०२ ॥
सत्यं साक्ष्यं ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ २०३ ॥
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते ।
तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ २०४ ॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मैव चात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षित्वमुत्तमम् ॥ २०५ ॥

---

आहूयेति । साक्षिणः आहूय शपथैः भृशम् अत्यर्थं नियम्य आयत्तीकृत्य पृच्छेत् तथा पौराणैः पुराणोक्तैः सत्यवचनरूपधर्मस्य माहात्म्यकीर्त्तनैः, अनृतस्य असत्यस्य अतिदोषैः अतिदोषकीर्त्तनैश्च वक्ष्यमाणैरिति शेषः भृशम् अत्यर्थं शनैः मन्दं मन्दम् उत्त्रासयेत् ॥ २०१ ॥

पृच्छाप्रकारमाह देशे इति । देशे कस्मिन् स्थाने, काले कस्मिन् समये, कथं केन प्रकारेण कस्मात् हेतोः त्वया किं दृष्टं वा श्रुतं, यच्च लिखितं लेखितञ्च तत् तद् सत्यं वद हियतः अवधारणार्थः ॥ २०२ ॥

सत्यमिति । साक्षी सत्यं साक्ष्यं ब्रुवन् पुष्कलान् महतः लोकान्, इह च अनुत्तमां कीर्त्तिम् आप्नोति एषा वाक् ब्रह्मपूजिता ब्रह्मणा प्रशंसिता ॥ २०३ ॥

सत्येनेति । साक्षी सत्येन पूयते पवित्रो भवति, धर्मः सत्येन सत्यकथनेन वर्द्धते । तस्मात् सर्ववर्णेषु साक्षिभिः सत्यं हि सत्यमेव वक्तव्यम् ॥ २०४ ॥

आत्मैवेति । आत्मा एव अन्तर्यामी हृदय एव आत्मनः जीवस्य

मन्यते वै पापकारी न कश्चित् पश्यतीति मां ।
तांश्च देवाः प्रपश्यन्ति तथा ह्यन्तरपूरुषः ॥ २०६ ॥
सुकृतं यत् त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत् सर्वं तस्य जानीहि यं पराजयसे मृषा ।
समाप्नोषि च तत्पापं शतजन्मार्जितं सदा ॥ २०७ ॥
साक्षिणं श्रावयेदेवं सभायामरहोगतम् ॥ २०८ ॥
दद्याद्दोषानुरूपं तु कालं साधनदर्शने ।
उपाधिं वा समीक्ष्यैव दैवराजकृतं सदा ॥ २०९ ॥
विनष्टे लिखिते राजा साक्षिभोगैर्विचारयेत् ।
लेख्यसाक्षिविनाशे तु सम्भोगादेव चिन्तयेत् ॥ २१० ॥

---

साक्षी पापपुण्यकर्मणां द्रष्टा, आत्मा एव आत्मनः गतिः आश्रयः अस्मात् त्वं नृणाम् अभियोगमापन्नानाम् उत्तमं साक्षिणम् आत्मानं मा अवमंस्थाः अवमानितं मा कार्षीरित्यर्थः ॥ २०५ ॥

मन्यते इति । पापकारी जनः, कश्चित् मां न पश्यतीति मन्यते वैशब्दोऽवधारणार्थः । देवाः तथा अन्तरपूरुषः अन्तर्यामी तान् साक्षिणः प्रपश्यन्ति ॥ २०६ ॥

सुकृतमिति । समाप्नोषीति । त्वया जन्मान्तरशतैः यत् किञ्चित् सुकृतं कृतं तत् सर्वं, यं त्वया असत्यवचनेन पराजयसे तस्य भवेदिति शेषः जानीहि बुध्यस्व । किञ्च शतजन्मकृतं तत्पापं तस्य पराजेतुर्जनस्य पापं सदा समाप्नोषि लभसे च, च, एवं प्रकारेण सभायाम् अरहोगतं सर्वसमक्षवर्त्तिनं साक्षिणं श्रावयेत् ॥ २०७ ॥२०८॥

दद्यादिति । राजा सदा दोषानुरूपं स्वामोपयुक्तं वा दैवराजकृतम् उपाधिं निमित्तं समीक्ष्य विविच्य साधनदर्शने प्रमाणप्रदर्शने कालं समयं दद्यात् ॥ २०९ ॥

विनष्टे इति । लिखिते लेख्ये प्रमाणे विनष्टे सति राजा

सद्भोगाभावतः साक्षिलेख्यतो विमृशेत् सदा ।
केवलेन च भोगेन लेख्येनापि च साक्षिभिः ॥ २११ ॥
कार्य्यं न चिन्तयेद्राजा लोकदेशादिधर्मतः ॥ २१२ ॥
कुशला लेख्यबिम्बानि कुर्व्वन्ति कुटिलाः सदा ।
तस्मान्न लेख्यसामर्थ्यात् सिद्धिरैकान्तिकी मता ॥२१३॥
स्नेहलोभभयक्रोधैः कूटसाक्षित्वशङ्कया ।
केवलैः साक्षिभिर्नैव कार्य्यं सिध्यति सर्व्वदा ॥ २१४ ॥
अस्वामिकं स्वामिकं वा भुङ्क्ते यद् बलदर्पतः ।
इति शङ्कितभोगैर्न कार्य्यं सिध्यति केवलैः ॥ २१५ ॥

---

साक्षिभिः भोगैश्च प्रमाणैः विचारयेत् । तथा लेख्यस्य साक्षिणश्च विनाशे सति सद्भोगात् उत्तमात् अक्षुण्णादित्यर्थः भोगात् एव चिन्तयेत् विचारयेत् ॥ २१० ॥

सद्भोगाभावत इति । सद्भोगाभावतः उत्तमभोगाभावे सतीत्यर्थः सदा साक्षिलेख्यतः साक्षिभिः लेख्येन च विमृशेत् विचारयेत् । किन्तु केवलेन भोगेन, केवलेन लेख्येन वा केवलैः साक्षिभिश्च विमृशेत् ॥२११॥

कार्य्यमिति । लोकदेशादिधर्मतः लोकं देशादिं स्थानप्रभृतिं धर्मञ्च अनुरुध्य इत्यर्थः यवर्थे पञ्चमी । अयं महान् वा निकृष्टः अयं उत्कृष्टोदेशः वा नीचदेशः अयं परमधर्मः वा नीचधर्म इत्येवं विविच्य इत्यर्थः कार्य्यं न चिन्तयेत् न विचारयेत् इत्यर्थः ॥ २१२ ॥

कुशला इति । कुशलाः निपुणाः कुटिलाः दुर्जनाः सदा लेख्यबिम्बानि अनुरूपाणि लेख्यानि कुर्व्वन्ति, तस्मात् लेख्यस्य सामर्थ्यात् बलात् ऐकान्तिकी सिद्धिः न मता ॥ २१२ ॥

स्नेहेति । स्नेहेन, लोभेन, भयेन, क्रोधेन च तथा कूटसाक्षित्व-शङ्कया केवलैः साक्षिभिः सर्व्वदा कार्य्यं नैव सिध्यति ॥ २१४ ॥

अस्वामिकमिति । यत् यस्मात् लोकः बलदर्पतः बलात् दर्पाच्च

शङ्कितव्यवहारेषु शङ्कयेदन्यथा न हि ।
अन्यथा शङ्कितान् सभ्यान् दण्डयेच्चोरवन्नृपः ॥ २१६ ॥
अन्यथा शङ्कनाच्चास्य अनवस्था प्रजायते ।
लोको विभिद्यते धर्मो व्यवहारश्च हीयते ॥ २१७ ॥
सागमो दीर्घकालश्च निराक्रोशो निरन्तरः ।
प्रत्यर्थिसन्निधानश्च भुक्तो भोगः प्रमाणवत् ॥ २१८ ॥
सम्भोगं कीर्तयेद्यस्तु केवलं नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥ २१९ ॥
आगमेऽपि बलं नैव भुक्तिस्तोकापि यत्र नो

---

अस्वामिकं स्वामिकं वा स्वामिवर्जितैः वा भुङ्क्ते, इति शङ्कितभोगैः इत्थं शङ्कायुक्तैः केवलैः भोगैरित्यर्थः कार्यं न सिध्यति ॥ २१५ ॥

शङ्कितेति । नृपः शङ्कितव्यवहारेषु शङ्कायुक्तेषु व्यवहारेषु शङ्कयेत् अन्यथा न हि नैव शङ्कयेदित्यर्थः । अन्यथा शङ्कितान् सभ्यान् चोरवत् दण्डयेत् ॥ २१६ ॥

अन्यथेति । अन्यथा शङ्कनात् नित्यं सततम् अनवस्था अस्थितिः प्रजायते, लोकः विभिद्यते भेदं गच्छति, धर्मः व्यवहारश्च हीयते विच्युतो भवति ॥ २१७ ॥

सागम इति । सागमः आगमेन प्रतिग्रहक्रयादिरूपेण अर्जनेन सहितः, दीर्घकालः बहुकालिकः निराक्रोशः अन्याक्रोशरहितः निरन्तरः क्रमागतः प्रत्यर्थिसन्निधानः प्रतिवादिसन्निहितश्च भुक्तः भोगः प्रमाणवत् प्रमाणतुल्यः ॥ २१८ ॥

सम्भोगमिति । यस्तु केवलं सम्भोगं कीर्त्तयेत् क्वचित् कदाचित् आगमं न, स तु भोगच्छलापदेशेन भोगरूपच्छलावलम्बेन तस्करः चोरः विज्ञेयः ॥ २१९ ॥

आगमेऽपि इति । यत्र स्तोका अल्पापि भुक्तिः नो, न विद्यते

यं कञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैरर्थं न स तं लब्धुमर्हति ॥ २२१ ॥
वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥ २२२ ॥
अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥ २२३ ॥
अनागमापि या भुक्तिर्विच्छेदोपरमोज्झिता ।
षष्टिवर्षात्मिका सापहर्तुं शक्या न केनचित् ॥ २२४ ॥
आधिः सीमा बालधनं निक्षेपोपनिधिस्तथा ।

---

इत्यर्थः तत्र आगमेऽपि बलं न अस्तीति शेषः । एतेन आगमो भोग इव प्रमाणमित्युक्तम् ॥ २२० ॥

यमिति । धनी यं कञ्चित् अर्थं परैः अन्यैः सन्निधौ समीपे इत्यर्थः दशवर्षाणि व्याप्य भुज्यमानं प्रेक्षते, सः तम् अर्थं लब्धुं न अर्हति न समर्थो भवतीत्यर्थः ॥ २२१ ॥

वर्षाणीति । इह जगति यस्य भूः भूमिः विंशतिः वर्षाणि व्याप्य परैः भुक्ता, सति राज्ञि राजनि विद्यमानेऽपि समर्थस्य बलवतोऽपि तस्य सा भूः इह संसारे न सिध्यति न घटते इत्यर्थः ॥ २२२ ॥

अनागममिति । यः बहूनि अब्दशतानि वर्षशतानि व्याप्य अनागमम् आगमं विना परद्रव्यं भुङ्क्ते, पृथिवीपतिः चौरदण्डेन तं पापं दण्डयेत् ॥ २२३ ॥

अनागमापीति । या भुक्तिः अनागमा आगमेन विरहितापि षष्टिवर्षात्मिका षष्टिवर्षव्यापिनी तथा विच्छेदोपरमोज्झिता विच्छेदेन उपरमेण निवृत्त्या च उज्झिता हीना भवति, सा केनचित् केनापि अपहर्तुं न शक्या ॥ २२४ ॥

आधिरिति । आधिः बन्धकद्रव्यं, सीमा, बालधनम् अनाथ-

राजस्वं स्त्रीधनञ्च न भोगेन प्रणश्यति ॥ २२५ ॥
उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः ।
काले विपन्ने पूर्वोक्ते तत् फलं नाप्नुते धनी ॥ २२६ ॥
भोगः संक्षेपतश्चोक्तस्तथा दिव्यमथोच्यते ।
प्रमादाद्धनिनो यत्र त्रिविधं साधनं न चेत् ॥ २२७ ॥
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥ २२८ ॥
चोदना प्रतिकालञ्च युक्तिलेशस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत् क्रमात् ॥ २२९ ॥

---

अयमत्राशयं विशेषः रक्षितद्रव्यम् उपनिधिः निक्षेपात् पदेऽस्य व्याख्यातं स्वरूपेणादि निक्षेपोपनिध्योरस्थावरत्वस्थावरत्वाभ्यां विशेषोऽवगन्तव्यः । तथा राजस्वं स्त्रीधनञ्च मनुष्यविशेषः भोगेन न प्रणश्यति ॥ २२५ ॥

उपेक्षामिति । उपेक्षां कुर्वतः तूष्णीम्भूतस्य तिष्ठतः तस्य धनिनः पूर्वोक्ते निर्धारिते काले दशवर्षात्मकेऽपि भावः विपन्ने अतीते सति धनी तत् फलं तस्य द्रव्यस्य फलं न आप्नुते न लभते कालातिक्रमस्य अनवधानत्वेन निर्धार्यत्वादिति भावः ॥ २२६ ॥

भोग इति । भोगः संक्षेपतः संक्षेपेण तथा तेन प्रकारेण उक्तः कथितः, अथ इदानीं दिव्यं प्रमाणम् उच्यते, यत्र धनिनः प्रमादात् अनवधानवशात् त्रिविधम् उक्तरूपं लेख्यसाक्षिभोगात्मकं साधनं प्रमाणं न चेत् घटते वादी च अर्थम् अपह्नुते अस्वीकरोति तत्र त्रिविधः विधिः उपायः उक्तः ॥ २२७ ॥ २२८ ॥

चोदनेति । चोदनाप्रतिकालः प्रथमः युक्तिलेशः द्वितीयः, शपथः तृतीयः प्रोक्तः कथितः तैः त्रिभिर्विधिभिः क्रमात् साधयेत् तत्त्वं निश्चिनुयादित्यर्थः ॥ २२९ ॥

विशिष्टतर्किता या च शास्त्रशिष्टाविरोधिनी ।
योजना स्वार्थसंसिद्धै सा युक्तिस्तु न चान्यथा ॥ २२० ॥
दानं प्रलापनं भेदः सम्यक्क्षोभक्रिया च या ।
विलापनवचं चैव हेतवो हि विभावकाः ॥ २२१ ॥
अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥ २२२ ॥
युक्तिष्वप्यसमर्थासु दिव्यैरेनं विमर्दयेत् ॥ २२३ ॥
यस्माद्देवैः प्रयुक्तानि दुष्कार्य्ये महात्मभिः ।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥ २२४ ॥

---

विशिष्टेति । विशिष्टतर्किता विशिष्टतर्कसमेता शास्त्रैः शिष्टैश्च अविरोधिनी शास्त्रशिष्टसम्मता इत्यर्थः या योजना सा युक्तिः, सा एव स्वार्थस्य स्वकार्य्यस्य संसिद्धै सम्यक् सिद्धये भवति, अन्यथा न हि नैव ॥ २२० ॥

दानमिति । दानं प्रलापना प्रकर्षेण लापनं भेदः मनोभङ्गः, सम्यक्क्षोभक्रिया सम्यक् क्षोभप्रदर्शनं तथा विलापस्य वचनः अपलपनस्य अपचारस्य निश्चितविनयैश्च इति शेषः एते पञ्च विभावकाः बोधका हेतवः ॥ २२१ ॥

अभीक्ष्णमिति । अभीक्ष्णं पुनः पुनः, त्रिचतुःपञ्चकृत्वो वा चोद्यमानः अनुरुध्यमानः अपि यदा तद् वचः अनुरोधवचनं न प्रतिहन्यात् तदा परतः अनन्तरं सः अर्थं दाप्यते ॥ २२२ ॥

युक्तिष्विति । युक्तिषु असमर्थासु अक्षमासु सतीषु दिव्यैः शपथादिभिः एनं प्रतिवादिनं विमर्दयेत् शासयेत् ॥ २२३ ॥

यस्मादिति । यस्मात् महात्मभिः देवैः दुष्कार्य्ये असाध्यविषये परस्परविशुद्ध्यर्थं प्रयुक्तानि, तस्मात् नामतः नाम्ना दिव्यानि उच्यन्ते इति शेषः ॥ २२४ ॥

सप्तर्षिभिश्च भिक्षार्थे लौकितान्यात्मशुद्धये ॥ २३५ ॥
स्वमहत्त्वाच्च यो दिव्यं न कुर्यात् ज्ञानदर्पतः ।
वसिष्ठाद्याश्रितं नित्यं स नरो धर्मतस्करः ॥ २३६ ॥
प्राप्ते दिव्येऽपि न शपेद् ब्राह्मणो ज्ञानदुर्बलः ।
संहरन्ति च धर्मार्थं तस्य देवा न संशयः ॥ २३७ ॥
यस्तु स्वशुद्धिमन्विच्छन् दिव्यं कुर्यादतन्द्रितः ।
विशुद्धो लभते कीर्त्तिं स्वर्गं चैवान्यथा न हि ॥ २३८ ॥
अग्निर्विषं घटस्तोयं धर्माधर्मौ च तण्डुलाः ।
शपथाश्चैव निर्दिष्टा मुनिभिर्दिव्यनिर्णये ॥ २३९ ॥
पूर्वं पूर्वं गुरुतरं कार्यं दृष्ट्वा नियोजयेत् ।
लोकप्रत्ययतः प्रोक्तं सर्वं दिव्यं गुरु स्मृतम् ॥ २४० ॥

---

सप्तर्षिभिरिति । सप्तर्षिभिः मरीच्यादिभिश्च भिक्षार्थे अन्नार्थे आत्मशुद्धये अपहरणदोषक्षालनायेत्यर्थः दिव्यानि लौकितानि अङ्गीकृतानि ॥ २२५ ॥

स्वमहत्त्वादिति । यः स्वस्य महत्त्वात् ज्ञानदर्पतः ज्ञानदर्पाच्च नित्यं वशिष्ठादिभिः सप्तर्षिभिः आश्रितं लौकितं दिव्यं न कुर्यात् स नरः धर्मतस्करः ॥ २२६ ॥

प्राप्ते इति । यः ज्ञानदुर्बलः ज्ञानहीनः ब्राह्मणः दिव्ये प्राप्ते उपस्थितेऽपि न शपेत् न दिव्यं कुर्यात्, देवाः तस्य धर्मार्थं धर्मम् अर्थञ्च संहरन्ति न संशयः ॥ २२७ ॥

य इति । यस्तु स्वशुद्धिम् अन्विच्छन् अनुसरन् अतन्द्रितः अनलसः सन् दिव्यं कुर्यात्, सः विशुद्धः सन् कीर्त्तिं स्वर्गञ्च लभते, अन्यथा, दिव्याकरणे इत्यर्थः न हि, नैव लभते, इत्यर्थः ॥ २२८ ॥

अग्निरिति । अग्निः, विषं, घटः, तोयं जलं, धर्मः अधर्मः तण्डुलाः शपथाश्च एते मुनिभिः दिव्यनिर्णये निर्दिष्टाः ॥ २२९ ॥

पूर्वमिति । कार्यं दृष्ट्वा लोकप्रत्ययतः लोकानां विश्वासात् पूर्वं

तप्तायोगोलकं कृत्वा गच्छेन्नवपदं करे ।
तप्ताङ्गारेषु वा गच्छेत् पद्भ्यां सप्त पदानि हि ॥२४१॥
तप्ततैलगतं लौहमाषं हस्तेन निर्हरेत् ।
सुतप्तलौहपत्रं वा जिह्वया संलिहेदपि ॥ २४२ ॥
गरं प्रभक्षयेद्धस्तैः कृष्णसर्पं समुद्धरेत् ॥ २४३ ॥
कृत्वा स्वस्य तुलासाम्यं हीनाधिक्यं विशोधयेत् ॥२४४॥
स्वेष्टदेवस्नपनजमद्यादुदकमुत्तमम् ।
यावन्नियमितः कालस्तावदप्सु निमज्जयेत् ॥ २४५ ॥

---

पूर्वं गुरुतरं दिव्यं नियोजयेत्, किन्तु प्रोक्तं कथितं सर्वमेव दिव्यं गुरु कृतम् ॥ २४० ॥

अग्निपरीक्षामाह तप्तेति । करे हस्ते तप्तम् अयोगोलकं लौहपिण्डं कृत्वा नवपदं गच्छेत् । वा अथवा तप्तेषु ज्वलत्सु अङ्गारेषु पद्भ्यां सप्तपदानि गच्छेत् । किंवा हस्तेन तप्ततैलगतं तप्तेषु तैलेषु स्थितं लौहमाषं माषपरिमितं लौहं निर्हरेत् तस्मात् निष्कासयेदित्यर्थः । वा अथवा जिह्वया सुतप्तम् अतितप्तं ज्वलदित्यर्थः लौहपत्रं लौहखण्डं संलिहेत् सम्यक् स्पृशेदित्यर्थः ॥ २४१ ॥ २४२ ॥

विषपरीक्षामाह गरमिति । गरं विषं प्रभक्षयेत् वा हस्तैः कृष्णसर्पं समुद्धरेत् ॥ २४३ ॥

घटपरीक्षामाह कृत्वेति । स्वस्य आत्मनः तुलासाम्यं कृत्वा हीनाधिक्यं विशोधयेत् यदि हीनः वा अधिकः भवति तदा शुद्ध्येदिति भावः ॥ २४४ ॥

कोषपरीक्षामाह । स्वेष्टेति स्वस्य आत्मनः यः इष्टदेवः तस्य स्नपनात् जनितम् उत्तमम् उदकम् अद्यात् पिबेत् अभियुक्त इति शेषः । ततः यावन्नियमितः निर्धारितः कालः, तावत् कालं व्याप्येत्यर्थः अप्सु जलेषु निमज्जयेत् अभियुक्तं राजेति पदद्वयमूह्यम् ॥ २४५ ॥

धर्माधर्मौ तदर्धे च ह्यष्टमांशे च तण्डुलाः।
षोडशांशे च यपथा एवं दिव्यविधिः स्मृतः ॥२५०॥
एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ २५१ ॥
शिरोवर्त्ती यदा न स्यात् तदा दिव्यं न दीयते।
अभियोक्ता शिरः स्थाने दिव्येषु परिकीर्त्यते ॥ २५२ ॥
अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात्।
न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ॥ २५३ ॥
इच्छया त्वितरः कुर्यादितरो वर्त्तयेच्छिरः ॥ २५४ ॥

---

धर्मेति। तदर्धे पञ्चाशदधिकशतद्वये अपहृते इत्यर्थः धर्माधर्मौ स्मृतौ अष्टमांशे पञ्चविंशत्यधिकशते अपहृते इत्यर्थः तण्डुलाः स्मृताः। षोडशांशे सार्द्धद्विषष्टिसंख्यके अपहृते इत्यर्थः अत्र यपथाः स्मृताः। एवं उक्तरूपः दिव्यविधिः स्मृतः कथितः ॥ २५० ॥

एषेति। परीक्षकैः राजपुरुषैः निकृष्टानां नीचानां एषा उक्तरूपा संख्या, मध्यानां मानवानां एतद् द्विगुणा स्मृता। उत्तमानाञ्च चतुर्गुणा कल्पनीया ॥ २५१ ॥

शिर इति। यदा अभियोक्ता शिरोवर्त्ती अग्रवर्त्ती सम्मुखस्थितः न स्यात् तदा दिव्यं न दीयते अभियोक्ता दिव्येषु दीयमानेष्वित्यर्थः शिरः स्थाने परिकीर्त्यते शिरोवर्त्ती भवेदिति कथ्यते ॥ २५२ ॥

अभियुक्तायेति श्रुतिनिदर्शनात् वेदविधानात् अभियुक्ताय दिव्यं दातव्यम्। कश्चित् जनः अभियोक्तारं दिव्येषु न विनियोजयेत् ॥२५३॥

इच्छयेति। इच्छया तु अभियुक्तश्चेति भावः इतरः अभियोक्ता कुर्यात् दिव्यमिति शेषः। तदा इतरः स एव शिरः वर्त्तयेत् अभियोक्तृशिरसि तिष्ठेदित्यर्थः ॥ २५४ ॥

पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥ २५५ ॥
परदाराभियोगे च अगम्यागमनेषु च ।
महापातकशस्ते च दिव्यमेव न चान्यथा ॥ २५६ ॥
चौर्याभिशङ्कायुक्तानां तप्तमाषो विधीयते ॥ २५७ ॥
प्राणान्तिकविवादे तु विद्यमानेऽपि साधने ।
दिव्यमालम्बते वादी न पृच्छेत् तत्र साधनम् ॥२५८॥
सोपधं साधनं यत्र तद्राज्ञे ज्ञापितं यदि ।
शोधयेत्तत्तु दिव्येन राजा धर्मासनस्थितः ॥ २५९ ॥

---

पार्थिवैरिति । दस्युभिः निर्दिष्टानां दूषितत्वेन प्रदर्शितानां अत एव पार्थिवैः राजभिः शङ्कितानां आत्मशुद्धिपराणां स्वदोषक्षालनकामिनां मानवानां शिरः कदापि शिरश्छेदनं विना दिव्यं देयम् ॥ १५५ ॥

परदारेति । परदाराभियोगे परस्त्रीगमनाभियोगे, अगम्यानां विमातृप्रभृतीनां गमनेषु तथा महापातकशस्ते ब्रह्महत्यादि महापातकाभियोगे च दिव्यमेव शोधनमित्यर्थः अन्यथा न च शुद्धिरित्यर्थः ॥२५६॥

चौर्येति । चौर्याभिशङ्कायुक्तानां चौर्यापवादग्रस्तानां मानवानां तप्तमाषः तप्ततैलगतमाषपरिमितलौहपिण्डं विधीयते ॥ २५७ ॥

प्राणान्तिकेति । प्राणान्तिकविवादे उपस्थिते इत्यर्थः साधने अन्यस्मिन् प्रमाणे विद्यमानेऽपि वादी दिव्यं प्रमाणम् आलम्बते आश्रयति, तत्र साधनम् अन्यदिति भावः न पृच्छेत् ॥ २५८ ॥

सोपधमिति । यत्र साधनं प्रमाणं सोपधं कापट्यपूर्णं, तच्च यदि राज्ञे ज्ञापितं स्यात् तदा धर्मासनगतः राजा दिव्येन तत् शोधयेत् ॥ २५९ ॥

यन्नामगोत्रैर्यच्चैस्यात्तुल्यं लेख्यं यदा भवेत् ।
अगृहीतधने तत्र कार्य्यो दिव्येन निर्णयः ॥ २६० ॥
मानुषं साधनं न स्यात्तत्र दिव्यं प्रदापयेत् ।
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ॥ २६१ ॥
स्त्रीणां शीलाभियोगेषु सर्वार्थापह्नवेषु च ।
प्रदुष्टेषु प्रमाणेषु दिव्यैः कार्य्यं विशोधनम् ॥ २६२ ॥
महापापाभिशापेषु निक्षेपहरणेषु च ।
दिव्यैः कार्य्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥ २६३ ॥
प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे ।
परेभ्यश्च तथा चान्ये तं वादं प्रपथेमयेत् ॥ २६४ ॥

---

यदिति । यदा यत् लेख्यं यन्नामगोत्रैः यथायथनामगोत्रैः लेख्यस्य तान्त्रिकस्य तुल्यं भवेत् तदा तत्र अभियुक्ते अगृहीतधने धनार्थाङ्क्षिणि वादिप्रकाशात् आत्मानम् अगृहीतधनत्वेन मन्यमाने इत्यर्थः दिव्येन निर्णयः कार्य्यः ॥ २६० ॥

मानुषमिति । स्त्रीणामिति । यत्र मानुषं साधनं लौकिकं प्रमाणं न स्यात् न विद्यते, तत्र दिव्यं प्रदापयेत् । तथा च अरण्ये, निर्जने, रात्रौ, अन्तर्वेश्मनि गृहाभ्यन्तरे, साहसे दस्युतायां, स्त्रीणां शीलाभियोगेषु चरित्रदूषणेषु सर्वेषाम् अर्थानाम् अपह्नवेषु तथा प्रमाणेषु लौकिकेषु प्रदुष्टेषु प्रकर्षेण दूषितेषु च दिव्यैः विशोधनं कार्य्यम् ॥ २६१ ॥ ॥ २६२ ॥

महेति । राजा महापापाभिशापेषु महापातकाभियोगेषु तथा निक्षेपाणां न्यस्तद्रव्याणां हरणेषु च साक्षिषु सत्स्वपि विद्यमानेषु अपि दिव्यैः कार्य्यं परीक्षेत ॥ २६३ ॥

प्रथमा इति । यत्र प्रथमाः श्रेष्ठाः तथा परे मध्यमा इत्यर्थः,

स्थावरेषु विवादेषु पूगश्रेणिगणेषु च ।
दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति ॥ २१५ ॥
विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ।
साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत् ॥ २१६ ॥
विवाहोत्सवद्यूतेषु विवादे समुपस्थिते ।
साक्षिणः साधनं तत्र न दिव्यं न च लेख्यकम् ॥ २१७ ॥
द्वारमार्गक्रियाभोग्यजलवाहादिषु तथा ।
भुक्तिरेव तु गुर्वी स्यात् दिव्यं न च साक्षिणः ॥ २१८ ॥
यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥ २१९ ॥

---

यथा परैश्च अन्ये साक्षिणः भिद्यन्ते भेदं गच्छन्ति तेन संशयः वादं भवेत् मिथ्यां वदेदित्यर्थः ॥ २१४ ॥

स्थावरेष्विति । विक्रयेति । स्थावरेषु भूम्यादिषु विषयेषु पूगश्रेणिगणेषु पूगाः जातिविशेषयुक्ताः श्रेणयः विभिन्नजातियुक्ताः गणाः एकविधजातियुक्ताः तेषु, भृत्यानां दत्तादत्तेषु वेतनस्येति भावः विवादे तथा स्वामिनां निर्णये के अस्य स्वामिनः इत्येवं निर्णये सति, विक्रयादानसम्बन्धे विक्रीय अदाने इत्यर्थः तथा धनं मूल्यं क्रीत्वा अनिच्छति अप्रयच्छति सति साक्षिभिः लिखितेन तथा भुक्त्या एतान् विवादान् प्रसाधयेत् निष्पादयेत् ॥ २१५ ॥ २१६ ॥

विवाहेति । विवाहे उत्सवे तथा द्यूतेषु विवादे समुपस्थिते सति तत्र साक्षिणः साधनं प्रमाणं, दिव्यं न, लेख्यञ्च न साधनमित्यर्थः ॥ २१७ ॥

द्वारेति । द्वारमार्गक्रिया भोग्यजलवाहादिषु, द्वारानुष्ठाने मार्गकरणे भोग्यानां क्रमागतं जलनिःसारणादिषु भुक्तिः भोगः एव गुर्वी प्रमाणं स्यात्, दिव्यं न साक्षिणश्च न प्रमाणमित्यर्थः ॥ २१८ ॥

यद्येति । यदि एकः जनः मानुषीं क्रियां ब्रूयात्, अन्यस्तु

यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥ २७० ॥
प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादिसंप्रतिपत्त्या वा निर्णयः षड्विधः स्मृतः ॥ २७१ ॥
लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥ २७२ ॥
निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः ।
सीमाद्यास्तत्र नृपतिः प्रमाणं स्यात् प्रभुर्यतः ॥ २७३ ॥
स्वतन्त्रः साधयन्नर्थान् राजापि स्यान्न किल्बिषी ।

---

प्रतिवादी तु दैविकीं ब्रूयात् तत्र नृपः मानुषीं क्रियां गृह्णीयात् न तु दैवीम् ॥ २६९ ॥

यद्येति । यदि मानुषी क्रिया एकदेशप्राप्तापि अभियोगस्य कियदंशे प्राप्तापि विद्यते, तदा सा ग्राह्या पूर्णापि दैविकी वदतां नृणां न तु ग्राह्या इत्यर्थः ॥ २७० ॥

प्रमाणैरिति । प्रमाणैः लिखितादिभिः हेतुभिः कारणैः, चरितैः, आचरणैः, शपथेन, नृपाज्ञया राजादेशेन, वादिनः सम्प्रतिपत्त्या स्वीकारेण वा एभिः षड्भिः निमित्तैः निर्णयः निष्पत्तिः षड्विधः स्मृतः ॥ २७१ ॥

लेख्यमिति । यत्र लेख्यं न भुक्तिश्च न विद्यते, साक्षिणश्च न सन्ति, दिव्यावतारश्च न अस्ति, तत्र पार्थिवः राजा प्रमाणं यथाभिमतं कुर्यादित्यर्थः ॥ २७२ ॥

निश्चेतुमिति । ये सन्दिग्धरूपिणः सन्देहयुक्ताः सीमाद्याः सीमादिसंक्रान्ताः वादाः विवादाः निश्चेतुं न शक्याः स्युः, तत्र नृपतिः प्रमाणं स्यात्, यतः सः प्रभुः ॥ २७३ ॥

स्वतन्त्र इति । राजापि स्वतन्त्रः स्वेच्छाचारी अर्थान् कार्याणि

धर्मशास्त्राविरोधेन अर्थशास्त्रं विचारयेत् ॥ २७४ ॥
राजामात्यप्रलोभेन व्यवहारस्तु दुष्यति ।
लोकोऽपि च्यवते धर्मात् कूटार्थे सम्प्रवर्त्तते ॥ २७५ ॥
अतिकामक्रोधलोभैर्व्यवहारः प्रवर्त्तते ।
कर्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च ।
व्याप्नोत्यतस्तु तन्मूलं छित्वा तं विमृशं नयेत् ॥ २७६ ॥
अनर्थं चार्थवत् कृत्वा दर्शयन्ति नृपाय ये ।
अविविच्य नृपस्तच्च मन्यते तैर्निदर्शितं ।
स्वयं करोति तद्धन्ता भुङ्क्तेऽष्टगुणं त्वघम् ॥ २७७ ॥

---

बाधयन् सभाद्धानः किल्विषी पापी स्यात् । तस्मात् धर्मशास्त्राविरोधेन अर्थशास्त्रं विचारयेत् तथात्वे पापस्पर्शो न भवेदिति भावः ॥ २७४ ॥

राजेति । राज्ञः अमात्यानाञ्च प्रलोभेन लोभातिशयेन व्यवहारः विचारः दुष्यति सदोषो भवति, लोकोऽपि धर्मात् च्यवते भ्रश्यति यथेच्छं व्यवहरतीत्यर्थः कूटार्थे कपटकार्ये सम्प्रवर्त्तते च ॥ २७५ ॥

अतीति । अतिकामक्रोधलोभैः कामातिशयेन क्रोधातिशयेन लोभातिशयेन च यदि व्यवहारः प्रवर्त्तते भवति तदा एनः तज्जनितं पापं कर्तॄन् प्रापकारिणः साक्षिणः सभ्यान् राजानञ्च आप्नोति आक्रमति, अतः तस्य पापस्य मूलं कामादीनाम् अतिशयं छित्वा निरस्य तं व्यवहारं विमृशं विशिष्टविवेकं नयेत् प्रापयेत् विविच्य विचारयेदित्यर्थः ॥ २७६ ॥

अनर्थमिति । ये अमात्याः अनर्थम् अनिष्टम् अर्थवत् इष्टवत् कृत्वा नृपाय दर्शयन्ति, यश्च नृपः अविचिन्त्य अविविच्य तैः अमात्यैः निर्दर्शितं प्रदर्शितं तच्च सत्यं मन्यते तथा स्वयं करोति तेषां मतानुसारेण वादं निष्पादयति, तैः राज्ञा अमात्यैश्च तद्धन्ता तथा व्यवहारे इति अष्टगुणम् अघं पापं भुज्यते ॥ २७७ ॥

अधर्मतः प्रवृत्तं तं नोपेक्षेरन् सभासदः।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः॥ २७८॥
धिग्दण्डस्त्वथ वाग्दण्डः सभ्यायत्तौ तु तावुभौ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि॥ २७९॥
तीरितं चानुशिष्टं च यो मन्येत विधर्मतः।
द्विगुणं दण्डमाधाय पुनस्तत् कार्य्यमुद्धरेत्॥ २८०॥
साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः।
स्वचर्य्यावसितानां च प्रोक्तः पौनर्भवो विधिः॥ २८१॥

---

अधर्मत इति। सभासदः अमात्यादयः अधर्मतः अधर्मे प्रवृत्तं तं नृपं न उपेक्षेरन् वारयेयुरित्यर्थः, उपेक्षमाणाः अवारयन्तः सनृपाः नृपसहिताः अधोमुखाः नरकं यान्ति गच्छन्ति॥ २७८॥

धिगिति। धिग्दण्डः त्वां धिक् इत्येवं निर्भर्त्सनरूपो दण्डः तथा वाग्दण्डः वाक्येन तिरस्काररूपः दण्डः तौ उभौ अपि सभ्यानाम् आयत्तौ अधीनौ, सभ्याः एतौ एव दण्डौ कर्त्तुं शक्नुवन्ती-त्यर्थः। अर्थदण्डः वधदण्डश्च उभौ अपि राजायत्तौ नृपाधीनौ उक्तौ, नृपः अर्थदण्डं वधदण्डं कर्त्तुं शक्नोतीत्यर्थः॥ २७९॥

तीरितमिति। यः विवादी तीरितं निष्पादितम् अनुशिष्टं आज्ञप्तञ्च पराजयरूपं विधर्मतः अधर्मेण युक्तमिति भावः विशेषश्चे-न्नतीया। मन्येत, सः द्विगुणं दण्डम् आधाय दत्त्वा पुनस्तत् कार्य्यम् उद्धरेत् साधयेत्॥ २८०॥

साक्षीति। साक्षिभिः सभ्यैरमात्यैश्च अवसन्नानां पराजितानां दूषणे पराजयप्रयोजकदोषे इति भावः वर्त्तमाने सतीत्यर्थः पुनर्दर्शनं पुनर्वि-चारः कर्त्तव्य इति शेषः किञ्चेति चार्थः स्वस्य राजपुरुषस्य वा व्यवहार-दर्शनेन अवसितानां निष्पादितानाञ्च पौनर्भवः विधिः पुनर्विचार इत्यर्थः प्रोक्तः॥ २८१॥

अमात्यः प्राड्विवाको वा ये कुर्य्युः कार्य्यमन्यथा ।
तत्सर्वं नृपतिः कुर्यात् तान् सहस्रं तु दण्डयेत् ॥ २८२ ॥
न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ।
सभ्ये दूषिते सभ्यदोषे तदुद्धृत्य नृपो नयेत् ॥ २८३ ॥
प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥ २८४ ॥
सभ्यादिभिर्विनिर्णिक्तं विधृतं प्रतिवादिना ।
दृष्ट्वा राजा तु जयिने प्रदद्याज्जयपत्रकम् ॥ २८५ ॥
अन्यथा ह्यभियोक्तारं निरुन्ध्याद् बहुवत्सरम् ।
मिथ्याभियोगसदृशमर्हयेदभियोगिनम् ॥ २८६ ॥

---

अमात्य इति । अमात्यः प्राड्विवाको वा विचारपरिषदि ये अन्ये सभ्याः कार्य्यम् अन्यथा कुर्य्युः, तत् सर्वं कार्य्यं नृपतिः कुर्यात् तत्त्वेन निष्पादयेत्, तांश्च अमात्यादीन् सहस्रं दण्डयेत् ॥ २८२ ॥

नेति । दण्डं विना कश्चिदपि जनः जातु कदाचित् मार्गे सदाचाररूपे पथि न हि नैव अवतिष्ठते । सभ्यानां दोषे सन्दर्शिते सम्यक् प्रदर्शिते सति विवादिनेति शेषः, नृपः तत् दूषणम् उद्धृत्य नयेत् विवादं निष्पादयेत् ॥ २८३ ॥

प्रतिज्ञेति । वादी प्रतिज्ञायाः साध्यस्य भावनात् प्रमाणीकरणात्, प्राड्विवाकादीनां पूजनात् सत्याभियोक्तृत्वेन प्रशंसनात् तथा जयपत्रस्य आदानात् ग्रहणाच्च लोके जयीति निगद्यते कथ्यते ॥ २८४ ॥

सभ्यादिभिरिति । राजा तु सभ्यादिभिः विचारनियुक्तैः विनिर्णिक्तं विशेषेण निर्द्धारितं तथ्यतया अवधारितं प्रतिवादिना च विधृतं स्वीकृतं साध्यमिति शेषः दृष्ट्वा जयिने जयपत्रकं प्रदद्यात् ॥२८५॥

अन्यथेति । अन्यथा अभियोगस्य अवास्तवकत्वे दृष्टे अभियोक्तारं मिथ्याभियोगसदृशम् अलीकाभियोगोपयुक्तं यथा तथा दण्ड-

कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः॥ २८७॥
जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः।
तयोरपि पिता श्रेयान् वीजप्राधान्यदर्शनात्॥ २८८॥
अभावे वीजिनो माता तदभावे तु पूर्वजः।
स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम्॥ २८९
याः सर्वाः पितृपत्न्यः स्युस्तासु वर्तेत मातृवत्।
स्वसमेकेन भागेन सर्वास्ताः प्रतिपालयन्॥ २९०॥
अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः।

---

वस्तुर' निरुध्यात् कारायां वासयेत्। तथा अभियोगिनम् अभियुक्तं जनम् अर्हयेत् पूजयेत्॥ २८६॥

कामक्रोधाविति। यः कामक्रोधौ संयम्य धर्मेण अर्थान् कार्य्याणि पश्यति, प्रजाः, सिन्धवः नद्यः समुद्रमिव तम् अनुवर्त्तन्ते॥ २८७॥

सम्प्रति दायप्रकरणमुद्दिशति जीवतोरिति। जरया वार्द्धकेन समन्वितोऽपि पुत्र इति शेषः जीवतोः मातापित्रोः अस्वतन्त्रः अस्वेच्छाचारी भवेदित्यर्थः, तयोः मातापित्रोः मध्येऽपि वीजस्य प्राधान्यदर्शनात् पिता श्रेयान् श्रेष्ठतरः॥ २८८॥

अभावे इति। वीजिनः पितुः अभावे माता श्रेयसी, तदभावे तस्या मातुरभावे पूर्वजः ज्येष्ठः श्रेयान् यतः ज्येष्ठे स्वातन्त्र्यं स्वाधीनत्वं स्मृतं, ज्यैष्ठ्यञ्च ज्येष्ठत्वञ्च गुणेन वयसा च कृतं केवलं वयसा ज्यैष्ठ्यं न श्रेष्ठं गुणेन वयसा च उभाभ्यान्तु श्रेष्ठमित्यर्थः॥ २८९॥

या इति। याः सर्वाः पितुः पत्न्यः स्युः, तासु मातृवत् वर्त्तेत व्यवहरेत् तथा स्वस्य आत्मनः समेन समानेन एकेन एकेन भागेन ताः सर्वाः मातृः प्रतिपालयेत्॥ २९०॥

अस्वतन्त्रा इति। सर्वाः प्रजाः अस्वतन्त्राः पराधीनाः, पृथिवी-

अस्वतन्त्रः स्मृतः शिष्य आचार्य्ये तु स्वतन्त्रता ॥ २९१ ॥
सुतस्य सुतदाराणां वशित्वमनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥ २९२ ॥
स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः ।
अनुशिष्टौ विसर्गे वाऽविसर्गे चेश्वरा मताः ॥ २९३ ॥
मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ २९४ ॥
भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत् ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ २९५ ॥

---

पतिस्तु स्वतन्त्रः स्वाधीनः । शिष्यः अस्वतन्त्रः स्मृतः, आचार्य्ये तु स्वतन्त्रता अस्तीति शेषः ॥ २९१ ॥

सुतस्येति । सुतस्य पुत्रस्य सुतदाराणां पुत्रभार्य्याणाञ्च अनुशासने उपदेशे दमने वा वशित्वं स्वातन्त्र्यम् अस्तीति शेषः, किन्तु सुते पुत्रे विषये विक्रये दाने च पितुः वशित्वं स्वातन्त्र्यं न अस्तीति शेषः ॥ २९२ ॥

स्वतन्त्रा इति । परतन्त्रेषु पराधीनेषु मध्ये एते सर्वे पुत्रा एव नित्यशः सततं स्वतन्त्राः प्रायेण स्वाधीना इत्यर्थः स्वाधीनवदाचरन्तीति भावः; यतः अनुशिष्टौ अनुशासने शिक्षा वह मन्त्रणे विसर्गे दाने अविसर्गे च ईश्वराः स्वाधीनाः मताः कथिताः ॥ २९३ ॥

मणीति । पिता मणीनां मुक्तानां प्रवालानाम् अन्यस्य सर्वस्य अस्थावरस्य इत्यर्थः प्रभुः यथेच्छं व्यवहारक्षम इत्यर्थः, किन्तु सर्वस्य स्थावरस्य पिता न पितामहश्च न प्रभुरित्यर्थः स्थावरे पितुः स्वाधीनता नास्तीति भावः सर्वस्येत्युपादानात् किञ्चिदंशस्थावर दानादिषु पितुः स्वाधीनतेति सूच्यते ॥ २९४ ॥

भार्य्या इति । भार्य्या पत्नी, पुत्रः दासः भृत्यश्च एते त्रय एव

वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न।
अन्यस्वमन्यहस्तेषु चौर्य्याद्यैः किं न दृश्यते ॥ २९६ ॥
तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि।
अस्वापहृतमेतेन न युक्तं वक्तुमन्यथा ॥ २९७ ॥
विदितोऽर्थागमः शास्त्रे तथा वर्णैः पृथक् पृथक्।
शास्ति तच्छास्त्रधर्मं यत्म्लेच्छानामपि तत् सदा ॥२९८
पूर्व्वाचार्य्यैस्तु कथितं लोकानां स्थितिहेतवे ॥२९८॥
समानभागिनः कार्य्याः पुत्राः स्वस्य च वै स्त्रियः।

---

अधनाः अस्वामिनः अस्वतन्त्राः इत्यर्थः कृताः उक्ताः, ते भार्य्यादयः यत् धनं समधिगच्छन्ति अर्जयन्ति, तत् धनम् एते भार्य्यादयः यस्य, तस्य भवतीति शेषः ॥ २९५ ॥

वर्त्तत इति। यत् धनं यस्य हस्ते वर्त्तते तिष्ठति, स एव तस्य धनस्य स्वामी न, तथाहि चौर्य्याद्यैः हेतुभिः अन्यस्वम् अपरधनम् अन्यहस्तेषु अपरजनानां तस्करादीनामित्यर्थः हस्ते किं न दृश्यते? अपितु दृश्यत एव ॥ २९६ ॥

तस्मादिति। तस्मात् शास्त्रतः एव शास्त्रानुसारेणैव स्वाम्यं स्यात्, अनुभवात् प्रत्यक्षदर्शनादिकारणात् अपि न स्वाम्यमित्यर्थः। अन्यथा अनेन अस्य जनस्य अपहृतम् इति वक्तुं न युक्तम् अपहर्त्तुः तत्स्वाम्यादिति भावः ॥ २९७ ॥

विदित इति। यथावर्णं वर्णानुसारेण पृथक् पृथक् अर्थागमः धनार्जनोपायः स्वामीरिक्थक्रयेत्यादि शास्त्रे विहितः। तस्य शास्त्रस्य यत् धर्मं तत् सदा म्लेच्छानामपि शास्ति म्लेच्छानामिति कर्मणि षष्ठी। म्लेच्छा अपि त शास्त्रमनुसृत्य धनार्जनेषु प्रवर्त्तन्तेत्यर्थः। एतच्च लोकानां स्थितिहेतवे सदाचाररक्षणाय पूर्व्वाचार्य्यैः पूर्व्वपण्डितैः कथितम् ॥ २९८ ॥

समानेति। स्वस्य आत्मनः पुत्राः स्त्रियश्च समानभागिनः कार्य्याः,

स्वभागार्धहरा कन्या दौहित्रस्तु तदर्धभाक्। २९९ ॥
मृतेऽधिपेऽपि पुत्राद्या उक्तभागहरा स्मृताः ॥ ३०० ॥
मात्रे दद्याच्चतुर्थांशम् भगिन्यै मातुरर्धकम्।
तदर्धं भागिनेयाय शेषं सर्वं हरेत् सुतः ॥ ३०१ ॥
पुत्रो नप्ता धनं पत्नी हरेत् पुत्री च तत्सुतः।
माता पिता च भ्राता च पूर्वाभावाच्च तत्सुतः ॥३०२॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥ ३०३ ॥
ऊढया कन्यया वापि पत्युः पितृगृहाच्च यत्।

---

कन्या अनूढा दुहिता तद्भागार्द्धहराः तस्य पुत्रस्य यो भागः तस्य अर्द्धहरा, दौहित्रस्तु तदर्द्धभाक् तस्य कन्याप्राप्यांशस्य अर्द्धभाक् भवेदित्यर्थः ॥ २९९ ॥

मृते इति। अधिपे स्वामिनि पितरि इत्यर्थः मृतेऽपि पुत्राद्याः पुत्रप्रभृतयः उक्तभागहराः स्वभागिन इत्यर्थः स्मृताः ॥ ३०० ॥

मात्रे इति। सुतः मात्रे चतुर्थांशं स्वचतुर्थभागैकभागं भगिन्यै मातुः अर्द्धकम् अष्टमभागैकभागमित्यर्थः तथा भागिनेयाय तदर्द्धं षोडशभागैकभागमित्यर्थः दद्यात्, शेषम् अवशिष्टं सर्वं स्वयं हरेत् गृह्णीयात् ॥ ३०१ ॥

पुत्र इति। पुत्रः, नप्ता पौत्रः, पत्नी पुत्री, तत्सुतः दौहित्रः, माता, पिता भ्राता च यथाक्रमं, तथा पूर्वेषाम् उक्तानां पुत्रादीनाम् अभावात् अभावाच्च तत्सुतः भ्रातृसुतः, धनं हरेत् ॥ ३०२ ॥

सौदायिकमिति। स्त्रीणां सौदायिकं धनं प्राप्य स्वातन्त्र्यम् इष्यते, स्थावरेषु अपि सौदायिकेषु इत्यर्थः विषयेषु विक्रये दाने च यथेष्टं स्वातन्त्र्यमस्तीति शेषः ॥ ३०३ ॥

ऊढयेति। ऊढया परिणीतया कन्यया अनूढया अपि पत्युः

मातृपित्रादिभिर्दत्तं धनं सौदायिकं स्मृतम्॥ २०४॥
पित्रादिधनसम्बन्धहीनं यद्यदुपार्जितम्।
येन सः काममश्नीयादविभाज्यं धनं हि तत्॥ २०५॥
जलतस्करराजाग्निव्यसने समुपस्थिते।
यस्तु स्वशक्त्या संरचेत् तस्यांशो दशमः स्मृतः॥२०६॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते।
कार्यानुरूपं निर्वेशं लभेरंस्ते यथार्हतः॥ २०७॥
संस्कर्त्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः॥२०८॥

---

स्त्रकाशात् पितृस्त्वहात्र मातृपित्रादिभिः दत्तं यत् धनं प्राप्तमिति शेषः तत् सौदायिकं स्मृतम्॥ २०४॥

पित्रादीति। पित्रादिधनसम्बन्धहीनं पैतृकधनसाहाय्यं विनेत्यर्थः यत् यत् उपार्जितं तत् तत् सः उपार्जकः कामं यथेष्टम् अश्नीयात् उपभुञ्जीयात् हि यतः तत् धनम् अविभाज्यं भ्रात्रादिभिर्न विभजनीयम्॥ २०५॥

जलेति। यत्तु जलतस्कर राजाग्निव्यसने जलरूपे चोररूपे राजरूपे तथा अग्निरूपे व्यसने विपदि समुपस्थिते सति स्वशक्त्या निजसामर्थ्येन संरक्षेत् अपरधनमिति शेषः तस्य दशमः अंशः स्मृतः, तद्धनात् स दशमभागं लभेतेत्यर्थः॥ २०६॥

हेमेति। यत्र हेमकारादयः स्वर्णकारप्रभृतयः व्यवसायिन इत्यर्थः सम्भूय मिलित्वा शिल्पं कुर्वते, ते यथार्हतः यथायोग्यं कार्यानुरूपं निर्वेशं भृतिं भोगं वा निर्वेशो भृतिभोगयोरित्यमरः। लभेरन्॥२०७॥

संस्कर्त्तेति। संस्कर्ता संस्कारकः कार्यशोधक इत्यर्थः तत् कलासु संस्कारकार्यविभागेषु अभिज्ञः जनः मनीषिभिः विद्वद्भिः शिल्पी प्रोक्तः॥ २०८॥

हर्म्यं देवगृहं वापि वापिकोपस्कराणि च।
सम्भूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति॥ २०९॥
नर्तकानामेव धर्मः सद्भिरेष उदाहृतः।
तालज्ञो लभतेऽर्धं गायनास्तु समांशिनः॥ २१०॥
परराष्ट्राद्धनं यत् स्याच्चौरैः स्वाम्याज्ञया हृतम्।
राज्ञे षष्ठांशमुद्धृत्य विभजेरन् समांशकम्॥ २११॥
तेषां चेत् प्रसृतानां च ग्रहणं समवाप्नुयात्।
तन्मोक्षार्थं च यद्दत्तं वहेयुस्ते समांशतः॥ २१२॥
प्रयोगं कुर्वते ये तु हेमधान्यरसादिना।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः॥ २१३॥

---

हर्म्यमिति। हर्म्यं देवगृहं वा वापिकां दीर्घिकाम् उपस्कराणि गृहोपकरणानि च सम्भूय कुर्वतां तेषां व्यवसायिनां मध्ये प्रमुखः प्रधानतमः द्व्यंशं द्वौ भागौ अर्हति लभते॥ २०९॥

नर्त्तकानामिति। नर्त्तकानाम् एव वक्ष्योऽयमर्थः नटानामपीत्यर्थः एषः धर्मः विधिः सद्भिः साधुभिः उदाहृतः निरूपितः। यथा तालज्ञः अर्धं धनस्य अर्जितस्य अर्द्धं लभते, अन्ये गायनास्तु समांशिनः समभागिनः भवन्ति॥ २१०॥

परराष्ट्रादिति। स्वामिनः आज्ञया चौरैः परराष्ट्रात् यत् धनं हृतं, ते तस्य षष्ठांशं राज्ञे स्वामिने उद्धृत्य दत्त्वा समांशकं विभजेरन्॥ २११॥

तेषामिति। प्रसृतानां चौर्यकर्मणि प्रवृत्तानां तेषां मध्ये यदि कश्चित् ग्रहणं समवाप्नुयात् धृतो भवेदित्यर्थः तदा तस्य मोक्षार्थम् उद्धारार्थं यत् दत्तं तत् परिजनैरिति भावः ते चौराः तत् दत्तं धनं समांशतः वहेयुः दद्युरित्यर्थः॥ २१२॥

प्रयोगमिति। ये तु हेमधान्यरसादिना हेम्ना धान्येन रसादिना

समो न्यूनोऽधिको ह्यंशे योऽनुक्षिप्तस्तथैव सः ।
व्ययं दद्यात् कर्म कुर्यात् लाभं गृह्णीत चैव हि ॥२१४॥
वणिजानां कर्षकाणामेष एव विधिः स्मृतः ॥ २१५ ॥
सामान्यं याचितं न्यास आधिर्दासश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ।
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ॥ २१६ ॥
अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ २१७ ॥

---

द्रव्येण प्रयोगं सम्भूय वाणिज्यमित्यर्थः कुर्वते, तेषां कार्य्यानुरूपतः कार्य्यानुरूपतश्च समन्यूनाधिकैः अंशैः तथाविधः लाभः भवतीत्यर्थः ॥ २१२ ॥

सम इति । यः समः तुल्यः, न्यूनः अल्पः अधिको वा अंशः अनुक्षिप्तः निर्द्धारितः पूर्वमिति शेषः सः भागः तथैव स्यात् । व्ययं यथाभागं दद्यात् कर्म यथाभागं कुर्य्यात् तथा लाभं यथाभागं गृह्णीत हिशब्दः अवधारणार्थः ॥ २१४ ॥

वणिजानामिति । वणिजानां कर्षकाणाञ्च एषः एव विधिः स्मृतः कथितः ॥ २१५ ॥

सामान्यमिति । सामान्यं साधारणं धनं, याचितं प्रत्यर्पयिष्यामीत्युक्त्वा प्रार्थ्य आनीतं, न्यासः गच्छितं धनम् आधिः बन्धकं दासः, तद्धनं दासधनम् अन्वाहितम् अन्यहस्ते अर्पितं धनं निक्षेपः शिल्पिहस्ते संस्कारार्थं निक्षिप्तं द्रव्यं तथा अन्वये सन्ताने सति सर्वस्वं सर्वं धनम् एतानि नववस्तूनि पण्डितैः आपत्सु अपि न देयानि न अन्यहस्ते दानविक्रयादिना अर्पणीयानीत्यर्थः ॥ २१६ ॥

अदेयमिति । यः अदेयं दाने प्रतिषिद्धं वस्तु गृह्णाति, यश्च

अस्वामिकेभ्यश्चौरेभ्यो विगृह्णाति धनं तु यः ।
अव्यक्तमेव क्रीणाति स दण्ड्यश्चौरवन्नृपैः ॥ २१८ ॥
ऋत्विक्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टं चर्त्विजं याज्यो विनेयौ तावुभावपि ॥ २१९ ॥
द्वात्रिंशांशं षोडशांशं लाभं पण्ये नियोजयेत् ।
नान्यथा तद्व्ययं ज्ञात्वा प्रदेशाद्यनुरूपतः ॥ २२० ॥
वृद्धिं हित्वा त्वधमर्णैर्वाणिज्यं कारयेत् सदा ॥ २२१ ॥
मूलात्तु द्विगुणा वृद्धिर्गृहीता चाधमर्णिकात् ।
तदोत्तमर्णं मूलं तु दापयेन्नाधिकं ततः ॥ २२२ ॥

---

अदेयं प्रयच्छति ददाति तौ उभौ चौरवत् शास्यौ उत्तमसाहसं दाप्यौ च ॥ २१७ ॥

अस्वामिकेभ्य इति । यः अस्वामिकेभ्यः चौरेभ्यः धनं विगृह्णाति अव्यक्तं गूढं यथा तथा क्रीणाति च सः नृपैः चौरवत् दण्ड्यः ॥ २१८ ॥

ऋत्विगिति । यः ऋत्विक् पुरोहितः अदुष्टं निर्दोषम् अनपकारिणं याज्यं यजमानं, तथा याज्यः यजमानश्च अदुष्टम् ऋत्विजं त्यजेत् तौ उभौ अपि विनेयौ दण्ड्यौ भवतः ॥ २१९ ॥

द्वात्रिंशांशमिति । वणिक् पण्ये विक्रेये वस्तुनि प्रदेशादीनां देशकालादीनाम् अनुरूपतः तद्व्ययं तस्य पण्यस्य व्ययं ज्ञात्वा द्वात्रिंशांशं षोडशांशं वा लाभं नियोजयेत् व्यवस्थापयेत् अन्यथा न ततोऽधिकं नेत्यर्थः ॥ २२० ॥

वृद्धिमिति । वृद्धिं हित्वा वृद्धिं न ग्रहीष्यामीत्युक्त्वा अधमर्णैः अधर्णानि वाणिज्यस्थानानि धनानि दास्यामीति अङ्गीकारवचनैः सदा वाणिज्यं कारयेत् ॥ २२१ ॥

मूलादिति । यदा मूलात् मूलधनात् द्विगुणा वृद्धिः अधमर्णिकात्

धनिकाधमर्णादिमिषतस्तु प्रजाधनम् ।
संहरन्ति च्छलैस्तेभ्यो राजा संरक्षयेत् प्रजाम् ॥ २२३ ॥
समर्थः सन् ददाति गृहीतं धनिकाद्धनम् ।
राजा सन्दापयेत्तस्मात् सामदण्डविकर्षणैः ॥ २२४ ॥
लिखितं तु यदा यस्य नष्टं तेन प्रबोधितम् ।
विज्ञाय साक्षिभिः सम्यक् पूर्ववद्दापयेत्तदा ॥ २२५ ॥
अदत्तं यश्च गृह्णाति सुदत्तं पुनरिच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥ २२६ ॥
कूटपण्यस्य विक्रेता स दण्ड्यश्चौरवत् सदा ॥ २२७ ॥

---

गृहीता, तदा उत्तमर्णाय मूलन्तु मूलमेव दापयेत् राजेति शेषः न त्वाधिकं दापयेदित्यर्थः ॥ २२२ ॥

धनिका इति । धनिकाः धनिनः अधमर्णाः छद्मैः छलैः तस्याः मिषतः छलात् प्रजानां धनं संहरन्ति हि, अतः राजा तेभ्यः धनिकेभ्यः प्रजाः संरक्षयेत् स्वार्थे अन्त्योऽयं रक्षधातुः ॥ २२३ ॥

समर्थ इति । यः समर्थः शक्तः सन् धनिकात् गृहीतं धनं न ददाति, राजा सामदण्डविकर्षणैः सान्त्ववादैः दण्डप्रयोगैश्च तस्मात् अधमर्णात् संदापयेत् ॥ २२४ ॥

लिखितमिति । यदा यस्य लिखितं व्यवहारपत्रं नष्टं तदा तेन धनस्वामिना प्रबोधितं विज्ञापितं राज्ञे इति शेषः साक्षिभिः सम्यक् विज्ञाय प्रमाणीकृत्य पूर्ववत् धनपत्रलेख्यवत् तदा दापयेत् धनिकाय राजेति पदद्वयमध्याहार्य्यम् ॥ २२५ ॥

अदत्तमिति । यश्च अदत्तं गृह्णाति यश्च सुदत्तं धनं पुनः ग्रहीतुम् इच्छति, एतौ उभौ धर्मज्ञेन महीक्षिता राज्ञा दण्डनीयौ ॥ २२६ ॥

कूटेति । यः कूटपण्यस्य कपटविक्रेयस्य विक्रेता, सः सदा चौरवत् दण्ड्यः ॥ २२७ ॥

दृष्ट्वा कार्य्याणि च गुणान् शिल्पिनां भृतिमावहेत् ॥२२८॥
पञ्चमांशं चतुर्थांशं तृतीयांशं तु कर्षयेत् ।
अर्द्धं वा राजताद्राजा नाधिकं तु दिने दिने ॥ २२९ ॥
विद्रुतं न तु हीनं स्यात् स्वर्णं पलशतं शुचि ।
चतुःशतांशं रजतं ताम्रं न्यूनं शतांशकम् ॥ २३० ॥
वङ्गं च जसदं सीसं हीनं स्यात् षोडशांशकम् ।
अयोऽष्टांशं त्वन्यथा तु दण्ड्यः शिल्पी सदा नृपैः ॥२३१॥
सुवर्णं द्विशतांशं तु रजतं च शतांशकम् ।
हीनं सुघटिते कार्य्ये सुसंयोगे तु वर्द्धते ॥ २३२ ॥

---

दृष्ट्वेति । शिल्पिनां कार्य्याणि गुणांश्च दृष्ट्वा भृतिं वेतनं आव-हेत् दद्यात् ॥ २२८ ॥

पञ्चमांशमिति । राजा दिने दिने प्रतिदिनं राजतात् रौप्य-विक्रयात् पञ्चमांशं चतुर्थांशं तृतीयांशं वा अर्द्धं कर्षयेत् गृह्णीयात् न अधिकम् अर्द्धादप्यधिकं न गृह्णीयादित्यर्थः ॥ २२९ ॥

विद्रुतमिति । पलशतं शतपलमितं शुचि निर्दोषं स्वर्णं विद्रुतं विगलितं सत् हीनं मौल्ये अल्पं मतु नैव स्यात् । रजतं चतुः-शतांशं, तथा ताम्रं शतांशकं न्यूनं स्यात् ॥ २३० ॥

वङ्गमिति । वङ्गं रङ्गमित्यर्थः जसदं धातुविशेषः तथा सीसं षोड़शांशकं हीनं स्यात् । अयः लौहन्तु अष्टांशं हीनं स्यादित्यर्थः, अन्यथा तु एतदाधिक्यहानौ इत्यर्थः नृपैः शिल्पी तत्तद्धातुशिल्पकरः सदा दण्ड्यः ॥ २३१ ॥

सुवर्णमिति । सुघटितकार्य्ये सुवर्णं द्विशतांशं, रजतं शतांशं हीनं भवति, सुसंयोगे तु शोभनद्रव्यसंयोगे तु वर्द्धते वृद्धिं गच्छति ॥ २३२ ॥

षोडशांशं त्वन्यथा हि दण्ड्यः स्यात् स्वर्णकारकः ।
संयोगघटनं दृष्ट्वा वृद्धिं ह्रासं प्रकल्पयेत् ॥ २२३ ॥
स्वर्णस्योत्तमकार्य्ये तु भृतिस्त्रिंशांशकी मता ।
षष्ट्यंशकी मध्यकार्य्ये हीनकार्य्ये तदर्धकी ।
तदर्धा कटके ज्ञेया विद्रुते तु तदर्धकी ॥ २२४ ॥
उत्तमे राजते त्वर्धा तदर्धा मध्यमे स्मृता ।
हीने तदर्धा कटके तदर्धा सम्प्रकीर्त्तिता ॥ २२५ ॥
पादमात्रा भृतिस्ताम्रे वङ्गे च जसदे तथा ।
लोहेऽर्धा वा समा वापि द्विगुणाष्टगुणाथवा ॥ २२६ ॥

---

षोडशांशमिति । अन्यथा उक्ताधिक्यहानौ इत्यर्थः स्वर्णकारकः षोडशांशं दण्ड्यः स्यात् । किन्तु संयोगघटनं सुसंयोगं कुसंयोगं वा दृष्ट्वा वृद्धिं ह्रासं वा प्रकल्पयेत् यदि सुसंयोगो भवेत् तदा वृद्धिः, कुसंयोगे तु ह्रास एवेत्यर्थः ॥ २२३ ॥

स्वर्णस्येति । स्वर्णस्य उत्तमकार्य्ये उत्कृष्टनिर्माणे त्रिंशांशकी त्रिंशभागैकभाग इत्यर्थः, मध्यकार्य्ये षष्ट्यंशकी षष्टिभागैकभाग इत्यर्थः, तथा हीनकार्य्ये अपकृष्टकर्मणि तदर्धकी विंशत्यधिकशततमभागैकभाग इत्यर्थः भृतिः वेतनं मता । कटके वलये कार्य्ये इत्यर्थः तदर्धा चत्वारिंशदधिकशतद्वयभागैकभाग इत्यर्थः तथा विद्रुते गलितमात्रे कार्य्ये तदर्धकी अशीत्यधिकचतुःशततमभागैकभाग इत्यर्थः भृतिः ज्ञेया ॥ २२४ ॥

उत्तमे इति । उत्तमे राजते कार्य्ये अर्धा, मध्यमे राजते तदर्धा चतुर्थभाग इत्यर्थः भृतिः स्मृता । हीने अपकृष्टे राजते तदर्धा अष्टमभाग इत्यर्थः तथा कटके तदर्धा षोडशभाग इत्यर्थः भृतिः सम्प्रकीर्त्तिता ॥ २२५ ॥

पादमात्रेति । ताम्रे वङ्गे जसदे च कार्य्ये पादमात्रा चतुर्थभागः,

धातूनां कूटकारी तु द्विगुणो दण्डमर्हति ॥ २२७ ॥
लोकप्रचारैरुत्पन्नो मुनिभिर्विधृतः पुरा ।
व्यवहारोऽनन्तपथः स वक्तुं नैव शक्यते ॥ २२८ ॥
उक्तं राष्ट्रप्रकरणं समासात् पञ्चमं तथा ।
अत्रानुक्ता गुणा दोषास्ते ज्ञेया लोकशास्त्रतः ॥ २२९ ॥

इति शुक्रनीतौ राष्ट्रे ऽस्मिं चतुर्थेऽध्याये राजधर्मनिरूपणं नाम पञ्चमं प्रकरणम् ।

---

लोहे षड्गुणा वा समा वा द्विगुणा अथवा अष्टगुणा क्षतिः ग्रहेति शेषः विकल्पश्च कार्यगौरवलाघवापेक्षो बोध्यः ॥ २२६ ॥

धातूनामिति । धातूनां स्वर्णादीनां कूटकारी जालकारः द्विगुणं दण्डम् अर्हति लभते ॥ २२७ ॥

लोकेति । लोकानां प्रचारैः गतिभिः उत्पन्नः जातः पुरा पूर्वस्मिन् काले मुनिभिः विधृतः निरूपितः व्यवहारः अनन्तपथः अशेषरूपः सः व्यवहारः वक्तुं साकल्येनेति भावः नैव शक्यते ॥ २२७ ॥

उक्तमिति । पञ्चमं राष्ट्रप्रकरणं समासात् संक्षेपेण उक्तम् । अत्र प्रकरणे गुणा दोषाश्च अनुक्ताः अकथिताः ते गुणदोषाः लोकशास्त्रतः लोकतः शास्त्रतश्च ज्ञेयाः ॥ २२८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
चतुर्थाध्यायस्य पञ्चमप्रकरणव्याख्या
समाप्ता ।

## चतुर्थाध्यायस्य षष्ठं प्रकरणम् ।

षष्ठं दुर्गप्रकरणं प्रवक्ष्यामि समासतः ।
खातकण्टकपाषाणैर्दुष्पथं दुर्गमैरिणम् ॥ १ ॥
परितस्तु महाखातं पारिखं दुर्गमेव तत् ।
इष्टकोपलमृद्भित्तिप्राकारं पारिघं स्मृतम् ॥ २ ॥
महाकण्टकवृक्षौघैर्व्याप्तं तद्वनदुर्गमम् ।
जलाभावस्तु परितो धन्वदुर्गं प्रकीर्त्तितम् ॥ ३ ॥
जलदुर्गं स्मृतं तज्ज्ञैरासमन्तान्महाजलम् ।
सुवारिपृष्ठोच्चवरं विविक्ते गिरिदुर्गमम् ॥ ४ ॥

---

षष्ठमिति । षष्ठं दुर्गप्रकरणं समासतः संक्षेपेण प्रवक्ष्यामि खातकण्टकपाषाणैः खातेन कण्टकेन पाषाणेन च दुष्पथं दुर्गमित्यर्थः दुर्गम् ऐरिणं स्मृतमिति शेषः ॥ १ ॥

परितः इति । परितः सर्वतः चतुर्दिक्षु इत्यर्थः महाखातं महत् खातं यस्य तादृशं तत् दुर्गं पारिखमेव तथा इष्टकैः उपलैः पाषाणैः मृद्भिश्च भित्तिप्राकारो यस्य तादृशं दुर्गं पारिघं स्मृतम् ॥ २ ॥

महेति । महाकण्टकवृक्षसमूहैः व्याप्तं वेष्टितं यत् दुर्गं वनदुर्गम् वनदुर्गमित्यर्थः । परितः समन्तात् यस्य जलाभावः, तत् धन्वदुर्गं प्रकीर्त्तितम् ॥ ३ ॥

जलेति । आसमन्तात् महाजलं चतुर्दिक्षु महाजलाशयवेष्टितं दुर्गं तज्ज्ञैः दुर्गाभिज्ञैः जलदुर्गं स्मृतम् । तथा विविक्ते विजने सुवारीणि पृष्ठे यस्य तथाभूतम् उच्चवरम् उन्नततरं यस्मिन् तथोक्तं दुर्गं गिरिदुर्गमं गिरिदुर्गम् ॥ ४ ॥

अभेद्यं व्यूहविद्वीरैर्व्याप्तं तत् सैन्यदुर्गमम् ।
सहायदुर्गं तज्ज्ञेयं शूरानुकूलबान्धवम् ॥ ५ ॥
पारिखादैरिणं श्रेष्ठं पारिघं तु ततो वनम् ।
ततो धन्व जलं तस्माद्गिरिदुर्गं ततः स्मृतम् ॥ ६ ॥
सहायसैन्यदुर्गे तु सर्वदुर्गप्रसाधके ।
ताभ्यां विनान्यदुर्गाणि निष्फलानि महीभुजाम् ॥ ७ ॥
श्रेष्ठं तु सर्वदुर्गेभ्यः सेनादुर्गं स्मृतं बुधैः ।
तत्साधकानि चान्यानि तद्रक्षेन्नृपतिः सदा ॥ ८ ॥
सेनादुर्गं तु यस्य स्यात् तस्य वश्या तु भूरियम् ।

---

अभेद्यमिति । अभेद्यं शत्रुभिः दुर्भेद्यं व्यूहविद्भिः बलविन्यासविज्ञैः वीरैः व्याप्तं तत् दुर्गं सैन्यदुर्गमं सैन्यदुर्गम् । तथा शूराः बलवन्तः अनुकूलाः बान्धवा यस्मिन् तथोक्तं तत् दुर्गं सहायदुर्गं ज्ञेयम् ॥ ५ ॥

पारिखादिति । पारिखात् दुर्गात् ऐरिणं दुर्गं ततः ऐरिणात् पारिघं, ततः पारिघात् वनं वनदुर्गं ततः वनदुर्गात् धन्वदुर्गं ततः धन्वदुर्गात् जलं, जलदुर्गं, तस्मात् जलदुर्गात् गिरिदुर्गं श्रेष्ठं स्मृतम् ॥ ६ ॥

सहायेति । सहायसैन्यदुर्गे सहायदुर्गं सैन्यदुर्गञ्च सर्वेषां दुर्गाणां प्रसाधके अलङ्कारके सम्पादके वा, यतः ताभ्यां सहायसैन्याभ्यां विना महीभुजां राज्ञाम् अन्यानि दुर्गाणि निष्फलानि भवन्तीत्यर्थः ॥ ७ ॥

श्रेष्ठमिति । सेनादुर्गं सर्वदुर्गेभ्यः श्रेष्ठं बुधैः स्मृतम्, अन्यानि दुर्गाणि तत्साधकानि तेषां पोषकाणि अथवा तानि साधकानि येषां तथोक्तानि तदुपजीव्यानीत्यर्थः । तस्मात् नृपतिः सदा तत् सैन्यदुर्गं रक्षेत् ॥ ८ ॥

सेनादुर्गमिति । यस्य सेनादुर्गं स्यात् तस्य इयं भूः वश्या वश-

विना तु सैन्यदुर्गेण दुर्गमन्यत् तु बन्धनम्॥ ९॥
आपत्कालेऽन्यदुर्गाणामाश्रयश्चोत्तमो मतः॥१०॥
एकः शतं योधयति दुर्गस्थोऽस्त्रधरो यदि।
शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत्॥ ११॥
शूरस्य सैन्यदुर्गस्य सर्वं दुर्गमिव स्थलम्।
युद्धसम्भारपुष्टानि राजा दुर्गाणि धारयेत्।
धान्यवीरास्त्रपुष्टानि कोशपुष्टानि वै तथा॥ १२॥
सहायपुष्टं यद्दुर्गं तत्तु श्रेष्ठतरं मतम्।
सहायपुष्टदुर्गेण विजयो निश्चयात्मकः॥ १३॥
यद्यत् सहायपुष्टं तु तत्सर्वं सफलं भवेत्।

---

वर्त्तिनी भवेदित्यर्थः सैन्यदुर्गेण विना तु अन्यत् दुर्गं बन्धनं कारागृहमित्यर्थः॥ ९॥

आपत्काले इति। आपत्काले तु दुर्गाणाम् आश्रयः उत्तमः श्रेयस्कर: मतः॥ १०॥

एक इति। दुर्गस्थः जनः यदि अस्त्रधरः भवेत् तदा सः एकोऽपि शतं योधयति, शतं शतसङ्ख्यकः जन इत्यर्थः दशसहस्राणि योधयेत् तस्मात् दुर्गं समाश्रयेत्॥ ११॥

शूरस्येति। शूरस्य अतिबलवतः सैन्यदुर्गस्य सर्वं स्थलं स्थानं दुर्गमिव भवति। किञ्च राजा युद्धसम्भारपुष्टानि संग्रामोपकरणपूर्णानि धान्यैः वीरैः अस्त्रैश्च पुष्टानि तथा कोशपुष्टानि धनपूर्णानि दुर्गाणि धारयेत् आश्रयेत्॥ १२॥

सहायेति। सहायपुष्टं सहायैः पूर्णं यत् दुर्गं तत्तु श्रेष्ठतरं मतम्। सहायपुष्टदुर्गेण विजयः निश्चयात्मकः निश्चितः॥ १३॥

यदिति। यत् यत् दुर्गं सहायपुष्टं तत् सर्वं सफलं भवेत्।

परस्परानुकूलं तु दुर्गाणां विजयप्रदम् ॥ १४ ॥
इति शुक्रनीतौ चतुर्थाध्याये दुर्गनिरूपणं नाम षष्ठं प्रकरणम् ।

## चतुर्थाध्यायस्य सप्तमं प्रकरणम् ।

---

दौर्गं संक्षेपतः प्रोक्तं सैन्यं सप्तममुच्यते ।
सेना शस्त्रास्त्रसंयुक्तमनुष्यादिगणात्मिका ॥ १ ॥
स्वगमान्यगमा चेति द्विधा सैव पृथक् त्रिधा ।
दैव्यासुरी मानवी च पूर्वपूर्वा बलाधिका ॥ २ ॥

---

दुर्गाणां परस्परानुकूल्यम् अन्योऽन्यसाहाय्यं विजयप्रदं विजयावहं भवति ॥ १४ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चतुर्थाध्यायस्य षष्ठप्रकरणव्याख्या
समाप्ता ।

---

दौर्गमिति । दौर्गं दुर्गविषयं प्रकरणं संक्षेपतः प्रोक्तम् । सप्तमं प्रकरणं सैन्यं सेनासंक्रान्तम् उच्यते । शस्त्रैः अस्त्रैश्च संयुक्ता ये मनुष्यादयः पादातकुञ्जरतुरगा इत्यर्थः तेषां गणः आत्मा स्वरूपं यस्याः तथोक्ताः सेना उच्यते इति शेषः ॥ १ ॥

स्वगमेति । सा स्वगमा अन्यगमा चेति द्विधा, पृथक् पुनश्च सा एव दैवी आसुरी मानवी चेति त्रिधा, तासु पूर्वपूर्वा बलाधिका अधिकबलशालिनीत्यर्थः तथाच दैवी सर्वश्रेष्ठा, ततः आसुरी, ततश्च मानवीति भावः ॥ २ ॥

स्वगमा या स्वयं गन्त्री यानगाऽन्यगमा स्मृता ।
पादातं स्वगमं चान्यद्रथाश्वगजगं त्रिधा ॥ ३ ॥
सैन्याद्विना नैव राज्यं न धनं न पराक्रमः ।
बलिनो वशगाः सर्वे दुर्बलस्य च शत्रवः ।
भवन्त्यल्पजनस्यापि नृपस्य तु न किं पुनः ॥ ४ ॥
शारीरं हि बलं शौर्यबलं सैन्यबलं तथा ।
चतुर्थमास्त्रिकबलं पञ्चमं धीबलं स्मृतम् ।
षष्ठमायुर्बलं त्वेतैरुपेतो विष्णुरेव सः ॥ ५ ॥
न बलेन विनाप्यल्पं रिपुं जेतुं क्षमाः सदा ।
देवासुरनरास्त्वन्योपायैर्नित्यं भवन्ति हि ॥ ६ ॥

---

स्वगमेति । या सेना स्वयं गन्त्री सा स्वगमा, यानगा अन्यगमा स्मृता । यथा पादातं पदातिवर्गः स्वगमं स्वयं पादचारेण गच्छतीत्यर्थः । अन्यत् अन्यगमं रथाश्वगजगमिति त्रिधा तथाच केचित् रथैः, केचिदश्वैः केचिच्च गजैर्गच्छन्तीत्यर्थः ॥ ३ ॥

सैन्यादिति । सैन्यात् विना राज्यं न, धनं न, पराक्रमश्च न तिष्ठेदित्यर्थः, यदा सर्वे जनाः बलिनः बलवतः जनस्य वशगाः वशवर्त्तिनः, दुर्बलस्य च शत्रवः भवन्ति, तदा अल्पजनस्य अनधिकसैन्यवतः नृपस्यापि किं पुनः न शत्रवो भवन्ति ? अपितु भवन्त्येवेत्यर्थः ॥ ४ ॥

शारीरमिति । शारीरं बलं, शौर्य्यबलं स्ववीर्य्यबलं सैन्यबलं चतुर्थम् आस्त्रिकबलं अस्त्रप्रयोगसामर्थ्यमित्यर्थः पञ्चमं धीबलं बुद्धिबलं षष्ठम् आयुर्बलं जीवनसामर्थ्यं स्मृतम् यस्तु एतैः बलैः उपेतः अन्वितः, सः विष्णुरेव ॥ ५ ॥

नेति । बलेन विना जनाः अल्पं क्षुद्रमपि रिपुं शत्रुं सदा जेतुं न क्षमाः न समर्थाः, हि यतः देवासुरनराः सुरदैत्यमानवाः

बलमेव रिपोर्नित्यं पराजयकरं परम् ।
तस्माद् बलमभेद्यं तु धारयेद्यत्नतो नृपः ॥ ७ ॥
सेनाबलं तु द्विविधं स्वीयं मैत्रं च तद् द्विधा ।
मौलसाद्यस्कभेदाभ्यां सारासारं पुनर्द्विधा ॥ ८ ॥
अशिक्षितं शिक्षितं च गुल्मीभूतमगुल्मकम् ।
दत्तास्त्रादि स्वशस्त्रास्त्रं स्ववाहि दत्तवाहनम् ॥ ९ ॥
सौजन्यात् साधकं मैत्रं स्वीयं भृत्या प्रपालितम् ।
मौलं बह्वब्दानुबन्धि साद्यस्कं यत् तदन्यथा ॥ १० ॥

---

अन्योपायैः स्वबलव्यतिरिक्तैः उपायैः सैन्यादिबलैः तु एव तुशब्दश्चावधारणे नित्यं भवन्ति उद्युज्यन्ते इत्यर्थः ॥ ६ ॥

बलमिति । बलमेव रिपोः शत्रोः नित्यं परं श्रेष्ठं पराजयकरम् । तस्मात् नृपः अभेद्यं अत एव दुर्धर्षं बलमेव यत्नतः धारयेत् ॥ ७ ॥

सेनाबलमिति । सेनाबलं स्वीयं मैत्रञ्चेति द्विविधम् । तच्च मौलसाद्यस्कभेदाभ्यां क्रमागताधुनिकभेदाभ्यां कियन्ति क्रमागतानि कियन्ति वा आधुनिकानीति विशेषाभ्यां द्विधा, तदपि पुनः सारम् असारञ्चेति द्विधा ॥ ८ ॥

अशिक्षितमिति । किञ्च तत् सेनाबलम् अशिक्षितं, शिक्षितं, गुल्मीभूतम्, अगुल्मकं, दत्तास्त्रादि दत्तानि अस्त्रादीनि यस्मै तत्, स्वशस्त्रास्त्रं निजशस्त्रास्त्रयुक्तं, स्ववाहि, निजवाहनान्वितं दत्तवाहनं दत्तं वाहनम् अश्वादि यस्मै तथाभूतमिति प्रत्येकं द्वैधीभावेन बहुविधमिति भावः ॥ ९ ॥

सौजन्यादिति । सौजन्यात् साधकं कार्यनिर्वाहकं सैन्यं मैत्रं, भृत्या वेतनेन प्रपालितं परिपालितं सैन्यं स्वीयम् । बह्वून् अब्दान् वत्सरान् अनुबध्नाति इति तथोक्तं सैन्यं मौलं मूलायत्तत्वादिति भावः; तदन्यथा तद्भिन्नम् अल्पदिननियुक्तमित्यर्थः सैन्यं साद्यस्कं सद्यो भवत्वादिति भावः ॥ १० ॥

सुयुद्धकामुकं सारमसारं विपरीतकम् ।
शिक्षितं व्यूहकुशलं विपरीतमशिक्षितम् ॥ ११ ॥
गुल्मीभूतं साधिकारि सस्वामिकमगुल्मकम् ।
दत्तास्त्रादि स्वामिना यत् स्वशस्त्रास्त्रमतोऽन्यथा ॥ १२ ॥
कृतगुल्मं स्वयंगुल्मं तद्वच्च दत्तवाहनम् ।
आरण्यकं किरातादि यत् स्वाधीनं स्वतेजसा ॥ १३ ॥
उत्सृष्टं रिपुणा वापि भृत्यवर्गे निवेशितम् ।
भेदाधीनं कृतं शत्रोः सैन्यं शत्रुबलं स्मृतम् ।
उभयं दुर्बलं प्रोक्तं केवलं साधकं न तत् ॥ १४ ॥

---

सुयुद्धेति । सुयुद्धकामुकं सुयुद्धे समुत्सुकं सैन्यं सारं विपरीतकं तद्भिन्नम् असारम् व्यूहेषु कुशलं निपुणं शिक्षितं, विपरीतम् अकुशलमित्यर्थः अशिक्षितम् ॥ ११ ॥

गुल्मीभूतमिति । साधिकारि सस्वामिकं सेनापतिसहितमित्यर्थः सैन्यं गुल्मीभूतं, अस्वामिकं स्वाधीनमित्यर्थः सैन्यम् अगुल्मकम् । स्वामिना यदित्यव्ययं यस्मै इत्यर्थः अस्त्रादि दीयते इति शेषः तत् दत्तास्त्रादि, अतः अन्यथा एतद्व्यतिरिक्तं सैन्यं स्वशस्त्रास्त्रम् ॥ १२ ॥

कृतेति । तद्वत् तथा कृतगुल्मं स्वामिना सेनापत्यधिष्ठितेषु सैन्येषु निवेशितं, स्वयं गुल्मं स्वेच्छया गुल्माधिपतीभूतमित्यर्थः, दत्तवाहनं पूर्वमुक्तम् । यत् स्वतेजसा स्वाधीनं किरातादि, तत् आरण्यकं सैन्यमित्यर्थः ॥ १२ ॥

उत्सृष्टमिति । रिपुणा शत्रुणा उत्सृष्टं त्यक्तं यत् भृत्यवर्गे सैन्यदले निवेशितं वापि अथवा शत्रोः भेदाधीनं भेदेन विच्छेदेन अधीनम् आयत्तं सैन्यं शत्रुबलं स्मृतम् । एतदुभयं सैन्यं दुर्बलं प्रोक्तं कथितम् अविश्वसनीयत्वादिति भावः तस्मात् केवलं स्वसैन्यासमभिव्याहृतं तत् न साधकं न कार्यनिर्वाहकमित्यर्थः ॥ १४ ॥

समैर्नियुद्धकुशलैर्व्यायामैर्नतिभिस्तथा ।
वर्द्धयेद् बाहुयुद्धार्थं भोज्यैः शारीरकं बलम् ॥ १५ ॥
मृगयाभिस्तु व्याघ्राणां शस्त्रास्त्राभ्यासतः सदा ।
वर्द्धयेच्छूरसंयोगात् सम्यक् शौर्य्यबलं नृपः ॥ १६ ॥
सेनाबलं सुभृत्या तु तपोऽभ्यासैस्तथास्त्रिकम् ।
वर्द्धयेच्छास्त्रचतुरसंयोगाद्धीबलं सदा ॥ १७ ॥
सत्क्रियाभिश्चिरस्थायि नित्यं राज्यं भवेद्यथा ।
स्वगोत्रे तु तथा कुर्य्यात् तदायुर्बलमुच्यते ।
यावद्गोत्रे राज्यमस्ति तावदेव स जीवति ॥ १८ ॥

---

समैरिति । समैः तुल्यबलैः नियुद्धकुशलैः संग्रामदक्षैः वीरैः सह बाहुयुद्धार्थं व्यायामैः अङ्गचालनाभिः, नतिभिः गुरुजनप्रणतिभिः तथा भोज्यैः बलकरैराहारादिभिः शारीरं बलं वर्द्धयेत् गुरुजनप्रणता तेषां आशीर्वादात् बलवृद्धिरिति भावः ॥ १५ ॥

मृगयाभिरिति । नृपः व्याघ्राणां उपलक्षणमेतत् हिंस्रजन्तूनां निधनैः मृगयाभिः शरव्यकरणैः, सदा शस्त्रास्त्राणां अभ्यासतः पुनः पुनः चालनेन तथा शूराणां वीराणां संयोगात् संसर्गात् शौर्यबलं सम्यक् वर्द्धयेत् ॥ १६ ॥

सेनाबलमिति । सुभृत्या सुवेतनेन सेनाबलं, तपोभिः अभ्यासैश्च आस्त्रिकम् अस्त्रप्रयोगबलं तथा सदा शास्त्राणां चतुराणाञ्च संयोगात् संसर्गात् धीबलं बुद्धिबलं वर्द्धयेत् ॥ १७ ॥

सत्क्रियाभिरिति । यथा नित्यं सततं सत्क्रियाभिः राज्यं चिरस्थायि भवेत् तथा स्वगोत्रे निजवंशजाते कुर्य्यात् तदेव आयुर्बलम् उच्यते, यस्मात् गोत्रे स्ववंशजाते यावत् राज्यं अस्ति तिष्ठति, सः तावदेव तावत्कालपर्य्यन्तमित्यर्थः जीवति ॥ १८ ॥

चतुर्गुणं हि पादातमश्वतो धारयेत् सदा ।
पञ्चमांशांस्तु वृषभानष्टांशांश्च क्रमेलकान् ॥ १९ ॥
चतुर्थांशान् गजानुष्ट्राद्गजार्धांश्च रथान् सदा ।
रथात्तु द्विगुणं राजा बृहन्नालीकमेव च ॥ २० ॥
पदातिबहुलं सैन्यं मध्याश्वं तु गजाल्पकम् ।
तथा वृषोष्ट्रसामान्यं रक्षेन्नागाधिकं न हि ॥ २१ ॥
सवयःसारवेषास्त्रं तु पृथक् शतम् ।
लघुनालिकयुक्तानां पदातीनां शतत्रयम् ॥ २२ ॥
अशीत्यश्वान् रथं चैकं बृहन्नालद्वयं तथा ।
उष्ट्रान् दश गजौ द्वौ तु शकटौ षोडशर्षभान् ॥ २३ ॥

---

चतुर्गुणमिति । चतुर्थांशानिति च । राजा अश्वतः अश्वसैन्यात् चतुर्गुणं पादातं पत्तिसैन्यं, पञ्चमांशान् वृषभान्, तथा अष्टांशान् क्रमेलकान् उष्ट्रान् उष्ट्रात् उष्ट्रसैन्यात् चतुर्थांशान् गजान् गजार्धान् गजसैन्यात् अर्धसंख्यकान् रथान् तथा रथात् द्विगुणं बृहन्नालीकं बृहन्नालीकास्त्रसैन्यं सदा धारयेत् रक्षेत् ॥ १९ ॥ २० ॥

पदातीति । पदातिबहुलं बहुसंख्यकपदातिकं मध्याश्वं मध्यविधसंख्यकतुरङ्गं गजाल्पकम् अल्पसंख्यकगजं तथा वृषोष्ट्रसामान्यं सामान्यसंख्यकवृषोष्ट्रं सैन्यं रक्षेत् नागाधिकम् अधिकगजं न हि नैव रक्षेदित्यर्थः ॥ २१ ॥

सवय इत्यादि । वक्ष्यते युद्धकर्मभाक् सैन्यसङ्ख्यानमथाह नृपतिः राजा सवयः समानवयस्कं सारवेषं कठिनपरिच्छदम् उच्चानि उच्चतानि शस्त्राणि अस्त्राणि यस्य तादृशं पृथक् विभिन्नं शतं शतसंख्यपादातं लघुनालिकयुक्तानां क्षुद्रनालिकास्त्रधारिणां पदातीनां शतत्रयम्, अशीतिसंख्यकान् अश्वान् एकं रथं बृहन्नालद्वयं बृहन्नालिकास्त्र-

तथा लेखकषट्कं हि मन्त्रित्रितयमेव च ।
धारयेन्नृपतिः सम्यग्वत्सरे लक्षकर्षभाक् ॥ २४ ॥
सम्भारदानभोगार्थं धनं सार्धसहस्रकम् ।
लेखकार्थं शतं मासि मन्त्र्यर्थं तु शतत्रयम् ॥ २५ ॥
त्रिशतं दारपुत्रार्थं विद्वदर्थं शतद्वयम् ।
साद्यश्वपदगार्थं हि राजा चतुःसहस्रकम् ॥ २६ ॥
गजोष्ट्रवृषनालार्थं व्ययीकुर्याच्चतुःशतम् ।
शेषं कोशे धनं स्थाप्यं राज्ञा सार्धसहस्रकम् ॥ २७ ॥
प्रतिवर्षं स्ववेषार्थं सैनिकेभ्यो धनं हरेत् ॥ २८ ॥
लोहसारमयश्चक्रसुगमो मञ्चकासनः ।

---

धारिणौः द्वौ, दश उष्ट्रान् द्वौ गजौ द्वौ शकटौ षोडश वृषभान् वृषभान् लेखकषट्कं षट् लेखकान् तथा मन्त्रित्रितयं त्रीन् मन्त्रिणः सम्यक् यथा तथा धारयेत् रक्षेत् ॥ २२ ॥ २३ ॥ २४ ॥

लक्षकर्षाणां व्ययनियममाह सम्भारेति । राजा मासि प्रतिमासं सम्भारार्थं दानार्थं निजभोगार्थञ्च सार्धसहस्रं पञ्चदशशतानि कर्षाः १५००, लेखकार्थं लेखकानां निमित्तं शतं ११०, मन्त्र्यर्थं मन्त्रिणां निमित्तं शतत्रयं, २००, दारपुत्रार्थं स्त्रीपुत्र निमित्तं त्रिशतं १००, विद्वदर्थं विदुषां सम्मानार्थं शतद्वयं २००, साद्यश्वपदगार्थं सादिनाम् अश्वारोहिणाम् अश्वानां पदगानां पदातीनाञ्च निमित्तं चतुःसहस्रं ४०००, गजानाम् उष्ट्राणां वृषाणां नालानां नालिकास्त्रास्त्रधारिणां निमित्तं चतुः शतं ४००, व्ययीकुर्यात् । राज्ञा शेषम् अवशिष्टं सार्धसहस्रं १५००, कोषे भाण्डारे स्थाप्यम् ॥ २५ ॥ २६ ॥ २७ ॥

प्रतिवर्षमिति । प्रतिवर्षं वर्षे वर्षे स्ववेषार्थं निजनिजपरिच्छदार्थं सैनिकेभ्यः धनं हरेत् दद्यादित्यर्थः ॥ २८ ॥

लोहेति । मञ्चेति । लोहसारमयः उत्कृष्टलौहनिर्मितः, चक्र-

स्वान्दोलायितकडस्तु मध्यमासनसारथिः ॥ २९ ॥
प्रस्तारसन्ध्याम्बुदरः दृष्टच्छायो मनोरमः ।
एवंविधो रथो राज्ञा रक्ष्यो नित्यं सदृस्वकः ॥ ३० ॥
नीलतालुर्नीलजिह्वो वक्रदन्तो ह्यदन्तकः ।
दीर्घद्वेषी क्रूरमदस्तथा पृष्ठविधूनकः ॥ ३१ ॥
दशाष्टोननखो मन्दो भूविशोधनपुच्छकः ।
एवंविधोऽनिष्टगजो विपरीतः शुभावहः ॥ ३२ ॥
भद्रो मन्द्रो मृगो मिश्रो गजो जात्या चतुर्विधः ॥३३॥
मध्वाभदन्तः सबलः समाङ्गो वर्तुलाकृतिः ।

---

सुखमः चक्रैः सुखेन गच्छतीति तथोक्तः, सधुकम् आसनं यस्मिन् सः मङ्गल्यालम्बितः स्वेन आत्मना आन्दोलितः कटः आरोही यस्मिन् तथाभूतः, मध्यमं आसनं यस्य तादृशः सारथिर्यस्मिन् सः, प्रस्तारयति प्रस्तारयति च सञ्चारयतीति तादृशम् उदरम् अम्बुदरं यस्य तथोक्तः दृष्टच्छायः अभिलषितच्छायः मनोरथः तथा सदृश्वकः उत्कृष्टाश्वसंयुतः एवंविधः रथः राज्ञा नित्यं सततं रक्ष्यः ॥ २९ ॥ ३० ॥

नीलेति । दशेति । नीलतालुः नीलवर्णतालुदेशः, नीलजिह्वः, वक्रदन्तः वा अदन्तकः, दीर्घद्वेषी दीर्घकालस्थायिक्रोधः, क्रूरमदः निष्ठुरमदवर्षी पृष्ठविधूनकः पृष्ठकम्पकः, दशाष्टोननखः दशभिः अष्टाभिर्वा ऊनाः नखा यस्य तादृशः मन्दः अल्पगामी, भूविशोधनपुच्छकः पुच्छेन भूमेर्विशोधनकारीत्यर्थः एवंविधः गजः अनिष्टः अशुभकरः, विपरीतस्तु शुभावहः ॥ ३१ ॥ ३२ ॥

भद्र इति । गजः भद्रः, मन्द्रः, मृगः, मिश्रः इति जात्या जातिभेदेन चतुर्विधः ॥ ३३ ॥

तत्र भद्रमाह मध्वाभेति । मध्वाभदन्तः मधुनः आभा इव आभा ययोः तादृशौ दन्तौ यस्य तथोक्तः सबलः अतिबलवान् समाङ्गः

सुमुखोऽवयवश्रेष्ठो ज्ञेयो भद्रगजः सदा ॥ २४ ॥
स्थूलकुक्षिः सिंहदृक् च बृहत्त्वग्गलशुण्डकः ।
मध्यमावयवो दीर्घकायो मन्द्रगजः स्मृतः ॥ २५ ॥
तनुकण्ठदन्तकर्णशुण्डः स्थूलाक्ष एव हि ।
सुह्रस्वाधरमेढ्रस्तु वामनो मृगसंज्ञकः ॥ २६ ॥
एषां लक्ष्मैर्विमिलितो गजो मिश्र इति स्मृतः ।
भिन्नं भिन्नं प्रमाणं तु त्रयाणामपि कीर्त्तितम् ॥ २७ ॥
गजमाने ह्यङ्गुलं स्यादष्टभिस्तु यवोदरैः ।
चतुर्विंशत्यङ्गुलैस्तैः करः प्रोक्तो मनीषिभिः ॥ २८ ॥

---

समानि न तु विषमाणीत्यर्थः अङ्गानि यस्य सः, सुमुखाकृतिः सुन्दरावयवः सुमुखः तथा अवयवेषु अङ्गेषु अन्येभ्यः श्रेष्ठः गजः सदा भद्रगजः ज्ञेयः ॥ २४ ॥

मन्द्रमाह स्थूलेति । स्थूलकुक्षिः बृहदुदरः सिंहदृक् सिंहदृष्टिः बृहत्त्वग्गलशुण्डकः बृहत्यः त्वचः गलः शुण्डा च यस्य तथोक्तः मध्यमावयवः मध्यमशरीरः तथा दीर्घकायः गजः मन्द्रगजः स्मृतः ॥ २५ ॥

मृगमाह तन्विति । तनुकण्ठदन्तकर्णशुण्डः क्षुद्रकण्ठदन्तकर्णशुण्डः स्थूलाक्षः स्थूलनेत्रः सुह्रस्वाधरमेढ्रः अतिक्षुद्राधरः अतिक्षुद्रोपस्थश्च तथा वामनः खर्वकायः गजः मृगसंज्ञकः मृगगज इति ख्यातः ॥ २६ ॥

मिश्रमाह एषामिति । एषां भद्रादीनां त्रयाणां लक्ष्मैः चिह्नैः विमिलितः विशेषेण मिलितः गजः मिश्रः इति स्मृतः । अप्येषां त्रयाणां गजानां प्रमाणं भिन्नं भिन्नं पृथक् पृथक् कीर्त्तितम् ॥ २७ ॥

गजमाने इति । गजमाने हस्तिपरिमाणे अष्टभिः यवोदरैः अङ्गुलं स्यात्, तैः चतुर्विंशत्यङ्गुलैः मनीषिभिः करः प्रोक्तः ॥ २८ ॥

सप्तहस्तोन्नतिर्भद्रे ह्यष्टहस्तप्रदीर्घता ।
परिणाहो दशकर उदरस्य भवेत् सदा ॥ ३९ ॥
प्रमाणं मन्द्रमृगयोर्हस्तहीनं क्रमादतः ।
कथितं दैर्घ्यसाम्यन्तु मुनिभिर्भद्रमन्द्रयोः ॥ ४० ॥
बृहद्भ्रूगण्डफालस्तु द्रुतशीर्षगतिः सदा ।
गजःश्रेष्ठस्तु सर्वेषां शुभलक्षणसंयुतः ॥ ४१ ॥
पञ्चयवाङ्गुलेनैव वाजिमानं पृथक् स्मृतम् ॥ ४२ ॥
चत्वारिंशाङ्गुलमुखो वाजी यश्चोत्तमोत्तमः ।
षट्त्रिंशदङ्गुलमुखो ह्युत्तमः परिकीर्त्तितः ॥ ४३ ॥
द्वात्रिंशदङ्गुलमुखो मध्यमः स उदाहृतः ।

---

सप्तेति । भद्रे हस्तिनि सप्तहस्ता उन्नतिः, अष्टहस्तप्रदीर्घता अष्टहस्ताः दीर्घता, उदरस्य परिणाहः विस्तारः दशकरः सदा भवेत् ॥ ३९ ॥

प्रमाणमिति । मन्द्रमृगयोः गजयोः प्रमाणम् अतः भद्रगजात् क्रमात् क्रमेण हस्तहीनं तथा भद्र मन्द्रयोः दैर्घ्यसाम्यं मुनिभिः कथितम् ॥ ४० ॥

बृहदिति । बृहद्भ्रूगण्डफालः विशालभ्रूगण्डदेशः सदा द्रुत-शीर्षगतिः अतीतोन्नतमतिः शुभलक्षणसंयुतः गजः सर्वेषां गजानां श्रेष्ठः ॥ ४१ ॥

पञ्चेति । पञ्चभिर्यवैः अङ्गुलेन पृथक् वाजिमानम् अश्वपरिमाणं स्मृतम् ॥ ४२ ॥

चत्वारिंशेति । यः वाजी अश्वः चत्वारिंशत् अङ्गुलानि परिमाण-मस्येति तथोक्तं मुखं यस्य तथाभूतः, सः उत्तमोत्तमः आख्यातः । षट्त्रिंशदङ्गुलमुखः वाजी उत्तमः परिकीर्त्तितः ॥ ४३ ॥

द्वात्रिंशदिति । द्वात्रिंशदङ्गुलमुखः यः वाजी सः मध्यमः उदाहृ

अष्टाविंशत्यङ्गुलो यो मुखे मोघः प्रकीर्त्तितः ॥ ४४ ॥
वाजिनां मुखमानेन सर्वावयवकल्पना ।
मोघं तु मुखमानेन त्रिगुणं परिकीर्त्तितम् ॥ ४५ ॥
शिरोमणिं समारभ्य पुच्छमूलान्तमेव हि ।
तृतीयांशाधिकं दैर्घ्यं मुखमानाच्चतुर्गुणम् ॥ ४६ ॥
परिणाहस्तूदरस्य त्रिमुखस्त्र्यङ्गुलाधिकः ।
साधारणमिदं मानमुच्यते विस्तरादथ ॥ ४७ ॥
अष्टाविंशाङ्गुलमुखं पुरस्कृत्य यथा तथा ।
शफोच्चं त्र्यङ्गुलं ज्ञेयं मणिबन्धोऽङ्गुलाधिकः ॥ ४८ ॥

---

कृतः कथितः । यस्य मुखे अष्टाविंशत्यङ्गुलः, सः मोघः प्रकीर्त्तितः ॥ ४४ ॥

वाजिनामिति । वाजिनाम् अश्वानां मुखमानेन मुखपरिमाणेन सर्वेषाम् अन्येषाम् अवयवानाम् कल्पना कार्य्या इति शेषः । मोघन्तु उच्चता तु मुखमानेन मुखपरिमाणादित्यर्थः करणविवक्षया तृतीया, त्रिगुणं परिकीर्त्तितम् ॥ ४५ ॥

शिरोमणिमिति । शिरोमणिम् अश्वानां शिरस्थमणिविशेषमित्यर्थः समारभ्य पुच्छमूलान्तं पुच्छमूलपर्य्यन्तं दैर्घ्यं मुखमानात् तृतीयांशेन अधिकं युक्तं चतुर्गुणम् ॥ ४६ ॥

परिणाह इति । उदरस्य परिणाहः विस्तारस्तु त्र्यङ्गुलाधिकः अङ्गुलत्रयेण अधिकः त्रिमुखः त्रिगुणः । इदं मानं परिमाणं साधारणं सामान्यम् उक्तमिति शेषः, अथ विस्तरात् उच्यते कथ्यते ॥ ४७ ॥

अष्टेति । अष्टाविंशाङ्गुलमुखं मोघम् अश्वमित्यर्थः पुरस्कृत्य अवलम्ब्य यथा शफानां खुराणाम् मोघम् उच्चत्वं त्र्यङ्गुलम् अङ्गुलत्रयमिति, तथा मणिबन्धः खुरोपरिस्थानः अङ्गुलाधिकः त्र्यङ्गुलात् चतुरङ्गुल इत्यर्थः ॥ ४८ ॥

चतुर्दशाङ्गुला जङ्घा तयङ्गुलं जानु कीर्त्तितम् ।
चतुर्दशाङ्गुलावूरू कूर्परान्तः स्मृतौ बुधैः ॥ ४८ ॥
अष्टविंशाङ्गुलं ज्ञेयं स्कन्धान्तं कूर्परादितः ।
प्रत्यगूरू मुखसमौ जङ्घा पादसमान्ततः ॥ ५० ॥
प्रोक्तोच्चता चाथ दैर्घ्यमुच्यते शास्त्रसङ्गतम् ॥ ५१ ॥
षष्ठांशेनाधिका ग्रीवा द्विगुणा सुप्रसारिता ।
मुखतश्चोच्छ्रिता सार्द्धपादहीना तु पूर्वतः ॥ ५२ ॥
स्कन्धादि पुच्छमूलान्तं ग्रीवातुल्यं तु तच्च हि ।
द्व्यंशषष्ठं त्रिकं यावत् शेषमंसं प्रकल्पयेत् ॥ ५३ ॥

---

चतुरिति । जङ्घा चतुर्दशाङ्गुला, तथा जानुतयङ्गुलम् अङ्गुलत्रयमितं कीर्त्तितम् । कूर्परान्तं कपोलपर्य्यन्तम् ऊरू चतुर्दशाङ्गुलौ बुधैः स्मृतौ ॥ ४९ ॥

अष्टेति । इतः अस्मात् कूर्परात् आरभ्येति शेषः स्कन्धान्तं स्कन्धपर्य्यन्तम् अष्टविंशाङ्गुलम् अष्टविंशाङ्गुलपरिमाणं ज्ञेयम् । प्रत्यगूरू पश्चिमावूरू मुखसमौ मुखपरिमाणसमौ अष्टाविंशाङ्गुलावित्यर्थः । जङ्घा प्रत्यग्जङ्घा इत्यर्थः पादसमान्ततः अपरजङ्घाः चतुर्थमानात् ऊना हीना इत्यर्थः ॥ ५० ॥

प्रोक्तेति । उच्चता प्रोक्ता, कथिता, अथ अनन्तरं दैर्घ्यम् उच्यते ॥ ५१ ॥

षष्ठांशेनेति । सुप्रसारिता सुविस्तृता ग्रीवा दैर्घ्ये मुखतः मुखात् षष्ठांशेन अधिका युक्ता द्विगुणा, तथा पूर्वतः मुखत इत्यर्थः सार्द्धपादहीना उच्छ्रिता उन्नता ॥ ५२ ॥

स्कन्धादीति । तच्च अश्वस्य स्कन्धादि पुच्छमूलान्तम् पुच्छकोरकपर्य्यन्तं ग्रीवातुल्यम् । त्रिकं पृष्ठवंशाधोभागं यावत् पृष्ठवंशाधरे त्रिकमित्यमरः । शेषम् अंशं स्कन्धं द्व्यंशषष्ठं प्रकल्पयेत् ॥ ५३ ॥

मुखार्द्धं पुच्छदण्डं च शिश्नं चाण्डौ तदर्द्धकौ ।
कर्णः षडङ्गुलो दीर्घश्चतुःपञ्चाङ्गुलः क्वचित् ॥ ५४ ॥
परिणाहः शफस्योक्तो मुखार्द्धेनाङ्गुलाधिकः ।
तदर्द्धो मणिबन्धस्य जङ्घायाः परिधिः स्मृतः ॥ ५५ ॥
द्व्येकाङ्गुलपरिधी रम्योरोः कीर्त्तितो बुधैः ।
पृष्ठोरुपरिधिर्मूले त्रिः षडंशं मुखेषु च ॥ ५६ ॥
बहिरन्तर्धनुःखण्डसदृशा सरभोरुजा ।
मणिबन्धमधोर्ध्वयः परिधिश्च नवाङ्गुलः ।
अन्यजङ्घादिपरिधिर्विज्ञेयः पूर्ववद् बुधैः ॥ ५७ ॥
मध्योर्वोरन्तरे चिह्नमङ्गुष्ठं पार्श्वमूलयोः ॥ ५८ ॥

---

मुखार्द्धमिति । पुच्छदण्डं शिश्नञ्च मुखार्द्धं मुखस्य अर्द्धम् षड्-परिमितम् । आण्डौ अण्डौ एव आण्डौ स्वार्थे अण् प्रत्ययः । अण्डकोषौ तदर्द्धांशे शिश्नार्द्धपरिमितौ । कर्णः षडङ्गुलः, क्वचित् दीर्घः कर्णस्य दैर्घ्यमित्यर्थः चतुःपञ्चाङ्गुलः चतुरङ्गुलः पञ्चाङ्गुलश्च ॥ ५४ ॥

परिणाहमिति । शफस्य खुरस्य परिणाहः विस्तारः अङ्गुलाधिकः मुखार्द्धेन मुखार्द्धपरिमाणेन तुल्यः एकाङ्गुलाधिकमुखार्द्धपरिमाणतुल्यः । मणिबन्धस्य जङ्घायाश्च परिधिः वेष्टनं तदर्द्धः स्मृतः ॥ ५५ ॥

द्व्येति । रम्यस्य रमणीयस्य ऊरोः द्व्येकाङ्गुलपरिधिः एकाद्व्यङ्गुलमितः परिधिः बुधैः कीर्त्तितः । पृष्ठस्य पश्चिमस्य ऊरोः परिधिः मूले त्रिः अङ्गुलत्रयमितः, मुखेषु अग्रेषु च षडंशः ॥ ५६ ॥

मणिबन्धेति । मणिबन्धस्य मध्ये चिह्नविशेषस्य परिधिः नवाङ्गुलः तथा अन्यजङ्घादिपरिधिः पूर्ववत् प्रथमवत् बुधैः ज्ञेयः ॥ ५७ ॥

मध्येति । ऊर्वोः अन्तरे मध्ये पार्श्वमूलयोः चिह्नम् अङ्गुष्ठम् अङ्गुष्ठपरिमितम् ॥ ५८ ॥

सार्द्धाङ्गुलं सटास्थानं ग्रीवोपरि सुविस्तृतम् ।
शिरोमणिं समारभ्य दीर्घं स्कन्धान्तमुत्तमम् ॥ ५९ ॥
अधोगमा सटा कार्या हस्तमात्रायता शुभा ।
सार्द्धहस्ता द्विहस्ता वा पुच्छवालाः सुशोभनाः ॥ ६० ॥
सप्ताष्टनवदशभिरङ्गुलैः कर्णदीर्घता ।
तथा तद्विस्तृतिर्ज्ञेया त्र्यङ्गुला चतुरङ्गुला ॥ ६१ ॥
न स्थूला नापि चिपिटा ग्रीवा मयूरसन्निभा ।
ग्रीवाग्रपरिधिस्तुल्यो मुखेनाधिकमुष्टिकः ॥ ६२ ॥
ग्रीवामूलस्य परिधिर्द्विगुणो विदशाङ्गुलः ।
तृतीयांशविहीनं तु सत्क्रोडं वक्ष ईरितम् ॥ ६३ ॥

---

सार्द्धाङ्गुलमिति । ग्रीवाया उपरि सुविस्तृतं शिरोमणिं समारभ्य स्कन्धान्तं स्कन्धपर्य्यन्तम् उत्तमं सटानां जटानां स्थानं सार्द्धाङ्गुलं दीर्घं ॥ ५९ ॥

अधोगमेति । अधोगमा अधोलम्बमाना हस्तमात्रायता हस्तमात्रदीर्घा शुभा जटा कार्य्या । पुच्छस्य वालाः केशाः सार्द्धहस्ताः वा द्विहस्ताः सुशोभनाः कार्य्या इति शेषः ॥ ६० ॥

सप्तेति । कर्णस्य दीर्घता सप्तभिः अष्टभिः नवभिः दशभिर्वा अङ्गुलैः भवति । तथा तस्य कर्णस्य विस्तृतिः त्र्यङ्गुला अङ्गुलत्रयमिता वा चतुरङ्गुला अङ्गुलचतुष्टयमिता ज्ञेया ॥ ६१ ॥

नेति । ग्रीवा भवतीति शेषः मयूरसन्निभा शिखिसदृशी, न स्थूला, नापि चिपिटा चिपिटाकृतिः भवतीति शेषः । ग्रीवाग्रस्य परिधिः मुखेन मुखपरिमाणेन तुल्यः अधिकमुष्टिकश्च एकमुष्ट्यधिकमुखपरिमाणतुल्य इत्यर्थः ॥ ६२ ॥

ग्रीवामूलस्येति । ग्रीवामूलस्य परिधिः विदशाङ्गुलः दशाङ्गुलहीनः द्विगुणः मुखस्येति शेषः । तथा सत् क्रोडम् उत्कृष्टोत्सङ्ग

नेत्रोपरि परीणाहो मुखेनाष्टाङ्गुलाधिकः ।
नासिकोपरि नेत्राधो मुखस्य परिधिस्तु यः ।
तृतीयांशविहीनेन मुखेन सदृशो भवेत् ॥ ६४ ॥
द्व्यङ्गुलं नेत्रविस्तृतिस्त्र्यङ्गुला तस्य दीर्घता ।
अर्द्धाङ्गुलाधिका वापि विस्तृतिर्दीर्घताङ्गुला ॥ ६५ ॥
मुखतृतीयांशमेतद्भ्रुवोर्मध्येऽन्तरं स्मृतम् ।
नेत्राग्रयोरन्तरं तु पञ्चमांशं मुखस्य हि ॥ ६६ ॥
कर्णयोरन्तरं तद्वत् कर्णनेत्रान्तरं तथा ।
भ्रूरयोः प्रपयोः प्रोक्तं यततं कर्णसंमितम् ॥ ६७ ॥
मणिनेत्रप्रान्तरं च भ्रुवोरन्तरमेव हि ।
सकण्यङ्गुलं तृतीयांशं नासानेत्रान्तरं तथा ॥ ६८ ॥

---

मधः नचलमं तृतीयांशेन विहीनं मुखमेति शेषः ईदृशम् उक्तम् ॥ ६१ ॥

नेत्रोपरीति । नेत्रस्य उपरि परिणाहः विस्तारः मुखेन सदृशः अष्टाङ्गुलाधिकश्च । नासिकोपरि नेत्राधः मुखस्य यः परिधिः, सः तृतीयांशविहीनेन मुखेन मुखपरिमाणेन सदृशः भवेत् ॥ ६४ ॥

द्व्यङ्गुलमिति । नेत्रस्य विस्तृतिः द्व्यङ्गुलं तस्य नेत्रस्य दीर्घता त्र्यङ्गुला । वापि अथवा विस्तृतिः अर्द्धाङ्गुलाधिका, सार्द्धद्व्यङ्गुला इत्यर्थः, दीर्घता च अङ्गुला अङ्गुलाधिका त्र्यङ्गुला इत्यर्थः ॥ ६५ ॥

मुखेति । भ्रुवोः मध्ये एतत् अन्तरं मुखतृतीयांशं तथा नेत्राग्रयोः अन्तरन्तु मुखस्य पञ्चमांशं स्मृतम् ॥ ६६ ॥

कर्णयोरिति । कर्णयोः अन्तरं तद्वत् तथा कर्णनेत्रान्तरं तथा भ्रूरयोः प्रपयोः यत् एतत् अन्तरविस्तारः तत् कर्णसम्मितं कर्णपरिमाणतुल्यं प्रोक्तम् ॥ ६७ ॥

मणीति । मणिनेत्रयोः प्रान्तरम् अन्तरमित्यर्थः भ्रुवोः

त्रिभागपूरणं प्रोथः सोऽष्टश्च परिकीर्त्तितः।
नासारन्ध्रान्तरं चैव तद्दैर्घ्यनवमांशकम्॥ ६८॥
कायो नरार्द्धविस्तारस्त्रिके हृदयसंमितः।
चतुर्थांशं तु हृदयं बाहुमूलादधः स्मृतम्॥ ७०॥
षष्ठांशमन्तरं बाह्वोर्हृत्समीपे प्रकीर्त्तितम्।
अधरोष्ठोऽनुचिबुकं सार्द्धाङ्गुलमथोन्नतम्॥ ७१॥
शोभते चोन्नतग्रीवो नतपृष्ठः सदा हयः॥ ७२॥
यद्रूपं कर्त्तुमुद्युक्तस्तद्विम्बं वीक्ष्य सर्वतः।
अदृष्ट्वा कस्य यद्रूपं न कर्त्तुं क्षमते हि तत्॥ ७२॥

---

अन्तरं तथा नासानेत्रयोरन्तरं वक्त्रस्य अरो रङ्गुलानां तृतीयांशं ज्ञेयमिति शेषः॥ ६८॥

त्रिभागेति। सोष्ठः ओष्ठसहितः प्रोथः मुखाग्रभागः त्रिभागपूरणः मुखस्य तृतीयांश इत्यर्थः परिकीर्त्तितः। तथा नासारन्ध्रयोरन्तरं तयोः दैर्घ्यस्य नवमांशकं ज्ञेयमिति शेषः॥ ६९॥

काय इति। कायः शरीरं नरार्द्धविस्तारः मनुष्यार्द्धविस्तृतिः त्रिके पृष्ठवंशाधोभागे हृदयसम्मितः वक्षः स्थलस्य विस्तार इत्यर्थः। तथा हृदयं बाहुमूलात् अधः चतुर्थांशं स्मृतम्॥ ७०॥

षष्ठांशमिति। हृत्समीपे वक्षः सन्निधौ बाह्वोः भुजयोः अन्तरं षष्ठांशं प्रकीर्त्तितम्। अधरोष्ठादथ अनुचिबुकं सार्द्धाङ्गुलम् उन्नतम्॥ ७१॥

शोभते इति। उन्नतग्रीवः नतपृष्ठः हयः सदा शोभते॥ ७२॥

यदिति। यस्य रूपम् आकृतिं कर्त्तुं उद्युक्तः, सर्वतः वीक्ष्य तस्य विम्बं प्रतिकृतिं कुर्य्यादिति शेषः कस्य कस्यापीत्यर्थः यत् रूपं तत् अदृष्ट्वा तत् प्रतिबिम्बं कर्त्तुं न क्षमते कोऽपीत्यर्थः॥ ७३॥

शिल्प्यग्रे वाजिनं ध्यात्वा कुर्य्यादवयवानतः ।
दिशानया च विभूतेः सर्वमानानि वाजिनाम् ॥ ७४ ॥
श्मश्रुहीनमुखः कान्तप्रगल्भोत्तुङ्गनासिकः ।
दीर्घोन्नतग्रीवमुखो ह्रस्वकुक्षिखुरश्रुतिः ॥ ७५ ॥
तुरप्रचण्डवेगश्च हंसमेघसमस्वनः ।
नातिक्रूरो नातिमृदुर्देवसत्त्वो मनोरमः ।
सुकान्तिगन्धवर्णश्च सद्गुणभ्रमरान्वितः ॥ ७६ ॥
भ्रमरस्तु द्विधावर्त्तो वामदक्षिणभेदतः ।
पूर्णोऽपूर्णः पुनर्द्वेधा दीर्घो ह्रस्वस्तथैव च ॥ ७७ ॥
स्त्रीपुंदेहे वामदक्षौ यथोक्तफलदौ क्रमात् ।

---

शिल्पीति। अतः अस्मात् कारणात् शिल्पी अग्रे वाजिनं ध्यात्वा चिन्तयित्वा अवयवान् कुर्य्यात्। अनया दिशा रीत्या वाजिनां विभूतेः विभवस्य सर्वाणि मानानि परिमाणानि ज्ञातव्यानीति शेषः ॥७४॥

श्मश्रुहीनेति। तुरगेति। श्मश्रुभिः हीनं मुखं यस्य तादृशः, कान्तः सुन्दरः प्रगल्भः तथा उत्तुङ्गा उन्नता नासिका यस्य तथाभूतः, दीर्घा उन्नता उत्कृष्टा ग्रीवा यस्य तादृशं मुखं यस्य तथोक्तः ह्रस्वाः कुक्षिः उदरं खुराः श्रुतयः कर्णा यस्य सः, प्रचण्डवेगः, हंसस्य मेघस्य च समस्वनः तुल्यध्वनिः, नातिक्रूरः, नातिमृदुः देवसत्त्वः अलौकिकबलसम्पन्नः, शोभनाः कान्तिगन्धवर्णाः यस्य तादृशः सद्गुणेन भ्रमरेण आवर्त्तविशेषेण च अन्वितः तुरगः मनोरमः अतिहृद्यः ॥ ७५ ॥ ७६ ॥

भ्रमर इति। वामदक्षिणभेदतः वामांशदक्षिणांशभेदात् द्विधा द्विप्रकारः आवर्त्तः पूर्णरूपचिह्नविशेषः भ्रमरः। स तु पूर्णः अपूर्णः तथा दीर्घः ह्रस्वश्चेति पुनर्द्विधा द्विविधः ॥ ७७ ॥

स्त्रीति। वामदक्षौ वामांशदक्षिणांशस्थितौ तौ भ्रमरौ स्त्रीपुं

न तथा विपरीतौ तु शुभाशुभफलप्रदौ ॥ ७८ ॥
नीचोर्ध्वं तिर्य्यङ्मुखतः फलभेदो भवेत्तयोः ॥ ७९ ॥
शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः ।
प्रासादतोरणधनुः सुपूर्णकलशाकृतिः ।
स्वस्तिकस्रङ्मीनखड्गश्रीवत्साभः शुभो भ्रमः ॥८०॥
नासिकाग्रे ललाटे च शङ्खे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥ ८१ ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमाः सम्प्रकीर्तिताः ॥८२॥

---

क्रमात् यथोक्त फलदौ, अश्वाया वामांशे अश्वस्य दक्षिणांशे स्थिताविति भावः, वामभागस्तु नारीणां पुंसां श्रेयस्तु दक्षिण इति वचनात् विपरीतौ तु तथा शुभाशुभफलप्रदौ न भवत इति शेषः ॥७८॥

नीचेति। तयोः भ्रमरयोः नीचोर्द्ध तिर्य्यङ्मुखतः निम्नमुखतः ऊर्द्धमुखतः तिर्य्यङ्मुखतश्च फलभेदः फलानां प्रभेदः भवेत् ॥ ७९ ॥

भ्रमरस्याकृतिभेदं शुभकरत्वञ्च दर्शयति शङ्खेति । शङ्खचक्रगदापद्मवेदि स्वस्तिकसन्निभः शङ्खसदृशः चक्रसदृशः गदासदृशः पद्मसदृशः वेदिसदृशः स्वस्तिकं माङ्गलिकद्रव्यभेदः तत्सदृश तथा प्रासादतोरण धनुः सुपूर्णकलसाकृति हर्म्यसदृशः तोरणप्रभः धनुषा तुल्यः सुपूर्णकुम्भाकृतिः किञ्च स्वस्तिकस्रङ्मीनखड्ग श्रीवत्साभः स्वस्तिकस्रक् माङ्गलिका माला, तत्सम: मीनरूपः खड्गाकृतिः श्रीवत्सः मणिविशेषः, तत्सम: भ्रमः भ्रमरः शुभः ॥ ८० ॥

नासिकाग्रे इति । येषां नासिकाग्रे, ललाटे, शङ्खे ललाटास्थ्नि, कर्णसमीपस्थास्थ्नि वा कण्ठे मस्तके च आवर्त्तः भ्रमरचक्रं जायते ते तुरगोत्तमाः धन्याः ॥ ८१ ॥

हृदीति। हृदि वक्षसि, स्कन्धे, गले, कटिदेशे, नाभौ, कुक्षौ, पार्श्वाग्रे च येषां आवर्त्तः ते मध्यमा सम्प्रकीर्त्तिताः ॥ ८२ ॥

ललाटे यस्य चावर्त्तद्वितयस्य समुद्भवः ।
मस्तके च तृतीयस्य पूर्णहर्षोऽश्व उत्तमः ॥ ८३ ॥
पृष्ठवंशे यदावर्त्तो यस्यैकः सम्प्रजायते ।
स करोत्यश्वसङ्घातान् स्वामिनः सूर्यसंज्ञकः ॥ ८४ ॥
त्रयो यस्य ललाटस्था आवर्त्तास्तिर्यगुत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः सदा ॥ ८५ ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
समावर्त्ताः स वाजीशो जायते नृपमन्दिरे ॥ ८६ ॥
कपोलस्थौ यदावर्त्तौ दृश्येते यस्य वाजिनः ।
यशोवृद्धिकरौ प्रोक्तौ राज्यवृद्धिकरौ मतौ ॥ ८७ ॥

---

ललाटे इति । यस्य ललाटे आवर्त्तद्वितयस्य मस्तके च तृतीयस्य आवर्त्तस्य समुद्भवः, सः पूर्णहर्षः पूर्णहर्षवर्द्धकत्वात् पूर्णाख्यः अश्वः उत्तमः ॥ ८३ ॥

पृष्ठवंशे इति । यदा यस्य पृष्ठवंशे एकः आवर्त्तः सम्प्रजायते, सः, सूर्यसंज्ञकः सूर्याख्यः अश्वः स्वामिनः अश्वसङ्घातान् अश्वसमूहान् करोति वर्द्धयति ॥ ८४ ॥

त्रय इति यस्य ललाटस्थाः त्रयः आवर्त्ताः तिर्यगुत्तराः कुटिलप्रकाराः, सः त्रिकूटः त्रिकूटनामा अश्वः सदा वाजिनां वृद्धिकरः ॥ ८५ ॥

एवमिति । एवं प्रकारेण एव यस्य त्रयः समावर्त्ताः ग्रीवां समाश्रिताः, ग्रीवायामुत्पन्ना इत्यर्थः, स वाजीशः अश्वश्रेष्ठः नृपमन्दिरे जायते भवति तिष्ठतीत्यर्थः ॥ ८६ ॥

कपोलस्थाविति । यदा यस्य वाजिनः अश्वस्य कपोलस्थौ द्वौ आवर्त्तौ दृश्येते, तदा तस्य तौ आवर्त्तौ यशोवृद्धिकरौ प्रोक्तौ तथा राज्यवृद्धिकरौ मतौ ॥ ८७ ॥

एको वाथ कपोलस्थो यस्यावर्त्तः प्रदृश्यते।
सर्वनामा स विख्यातः स इच्छेत् स्वामिनाशनम् ॥८८॥
गलस्कंस्थो यदावर्त्तौ वाजिनो दक्षिणाश्रितः।
स करोति महासौख्यं स्वामिनं शिवसंज्ञकः ॥ ८९ ॥
तद्वद्वामाश्रितः क्रूरः प्रकरोति धनक्षयम्।
इन्द्राख्यौ तावुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥ ९० ॥
कर्णमूले यदावर्त्तौ स्तनमध्ये तथापरौ।
विजयाख्यौ उभौ तौ तु युद्धकाले यशःप्रदौ ॥ ९१ ॥
स्कन्धपार्श्वे यदावर्त्तौ स भवेत् पद्मलक्षणः।
करोति विविधान् पद्मान् स्वामिनः सततं सुखम् ॥९२॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयम्।

---

एक इति। अथ वा यस्य एकः कपोलस्थः आवर्त्तः प्रदृश्यते, स अश्वः सर्वनामा विख्यातः, स च स्वामिनाशनम् इच्छेत् ॥ ८८ ॥

गलस्केति। यदा यस्य वाजिनः गलस्कंस्थः आवर्त्तः दक्षिणाश्रितः दक्षिणगलस्थित इत्यर्थः सः शिवसंज्ञकः शिवाख्यः अश्वः स्वामिनं महासौख्यम् अतिसुखिनं करोति ॥ ८९ ॥

तद्वदिति तद्वत् तथा वामाश्रितः वामगलस्थ इत्यर्थः आवर्त्तः क्रूरः सन् धनक्षयं प्रकरोति। तौ उभौ युगपत् उभय-गलस्थौ चेत् इन्द्राख्यौ शस्तौ कथितौ, नृपस्य राज्यवृद्धिदौ च ॥ ९० ॥

कर्णमूले इति। यदा कर्णमूले आवर्त्तौ, तथा स्तनमध्ये अपरौ द्वौ आवर्त्तौ भवेतां तदा तौ उभौ विजयाख्यौ युद्धकाले यशः प्रदौ च ॥९१॥

स्कन्धपार्श्वे इति। यदा स्कन्धयोः पार्श्वे आवर्त्तौ भवेतां तदा सः अश्वः पद्मलक्षणः पद्मनामा भवेत्, स च स्वामिनः विविधान् पद्मान् पद्मसंख्यकधनानि इत्यर्थः तथा सततं सुखं करोति ॥ ९२ ॥

नासेति। यदा नासायाः नासिकायाः मध्ये एको वा आवर्त्तः,

आवर्त्तौ सान्तरौ भाले सूर्य्यचन्द्रौ शुभप्रदौ।
मिलितौ तौ मध्यफलौ अतिलग्नौ तु दुःखदौ ॥१०३॥
आवर्त्तत्रितयं भाले शुभं शीर्ष्णं तु सान्तरम्।
अशुभं चातिसंलग्नमावर्त्तद्वितयं तथा ॥ १०४ ॥
त्रिकोणत्रितयं भाले आवर्त्तानां तु दुःखदम्।
गलमध्ये शुभस्त्वेकः सर्वाशुभनिवारणः ॥ १०५ ॥
अधोमुखः शुभः पादे भाले चोर्द्ध्वमुखो भ्रमः।
न चैवात्यशुभा पृष्ठमुखी शतपदी मता ॥ १०६ ॥
मेढ्रस्य पश्चाद्भ्रमरी स्तनी वाजी स चाशुभः।

---

तथा चपणाद्योः चच्चुवस्त्रगाद्योः शुभावर्त्तौ आवर्त्तौ शुभकरौ विज्ञेयौ ॥ १०२ ॥

आवर्त्ताविति। भाले ललाटे सान्तरौ पृथक् स्थानस्थौ आवर्त्तौ सूर्य्यचन्द्रौ सूर्य्यचन्द्रनामानौ शुभप्रदौ भवतः। तौ मिलितौ संयुक्तौ मध्यफलौ, अतिलग्नौ परस्परातिसन्निहितौ तु दुःखदौ, मन्दफलौ भवतः ॥ १०३ ॥

आवर्त्तेति। भाले अर्द्धम् अर्द्धस्थं सान्तरं पृथक्स्थम् आवर्त्तत्रितयं शुभम्। तथा अतिसंलग्नम् अतिसन्निहितम् आवर्त्तद्वितयम् अशुभम् ॥ १०४ ॥

त्रिकोणेति। भाले आवर्त्तानां त्रिकोणं त्रितयं त्रिकोणावर्त्तत्रयनिवेशः दुःखदम्। गलमध्ये तु एकः आवर्त्तः शुभः शुभकरः; सर्वेषाम् अशुभानां निवारणश्च भवति ॥ १०५ ॥

अधोमुख इति। पादे अधोमुखः, तथा भाले ऊर्द्धमुखः भ्रमः आवर्त्तः शुभः। पृष्ठमुखी प्रत्यङ्मुखी शतपदी अत्यशुभा अत्यन्ताशुभकरी न च मता ॥ १०६ ॥

मेढ्रेति। यः वाजी अश्वः मेढ्रस्य पश्चात् भ्रमरी भ्रमरवान् वा

भ्रमः कर्णसमीपे तु शृङ्गी चैकः स निन्दितः ॥ १०७ ॥
ग्रीवोर्ध्वपार्श्वे भ्रमरो ह्येकरश्मिः स चैकतः।
पादोर्ध्वमुखभ्रमरी कीलोत्पाटी स निन्दितः ॥ १०८ ॥
शुभाशुभौ भ्रमौ यस्मिन् स वाजी मध्यमः स्मृतः।
मुखे पत्सु सितः पञ्चकल्याणोऽश्वः सदा मतः ॥ १०९ ॥
स एव हृदये स्कन्धे पुच्छे श्वेतोऽष्टमङ्गलः।
कर्णे श्यामः श्यामकर्णः सर्वतस्त्वेकवर्णभाक्।
तत्रापि सर्वतः श्वेतो मेध्यः पूज्यः सदैव हि ॥ ११० ॥
वैदूर्यसन्निभे नेत्रे यस्य स्तो जयमङ्गलः।
मिश्रवर्णस्त्वेकवर्णः पूज्यः स्यात् सुन्दरो यदि ॥ १११ ॥

---

भ्रमौ समाकारचिह्नविशेषशाली, स च अशुभः। कर्णसमीपे यस्य भ्रमः, स शृङ्गी, स च एकः केवलः निन्दितः ॥ १०७ ॥

ग्रीवेति। यः ग्रीवाया ऊर्ध्वपार्श्वे भ्रमरी भ्रमरवान्, एकतः एकस्मिन् पार्श्वे एकरश्मिश्च एकः रश्मिः तदाख्यचिह्नविशेष इत्यर्थः यस्य तथाभूतः तथा पादोर्ध्वमुखभ्रमरी पादानाम् ऊर्ध्वे अग्रे मुखे मूले च भ्रमरी किञ्च कीलोत्पाटी कीलं मङ्गुम् उत्पाटयतीति तथोक्तः, सः निन्दितः ॥ १०८ ॥

शुभाशुभाविति। यस्मिन् वाजिनि भ्रमौ शुभाशुभौ, स वाजी मध्यमः स्मृतः। यस्य मुखे पत्सु पादेषु च सितः श्वेतः, स अश्वः पञ्चकल्याणः पञ्चधा शुभकरः सदा मतः ख्यातः ॥ १०९ ॥

स इति। स एव अश्वः हृदये स्कन्धे तथा पुच्छे श्वेतः, कर्णे च श्यामश्चेत् अष्टमङ्गलः अष्टमङ्गलजनकः। किञ्च श्यामकर्णः किन्तु सर्वतः सर्वतः सर्वस्मिन् अवयवे एकवर्णभाक्, तत्रापि सर्वतः श्वेतवर्णश्चेत् सदैव मेध्यः पूज्यः हि यस्मात् अवधारणे ॥ ११० ॥

वैदूर्येति। यस्य अश्वस्य नेत्रे नयने वैदूर्यसन्निभे वैदूर्यरत्नसदृशे

सुगतिर्दुर्गतिर्नित्यं शिक्षकस्य गुणागुणैः ॥ १२१ ॥
आन्वधश्चलपादः स्याहजुकायः स्थिरासनः ।
तुलाधृतखलीनः स्यात् काले देशे सुशिक्षकः ॥ १२२ ॥
मृदुना नातितीक्ष्णेन कशाघातेन ताड़येत् ।
ताड़येन्मध्यघातेन स्थाने स्वश्वं सुशिक्षकः ॥ १२३ ॥
हेषिते कर्णयोर्हन्यात् स्खलिते पक्षयोस्तथा ।
भीते कर्णान्तरे चैव ग्रीवायामुन्मार्गगामिनि ॥ १२४ ॥

---

दुर्बलः कृशः दुःखार्त्तः तथा अत्यन्तपीड़ाशरात् अन्याहारदानात् रोगी भवेत् ॥ १२० ॥

सुगतिरिति । अश्वः शिक्षकस्य गुणागुणैः गुणदोषैः नित्यं सततं सुगतिः सुन्दरगमनः दुर्गतिः मन्दगमनश्च भवेत् ॥ १२१ ॥

आन्विति । यः आन्वोः अश्वस्योपरिभावः अधः निम्नदेशे चलौ पादौ यस्य सः ऋजुकायः सरलशरीरः तथा स्थिरं निश्चलम् आसनं यस्य तादृशः स्यात् तथा काले समये देशे स्थानभेदे तुलया साम्येन धृतं खलीनं कविका येन तादृशः स्यात् सः सुशिक्षकः ॥ १२२ ॥

मृदुनेति । सुशिक्षकः मृदुना कोमलेन नातितीक्ष्णेन कशाघातेन अश्वं शोभनम् अश्वं ताड़येत् । किन्तु मध्यघातेन नातिमृदुना नातिक्रूरेण च प्रकारेण दुःखार्त्तः स्थाने मर्म्मादिव्यतिरिक्ते अवयवे दुःखार्त्तः अश्वं ताड़येत् ॥ १२३ ॥

हेषिते इति । हेषिते हेषा अश्वस्य शब्दविशेषः सा अस्य जाता इति हेषितः तस्मिन् इतोऽस्यजाते इति इतप्रत्ययः । हेषाशब्दं कुर्वति अति कर्णयोः स्खलिते पादस्खलने पक्षयोः पार्श्वयोः भीते सति कर्णान्तरे कर्णमध्ये तथा उन्मार्गगामिनि कुपथगे सति ग्रीवायां कशया प्रहरेत् ॥ १२४ ॥

कुपिते बाहुमध्ये च भ्रान्तचित्ते तथोदरे।
अश्वः सन्ताड्यते प्राज्ञैर्नान्यस्थानेषु कर्हिचित्॥ १२५॥
अथवा हेषिते स्कन्धे स्खलिते जघनान्तरे।
भीते वक्षःस्थलं हन्याद् वक्त्रमुन्मार्गगामिनि।
कुपिते पुच्छसङ्घाते भ्रान्ते जानुद्वयं तथा॥ १२६॥
नासकृत् ताडयेदश्वमकाले च विदेशके।
अकालस्थानघातेन वाजिदोषान् वितन्वते॥ १२७॥
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः।
दुष्टं दण्डेनाभिभवेन्नारोहेद्दण्डवर्जितः॥ १२८॥
गच्छेत् षोडशमात्राभिरुत्तमोऽश्वो धनुः शतम्।
यथा यथा न्यूनगतिरश्वो हीनस्तथा तथा॥ १२९॥

---

कुपिते इति। प्राज्ञैः विज्ञैः जनैः कुपिते सति बाहुमध्ये तथा भ्रान्तचित्ते उद्भ्रान्तचेतसि सति उदरे अश्वः सन्ताड्यते सम्यक् आहन्यते, कर्हिचित् कदाचित् अन्यस्थानेषु न॥ १२५॥

अथवेति। अथवा किंवा हेषिते सति स्कन्धे स्खलिते सति जघनान्तरं जघनमध्यं भीते सति वक्षःस्थलं उन्मार्गगामिनि सति वक्त्रं मुखं कुपिते सति पुच्छसङ्घातं तथा भ्रान्ते जानुद्वयं हन्यात्॥ १२६॥

नेति। अकाले असमये विदेशके अस्थाने च असकृत् पुनः पुनः अश्वं न ताडयेत् यतः अकालस्थान घातेन असमयस्थान प्रहारेण वाजिदोषान् वितन्वते विस्तारयन्ति जनयन्ति इत्यर्थः॥ १२७॥

तावदिति। यावत् असौ हयः अश्वः जीवति तावत् ते दोषाः वाजिदोषाः भवन्ति। दुष्टं अश्वं दण्डेन अभिभवेत् तथा दण्डवर्जितः न आरोहेत्॥ १२८॥

गच्छेदिति। उत्तमः अश्वः षोडशमात्राभिः पूर्वमानैरित्यर्थः

सहस्रचापप्रमितं मण्डलं गतिशिक्षणे ।
उत्तमं वाजिनो मध्यं पौषमर्धं तदर्द्धकम् ॥ १३० ॥
मध्यं शतधनुः प्रोक्तमधमं च तदर्द्धकम् ॥ १३१ ॥
शतयोजनगन्ता स्याद्दिनैकेन यथा हयः ।
गतिं संवर्द्धयेन्नित्यं तथा मण्डलविक्रमैः ॥ १३२ ॥
सायं प्रातश्च हेमन्ते शिशिरे कुसुमागमे ।
सायं ग्रीष्मे तु शरदि प्रातरश्वं वहेत् सदा ॥ १३३ ॥
वर्षासु न वहेदीषत्तथा विषमभूमिषु ॥ १३४ ॥
सुगत्याश्विर्बलं दार्ढ्यमारोग्यं वर्द्धते हरेः ॥ १३५ ॥

---

धनुःशतं चतुःशतहस्तं गच्छेत् एकपदविक्षेपेणेति भावः । अश्वः यथा यथा मन्दगतिः तथा तथा हीनः भवेत् ॥ १२६ ॥

सहस्रेति । वाजिनः अश्वस्य गतिशिक्षणे गतिशिक्षायां सहस्रचापप्रमितं चतुःसहस्रहस्तमितं मण्डलं मण्डलाकारेण भ्रमणं उत्तमं प्रोक्तं अर्द्धं पञ्चशतहस्तमितं मध्यमं, तदर्द्धं सार्द्धद्विशतहस्तं नीचम् ॥ १३० ॥

मध्यमिति । शतधनुः चतुःशतहस्तमितं मण्डलमिति शेषः मध्यं, तथा तदर्द्धं द्विशतहस्तमितं अधमं प्रोक्तम् ॥ १३१ ॥

शतेति । हयः अश्वः यथा दिनैकेन एकेन दिनेन शतयोजनगन्ता स्यात्, नित्यं सततं मण्डलविक्रमैः मण्डलाकारभ्रमणैः तथा गतिं संवर्द्धयेत् ॥ १३२ ॥

सायमिति । हेमन्ते, शिशिरे, कुसुमागमे वसन्ते च सायं प्रातश्च ग्रीष्मे तु सायं शरदि तु प्रातः, सदा सर्वस्मिन् दिने अश्वं वहेत् ॥ १३३ ॥

वर्षास्विति । वर्षासु तथा विषमभूमिषु उच्चावचप्रदेशेषु ईषत् अल्पमपि न वहेत् अश्वमिति शेषः ॥ १३४ ॥

सुगत्येति । सुगत्या शोभनेन गमनेन हरेः अश्वस्य वाजिनः, बलं दार्ढ्यं शरीरकाठिन्यञ्च वर्द्धते ॥ १३५ ॥

स्नानपानावगाहैश्च ततः सम्यक् प्रपोषयेत् ॥ १४० ॥
सर्वदोषहरोऽश्वानां मद्यजङ्गालयो रसः ।
शक्त्या संपाययेत् क्षीरं घृतं वा वारि सक्तुकम् ॥ १४१ ॥
अन्नं भुक्त्वा जलं पीत्वा तत्क्षणाद्वाहितो हयः ।
उत्पद्यन्ते तदाश्वानां कासश्वासादिका गदाः ॥ १४२ ॥
यवाश्च चणकाः श्रेष्ठा मध्या माषा मकुष्टकाः ।
नीचा मसूरा मुद्गाश्च भोजनार्थं तु वाजिनः ॥ १४३ ॥
गतयः षड्विधा धारास्कन्दितं रेचितं प्लुतम् ।
धौरीतकं वल्गितं च तासां लक्ष्म पृथक् पृथक् ॥ १४४ ॥

---

अश्वं पुष्टयेत् ततः अनन्तरं स्नानपानावगाहैः स्नानेन पानेन अवगाहनेन च सम्यक् पोषयेत् पुष्टिं नयेत् ॥ १४० ॥

सर्वेति । मद्य जाङ्गलयोः सुरायाः जाङ्गलस्य जङ्गलभव पशुविशेषस्य च रसः सर्वेषां दोषाणां हरः नाशकः शान्तिकर इत्यर्थः । किञ्च शक्त्या शक्त्यनुसारेण क्षीरं दुग्धं घृतं वा सक्तुकं सक्तुसहितं वारि वा संपाययेत् ॥ १४१ ॥

अन्नमिति । अन्नं भुक्त्वा जलं पीत्वा स्थित इति शेषः हयः अश्वः तत्क्षणात् वाहितः भवति चेत् तदा अश्वस्य कासश्वासादिकाः गदाः रोगाः उत्पद्यन्ते ॥ १४२ ॥

यवा इति । वाजिनः अश्वस्य भोजनार्थं यवा चणकाश्च श्रेष्ठाः माषाः मकुष्टकाः वन्यमुद्गाः मध्याः मसूरा मुद्गाश्च नीचाः अधमाः ॥ १४२ ॥

गतयइति । अश्वानां गतयः षड्विधाः, धारा१ । आस्कन्दितं २ । रेचितं ३ । प्लुतं । ४ धौरीतकं ५ । वल्गितञ्च ६ । तासां गतीनां लक्ष्म लक्षणं पृथक् पृथक् विभिन्न मित्यर्थः ॥ १४४ ॥

धारागतिः सा विज्ञेया यातिवेगतरा मता ।
पार्ष्णिलोहातिनुदितो यस्यां भ्रान्तो भवेद्धयः ॥१४५॥
आकुञ्चिताग्रपादाभ्यामुत्प्लुत्योत्प्लुत्य या गतिः ।
आस्कन्दिता तु सा ज्ञेया गतिविज्ञैस्तु वाजिनाम् ॥१४६॥
ईषदुत्प्लुत्य गमनमग्रकायं रेचितं हि तत् ।
पादैश्चतुर्भिरुत्प्लुत्य मृगवत् सा प्लुता गतिः ॥ १४७ ॥
असंवलितपद्भ्यां तु सुव्यक्तं गमनं द्रुतम् ।
धौरीतकं च तज्ज्ञेयं रथसंवाहने वरम् ॥ १४८ ॥
असंवलितपद्भ्यां यो मयूरो धृतकन्धरः ।
दोलायितशरीरार्द्धकायो गच्छति वल्गितम् ॥१४९॥
परिवाहो वृषमुखादुदरे तु चतुर्गुणः ।

---

धारेति । या गतिः अतिवेगतरा अतिवेगवती मता, यस्याञ्च हयः पार्ष्णिस्थेन लोहेन पश्चाद्देशे अतिनुदितः अतिप्रेरितः सन् भ्रान्तः भवेत् सा धारा विज्ञेया ॥ १४५ ॥

आकुञ्चितेति । आकुञ्चिताभ्यां अग्रपादाभ्यां उत्प्लुत्य उत्प्लुत्य या गतिः सा वाजिनां गतिविज्ञैः आस्कन्दिता च ज्ञेया ॥ १४६ ॥

ईषदिति । ईषत् उत्प्लुत्य अग्रकायमञ्चितं गमनं यत् तत् हि रेचितम् । या चतुर्भिः पादैः उत्प्लुत्य मृगवत् गतिः सा प्लुता ॥१४७॥

असंवलितेति । असंवलिताभ्यां अकुञ्चिताभ्यां पद्भ्यां यत् सुव्यक्तं द्रुतं गमनं तत् धौरीतकं ज्ञेयं तत् रथसंवाहने वरं श्रेष्ठम् ॥ १४८ ॥

असंवलितेति । मयूरः इव यः अश्वः धृतकन्धरः उन्नतग्रीवः तथा दोलायितः शरीरस्य अर्द्धकायः अर्द्धभागः यस्य तथाभूतः सन् असंवलिताभ्यां अकुञ्चिताभ्यां पद्भ्यां यत् गच्छति तत् वल्गितम् ॥१४९॥

मुखादि हयस्य विवरणमाचष्टे परिवाह इति। हयस्य मुखात् उदरे

सककुत्त्रिगुणोच्चं तु सार्द्धत्रिगुणदीर्घता ॥ १५० ॥
सप्ततालो वृषः पूज्यो गुणैरेभिर्युतो यदि ॥ १५१ ॥
न स्थायी न च वै मन्दः सुवोढ़ा खङ्गसुन्दरः ।
नातिक्रूरः सुपृष्ठश्च वृषभः श्रेष्ठ उच्यते ॥ १५२ ॥
त्रिंशद्योजनगन्ता वा प्रत्यहं भारवाहकः ।
नवतालश्च सुदृढ़ः सुमुखोष्ट्रः प्रशस्यते ॥ १५३ ॥
शतमायुर्मनुष्याणां गजानां परमं स्मृतम् ।
मनुष्यगजयोर्वाल्यं यावद्विंशतिवत्सरम् ॥ १५४ ॥

---

परिणाह इति । उदरविस्तारः ककुदः चतुर्गुणः । सककुत् ककुदसहितं उदरं त्रिगुणं खुरादितिर्यक् उच्चं उन्नतम् । सार्द्धत्रिगुणदीर्घता खुरात् उदरस्य दीर्घता सार्द्धत्रिगुणा ॥ १५० ॥

सप्तताल इति । सप्ततालः तालः परिमाणविशेषः सप्त तालाः परिमाणं यस्येति सप्ततालः वृषः यदि एभिः पूर्वोक्तैः गुणैः युतः भवेत् तदा पूज्यः ॥ १५१ ॥

गुणानाह नेति । यः वृषः न स्थायी न स्थितिशीलः, न च मन्दः खञ्जः, सुवोढ़ा सुवाहकः, खङ्गसुन्दरः शोभनाङ्गतया सुन्दर इत्यर्थः नातिक्रूरः नातितीक्ष्णः सुपृष्ठश्च सः वृषभश्रेष्ठः वृषभेषु श्रेष्ठः उच्यते ॥ १५२ ॥

उष्ट्रमाह त्रिंशदिति । त्रिंशद्योजनगन्ता त्रिंशद्योजनपरिमितपथगामी प्रत्यहं भारवाहकः भारवहनशीलः नवतालः नवतालपरिमितः सुदृढ़ः कठिनशरीरः सुमुखः उष्ट्रः प्रशस्यते ॥ १५३ ॥

शतमिति । मनुष्याणां गजानाञ्च परमं आयुः जीवनकालः शतं शतवर्षं स्मृतम् । मनुष्यगजयोः बाल्यञ्च विंशतिवत्सरं यावत् विंशतिवर्षपर्य्यन्तमित्यर्थः ॥ १५४ ॥

नृणां हि मध्यमं यावत् षष्टिवर्षं वयः स्मृतम्।
अशीतिवत्सरं यावद्गजस्य मध्यमं वयः॥ १५५॥
चतुस्त्रिंशत्तु वर्षाणामश्वस्यायुः परं स्मृतम्।
पञ्चविंशतिवर्षं हि परमायुर्वृषोष्ट्रयोः॥ १५६॥
बाल्यमश्ववृषोष्ट्राणां पञ्चमं वत्सरं मतम्।
मध्यं यावत्षोड़शाब्दं वार्द्धक्यं तु ततः परम्॥ १५७॥
दन्तानामुद्गमैर्वर्णैरायुर्ज्ञेयं वृषाश्वयोः॥ १५८॥
अश्वस्य षट् सिता दन्ताः प्रथमाब्दे भवन्ति हि।
कृष्णलोहितवर्णास्तु द्वितीयेऽब्दे ह्यधोगताः॥ १५९॥
तृतीयेऽब्दे तु सन्दंशौ क्रमात् कृष्णौ षड़ब्दतः।

नृणामिति। नृणां मानवानां मध्यमं वयः षष्टिवर्षं यावत् तथा गजस्य अशीतिवत्सरं यावत् मध्यमं वयः स्मृतम्॥ १५५॥

चतुस्त्रिंशदिति। अश्वस्य परम् आयुः वर्षाणां चतुस्त्रिंशत् चतुस्त्रिंशद्वर्षमित्यर्थः, तथा वृषोष्ट्रयोः वृषस्य उष्ट्रस्य च परमायुः पञ्चविंशतिवर्षं स्मृतम्॥ १५६॥

बाल्यमिति। अश्ववृषोष्ट्राणाम् अश्वानां वृषाणां उष्ट्राणाञ्च बाल्यं शैशवं पञ्चमं वत्सरं यावत्, मध्यं यौवनमित्यर्थः षोड़शाब्दं यावत् ततःपरं वार्द्धक्यं स्मृतम्॥ १५७॥

दन्तानामिति। दन्तानाम् उद्गमैः जननैः वर्णैश्च वृषाश्वयोः वृषस्य अश्वस्य च आयुः ज्ञेयम्॥ १५८॥

अश्वस्येति। अश्वस्य प्रथमाब्दे जननप्रथमवत्सरे षट् सिता श्वेतवर्णाः दन्ताः भवन्ति। द्वितीये अब्दे कृष्णलोहितवर्णाः अधोगताः निम्नगामिनः भवन्ति हिशब्दश्चावधारणार्थः॥ १५९॥

तृतीये इति। तृतीये अब्दे वत्सरे तु सन्दंशौ, दन्तौ च मध्य-

तत्पार्श्ववर्त्तिनौ तौ तु चतुर्थे पुनरुद्गतौ ॥ १६० ॥
अन्त्यौ द्वौ पञ्चमाब्दे तु सन्दंशौ पुनरुद्गतौ ।
मध्यपार्श्वान्तगौ द्वौ द्वौ क्रमात् कृष्णौ षडब्दतः ॥१६१॥
नवमाब्दात् क्रमात् पीतौ तौ सितौ द्वादशाब्दतः ।
दशपञ्चाब्दतस्तौ तु काचाभौ क्रमशः स्मृतौ । १६२ ॥
अष्टादशाब्दतस्तौ हि मध्वाभौ भवतः क्रमात् ।
शङ्खाभौ चैकविंशाब्दाच्चतुर्विंशाब्दतः सदा ।
छिद्रं सञ्चलनं पातो दन्तानां च त्रिके त्रिके ॥ १६३ ॥
प्रोथे सुवलयस्तिस्रः पूर्णायुर्यस्य वाजिनः ।
यथा यथा तु हीनास्ता हीनमायुस्तथा तथा ॥ १६४ ॥

---

ब्दतः षड्वर्षपर्य्यन्तं क्रमात् कृष्णौ भवतः । चतुर्थे तु वर्षे तयोः दशनयोः पार्श्ववर्त्तिनौ तौ दशनौ पुनः उद्गतौ भवत इति शेषः ॥ १६० ॥

अन्त्याविति । पञ्चमाब्दे पञ्चमवर्षे अन्त्यौ अन्तिमौ द्वौ सन्दंशौ पुनरुद्गतौ भवतः । मध्यपार्श्वान्तगौ मध्यपार्श्वयोः अन्तगौ द्वौ द्वौ दशनौ षडब्दतः षड्वर्षं यावत् क्रमात् कृष्णौ भवतः ॥ १६१ ॥

नवमाब्दादिति । तौ दशनौ क्रमात् नवमाब्दात् पीतौ, ततः पुनः द्वादशाब्दतः सितौ श्वेतौ । ततश्च दशपञ्चाब्दतः पञ्चदशवर्षात् तौ क्रमशः काचाभौ काचवदुज्ज्वलौ स्मृतौ ॥ १६२ ॥

अष्टादशाब्दत इति । पुनश्च तौ अष्टादशाब्दतः अष्टादशवर्षात् क्रमात् मध्वाभौ मधुसदृशौ भवतः । ततश्च एकविंशाब्दात् शङ्खाभौ भवतः । ततः चतुर्विंशाब्दतः त्रिके त्रिके तृतीये तृतीये वर्षे क्रमात् दन्तानां छिद्रं, सञ्चलनं पातश्च भवति ॥ १६२ ॥

प्रोथे इति । यस्य वाजिनः अश्वस्य पूर्णायुः आयुः पूर्णमित्यर्थः तस्य प्रोथे मुखाग्रे तिस्रः सुवलयः सु शोभनाः रेखाविशेषाः भव-

जानूत्पाता लोष्ठवाद्यो धूतपृष्ठो जलासनः।
गतिमध्यासनः पृष्ठपाती पश्चाद्गमोर्ध्वपात् ॥ १६५ ॥
सर्पजिह्वश्चञ्चकान्तिर्भीरुरश्वोऽतिनिन्दितः।
सच्छिद्रभालतिलकी निन्द्य आश्रयभञ्जस्तथा ॥ १६६ ॥
वृषस्याष्टौ सिता दन्ताश्चतुर्थेऽब्देऽखिलाः स्मृताः।
द्वावन्त्यौ पतितोत्पन्नौ पञ्चमेऽब्दे हि तस्य वै ॥ १६७ ॥
षष्ठे तूपान्त्यौ भवतः सप्तमे तत्समीपगौ।
अष्टमे पतितोत्पन्नौ मध्यमौ दशनौ खलु ॥ १६८ ॥

---

त्यर्थः। ताः रेखाः यथा यथा क्षीणाः, तथा तथा आयुः क्षीणं भवति ॥ १६४ ॥

जानूत्पाता इति। सर्पजिह्व इति। जानुनि उत्पाति उत्क्षिपतीति जानूत्पाता जानूत्क्षेपणशीलः, लोष्ठवाद्यः लोष्ठेन वाद्यकारकः, धूतपृष्ठः कम्पितपृष्ठदेशः, जलासनः जलस्थानस्थितः, गतिमध्यासनः गतिमध्ये गमनमध्ये आसनम् उपवेशनं यस्य सः गच्छन् गच्छन् स्थितिशील इत्यर्थः, पृष्ठपाती पृष्ठपातकः, पश्चाद्गमः पश्चाद्गमनशीलः ऊर्द्ध्वपात् ऊर्द्ध्वक्षिप्तचरणः, सर्पस्येव जिह्वा यस्य सः, ऋक्षकान्तिः भल्लूकप्रभः, तथा भीरुः अश्वः अतिनिन्दितः। तथा सच्छिद्रभाल-तिलकी सच्छिद्रं सरन्ध्रं भाले यत् तिलकं तिलकाकृतिचिह्नविशेषः तद्विशिष्टः आश्रयभञ्जः आश्रयं भनक्ति छिनत्तीति तथोक्तः आश्रय-ध्वंसकारकः अश्वः निन्द्यः ॥ १६५ ॥ १६६ ॥

वृषस्येति। वृषस्य चतुर्थे अब्दे अखिलाः समग्राः सिताः श्वेत-वर्णाः अष्टौ दन्ताः स्मृताः। तस्य पञ्चमे अब्दे वर्षे अन्त्यौ चरमौ द्वौ दन्तौ पतितोत्पन्नौ पतित्वा पुनरुत्पन्नौ भवत इत्यर्थः। हिशब्दः अवधारणार्थः, वैशब्दश्च पादपूरणार्थः ॥ १६७ ॥

षष्ठे इति। षष्ठे तु वर्षे उपान्त्यौ अन्त्यसमीपस्थौ दशनौ

नासिकाकर्षरज्ज्वा तु वृषोष्ट्रं विनयेद्भृशम् ।
तीक्ष्णाग्रायः शतफालः स्यादेषां मलशोधने ॥ १७४ ॥
कुन्ताङ्कुशैर्विनेया हि मनुष्याः पशवः सदा ।
सैनिकास्तु विशेषेण न ते वै धनदण्डतः ॥ १७५ ॥
अनूपे तु हयाश्वानां सलोष्ट्राणान्तु जाङ्गले ।
साधारणे पदातीनां निवेशाद्रक्षणं भवेत् ॥ १७६ ॥
शतं शतं योजनान्ते सैन्यं राष्ट्रे नियोजयेत् ॥ १७७ ॥

---

द्वादशाङ्गुलौ द्वौ अर्द्धखण्डौ तयोः पार्श्वान्तर्गताभ्यां तथा सुदृढाभ्यां कठिनाभ्यां वारकाकर्षखण्डाभ्यां वारकौ निवारकौ यौ आकर्षखण्डौ आकर्षणनिमित्तखण्डौ ताभ्यां तथा रज्ज्वर्थवलयैः रज्जुनिमित्तवलयैः युतौ कार्य्याविति शेषः । एवंविधेन खलीनेन कविकया वाजिनम् अश्वं वशीकुर्य्यात् दमयेत् ॥ १७२ ॥ १७३ ॥

नासिकेति । नासिकाकर्षरज्ज्वा नासिकायां या आकर्षा आकर्षणी रज्जुः तया वृषोष्ट्रं वृषं उष्ट्रञ्च भृशं अत्यर्थं विनयेत् दण्डयेत् । एषां वृषोष्ट्राणां मलशोधने दोषनिराकरणे तीक्ष्णं अग्रं यस्य स एव तीक्ष्णाग्रीयः शतफालः दण्डविशेषः स्यात् ॥ १७४ ॥

कुन्ताङ्कुशैरिति । मनुष्याः पशवश्च सदा कुन्ताङ्कुशैः उपयुक्तदण्डैरित्यर्थः सदा विनेयाः दमनीयाः सैनिकास्तु विशेषेण कुन्ताङ्कुशैः विनेया इति अतः ते सैनिकाः धनदण्डतः अर्थदण्डेन न विनेया भवन्ति वैशब्दः अवधारणार्थः ॥ १७५ ॥

अनूप इति । अनूपे सजलदेशे हयानां अश्वानाञ्च, जाङ्गले जङ्गले देशे सलानां उष्ट्राणाञ्च, तथा, साधारणे सर्व्वथा स्थितिविधायके इत्यर्थः स्थाने पदातीनां निवेशात् स्थापनात् रक्षणं भवेत् ॥ १७६ ॥

शतमिति । राष्ट्रे राज्ये योजनान्ते प्रति चतुःक्रोशान्ते शतं शतं सैन्यं नियोजयेत् स्थापयेत् ॥ १७७ ॥

गजोष्ट्रवृषभाख्याः प्राक् श्रेष्ठाः सम्भारवाहने ।
सर्वेभ्यः शकटाः श्रेष्ठा वर्षाकालं विना स्मृताः ॥१७८॥
न चाल्पसाधनो गच्छेदपि जेतुमरिं लघुम् ।
महतात्यन्तसाध्यस्कबलेनैव सुबुद्धियुक् ॥ १७९ ॥
अशिक्षितमसारञ्च साद्यस्कं तूलवच्च तत् ।
युद्धं विनान्यकार्य्येषु योजयेत् मतिमान् सदा ॥१८०॥
विकर्त्तुं यततेऽल्पोऽपि प्राप्ते प्राणात्ययेऽनिशम् ।
न पुनः किन्तु बलवान् विकारकरणक्षमः ॥ १८१ ॥
अपि बहुबलोऽशूरो न स्थातुं क्षमते रणे ।
किमल्पसाधनाशूरः स्थातुं शक्तोऽरिणा समम् ॥१८२॥

---

गजेति । प्राक् प्रथमं सम्भारवाहने सम्भाराणां सामग्रीणां वाहने विषये गजाः उष्ट्राः वृषभाः अमाश्च श्रेष्ठाः । वर्षाकालं विना शकटाः सर्वेभ्यः वाहनेभ्य इत्यर्थः श्रेष्ठाः स्मृताः ॥ १७८ ॥

नेति । अल्पसाधनः अल्पबलः सन् लघुमपि क्षुद्रमपि अरिं शत्रुं जेतुं न गच्छेत् । सुबुद्धियुक् सुप्राज्ञः नृपः महता महता अत्यन्तसाद्यस्कबलेन एव अत्यन्तेन प्रबलेन साद्यस्कबलेन पूर्वोक्तेन न तु मौलेन तस्य प्रबलारिषु यानस्यौचित्यादितिभावः बलेन सैन्येन एव गच्छेदित्यर्थः ॥१७९

अशिक्षितमिति । मतिमान् बुद्धिमान् नृपः अशिक्षितं असारं साद्यस्कं आधुनिकं बलं तूलवत् तूलेन तुल्यं अतिलघु इत्यर्थः । तत् बलं युद्धं विना अन्यकार्येषु सदा योजयेत् ॥ १८० ॥

विकर्त्तुमिति । प्राणात्यये जीवनविनाशे प्राप्ते उपस्थिते सति अल्पः क्षुद्र जनः विकर्त्तुं विपरीतमाचरितुम् अपि अनिशं सततं यतते, किन्तु बलवान् विकारकरणक्षमः विपरीताचरणक्षमः अपि न पुनः नैव विपरीत माचरितुं यतते इत्यर्थः ॥ १८१ ॥

अपीति । बहुबलः अपि अशूरः अपराक्रमी जनः रणे स्थातुं न

सुसिद्धाल्पबलः शूरो विजेतुं क्षमते रिपुम् ।
महान् सुसिद्धबलयुक् शूरः किं न विजेष्यति ॥ १८३ ॥
मौलशिक्षितसारेण गच्छेद्राजा रणे रिपुम् ।
प्राणात्ययेऽपि मौलं न स्वामिनं त्यक्तुमिच्छति ॥१८४॥
वाग्दण्डपरुषेणैव भृतिह्रासेन भीतितः ।
नित्यं प्रवासायासाभ्यां भेदोऽवश्यं प्रजायते ॥ १८५ ॥
बलं यस्य तु संभिन्नं मनागपि जयः कुतः ? ।
शत्रोः स्वस्यापि सेनाया अतो भेदं विचिन्तयेत् ॥ १८६॥

---

क्षमते न शक्नोति । अल्पसाधनः अल्पबलः अथच अशूरः अतः अरिणा शत्रुणा समं सह स्यातुं किं शक्तः ? न समर्थ इत्यर्थः ॥ १८२ ॥

सुसिद्धेति । सुसिद्धं सुशिक्षितं अल्पं बलं यस्य तथोक्तः शूरः विक्रान्तः जनः रिपुं विजेतुं क्षमते । महान् प्रबलः सुसिद्धबलयुक् सुशिक्षितबलशाली शूरः किं कथं न विजेष्यति ? अपितु जेष्यत्येवेत्यर्थः ॥१८३॥

मौलेति । राजा मौलेन मूलायातेन शिक्षितसारेण शिक्षितेषु मध्ये सारेण स्थिरतरेण बलेन रणे रिपुं गच्छेत् शत्रुं प्रति यायात् । यस्मात् मौलं बलं प्राणात्ययेऽपि स्वामिनं त्यक्तुं न इच्छति ॥१८४ ॥

वागिति । वाग्दण्डपरुषेण वाक्पारुष्येण दण्डपारुष्येण चेत्यर्थः भृतिह्रासेन वेतनन्यूनत्वेन भीतितः भयप्रदर्शनेन, नित्यं प्रवासायासाभ्यां विदेशस्थित्या परिश्रमेण चेत्यर्थः अवश्यं भेदः भङ्गः बलानामिति शेषः प्रजायते ॥ १८५ ॥

बलमिति । यस्य बलं संभिन्नं सम्यक् भेदं प्राप्तं तस्य मनाक् अपि अल्पोऽपि जयः कुतः ? न कुतोपि तस्य जयो भवतीत्यर्थः । अतः तस्मात् कारणात् शत्रोः स्वस्यापि आत्मनोऽपि सेनायाः भेदं विचिन्तयेत् यथा शत्रोर्बलभङ्गः स्यात् आत्मनो न तथा विविच्य व्यवहरेदित्यर्थः ॥१८६

यथा हि शत्रुसेनायां भेदोऽवश्यं भवेत्तथा ।
कौटिल्येन प्रदानेन द्राक् कुर्य्यात् नृपतिः सदा ॥१८७॥
सेवयात्यन्तप्रबलं नत्या चारिं प्रसाधयेत् ।
प्रबलं मानदानाभ्यां युद्धैर्हीनबलं तथा ।
मैत्र्या जयेत् समबलं भेदैः सर्वान् वशं नयेत् ॥१८८॥
शत्रुसंसाधनोपायो नान्यः सुबलभेदतः ।
तावत् परो नीतिमान् स्याद्यावत् सुबलवान् स्वयम् ।
मित्रं तावच्च भवति पुष्टाग्नेः पवनो यथा ॥ १८९ ॥
त्यक्तं रिपुबलं धार्य्यं न समूहसमीपतः ।
पृथक् नियोजयेत् प्राग्वा युद्धार्थं कल्पयेच्च तत् ।
मैत्रमारात् पृष्ठभागे पार्श्वयोर्वा बलं न्यसेत् ॥ १९० ॥

---

यथेति । यथा येन प्रकारेण शत्रुसेनायाः अवश्यं भेदः भवेत् नृपतिः सदा कौटिल्येन चापल्येन प्रदानेन अर्थदानेन द्राक् झटिति शत्रुसैन्यं तथा कुर्य्यात् ॥ १८७ ॥

सेवयेति । अत्यन्तप्रबलं अरिं सेवया नत्या च, प्रबलं अरिं मानदानाभ्यां तथा हीनबलं दुर्बलं अरिं युद्धैः प्रसाधयेत् वशीकुर्य्यात् । किञ्च मैत्र्या सौजन्येन समबलं अरिं भेदैः मनोभङ्गकरणैः सर्वान् वशं नयेत् वशीकुर्य्यात् ॥ १८८ ॥

शत्रुसंसाधनोपाय इति । सुबलानां सुशिक्षितसैन्यानां भेदतः भेदात् अन्यः शत्रूणां संसाधने वशीकरणे उपायः न अस्तीति शेषः । यावत् स्वयं सुबलवान् सुशिक्षितबलसम्पन्नः भवेत् तावत् परः शत्रुः नीतिमान् स्यात् । किञ्च पुष्टाग्नेः पुष्टस्य वह्नेः महतः अग्नेः पवनः यथा पवन इव तावत् मित्रं भवति ॥ १८९ ॥

त्यक्तमिति । त्यक्तं शत्रुणेति शेषः रिपोः शत्रोः बलं समूहसमीपतः साधारणसमक्षं न धार्य्यं न रक्षणीयम् । तत्र प्राक् एकान्ते

अस्यते क्षिप्यते यत्तु मन्त्रयन्त्राग्निभिश्च तत् ॥ १९१ ॥
अस्त्रं तदन्यतः शस्त्रमसिकुन्तादिकञ्च यत् ।
अस्त्रन्तु द्विविधं ज्ञेयं नालिकं मान्त्रिकं तथा ॥ १९२ ॥
यदा तु मान्त्रिकं नास्ति नालिकं तत्र धारयेत् ।
सह शस्त्रेण नृपतिर्विजयार्थन्तु सर्वदा ॥ १९३ ॥
लघुदीर्घाकारधाराभेदैः शस्त्रास्त्रनामकम् ।
प्रथयन्ति नवं भिन्नं व्यवहाराय तद्विदः ॥ १९४ ॥
नालिकं द्विविधं ज्ञेयं बृहत् क्षुद्रविभेदतः ॥ १९५ ॥

---

गृहीतमितिशेषः रिपुबलं पृथक् नियोजयेत् युद्धार्थं कल्पयेच्च किञ्च मित्रं आरात् समीपे आत्मसम्मुखे इत्यर्थः पृष्ठभागे पार्श्वयोर्वा बलं अपरं सैन्यं न्यसेत् ॥ १९० ॥

अस्यते इति । यत्तु मन्त्रयन्त्राग्निभिः मन्त्रेण यन्त्रेण अग्निना वा अस्यते निःसार्य्यते वा क्षिप्यते तत् अस्त्रं तदन्यतः तद्भिन्नं यत् असिकुन्तादिकं तत् शस्त्रम् ॥ १९१ ॥

अस्त्रमिति । अस्त्रं द्विविधं ज्ञेयं नालिकं तथा मान्त्रिकम् ॥१९३॥

यदेति । यदा तु मान्त्रिकं मन्त्रप्रयोज्यं न अस्ति, तत्र तदा नृपतिः विजयार्थं सर्वदा शस्त्रेण सह नालिकं धारयेत् ॥ १९२ ॥

लघ्विति । तद्विदः शस्त्रज्ञाः जनाः व्यवहाराय लघुदीर्घाकार-धाराभेदैः लघवः क्षुद्राः दीर्घाः महान्तः ये आकाराः अवयवाः तेषां धाराभेदाः फलोत्पत्तीति विशेषाः तैः शस्त्रास्त्रनामकं शस्त्राणाम् अस्त्राणाञ्च नामानीत्यर्थः नवं नूतनं भिन्नं विशेषितं यथा तथा प्रथयन्ति प्रकाशयन्ति ॥ १९४ ॥

नालिकमिति । नालिकम् अस्त्रं बृहत्क्षुद्रविभेदतः गुरुलघु-भेदादित्यर्थः द्विविधं ज्ञेयं बृहन्नालिकं क्षुद्रनालिकञ्चेत्यर्थः ॥१९५॥

तिर्यगूर्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकम् ।
मूलाग्रयोर्लक्ष्यभेदितिलबिन्दुयुतम् सदा ॥ १९६ ॥
यन्त्राघाताग्निकृद् ग्रावचूर्णधृक्कर्णमूलकम् ।
सुकाष्ठोपाङ्गबुध्नञ्च मध्याङ्गुलबिलान्तरम् ॥ १९७ ॥
स्वान्तेऽग्निचूर्णसन्धातृशलाकासंयुतं दृढम् ।
लघुनालिकमप्येतत् प्रधार्यं पत्तिसादिभिः ॥ १९८ ॥
यथा यथा तु त्वक्सारं यथा स्थूलबिलान्तरम् ।
यथा दीर्घं बृहद्गोलं दूरभेदि तथा तथा ॥ १९९ ॥
मूलकीलभ्रमाल्लक्ष्यसमसन्धानभाजि यत् ।

---

तिर्यगित्यादि । तिर्यक् वक्रं ऊर्ध्वं छिद्रं मूले यस्य तत्, पञ्चवितस्तिकं सार्द्धद्विहस्तं, मूलाग्रयोः मूले अग्रे च लक्ष्यभेदि लक्ष्यभेदकं यत् तिलबिन्दु तेन युतं, यन्त्रस्य आघातेन अग्निकृत् अग्न्युद्दीपकं यत् ग्रावचूर्णं प्रस्तरचूर्णं तस्य धृक् धारकः कर्णमूलं यस्य तादृशं सुकाष्ठस्य उपाङ्गे अङ्गसमीपे अवयवप्रान्ते दृढतरः बुध्नं मूलं यस्य तत्, मध्यं अङ्गुलबिलम् अन्तरे यस्य तत् स्वान्ते स्वस्य अन्ते अग्निचूर्णं सन्धातृ अग्निचूर्णं (बारुद इति प्रसिद्धः) तस्य सन्धातृ धारकं शलाकया संयुतं दृढं कठिनं नालं (बन्दुक) इति प्रसिद्धम् । एतत् लघुनालिकं अपि पत्तिभिः पादातैः सादिभिश्च सन्धार्यम् ॥ १९६ ॥ १९७ ॥ १९८ ॥

यथेति । त्वक्सारं वंशः यथा यथा, यथा च स्थूलं बृहत् बिलं रन्ध्रं अन्तरे यस्य तथोक्तं, यथा वा दीर्घं बृहत् गोलकं, तथा तथा दूरभेदि दूरस्थलक्ष्यभेदकं भवति ॥ १९९ ॥

मूलेति । यत् पूर्वोक्तलक्षणं त्वक्सारं मूले यः कीलः शङ्कुः तस्य भ्रमात् भ्रमणात् लक्ष्यसमं तौल्यं सुदृढमिलनं यत् यन्त्राणां तद्

इड्वालिकसंज्ञं तत् काष्ठवुघ्नविनिर्मितम्।
प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम्॥ २००॥
सुवर्चिलवणात् पञ्च पलानि गन्धकात् पलम्।
अन्तर्धूमविपक्कार्कस्नुह्याद्यङ्गारतः पलम्॥ २०१॥
शुद्धात् संग्राह्य सञ्चूर्ण्य सम्मील्य प्रपुटेद्रसैः।
स्नुह्यर्काणां रसोनस्य शोषयेदातपेन च।
पिष्ट्वा शर्करवच्चैतदग्निचूर्णं भवेत् खलु॥ २०२॥
सुवर्चिलवणाद्भागाः षड्वा चत्वार एव वा।

---

भ्रमते इति तथा भूतं काष्ठस्य यत् वुघ्नं मूलं ग्रन्थिरित्यर्थः तेन विनिर्मितं तत् इड्वालिक संज्ञं इड्वालिकं नाम (कामान्) इति भाषा। शकटाद्यैः प्रवाह्यं प्रवहनीयं बहुभारवत्त्वात् न मनुष्येण नापि कृशित प्रकृतिभिः पशुभिरिति भावः सुयुक्तं सुप्रयुक्तमित्यर्थः विजयप्रदं जयसाधनं भवति॥ १९९॥

अग्निचूर्णं निरूपयति। सुवर्चिलवणादिति सुवर्चिलवणात् (शोरा) इति प्रसिद्धात् पञ्च पलानि कर्षचतुष्टय परिमाणानि, गन्धकात् पलं कर्षचतुष्टयमितं गन्धकमित्यर्थः, तथा अन्तर्धूमः सधूमः अग्निः तेन विपक्काः दग्धाः ये अर्काः आकन्द इति प्रसिद्धा वृक्षाः स्नुह्यादयः सिज- वृक्षादयश्च तेषां अङ्गारतः अङ्गारात् शुद्धात् अविमिश्रादित्यर्थः पलं संग्राह्य सम्यक् गृहीत्वा संचूर्ण्य तथा संमील्य मिश्रयित्वा स्नुहीनां अर्काणाञ्च रसैः प्रपुटेत् पचेत्। ततश्च रसोनस्य पाकेन शोषरसस्य कल्कं पि षष्ठी आतापेन शोषयेत्। अनन्तरं शर्करवत् एतत् पिष्ट्वा चूर्णयित्वा यत् लब्धमिति शेषः तत् खलु अग्निचूर्णं भवेत्॥ २००॥
॥ २०१॥ २०२॥

सुवर्चीति। नालास्त्राणामर्थे निमित्ते यत् अग्निचूर्णं तस्मिन् सुवर्चिलवणात् षट् वा चत्वार एव वा भागाः नियोक्तव्या इत्यर्थः

नालास्त्रार्थाग्निचूर्णे तु गन्धाङ्गारौ तु पूर्ववत् ॥ २०३ ॥
गोलो लोहमयो गर्भगुटिकः केवलोऽपि वा ।
सीसस्य लघुनालार्थे ह्यन्यधातुभवोऽपि वा ॥ २०४ ॥
लोहसारमयं वापि नालास्त्रं त्वन्यधातुजम् ।
नित्यसम्मार्जनस्वच्छमस्त्रपातिभिरावृतम् ॥ २०५ ॥
अङ्गारस्यैव गन्धस्य सुवर्चिलवणस्य च ।
शिलाया हरितालस्य तथा सीसमलस्य च ॥ २०६ ॥
हिङ्गुलस्य तथा कान्तरजसः कर्पूरस्य च ।
जतोर्नील्याश्च सरलनिर्यासस्य तथैव च ॥ २०७ ॥
समन्यूनाधिकैरंशैरग्निचूर्णान्यनेकशः ।
कल्पयन्ति च तद्विद्याश्चन्द्रिकाभादिमन्ति च ॥ २०८ ॥

---

गन्धाङ्गारौ गन्धकाङ्गारौ इत्यर्थः पूर्ववत् पञ्च परिमितावित्यर्थः ॥ १०३ ॥

गोल इति । लघुनालार्थे लघुनालास्त्रनिमित्तं केवलः अविमिश्र इत्यर्थः लोहमयः गोलः गर्भगुटिकः अथवा सीसस्य गर्भगुटिकः अपिवा अन्यधातुमयः गर्भगुटिकः कार्य्य इतिशेषः ॥ २०४ ॥

लोहसारमयमिति । नालास्त्रं लोहसारमयं वा अन्यधातुजं चेत् नित्यसम्मार्जनेन सततपरिष्करणेन स्वच्छं तथा अस्त्रपातिभिः अस्त्रक्षेपिभिः वीरैः आवृतं कार्य्यमिति शेषः ॥ २०५ ॥

पुनश्च । अग्निचूर्णानि निरूपयति अङ्गारस्येत्यादि । अङ्गारस्य, गन्धस्य गन्धकस्य, सुवर्चिलवणस्य, शिलायाः मनःशिलायाः, हरितालस्य, सीसमलस्य हिङ्गुलस्य, कान्तरजसः लोहचूर्णस्य, कर्पूरस्य, जतोः, नील्याः तथा सरलनिर्य्यासस्य सर्जरसस्य समैः न्यूनैः अधिकैश्च यथोक्तैः अंशैः अनेकशः बहुविधानि चन्द्रिकाभादिमन्ति ज्योत्स्नाप्रभादियुक्तानि

क्षिपन्ति चाग्निसंयोगाद्गोलं लक्ष्ये सुनालगम् ॥ २०९ ॥
नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकम्।
निवेशयेत्तद्दण्डेन नालमूले यथा दृढ़म् ॥ २१० ॥
ततः सुगोलकं दद्यात् ततः कर्णेऽग्निचूर्णकम्।
कर्णचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत् ॥ २११ ॥
लक्ष्यभेदी यथा बाणो धनुर्ज्याविनियोजितः।
भवेत् तथा तु सन्धाय द्विहस्तश्च शिलीमुखः ॥ २१२ ॥
अष्टास्रा पृथुबुध्ना तु गदा हृदयसम्मिता।
पट्टीशः स्वसमो हस्तबुध्नश्चोभयतोमुखः ॥ २१३ ॥

---

अग्निचूर्णानि तद्विद्याः तेषु विद्या येषां तादृशाः तदभिज्ञा इत्यर्थः अतः कल्पयन्ति ॥ २०६ ॥ २०७ ॥ २०८ ॥

क्षिपन्तीति। अग्निसंयोगात् सुनालगं सुनालात् गच्छतीति तादृशं गोलं गोलाकारं गर्भगुटिकं लक्ष्ये लक्षणीये वस्तौ इतिशेषः क्षिपन्ति तद्विद्या इति शेषः ॥ २०९ ॥

नालास्त्रमिति। आदौ नालास्त्रं शोधयेत् परिष्कुर्यात् ततः तत्र अग्निचूर्णकं पूर्वोक्तं दद्यात्, नालमूले दण्डेन यथा दृढ़ं दृढ़ं यथा तथेत्यर्थः तत् अग्निचूर्णं निवेशयेत् प्रवेशयेत् ॥ २१० ॥

तत इति। ततः अग्निचूर्णनिवेशनानन्तरं तत्र सुगोलकं, ततश्च कर्णे अग्निचूर्णकं दद्यात्। अनन्तरं कर्णे चूर्णाग्निदानेन कर्णस्थाग्निचूर्णे अग्निदानेन लक्ष्ये गोलं निपातयेत् ॥ २११ ॥

लक्ष्यभेदीति। यथा बाणः धनुर्ज्याविनियोजितः धनुषोविक्षिप्त इत्यर्थः सन् लक्ष्यभेदी भवेत् तथा सन्धाय द्विहस्तः हस्तद्वयमितः शिलीमुखः बाणः कार्य्य इति शेषः ॥ २१२ ॥

अष्टेति। पृथुबुध्ना स्थूलमूलदेशा अष्टास्रा अष्टकोणा हृदयसम्मिता वक्षःस्थल समाना गदा कार्य्या इतिशेषः। पट्टीशः अस्त्रविशेषः स्वसमः

ईषद्वक्रश्चैकधारो विस्तारे चतुरङ्गुलः।
क्षुरप्रान्तो नाभिसमो दृढमुष्टिः सुचन्द्ररुक्॥ २१४॥
खड्गः प्रासश्चतुर्हस्तदण्डबुध्नः क्षुराननः।
दशहस्तमितः कुन्तः फालाग्रः शङ्कुबुध्नकः॥ २१५॥
चक्रं षड्ढस्तपरिधि क्षुरप्रान्तं सुनाभियुक्।
त्रिहस्तदण्डस्त्रिशिखो लोहरज्जुः सुपाशकः॥ २१६॥
गोधूमसम्मितस्थूलपत्रं लोहमयं दृढम्।
कवचं सशिरस्त्राणमूर्ध्वकायविशोभनम्॥ २१७॥

---

क्षेम्र समपरिमाणः हस्तगुप्तश्च हस्तप्रमाणः वा, उभयतोमुखः सूच्यग्रमुखः कार्य्य इति शेषः॥ २१३॥

ईषदिति। एकधारः अस्त्रविशेषः ईषद्वक्रः, विस्तारे चतुरङ्गुलः, अङ्गुलचतुष्टय प्रमाणः, क्षुरप्रान्तः अस्त्रभेदः नाभिसमः क्षेम्र नाभि पर्य्यन्त परिमाणः दृढमुष्टिः तथा सुचन्द्ररुक् शोभनचन्द्रप्रभः कार्य्य इति शेषः॥ २१४॥

खड्ग इति। खड्गः प्रासश्च अस्त्रभेदः चतुर्हस्तदण्डबुध्नः चतुर्हस्तदण्डप्रमाणः क्षुराननः क्षुरवत् आननं तस्य सः। कुन्तः दश-हस्तमितः फालाग्रः फालस्य लाङ्गलस्य उपवर्त्तिनो लोहस्य इव अग्रं यस्य तथाभूतः, तथा शङ्कुबुध्नकः शङ्कुसदृश इत्यर्थः॥ २१५॥

चक्रमिति। चक्रं चक्राकारः अस्त्रविशेषः षड्ढस्तपरिधि हस्तषट्कवेष्टनं क्षुरस्येव प्रान्तं यस्य तत्, तथा सुनाभियुक् सुमध्य-मित्यर्थः। सुपाशकः पाशनामा अस्त्रविशेषः त्रिहस्तदण्डः हस्तत्रयमितः दण्डाकृतिश्च इत्यर्थः त्रिशिखः शिखात्रययुतः तथा लोहरज्जुः लोहतारवान्॥ २१६॥

गोधूमेति। गोधूमेन सम्मितं तुल्यं स्थूलं पत्रं यस्य तत् लोह-

तीक्ष्णाग्रं क्षुरजं श्रेष्ठं लोहसारमयं दृढम् ॥ २१८ ॥
यो वै सुपुष्टसम्भारस्तथा षड्गुणमन्त्रवित्।
बह्वस्त्रसंयुतो राजा योद्धुमिच्छेत् स एव हि।
अन्यथा दुःखमाप्नोति स्वराज्याद्भ्रश्यतेऽपि च ॥ २१९ ॥
आविभ्रतोः प्रभुभावमुभयोः संयतात्मनोः।
अस्त्राद्यैः स्वार्थसिद्ध्यर्थं व्यापारो युद्धमुच्यते ॥ २२० ॥
मन्त्रास्त्रैर्दैविकं युद्धं नालाद्यस्त्रैस्तथाऽऽसुरम्।
शस्त्रबाहुसमुत्थन्तु मानवं युद्धमीरितम् ॥ २२१ ॥
एकस्य बहुभिः सार्द्धं बहूनां बहुभिश्च वा।

---

मयं दृढ़ं कठिनं शरीरत्राणं शिरस्त्राणसहितं ऊर्द्धकायविशोभनं ऊर्द्धदेहशोभाजनकं कवचं कार्य्यमिति शेषः ॥ २१७ ॥

तीक्ष्णाग्रं सुधारं लोहसारमयं उत्कृष्टलौहमयं दृढ़ं क्षुरजं अस्त्रविशेषः कार्य्यमिति शेषः ॥ २१८ ॥

य इति। यः राजा सुपुष्टसम्भारः परिपुष्टसामग्रीकः, षड्गुणमन्त्रवित् षट् गुणाः सन्ध्यादयः सन्धिर्नाविग्रहो यान मासनं द्वैधमाश्रयः षट् गुणा इत्यमरः। मन्त्रांश्च तान् वेत्तीति तथोक्तः तथा बहुभिः अस्त्रैः संयुतः, स एव योद्धुं इच्छेत्, अन्यथा युद्धकरणे दुःखं आप्नोति, स्वराज्यात् भ्रश्यते च विच्युतः भवति च ॥ २१९ ॥

आविभ्रतोरिति। प्रभुभावम् आविभ्रतोः धारयतोः संयतात्मनोः नियतमनसोः उभयोः स्वार्थसिद्ध्यर्थं अस्त्राद्यैः व्यापारः युद्धं उच्यते ॥ २२० ॥

मन्त्रास्त्रैरिति। मन्त्रास्त्रैः दैविकं, नालादिभिः अस्त्रैः आसुरं शस्त्रबाहुसम्भवं शस्त्रैः तरवारादिभिः बाहुभिश्च समुत्थं मानवं युद्धम् ईरितम् उक्तम् ॥ २२१ ॥

एकस्येति। तत् युद्धम् एकस्य बहुभिः सार्द्धं सह, बहूनां

एकस्यैकेन वा द्वाभ्यां द्वयोर्वा संभवेत् खलु ॥ २२१ ॥
कालं देशं शत्रुबलं दृष्ट्वा स्वीयबलं ततः ।
उपायान् षड्गुणं मन्त्रं भवेद्युद्धकामुकः ॥ २२२ ॥
शरद्धेमन्तशिशिरकालो युद्धेषु चोत्तमः ।
वसन्तो मध्यमो ज्ञेयोऽधमो ग्रीष्मः स्मृतः सदा ॥२२४॥
वर्षासु न प्रशंसन्ति युद्धं साम स्मृतं तदा ॥ २२५ ॥
युद्धसम्भारसम्पन्नो यदाधिकबलो नृपः ।
मनोत्साही सुशकुनोत्पाती कालस्तदा शुभः ॥ २२६ ॥
कार्य्येऽत्यावश्यके प्राप्ते कालो नो चेद्यदा शुभः ।

---

शत्रुभिश्च, सार्द्धं एकस्य एकेन सार्द्धं द्वयोः द्वाभ्यां वा सार्द्धं खलु निश्चितं भवेत् ॥ २२१ ॥

कालमिति । कालं समयं देशं स्थानं शत्रुबलं स्वीयबलम् उपायान् सामादीन् सामदानभेददण्डमित्युपायचतुष्टयमित्यमरः । षड्गुणं सन्ध्यादिकं मन्त्रञ्च दृष्ट्वा समीक्ष्य युद्धकामुकः संग्रामार्थी भवेत् ॥ २२२ ॥

शरदिति । युद्धेषु शरद् हेमन्तः शिशिरश्चायञ्च उत्तमः, वसन्तः मध्यमः ज्ञेयः ग्रीष्मस्तु सदा अधमः स्मृतः ॥ २२४ ॥

वर्षास्विति । वर्षासु युद्धं न प्रशंसन्ति, तदा वर्षास्वित्यर्थः साम सन्धिः स्मृतम् ॥ २२५ ॥

युद्धेति । यदा नृपः युद्धसम्भारसम्पन्नः संग्रामसामग्रीपरिपुष्टः अधिकबलः मनोत्साही उत्साहान्वितमनाः सञ्चिरमार्थैः । तदा सुशकुनोत्पाती सुशकुनानां शुभलक्षणानाम् उत्पातः उत्पतनम् उदय इत्यर्थः यस्मिन् तथाभूतः अतएव शुभः सुलक्षणः कालः संग्रामस्येति शेषः ॥ २२६ ॥

कार्य्ये इति । यदा चेत् यदि शुभः कालः नो प्राप्यते इत्यर्थः

विधाय हृदि शिबिरं गेहे भक्त्या निर्यात्तदा ॥ २२७ ॥
न कालनियमस्तत्र गोस्त्रीविप्रविनाशने । २२८ ॥
यस्मिन् देशे यथाकालं सैन्यव्यायामभूमयः ।
परस्य विपरीताश्च स्मृतो देशः स उत्तमः ॥ २२९ ॥
आत्मनश्च परेषां च तुल्यव्यायामभूमयः ।
यत्र मध्यम उद्दिष्टो देशः शास्त्रविचिन्तकैः ॥ २३० ॥
अरातिसैन्यव्यायामसुपर्याप्तमहीतलः ।
आत्मनो विपरीतश्च स वै देशोऽधमः स्मृतः ॥ २३१ ॥
स्वसैन्यात् तु तृतीयांशहीनं शत्रुबलं यदि ।

---

तदा अत्यावश्यके कार्ये प्राप्ते आपतिते हृदि हृदयस्थे गेहे शिबिरं भक्त्या विधाय तु निधाय दद्यात् गच्छेत् संग्रामायेति शेषः ॥ २२७ ॥

नेति । गोस्त्रीविप्रविनाशने गवां स्त्रीणां विप्राणां वा विनाशने प्रति तत्र युद्धे न कालनियमः सर्वस्मिन्नेव काले संग्रामाय यायात् इति भावः ॥ २२८ ॥

यस्मिन्निति । यस्मिन् देशे यथाकालं समये समये स्वसैन्यानां व्यायामभूमयः रणव्यायामार्थमभ्यासस्थानानि सन्तीति शेषः तथा परस्य शत्रोः विपरीताः, न सन्तीति भावः सः देशः उत्तमः स्मृतः ॥ २२९ ॥

आत्मन इति । यत्र यस्मिन् देशे आत्मनः परेषां शत्रूणाञ्च तुल्याः समानाः व्यायामभूमयः सन्तीति शेषः स देशः शास्त्रविचिन्तकैः मध्यमः उद्दिष्टः कथितः ॥ २३० ॥

अरातीति । यः देशः अरातिसैन्यानां शत्रुसेनानां व्यायामेषु सुपर्याप्तं महीतलं यस्मिन् तथाभूतः, आत्मनः विपरीतश्च न तथोपयुक्तः सः अधमः स्मृतः ॥ २३१ ॥

स्वेति । यदि शत्रुबलं स्वसैन्यात् तृतीयांशहीनम् अधिष्ठितम्

अभिचिंतमसारं वा साध्यस्कं स्वजयाय वै ॥ २३२ ॥
पुत्रवत् पालितं यत् तु दानमानविवर्द्धितम् ।
युद्धसम्भारसम्पन्नं स्वसैन्यं विजयप्रदम् ॥ २३३ ॥
सन्धिं च विग्रहं यानमासनं च समाश्रयम् ।
द्वैधीभावं च संविद्यान्मन्त्रस्यैतांस्तु षड्गुणान् ॥ २३४ ॥
याभिः क्रियाभिर्बलवान् मित्रतां याति वै रिपुः ।
सा क्रिया सन्धिरित्युक्ता विमृशेत् तां तु यत्नतः ॥२३५॥
विकर्षितः सन् वाधीनो भवेच्छत्रुस्तु येन वै ।
कर्मणा विग्रहस्तं तु चिन्तयेन्मन्त्रिभिर्नृपः ॥ २३६ ॥

---

असारं वा साध्यसम् आधुनिकं तदा वै निश्चितं स्वस्य जयाय भवतीति शेषः ॥ २३२ ॥

पुत्रवदिति । यत्तु स्वसैन्यं पुत्रवत् पालितं दानेन मानेन च विवर्द्धितं विशेषतः वृद्धिं प्रापितं तथा युद्धसम्भारैः युद्धसामग्रीभिः सम्पन्नं युक्तं तत् विजयप्रदं जयावहम् ॥ २३३ ॥

सन्धिमिति । सन्धिं परस्परसाहाय्यार्थं कृत्यवादिदानेन भावा-भावाभ्यामन्योऽन्यं उपकर्त्तव्यमितीवं नियमबन्धं, विग्रहं विरुद्धाचरणा-धिक्येन वैरभावं, यानं शत्रुं प्रति गमनम् आसनम् उपेक्षणं, समा-श्रयम् प्रबलेन पीड़ितस्य अपरप्रबलतराश्रयणं, द्वैधीभावं कार्यसिद्धये स्वबलस्य द्वैधीकरणम् एतान् मन्त्रस्य षड्गुणान् संविद्यात् सम्यक् जानीयात् ॥ २३४ ॥

याभिरिति । बलवान् रिपुः याभिः क्रियाभिः अनुष्ठानैः वै निश्चितं मित्रतां याति प्राप्नोति सा सन्धिः इति उक्ता, तां क्रियां यत्नतः विमृशेत् विवेचयेत् ॥ २३५ ॥

विकर्षित इति । येन कर्मणा व्यापारेण शत्रुः विकर्षितः पीड़ितः

अप्रनाशार्थममनं यानं स्वाभीष्टसिद्धये।
स्वरक्षणं प्रवनाशो भवेत् स्थानात् तदासनम् ॥ २३७ ॥
यैर्गुप्तो बलवान् भूयाद् दुर्बलोऽपि स आश्रयः।
द्वैधीभावः स्वसैन्यानां स्थापनं गुल्मगुल्मतः ॥ २३८ ॥
बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः।
आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम् ॥२३९॥
एक एवोपहारस्तु सन्धिरेष मतो हितः।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥ २४० ॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते।

---

अधीनः वा अधीन एव वाशब्दः अवधारणार्थः। भवेत् तं विग्रह्य नृपः सन्धिभिः सह चिन्तयेत् ॥ २२६ ॥

शत्रुनाशार्थमिति। स्वस्य अभीष्टसिद्धये स्वमनोरथसाधनाय शत्रुनाशार्थमगमनं यानम्। स्थानात् यस्मात् अवस्थानात् उपेक्षणादित्यर्थः स्वरक्षणं शत्रुनाशश्च भवेत् तत् आसनम् ॥ २३७ ॥

यैरिति। दुर्बलोऽपि यैः गुप्तः रक्षितः सन् बलवान् भवेत् तेषाम् आश्रयणं स आश्रयः। स्वसैन्यानां गुल्मगुल्मतः प्रतिगुल्मं स्थापनं द्वैधीभावः ॥ २३८ ॥

बलीयसेति। बलीयसा अतिबलवता अभियुक्तः आक्रान्तः अनन्यप्रतिक्रियः अन्यप्रतिकाररहितः अतएव आपन्नः आपद्गतः नृपः कालयापनं कुर्वाणः कालं प्रतीक्षमाणः सन् सन्धिम् अन्विच्छेत् कुर्यादित्यर्थः ॥ २२९ ॥

एक इति। एकः केवलः हितः हितकरः उपहारः उपदा एव एषः सन्धिः मतः। मैत्रवर्जिताः मैत्रं विना इत्यर्थः सर्वे अन्ये अन्ये सन्धिप्रकारा इत्यर्थः उपहारस्य भेदास्तु विशेषा एव ॥ २४० ॥

अभियोक्तेति। अभियोक्ता आक्रमणकारी प्रबलः राजा बली-

उपहाराहृते यस्मात् सन्धिरन्यो न विद्यते ॥ २४१ ॥
शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत् ।
सेवां वापि च स्वीकुर्य्याद्दद्यात् कन्यां भुवं धनम् ॥२४२॥
स्वसामन्तांश्च सन्धीयात् मन्त्रेणान्यजयाय वै ।
सन्धिः कार्य्योऽप्यनार्य्येण सम्प्राप्योत्सादयेद्धि सः ॥२४३॥
सङ्घातवान् यथा वेणुर्निविड़ैः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं वेणुः सङ्घातवांस्तथा ॥ २४४ ॥
सन्धिश्चातिबले युद्धं साम्ये यानन्तु दुर्बले ।
सुहृद्भिराश्रयः स्थानं दुर्गादिभजनं द्विधा ॥ २४५ ॥

---

यस्मात् प्रबलत्वात् अवश्यं उपहारमिति शेषः न निवर्त्तते, यस्मात् उपहारात् ऋते विना अन्यः सन्धिः न विद्यते ॥ २४१ ॥

शत्रोरिति । शत्रोः बलानुसारेण यथा बलमित्यर्थः उपहारं प्रकल्पयेत् तथाहि कुत्रचित् सेवां दासभावं वा स्वीकुर्य्यात् अथवा कन्यां भुवं भूमिं वा धनं दद्यात् ॥ २४२ ॥

स्वेति । नृपः अन्यजयाय अपरशत्रुजयार्थं मन्त्रेण मन्त्रकौशलेन स्वस्य सामन्तान् अधीनस्थनृपान् सन्धीयात् । किञ्च अनार्य्येण दुर्जनेनापि सन्धिः कार्य्यः, हि यतः सः अनार्य्यः सम्प्राप्य सुयोगमितिभावः उत्सादयेत् उत्सन्नं कुर्य्यादित्यर्थः ॥ २४३ ॥

सङ्घातवानिति यथा निविड़ैः घनैः कण्टकैः वृतः सङ्घातवान् समूहात्मकः वेणुः वंशः समुच्छेत्तुं नैव शक्यते तथा सङ्घातवान् नृपश्च समुच्छेत्तुं न शक्यते अतो नृपेण स्वपक्षविरोधो न कर्त्तव्य इति भावः ॥ २४४ ॥

सन्धिरिति । अतिबले अतिप्रबले शत्रौ सन्धिः साम्ये तुल्यबलशालिनि शत्रौ युद्धं दुर्बले शत्रौ यानं युद्धार्थं आक्रमणं, सुहृद्भिः आश्रयः

बलिना सह सन्धाय भये साधारणे यदि।
आत्मानं गोपयेत् काले बह्वमित्रेषु बुद्धिमान् ॥ २४६ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं हि न घनः कदाचिदपि सर्पति ॥ २४७ ॥
बलीयसि प्रणमतां काले विक्रमतामपि।
सम्पदो न विसर्पन्ति प्रतीपमिव निम्नगाः ॥ २४८ ॥
राजा न गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान्।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ २४९ ॥
आपन्नोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा।

---

स्थानं आसनं तथा दुर्गाभिभजनं दुर्गं विभज्य द्विधा सैन्यस्थापनं कर्त्तव्यमिति शेषः ॥ २४५ ॥

बलिनेति। यदि बहुषु अमित्रेषु शत्रुषु सत्सु तथा साधारणे भये सति यः बलिना प्रबलेन सह सन्धाय मिलित्वा काले समये आत्मानं गोपयेत् रक्षेत् सः बुद्धिमान् ॥ २४६ ॥

बलिनेति। बलिना प्रबलेन सह न योद्धव्यं इति अत्र निदर्शनं दृष्टान्तः अस्ति, हि तथाहि घनः मेघः कदाचिदपि प्रतिवातं प्रतिकूलं वायुं अथवा वातं प्रति न सर्पति न गच्छति ॥ २४७ ॥

बलीयसीति। बलीयसि बलवत्तरे प्रणमतां तथा काले समये विक्रमतां जनानां सम्पदः निम्नगाः नद्य इव प्रतीपं प्रतिकूलं न विसर्पन्ति न गच्छन्तीत्यर्थः ॥ २४८ ॥

राजेति। बुद्धिमान् राजा सन्धितोऽपि कृतसन्धिरपि विश्वासं न गच्छेत् हि यस्मात् अवधारणार्थः पुरा पूर्वस्मिन् काले इन्द्रः अद्रोह-समयं परस्परं द्रोहं अनिष्टमित्यर्थः न करोमीत्येवं रूपं समयं नियम-बन्धं कृत्वा वृत्रं अवधीत् ॥ २४९ ॥

देशकालबलोपेतः प्रारभेत च विग्रहम् ॥ २५० ॥
प्रहीनबलमित्रन्तु दुर्गस्थं शत्रुमागतम् ।
अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकम् ।
भिन्नमन्त्रिबलं राजा पीडयेत् परिवेष्टयन् ॥ २५१ ॥
विग्रहः स च विज्ञेयो ह्यन्यश्च कलहः स्मृतः ॥ २५२ ॥
बलीयसात्यल्पबलः शूरेण न च विग्रहम् ।
कुर्य्याद्धि विग्रहे पुंसां सर्वनाशः प्रजायते ॥ २५३ ॥
एकार्थाभिनिवेशित्वं कारणं कलहस्य वा ।
उपायान्तरनाशे तु ततो विग्रहमाचरेत् ॥ २५४ ॥
विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः ।

---

आपन्न इति । परेण पीड्यमानः अतएव आपन्नः आपद्ग्रस्तः नृपः देशकालबलोपेतः स्वबलस्थान बलपरिपुष्टः सन् अभ्युदयाकाङ्क्षी अभ्युदयार्थं विलम्बः विग्रहं युद्धं प्रारभेत च ॥ २५० ॥

प्रहीनेति । राजा प्रहीनबलमित्रं दुर्गस्थं दुर्गतं अत्यन्तविषयासक्तं अतिव्यसनिनं प्रजानां धनापहारकं भिन्नमन्त्रिबलं भिन्नं भेदं गतं मन्त्रिबलं यस्य तादृशं आगतं उपस्थितं शत्रुं परिवेष्टयन् पीडयेत् । हन्यादित्यर्थः ॥ २५१ ॥

विग्रह इति । स च विग्रहः विज्ञेयः, अन्यस्तु तद्व्यतिरिक्तस्तु कलहः स्मृतः ॥ २५२ ॥

बलीयसेति । अत्यल्पबलः राजा बलीयसा शूरेण शत्रुणा सह विग्रहं न च कुर्य्यात् हि यस्मात् तथा सति विग्रहे पुंसां सर्वनाशः प्रजायते ॥ २५३ ॥

एकेति । एकार्थाभिनिवेशित्वं एकद्रव्याभिलाषित्वं कलहस्य कारणं वा हेतुरेव वाशब्दश्चावधारणार्थः । तस्मात् उपायान्तरनाशे गत्यन्तराभावे सति विग्रहं आचरेत् ॥ २५४ ॥

विगृह्येति । निपुणैः विज्ञैः जनैः यानं शत्रुं प्रति गमनं पञ्चविधं

उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् ॥ २५५ ॥
विगृह्य याति हि यदा सर्वाञ्छत्रुगणान् बलात् ।
विगृह्ययानं यानज्ञैस्तदाचार्य्यैः प्रचक्ष्यते ॥ २५६ ॥
अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् ।
विगृह्य चारिभिर्गन्तुं विगृह्यागमनन्तु वा ॥ २५७ ॥
सन्धायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा ।
सन्धायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ २५८ ॥
एको भूपो यदैकत्र सामन्तैः साम्परायिकैः ।
शक्तिशौर्य्ययुतैर्यानं सम्भूयगमनं हि तत् ॥ २५९ ॥
अन्यत्र प्रस्थितः सङ्गादन्यत्रैव च गच्छति ।

---

स्मृतं यथा विगृह्ययानं सन्धाय यानं सम्भूय यानं अथवा प्रसङ्गतः कृतः यानं किंवा उपेक्षया यानञ्च ॥ २५५ ॥

विगृह्येति । यदा बलात् बलमाश्रित्य सर्वान् शत्रुगणान् विगृह्य विग्रहेण पराजित्य याति, तत् यानं यानज्ञैः आचार्य्यैः गुरुभिः विगृह्य यानं प्रचक्ष्यते ॥ २५६ ॥

अरीति । सर्वाणि अरिमित्राणि शत्रोः मित्राणि सर्वतः सर्वैः स्वमित्रैः आत्मबन्धुभिः करणभूतैः बलात् विगृह्य अरिभिः सह गन्तुं विग्रहीतुमित्यर्थः यत् गमनं तत् विगृह्यागमनं वा ॥ २५७ ॥

सन्धायेति । अन्यत्र अन्यस्मिन् शत्रौ यात्रायां युद्धयात्रायां पार्ष्णिग्राहेण पृष्ठानुधाविना शत्रुणा सह सन्धाय मिलित्वा फलार्थिनः जिगीषोः यत् यानं तत् सन्धाय गमनं प्रोक्तम् ॥ २५८ ॥

एक इति । एकः भूपः शक्तिशौर्य्ययुतैः साम्परायिकैः संग्रामनिपुणैः सामन्तैः अधीनस्थराजवर्गैः सह एकत्र एकस्मिन् शत्रौ यत् यानं तत् सम्भूय यानं हि ॥ २५९ ॥

अन्यत्रेति । अन्यत्र प्रस्थितः नृपः सङ्गात् प्रसङ्गात् कथादि-

प्रसङ्गयानं तत् प्रोक्तं यानविद्भिश्च मन्त्रिभिः ॥ २६० ॥
रिपुं यातस्य बलिनः सम्प्राप्य विकृतं फलम् ।
उपेक्ष्य तस्मिन् तद्यानमुपेक्षायानमुच्यते ॥ २६१ ॥
दुर्वृत्तेऽप्यकुलीने तु बलं दातरि रज्यते ।
हृष्टं कृत्वा सौन्यबलं पारितोष्यप्रदानतः ॥ २६२ ॥
नायकः पुरतो यायात् प्रवीरपुरुषावृतः ।
मध्ये कलत्रं कोषश्च स्वामी फल्गु च यद्धनम् ।
ध्वजिनीञ्च सदोद्युक्तः स गोपायेद्दिवानिशम् ॥ २६३ ॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।
सेनापतिस्तत्र तत्र गच्छेद् व्यूहकृतैर्बलैः ॥ २६४ ॥

---

त्वर्थः यत् अन्यत्र गच्छति तत् यानविद्भिः मन्त्रिभिः प्रसङ्ग यानं प्रोक्तम् ॥ २६० ॥

रिपुमिति । रिपुं शत्रुं प्रति यातस्य गतस्य आक्रमतः बलिनः बलवतः अपरस्य विकृतं विपरीतं फलं पराजयरूपमित्यर्थः सम्प्राप्य तस्मिन् उपेक्ष्य यत् यानं गमनं स्वनगर्य्याभिमतिगमनः । निवर्त्तनमितिभावः । तत् उपेक्षायानं उच्यते ॥ २६१ ॥

दुर्वृत्ते इति । नायक इति । दुर्वृत्ते दुराचारेऽपि अकुलीने असद्वंशप्रसूतेऽपि राजनि दातरि दानशीले सति बलं रज्यते अनुरक्तं भवति, तस्मात् पारितोष्यप्रदानतः पुरस्कारदानेन सैन्यबलं हृष्टं सन्तुष्टं कृत्वा नायकः सेनापतिः प्रवीरपुरुषैः आवृतः सन् पुरतः अग्रतः यायात् गच्छेत् मध्ये कलत्रं सैन्यस्य कोषः द्रव्यसमूहः स्वामी प्रभुः यत् फल्गु सारं धनं तत् यायात् । सः नायकः सदोद्युक्तः सदा उद्योगी सन् दिवानिशं ध्वजिनीं गोपायेत् रक्षेत् ॥२६२॥ २६३ ॥

नद्यीति । नदीषु अद्रिषु वनेषु दुर्गेषु दुर्गमस्थानेषु च यत्र यत्र भयं भवेत् सेनापतिः व्यूहकृतैः रचितव्यूहैः बलैः तत्र तत्र गच्छेत् ॥२६४॥

यायाद्व्यूहेन महता मकरेण पुरोभये।
श्येनेनोभयपक्षेण सूच्या वा धीरवक्त्रया ॥ २६५ ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसन्निभम्।
सभयः सर्वतोभद्रं चक्रं व्यालमथापि वा।
यथादेशं कल्पयेद्वा शत्रुसेनाविभेदकम् ॥ २६६ ॥
व्यूहरचनसङ्केतान् वाद्यभाषासमीरितान्।
स्वसैनिकैर्विना कोऽपि न जानीयात् तथाविधान् ॥ २६७ ॥
नियोजयेच्च मतिमान् व्यूहान् नानाविधान् सदा ॥ २६८ ॥
अश्वानाञ्च गजानाञ्च पदातीनां पृथक् पृथक्।
उच्चैः संश्रावयेद् व्यूहसङ्केतान् सैनिकान् नृपः ॥ २६९ ॥

---

यायादिति। पुरः अग्रे भये उपस्थिते सति महता मकरेण व्यूहेन, उभयपक्षेण श्येनेन व्यूहेन वा धीरवक्त्रया धीरमुखया सूच्या व्यूहेन यायात् ॥ २६५ ॥

पश्चादिति। पश्चात् भये सम्भवति शकटं शकटाकारं पार्श्वयोः भये आपतिते वज्रसन्निभं वज्राख्यं सर्वतः भये उपस्थिते सर्वतोभद्रं चक्रं अथवा व्यालं शत्रुसेनाविभेदकं शत्रुबलभञ्जकं व्यूहं यथाप्रदेशं कल्पयेद्वा रचयेदेव ॥ २६६ ॥

व्यूहेति। स्वसैनिकैः विना कोऽपि जनः वाद्यभाषया समीरितान् वाद्यध्वनि विशेषसूचितान् तथाविधान् व्यूहरचनायाः सङ्केतान् न जानीयात् ॥ २६७ ॥

नियोजयेदिति। मतिमान् भूपः नानाविधान् व्यूहान् सदा सर्वस्मिन् समये नियोजयेत् ॥ २६८ ॥

अश्वानामिति। नृपः अश्वानां गजानां पदातीनाञ्च पृथक् पृथक् सैनिकान् व्यूहसङ्केतान् उच्चैः यथा तथा संश्रावयेत् ॥ २६९ ॥

वामदक्षिणसंस्थो वा मध्यस्थो वाग्रसंस्थितः ।
श्रुत्वा तान् सैनिकैः कार्य्यमनुशिष्टं यथा तथा ॥ २७० ॥
सम्मीलनं प्रसरणं परिभ्रमणमेव च ।
आकुञ्चनं तथा यानं प्रयाणमपयानकम् ॥ २७१ ॥
पर्य्यायेण च साम्मुख्यं समुत्थानञ्च लुण्ठनम् ।
संस्थानं चाष्टदलवच्चक्रवद्गोलतुल्यकम् ॥ २७२ ॥
सूचीतुल्यं शकटवदर्द्धचन्द्रसमन्तु वा ।
पृथग्भवनमल्पाल्पैः पर्य्यायैः पङ्क्तिवेशनम् ॥ २७३ ॥
शस्त्रास्त्रयोर्धारणञ्च सन्धानं लक्ष्यभेदनम् ।
मोक्षणञ्च तथास्त्राणां शस्त्राणां परिघातनम् ॥ २७४ ॥
द्राक् सन्धानं पुनः पातो ग्रहो मोक्षः पुनः पुनः ।
स्वगूहनं प्रतीघातः शस्त्रास्त्रपदविक्रमैः ॥ २७५ ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा पङ्क्तितो गमनं ततः ।
तथा प्राग्भवनं चापसरणं तूपसर्जनम् ॥ २७६ ॥

---

वामेति । सैनिकपुरुषः वामदक्षिणसंस्थः वामसंस्थः वा दक्षिणसंस्थः वा मध्यस्थः अथवा अग्रतः स्थितः अस्तु किन्तु तैः तैः सैनिकैः तान् शब्दान् श्रुत्वा यथा अनुशिष्टं कर्त्तुं सङ्केतितं तथा कार्य्यम् ॥२७०॥

व्यूहस्थसैनिककार्य्याण्याह सम्मीलनमित्यादि सम्मीलनं प्रसरणं परिभ्रमणं आकुञ्चनं यानं प्रयाणं अपयानकं पर्य्यायेण साम्मुख्यं समुत्थानं लुण्ठनं अष्टदलवत् संस्थानं चक्रवत् गोलतुल्यकं गोलाकारेण वेष्टनमित्यर्थः सूचीतुल्यं शकटवत् शकटाकारं वा अर्द्धचन्द्रसमं पृथक् विभिन्नं भवनं वर्त्तनम् अल्पाल्पैः पर्य्यायैः पङ्क्तिरूपेणेत्यर्थः पङ्क्तिषु प्रवेशनं शस्त्रास्त्रयोः धारणं सन्धानं लक्ष्यभेदनं अस्त्राणां मोक्षणं निक्षेपः शस्त्राणां परिघातनं शस्त्रैः प्रहरणमित्यर्थः द्राक् झटिति सन्धानं पुनः पुनः पातः पतनं ग्रहः ग्रहणं मोक्षः त्यागः, स्वस्य आत्मनः गूहनं रक्षणं

अपसृत्यास्त्रसिद्ध्यर्थमुपसृत्य विमोचणे।
प्रागभूत्वा मोचयेदस्त्रं व्यूहस्थः सैनिकः सदा ॥ २७७ ॥

आसीनः स्यादुविमुक्तास्त्रः प्राग्वा चापसरेत् पुनः।
प्रागासीनं तूपसृतो दृष्ट्वा स्वास्त्रं विमोचयेत्।
एकैकशो द्विशो वापि सङ्घशो बोधितो यथा ॥ २७८ ॥

क्रौञ्चानां खे गतिर्यादृक् पङ्क्तितः सम्प्रजायते।
तादृक् सञ्चारयेत् क्रौञ्चव्यूहं देशबलं यथा ॥ २७९ ॥

सूक्ष्मग्रीवं मध्यपुच्छं स्थूलपक्षन्तु पङ्क्तितः।
बृहत्पक्षं मध्यगलपुच्छं श्येनं मुखे तनु ॥ २८० ॥

---

यथाशस्त्रपदविक्रमैः यस्त्रैः शस्त्रैः पदविक्रमेण प्रतीघातः, द्वाभ्यां त्रिभिः चतुर्भिर्वा पङ्क्तितः पङ्क्तिक्रमेण गमनम्। तथा प्रागभवनं पुरोवर्त्तित्वं, अपसरणं पुरतः पश्चाद्गमनं तथा उपसर्जनं समीपगमनञ्च ॥ २७१ ॥ ॥ २७२ ॥ २७३ ॥ २७४ ॥ २७५ ॥ २७६ ॥

अपसृत्येति। व्यूहस्थः विन्यस्तबलमध्यवर्त्ती सैनिकः अस्त्रसिद्ध्यर्थं अपसृत्य विमोचणे अस्त्रत्यागे उपसृत्य समीपं गत्वा तथा प्राक् अग्रगो भूत्वा सदा अस्त्रं मोचयेत् ॥ २७७ ॥

आसीन इति। विमुक्तास्त्रः विक्षिप्तास्त्रः सैनिकः आसीनः उपविष्टः स्यात् वा अथवा प्राक् अपसरेत्। पुनश्च उपसृतः सन्निहितः सन् प्राक् आसीनं रिपुं दृष्ट्वा यथा बोधितः सङ्केतितः तथा एकैकशः द्विशः वा सङ्घशः बहुशः स्वस्य आत्मनः अस्त्रं विमोचयेत् विक्षिपेत्॥ १७८ ॥

क्रौञ्चव्यूहमाह। क्रौञ्चानामिति। खे आकाशे क्रौञ्चानां पक्षिणां यादृक् पङ्क्तिशः पङ्क्तिक्रमेण गतिः जायते, देशबलं स्थानीयबलं यथा स्थानीयबलानुसारेण इत्यर्थः क्रौञ्चव्यूहं तादृक् यथा तथा सञ्चारयेत् विन्यसेत् ॥ १७९ ॥

श्येनव्यूहमाह। सूक्ष्मेति सूक्ष्मा ग्रीवा यस्य तत् मध्ये पुच्छं

चतुष्पाद् मकरो दीर्घस्थूलवक्त्रद्विरोष्ठकः ।
सूची सूक्ष्ममुखो दीर्घसमदण्डान्तरन्ध्रयुक् ॥ २८१ ॥
चक्रव्यूहश्चैकमार्गो ह्यष्टधा कुण्डलीकृतः ।
चतुर्दिक्ष्वष्टपरिधिः सर्वतोभद्रसंज्ञकः ॥ २८२ ॥
अमार्गश्चाष्टवलयी गोलकः सर्वतो मुखः ।
शकटः शकटाकारो व्यालो व्यालाकृतिः सदा ॥ २८३ ॥
सैन्यमल्पं वृहद्वापि दृष्ट्वा मार्गं रणस्थलम् ।
व्यूहैर्व्यूहेन व्यूहाभ्यां सङ्करेणापि कल्पयेत् ॥ २८४ ॥

---

यस्य तथोक्तं स्थूलौ विशालौ पक्षौ यस्य तथाभूतं पङ्क्तितश्च दृढतुपच्छं दीर्घपार्श्वं मध्ये गले च पुच्छं यस्य तादृशं तथा मुखे तनु सूक्ष्मं स्वल्पमित्यर्थः श्येनं श्येनव्यूह इत्यर्थः ॥ १८० ॥

मकरसूचीव्यूहावाह चतुष्पादिति । चतुष्पात् चतुश्चरणः चतुर्धा विभक्त इत्यर्थः दीर्घं स्थूलञ्च वक्त्रं मुखं यस्य तादृशः तथा द्विरोष्ठकः ओष्ठद्वयसंयुतः मकरः मकरव्यूहः । सूक्ष्ममुखः तथा दीर्घस्य समस्य च दण्डस्य अन्ते रन्ध्रयुक् छिद्रयुक्तः सूची सूचीव्यूहः ॥ १८१ ॥

चक्रसर्वतोभद्रशकटव्यालव्यूहान् निर्वक्ति चक्रेति । अमार्ग इति । अष्टधा कुण्डलीकृतः वेष्टितः एक एव मार्गः पन्थाः यस्य तथाभूतः व्यूहः चक्रव्यूहः । चतुर्दिक्षु अष्टपरिधिः अष्टधा कुण्डलीकृत इत्यर्थः अमार्गः अपथः अष्टवलयी वेष्टनाष्टकयुतः गोलकः मण्डलाकृतिः सर्वतोमुखः व्यूहः सर्वतोभद्रसंज्ञकः सर्वतोभद्र इति प्रसिद्धः । शकटः शकटस्येव आकारः यस्य सः । व्यालः सदा व्यालस्येव सर्पस्येव आकृतिर्यस्य तथाभूतः ॥ १८२ ॥ १८३ ।

सैन्यमिति । सैन्यं अल्पं वा वृहद् अधिकं दृष्ट्वा व्यूहेन व्यूहाभ्यां वा व्यूहैः सङ्करेणापि व्यूढेन अव्यूढेन च सैन्येन मार्गं रणस्थलञ्च कल्पयेत् ॥ १८४ ॥

यन्त्रास्त्रैः शत्रुसेनाया भेदो येभ्यः प्रजायते ।
स्थलेभ्यस्तेषु सन्तिष्ठेत् ससैन्यो ह्यासनं हि तत् ॥२८५॥
तृणान्नजलसम्भारा ये चान्ये शत्रुपोषकाः ।
सम्यङ्निरुध्य तान् यत्नात् परितश्चिरमासनात् ॥२८६॥
विच्छिन्नविविधासारं प्रक्षीणयवसेन्धनम् ।
विगृह्यमाणप्रकृतिं कालेनैव वशं नयेत् ॥ २८७ ॥
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
सन्धाय यदवस्थानं सन्धायासनमुच्यते ॥ २८८ ॥
उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोद्भवं सत्यमार्य्यमाश्रयेत बलोत्कटम् ॥ २८९ ॥

---

यन्त्रास्त्रैरिति । येभ्यः स्थलेभ्यः यन्त्रास्त्रैः नालिकास्त्रैः शत्रुसेनायाः भेदः प्रजायते सम्भवति, ससैन्यः सन् तेषु स्थलेषु सन्तिष्ठेत् तत् हि तदेव आसनम् ॥ १८५ ॥

तृणेति । विच्छिन्नेति । तृणानि अन्नानि जलानि सम्भाराः प्रयोजनीयद्रव्याणि च ये च अन्ये शत्रुपोषकाः शत्रूणां पोषणकारिणः चिरं दीर्घकालं व्याप्य आसनात् अवस्थानात् परितः सर्वतः यत्नात् तान् शत्रुपोषकान् सम्यक् निरुध्य विच्छिन्नाः विविधाः आसाराः धारासम्पाताः यस्मिन् तं जलविन्दुरहितमित्यर्थः प्रक्षीणानि यवसानि तृणानि इन्धनानि काष्ठानि च यस्मिन् तथोक्तं तथा विगृह्यमाणाः संग्रामव्यासक्ताः प्रकृतयो यस्य तादृशं देशं कालेन वशं नयेत् ॥ १८६ ॥ १८७ ॥

अरेरिति । विग्रहे युद्धे हीयमानयोः अरेः शत्रोः विजिगीषोश्च सन्धाय परस्परं सन्धिं कृत्वा यत् अवस्थानं तत् सन्धायासनं उच्यते ॥ १८८

उच्छिद्यमान इति । बलिना बलवता अरिणा उच्छिद्यमानः अत एव निरुपायप्रतिक्रियः गत्यन्तरहीनः सन् कुलोद्भवं कुलीनं आर्य्यं साधुं बलोत्कटं अतिप्रबलं नृपं आश्रयेत ॥ १८९ ॥

विजिगीषोस्तु साहाय्याः सुहृत्सम्बन्धिबान्धवाः ।
प्रदत्तभृतिका ह्यन्ये भूपा अंशप्रकल्पिताः ।
सेवाश्रयस्तु कथितो दुर्गाणि च महात्मभिः ॥ २९० ॥
अनिश्चितोपायकार्य्यः समयानुचरो नृपः ।
द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितम् ।
प्रदर्शयेदन्यकार्य्यमन्यमालम्बयेच्च वा ॥ २९१ ॥
सदुपायैश्च सम्मन्त्रैः कार्य्यसिद्धिरथोद्यमैः ।
भवेदल्पजनस्यापि किं पुनर्नृपतेर्न हि ॥ २९२ ॥
उद्योगेनैव सिध्यन्ति कार्य्याणि न मनोरथैः ।
न हि सुप्तमृगेन्द्रस्य निपतन्ति गजा मुखे ॥ २९३ ॥

---

विजिगीषोरिति । विजिगीषोः नृपस्य साहाय्याः सहायाः ये सुहृदः सम्बन्धिनः बान्धवाश्च प्रदत्तभृतिकाः दत्तवेतनाः । अन्ये भूपाः साहाय्यकारिण इत्यर्थः अंशप्रकल्पिताः विजय लब्धधनं अंशेन लप्स्यन्तीत्यर्थः आपत्काले महात्मभिः उन्नताशयैः स सहायादिष एव आश्रयः कथितः तथा दुर्गाणि च आश्रयस्थानानि आपत्सु इत्यर्थः ॥ २९० ॥

अनिश्चितेति । अनिश्चितं उपायस्य कार्य्यं यस्य सः अतएव समयानुचरः समयं प्रतीक्षमाणः नृपः काकाक्षिवत् काकस्य नेत्रमिव अलक्षितं अन्यैरतर्कितं यथा तथा द्वैधीभावेन वर्त्तेत, काकस्य एकमेव नेत्रं उभयनेत्र कार्य्यकारकं किन्तु केनापि न लक्ष्यते तद्वदिति भावः । तथा च कदाचित् अन्यकार्य्यं प्रदर्शयेत् कदाचित्तु वा अन्यं आलम्बयेच्च ॥ २९१ ॥

सदुपायैरिति । अल्पजनस्य इतरस्यापि सदुपायैः सन्मन्त्रैः उत्कृष्टमन्त्रणैः अथवा उद्यमैः चेष्टाभिः कार्य्यसिद्धिः भवेत् । नृपतेः पुनः किं न हि कार्य्यसिद्धिर्भवेत् अपितु भवेदेवेत्यर्थः ॥ २९२ ॥

उद्योगेनेति । उद्योगेन चेष्टया एव कार्य्याणि सिध्यन्ति, मनोरथैः न, हि तथाहि गजाः सुप्तस्य सिंहस्य मुखे न हि निपतन्ति ॥ २९३ ॥

अयोऽभेद्यमुपायेन द्रवतामुपनीयते ।
लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ॥ २९४ ॥
उपायोपगृहीतेन तेनैतत् परिशोष्यते ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनाम् ॥ २९५ ॥
उपायेषूत्तमो भेदः षड्गुणेषु समाश्रयः ।
कार्य्यौ द्वौ सर्वदा तौ तु नृपेण विजिगीषुणा ॥ २९६ ॥
ताभ्यां विना नैव कुर्य्यात् युद्धं राजा कदाचन ॥ २९७ ॥
परस्परं प्रातिकूल्यं रिपुसेनपमन्त्रिणाम् ।
भवेद्यथा तथा कुर्य्यात् तत्प्रजायाश्च तत् स्त्रियाः ॥ २९८ ॥
उपायान् षड्गुणान् वीक्ष्य शत्रोः स्वस्यापि सर्वदा ।
युद्धं प्राणात्यये कुर्य्यात् सर्वस्वहरणे सति ॥ २९९ ॥

---

अय इति। अभेद्यं अयः लौहं उपायेन द्रवतां उपनीयते प्राप्यते, एतच्च लोक प्रसिद्धं यत् वारि जलं वह्नेः नियामकं निवारकम् ॥ २९४ ॥

उपायोपगृहीते.नेति। उपायोपगृहीतेन तेन वह्निना च एतत् वारि परिशोष्यते परिशोषं नीयते। उपायेन मत्तानां हस्तिनां मूर्ध्नि पदं न्यस्यते ॥ २९५ ॥

उपायेष्विति। उपायेषु सामादिषु मध्ये भेदः तथा षड्गुणेषु मध्ये समाश्रयः उत्तमः श्रेष्ठः। विजिगीषुणा नृपेण तौ द्वौ भेदसमाश्रयौ तु सर्वदा कार्य्यौ ॥ २९६ ॥

ताभ्यामिति। राजा ताभ्यां भेदसमाश्रयाभ्यां विना युद्धं कदाचन नैव कुर्य्यात् ॥ २९७ ॥

परस्परमिति। रिपूणां ये सेनपाः सेनापतयः मन्त्रिणश्च तेषां तथा तेषां प्रजायाश्च तथा तेषां स्त्रियाश्च यथा परस्परं प्रातिकूल्यं मनोभङ्गः भवेत् तथा कुर्य्यात् ॥ २९८

उपायानिति। शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन्

स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः ।
प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः ॥ ३०० ॥
युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशम् ॥ ३०१ ॥
समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्त्तेत संग्रामात् क्षात्रधर्ममनुस्मरन् ॥ ३०२ ॥
राजानञ्चाविमोक्तारं ब्राह्मणञ्चाप्रवासिनम् ।
भूमिरेतौ निगिलति सर्पो बिलशयानिव ॥ ३०३ ॥
ब्राह्मणस्यापि चापत्तौ क्षत्रधर्मेण वर्त्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसम्भवम् ॥ ३०४ ॥

---

तथा षट् गुणान् सन्ध्यादीन् सर्वदा वीक्ष्य प्राणात्यये तथा सर्वस्वहरणे आपतिते सति युद्धं कुर्य्यात् । २९९ ।

स्त्रीति । स्त्रीणां विप्राणाञ्च अभ्युपपत्तौ अनुग्रहार्थं तथा ब्राह्मणैः सह गोविनाशे गोब्राह्मणविनाशे इत्यर्थः उपस्थिते इत्यर्थः प्राप्ते युद्धे आपतिते संग्रामे क्वचित् कदाचित् पराङ्मुखः नैव भवेत् ॥ ३०० ॥

युद्धमिति । यः युद्धं उत्सृज्य याति पलायते, सः देवैः भृशं अत्यर्थं हन्यते । ३०१ ।

समेति । प्रजाः पालयन् राजा समैः समानैः उत्तमैः उत्कृष्टैः वा अधमैः शत्रुभिः आहूतः सन् क्षात्रधर्मं अनुस्मरन् सङ्ग्रामात् न निवर्त्तेत ॥ ३०२

राजानमिति । सर्पः बिलशयान् गर्त्तशयानानिव भूमिः अवि-मोक्तारं युद्धविमुखं राजानं अप्रवासिनं ब्राह्मणञ्च एतौ निगिलति नाशयतीत्यर्थः ॥ ३०३ ॥

ब्राह्मणस्येति । आपत्तौ आपदि स्ववृत्त्यनुपपत्तौ इत्यर्थः क्षत्रधर्मेण क्षत्रियवृत्तिमाश्रित्य इत्यर्थः वर्त्ततः जीवतः ब्राह्मणस्यापि जीवितं

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥ २०५ ॥
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥ २०६ ॥
न गेहे मरणं शस्तं क्षत्रियाणां विना रणात् ।
शौण्डीराणामशौण्डीरमधर्मं कृपणं हि तत् ॥ २०७ ॥
रणेष्व कदनं कृत्वा ज्ञातिभिः परिवारितः ।
शस्त्रास्त्रैः सुविनिर्भिन्नः क्षत्रियो वधमर्हति ॥ २०८ ॥
आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ २०९ ॥

---

लोके प्रशस्तं हि यतः अतं ब्रह्मस्व ब्रह्मोतपत्रं अतः ब्राह्मणस्य तत् कर्मकरणं न विरुद्धमिति भावः ॥ २०४ ॥

अधर्म इति । अविक्षतेनेति । शय्यायां मरणं मरणं भवेत् इति यत् एषः क्षत्रियस्य अधर्मः । यः क्षत्रियः श्लेष्म पित्तानि श्लेष्माणि पित्तानि च विसृजन् त्यजन् तथा कृपणं परिदेवयन् विलपन् सन् अविक्षतेन देहेन प्रलयं नाशं गच्छति, पुराविदः इतिहासज्ञाः पण्डिताः अस्य क्षत्रियस्य तत् कर्म शय्यामरणरूपं न प्रशंसन्ति ॥ २०५ ॥ २०६ ॥

नेति । रणात् विना गृहे मरणं न शस्तं न प्रशस्तम् । हि यतः शौण्डीराणां गर्वशालिनां क्षत्रियाणां तत् कृपणं दीनं आचरणं अशौण्डीरं गर्वक्षयकरं अधर्मं पापकरञ्च ॥ २०७ ॥

रणेष्विति । क्षत्रियः ज्ञातिभिः स्वगणैः परिवारितः सन् रणेषु संग्रामेषु अकदनं शत्रोर्दमनं कृत्वा शस्त्रास्त्रैः सुविनिर्भिन्नः सुवि- क्षतः सन् वधं अर्हति ॥ २०८ ॥

आहवेष्विति । आहवेषु युद्धेषु मिथः एकान्ते अन्योऽन्यं

भर्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न विनिवर्त्तेत तस्य स्वर्गो ह्यनन्तकः ॥ २१० ॥
आहवे निहतं शूरं न शोचेत कदाचन ।
निर्मुक्तः सर्वपापेभ्यः पूतो याति सलोकताम् ॥ २११ ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
त्वरमाणाः प्रधावन्ति मम भर्त्ता भवेदिति ॥ २१२ ॥
मुनिभिर्दीर्घतपसा प्राप्यते यत् पदं महत् ।
युद्धाभिमुखनिहतैः शूरैस्तद्द्रागवाप्यते ॥ २१३ ॥
एतत्तपश्च पुण्यञ्च धर्मश्चैव सनातनः ।
चत्वार आश्रमास्तस्य यो युद्धे न पलायते ॥ २१४ ॥

---

परस्परं जिघांसन्तः हन्तुमिच्छन्तः परम् अत्यर्थं शक्त्या युध्यमानाः अपराङ्मुखाः अविहताः स्वर्गं यान्ति ॥ २०९ ॥

भर्त्तुरिति । यः शूरः वीरः भर्त्तुः स्वामिनः अर्थे निमित्तं वाहिनीमुखे सेनानामग्रे विक्रमेत् भयात् न निवर्त्तेत च, तस्य अनन्तकः अक्षयः स्वर्गः हिशब्दश्चावधारणार्थकः ॥ २१० ॥

आहवे इति । आहवे युद्धे निहतं शूरं कदाचन न शोचेत, यतः सः सर्वपापेभ्यः निर्मुक्तः रणकर्मणेतिभावः अतएव पूतःसन् सलोकतां पुण्यवतां लोकमित्यर्थः याति प्राप्नोति ॥ २११ ॥

वरेति । वराणां श्रेष्ठानां अप्सरसां सहस्राणि त्वरमाणाः सत्वराः सत्यः आयोधने युद्धे हतं शूरं अयं मम भर्त्ता भवेदिति प्रधावन्ति ॥ २१२ ॥

मुनिभिरिति । मुनिभिः दीर्घेण महता तपसा यत् महत् पदं प्राप्यते, तत् युद्धाभिमुखनिहतैः युद्धे अभिमुखं यथा तथा निहतैः शूरैः द्राक् झटिति अवाप्यते प्राप्यते ॥ २१३ ॥

एतदिति । यः युद्धे न पलायते, तस्य एतत् युद्धादपलायनमित्यर्थः

न हि शौर्य्यात् परं किञ्चित् त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति शूरे सर्वं प्रतिष्ठितम् ॥ २१५ ॥
चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥ २१६ ॥
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तो यो रणे चाभिमुखं हतः ॥ २१७ ॥
आत्मानं गोपयेच्छक्तो वधेनाप्याततायिनः ।
सुविद्यब्राह्मणगुरोर्युद्धे श्रुतिनिदर्शनात् ॥ २१८ ॥

---

तपः तपश्चरणं पुण्यं सनातनः नित्यः धर्मः तथा चत्वारः आश्रमाः आतुराश्रयजनितधर्मानुष्ठान मित्यर्थः ॥ २१४ ॥

नेति । त्रिषु लोकेषु शौर्य्यात् परं किञ्चित् न हि विद्यते, यतः शूरः सर्वं जनं पालयति, शूरे च सर्वं प्रतिष्ठितम् ॥ २१५ ॥

चराणामिति । चराणां गोमनुष्यादीनां अचराः व्रीहियवादयः अन्नं दंष्ट्रिणां व्याघ्रादीनां अदंष्ट्राः गवादयः अन्नं पाणिमतां हस्तवतां अपाणयः पाणिरहिताः अन्नं तथा शूरस्य वीरस्य कातराः दुर्बलाः अन्नम् ॥ २१६ ॥

द्वाविति । यः योगयुक्तः योगी परिव्राट् चतुर्थाश्रमी यश्च रणे अभिमुखं हतः, इमौ द्वौ पुरुषौ लोके जगति सूर्य्यमण्डलभेदिनौ भवतः सूर्य्यलोकादपि उत्कृष्टं लोकं प्राप्नुत इत्यर्थः ॥ २१७ ॥

आत्मानमिति । श्रुतिनिदर्शनात् वेदवचनात् शक्तः शक्तिमान् जनः युद्धे आततायिनः वधोद्यतस्य आततायी वधोद्यत इत्यमरः । सुविद्यस्य ब्राह्मणस्य गुरोरपि वधेन आत्मानं गोपयेत् रक्षेत् उक्तञ्च मनुना गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतं आततायिन मायान्तं हन्यादेवाविचारयन् । इति । आततायिनश्च उक्ताः यथा अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिन इति ॥२१८

अपसरति यो युद्धाज्जीवितार्थी नराधमः ।
जीवन्नेव मृतः सोऽपि भुङ्क्ते राष्ट्रकृतं त्वघम् ॥ २२८ ॥
मित्रं वा स्वामिनं त्यक्त्वा निर्गच्छति रणाच्च यः ।
सोऽन्ते नरकमाप्नोति सजीवो निन्द्यतेऽखिलैः ॥ २२९ ॥
मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः ।
अकीर्त्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥ २३० ॥
विश्रम्भाच्छरणं प्राप्तं यः समुत्सृजति दुर्मतिः ।
स याति नरके घोरे यावदिन्द्राश्चतुर्दश ॥ २३१ ॥
सुदुर्वृत्तं यदा क्षत्रं नाशयेयुस्तु ब्राह्मणाः ।
युद्धं कृत्वापि शस्त्रास्त्रैर्न तदा पापभाजिनः ॥ २३२ ॥

---

अपसरतीति । यः नराधमः जीवितार्थी सन् युद्धात् अपसरति सः जीवन्नेव मृतः सन् राष्ट्रे राज्ये कृतं अघं पापं भुङ्क्ते ॥ २२८ ॥

मित्रमिति । यः मित्रं वा स्वामिनं त्यक्त्वा रणात् निर्गच्छति पलायते, सः अन्ते देहावसाने नरकं आप्नोति, सजीवः जीवन् अखिलैः सकलैः लोकैः निन्द्यते च ॥ २२९ ॥

मित्रमिति । यः मित्रं आपद्गतं विपन्नं दृष्ट्वा सहायं साहाय्यं न करोति, स अत्र इहलोके अकीर्त्तिं लभते, मृतश्च नरकं आप्नोति ॥ २३० ॥

विश्रम्भादिति । यः दुर्मतिः विश्रम्भात् विश्वासात् शरणं प्राप्तं जनं समुत्सृजति सः यावत् चतुर्दश इन्द्राः तिष्ठन्तीति शेषः तावत् कालमित्यर्थः घोरे नरके याति गच्छति ॥ २३१ ॥

सुदुर्वृत्तमिति । यदा तु ब्राह्मणाः शस्त्रास्त्रैः युद्धं कृत्वा सुदुर्वृत्तं अतिदुराचारं क्षत्रं क्षत्रियं नाशयेयुः तदा ते पापभाजिनः न भवन्तीत्यर्थः ॥ २३२ ॥

हीनं यदा स्वबलं नीचैर्लोकैः प्रपीड्यते ।
तदापि ब्राह्मणा युद्धे नाश्रयेयुस्तु तान् द्रुतम् ॥ २२२ ॥
उत्तमं मान्त्रिकास्त्रेण नालिकास्त्रेण मध्यमम् ।
शस्त्रैः कनिष्ठं युद्धन्तु बाहुयुद्धं ततोऽधमम् ॥ २२४ ॥
मन्त्रेरितमहाशक्तिबाणाद्यैः शत्रुनाशनम् ।
मान्त्रिकास्त्रेण तद्युद्धं सर्वयुद्धोत्तमं स्मृतम् ॥ २२५ ॥
नालाग्निचूर्णसंयोगाल्लक्ष्ये गोलनिपातनम् ।
नालिकास्त्रेण तद्युद्धं महाह्रासकरं रिपोः ॥ २२६ ॥
कुन्तादिशस्त्रसङ्घातैर्नाशनं रिपुणाञ्च यत् ।
शस्त्रयुद्धन्तु तज्ज्ञेयं नालास्त्राभावतः सदा ॥ २२७ ॥

---

हीनमिति । यदाहु हीनं स्वबलं नीचैः अधमैः लोकैः प्रपीड्यते अभिभूयते, तदापि ब्राह्मणाः युद्धे तान् नीचान् लोकान् द्रुतं शीघ्रं नाश्रयेयुः ॥ २२२ ॥

उत्तममिति । मान्त्रिकास्त्रेण मन्त्रविशेषेण अस्त्रेण युद्धं उत्तमं नालिकास्त्रेण मध्यमं शस्त्रैः कनिष्ठं अधमं बाहुयुद्धन्तु ततः अधमादपि अधमम् ॥ २२४ ॥

मन्त्रयुद्धमाह मन्त्रेति । मन्त्रेण ईरितैः महाशक्ति बाणाद्यैः यत् शत्रूणां नाशनं तत् मान्त्रिकास्त्रेण युद्धं तत्र सर्वेषु युद्धेषु उत्तमं श्रेष्ठं स्मृतम् ॥ २२५ ॥

नालयुद्धमाह । नालेति । नालेन अग्निचूर्णसंयोगात् लक्ष्ये लक्ष्यीये शत्रौ यत् गोलनिपातनं गोलाकारस्य वस्तुनः इषिकायाः निक्षेपणं तत् नालिकास्त्रेण युद्धं तत्र रिपोः शत्रोः महाह्रासकरं अतिशयक्षयकारि भवतीत्यर्थः ॥ २२६ ॥

शस्त्रयुद्धमाह कुन्तेति । कुन्तादीनां शस्त्राणां सङ्घातैः समूहैः

कर्षणैः सन्धिमर्माणां प्रतिलोमानुलोमतः ।
बन्धनैर्घातनं शत्रोर्युक्त्या तद्‌ बाहुयुद्धकम्‌ ॥ ३३८ ॥
वामपार्श्वकपोत्पीडा भूमौ निक्षेपणं बलात्‌ ।
मूर्ध्नि पादप्रहरणं जानुनोदरपीडनम्‌ ॥ ३३९ ॥
मालूराकारया मुष्ट्या कपोले दृढताडनम्‌ ।
कफोणिपातोऽप्यसकृत्‌ सर्वतस्तलताडनम्‌ ।
आवेन युद्धे भ्रमणं नियुद्धं स्मृतमष्टधा ॥ ३४० ॥
चतुर्भिः क्षत्रियं हन्यात्‌ पञ्चभिः क्षत्रियाधमम्‌ ।

---

तत्‌ रिपुणां रिपूणामित्यर्थः ( दीर्घाभाव आर्षः ) मारणं तत्‌ मल्लयुद्धं यदा मायास्त्राणां अभावात्‌ शेषं मायास्त्राद्यभावे हस्तैव योद्धव्यमिति भावः ॥ ३३७ ॥

बाहुयुद्धमाह कर्षणैरिति । युक्त्या कौशलेन शत्रोः सन्धिमर्माणां सन्धीनां शरीरग्रन्थीनां मर्माणाञ्च कर्षणैः प्रपीडनैः प्रतिलोमानुलोमतः प्रतिलोमेन अस्वाभाविकरीत्या अनुलोमतः स्वाभावमत्या च तथा बन्धनैः बाहुभिरितिशेषः यत्‌ घातनं मारणं तत्‌ बाहुयुद्धकम्‌ ॥ ३३८ ॥

नियुद्धं निरूपयति वामेत्यादि। नियुद्धं अष्टधा अष्टप्रकारंस्मृतम्‌ । यथा वामपार्श्वेन वामभागेन कक्षायां वैरिणां उत्पीडा उत्पीडनं अवस्थितमिति शेषः १ बलात्‌ भूमौ निक्षेपणं द्वन्द्वं २ मूर्ध्नि शिरसि पाद प्रहरणं पदाघातः ३ जानुना उदरपीडनं ४ मालूरः श्रीफलं तस्येव आकारः यस्याः तादृश्या मुष्ट्या कपोले गण्डे दृढताडनं कठिन प्रहारः ५ असकृत्‌ पुनः पुनः कफोण्योः कूर्परयोः पातः भूतले बलात्‌ पातनं ६ सर्वतः सर्वैः प्रकारैः तलेन चपेटेन ताडनं प्रहारः ७ तथा आवेन आपत्क्षेण शत्रूणां रक्ष्यार्थितयेति शेषः युद्धे भ्रमणम्‌ ८ ॥३३९॥३४०॥

चतुर्भिरिति । चतुर्भिः नियुद्धप्रकारैरिति शेषः शेषः क्षत्रियं

षड्भिर्वैश्यं सप्तभिस्तु शूद्रं सङ्करमष्टभिः ।
अष्टस्वेतानि युञ्जीत न मित्रेषु कदाचन ॥ २४१ ॥
नानास्त्राणि पुरस्कृत्य लघूनि च महान्ति च ।
तत् पृष्ठगांश्च पादातान् गजाश्वान् पार्श्वयोः स्थितान् ।
कृत्वा युद्धं प्रारभेत भिन्नामात्यबलारिणा ॥ २४२ ॥
साम्मुख्येन प्रपातेन पार्श्वाभ्यामपयानतः ।
युद्धानुकूलभूमेस्तु यावल्लाभस्तथाविधम् ।
सैन्यार्द्धांशेन प्रथमं सेनपैर्युद्धमीरितम् ॥ २४३ ॥
अमात्यगोपितैः पश्चादमात्यैः सह तद्भवेत् ।
नृपसङ्गोपितैः पश्चात् स्वतः प्राणात्यये च तत् ॥ २४४ ॥

---

पञ्चभिः क्षत्रियाधमं अधमक्षत्रियं, षड्भिः वैश्यं सप्तभिः शूद्रं अष्टाभिस्तु सङ्करं सङ्कीर्णजातिं अम्बष्ठादिकं हन्यात् । एतानि अष्टविधानि नियुद्धानि शत्रुषु युञ्जीत प्रयुञ्ज्यात् मित्रेषु कदाचन न ॥ २४१ ॥

नानास्त्राणीति । लघूनि च महान्ति च नानास्त्राणि पूर्वोक्तानि पुरस्कृत्य अग्रे कृत्य पादातान् पदातिवर्गान् तत् पृष्ठगान् तेषां नानास्त्राणां पृष्ठगामिनः तथा गजाश्वान् गजबलानि अश्वबलानि च पार्श्वयोः स्थितान् कृत्वा भिन्नानि, भेदं गतानि अमात्या बलानि च यस्य तादृशेन अरिणा शत्रुणा सह युद्धं प्रारभेत ॥ २४२ ॥

साम्मुख्येनेति । युद्धानुकूलभूमेः संग्रामोपयोगिस्थानस्य यावल्लाभः यादृशः लाभः, तथाविधं तादृशं तथा यथा साम्मुख्येन पार्श्वाभ्यां वा प्रपातेन अपयानतः अपसरणेन च सेनपैः सेनापतिभिः सैन्यानां अर्द्धांशेन सह प्रथमं युद्धं ईरितं कथितम् ॥ २४३ ॥

अमात्यगोपितैरिति । पश्चात् अमात्यैः गोपितैः रक्षितैः सैन्यैः अमात्यैः मन्त्रिभिः सह तत् युद्धं भवेत् । पश्चात् अमात्यनाशे

स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः ।
प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः ॥ ३०० ॥
युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशम् ॥ ३०१ ॥
समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्त्तेत सङ्ग्रामात् क्षात्रधर्ममनुस्मरन् ॥ ३०२ ॥
राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनम् ।
भूमिरेतौ निगिरति सर्पो बिलशयानिव ॥ ३०३ ॥
ब्राह्मणस्यापि चापत्तौ क्षत्रधर्मेण वर्त्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसम्भवम् ॥ ३०४ ॥

---

तथा षट् गुणान् सन्ध्यादीन् सर्वदा वीक्ष्य प्राणात्यये तथा सर्वस्वहरणे आपतिते सति युद्धं कुर्यात् । २९९ ।

स्त्रीति । स्त्रीणां विप्राणाञ्च अभ्युपपत्तौ अनुग्रहार्थं तथा ब्राह्मणैः सह गोविनाशे गोब्राह्मणविनाशे इत्यर्थः उपस्थिते इत्यर्थः प्राप्ते युद्धे आपतिते संग्रामे क्वचित् कदाचित् पराङ्मुखः नैव भवेत् ॥ ३०० ॥

युद्धमिति । यः युद्धं उत्सृज्य याति पलायते, सः देवैः भृशं अत्यर्थं हन्यते । ३०१ ।

समेति । प्रजाः पालयन् राजा समैः समानैः उत्तमैः उत्कृष्टैः वा अधमैः शत्रुभिः आहूतः सन् क्षत्रधर्मं अनुस्मरन् सङ्ग्रामात् न निवर्त्तेत ॥ ३०२

राजानमिति । सर्पः बिलशयान् गर्त्तशयानानिव भूमिः अविरोद्धारं युद्धविमुखं राजानं अप्रवासिनं ब्राह्मणञ्च एतौ निगिरति नाशयतीत्यर्थः ॥ ३०३ ।।

ब्राह्मणस्येति । आपत्तौ आपदि खल्वत्यनुपपत्तौ इत्यर्थः क्षत्रधर्मेण वर्त्तितम् [illegible] इत्यर्थः वर्त्तनः जीवतः ब्राह्मणस्यापि जीवितं

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥ २०५ ॥
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥ २०६ ॥
न गेहे मरणं शस्तं क्षत्रियाणां विना रणात् ।
शौण्डीराणामशौण्डीरमधर्मं कृपणं हि तत् ॥ २०७ ॥
रणेष्व कदनं कृत्वा ज्ञातिभिः परिवारितः ।
शस्त्रास्त्रैः सुविनिर्भिन्नः क्षत्रियो बधमर्हति ॥ २०८ ॥
आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः ।
युद्ध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ २०९ ॥

---

लोके प्रशस्तं हि यतः अत्र ब्रह्मबध्यं अश्नोतयं अतः ब्राह्मणस्य तत् कर्मकरणं न विरुद्धमिति भावः ॥ २०४ ॥

अधर्म इति । अविक्षतेनेति । शय्यायां मरणं मरणं भवेत् इति यत् एषः क्षत्रियस्य अधर्मः । यः क्षत्रियः श्लेष्म पित्तानि श्लेष्माणि पित्तानि च विसृजन् त्यजन् तथा कृपणं परिदेवयन् विलपन् सन् अविक्षतेन देहेन प्रलयं नाशं गच्छति, पुराविदः इतिहासज्ञाः पण्डिताः अस्य क्षत्रियस्य तत् कर्म शय्यामरणरूपं न प्रशंसन्ति ॥ २०५ ॥ २०६ ॥

नेति । रणात् विना गेहे मरणं न शस्तं न प्रशस्तम् । हि यतः शौण्डीराणां गर्वशालिनां क्षत्रियाणां तत् कृपणं दीनं आचरणं अशौण्डीरं गर्वक्षयकरं अधर्मं पापकरञ्च ॥ २०७ ॥

रणेष्विति । क्षत्रियः ज्ञातिभिः स्वगणैः परिवारितः सन् रणेषु संग्रामेषु अकदनं शत्रोरदवनं कृत्वा शस्त्रास्त्रैः सुविनिर्भिन्नः सुविक्षतः सन् बधं अर्हति ॥ २०८ ॥

आहवेष्विति । आहवेषु युद्धेषु मिथः एकान्ते अन्योऽन्यं

भर्त्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न विनिवर्त्तेत तस्य स्वर्गो ह्यनन्तकः ॥ २१० ॥
आहवे निहतं शूरं न शोचेत कदाचन ।
निर्मुक्तः सर्वपापेभ्यः पूतो याति सलोकताम् ॥ २११ ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
त्वरमाणाः प्रधावन्ति मम भर्त्ता भवेदिति ॥ २१२ ॥
मुनिभिर्दीर्घतपसा प्राप्यते यत् पदं महत् ।
युद्धाभिमुखनिहतैः शूरैस्तद् द्रागवाप्यते ॥ २१३ ॥
एतत्तपश्च पुण्यञ्च धर्मश्चैव सनातनः ।
चत्वार आश्रमास्तस्य यो युद्धे न पलायते ॥ २१४ ॥

---

परस्परं जिघांसन्तः हन्तुमिच्छन्तः परम् अत्यर्थं शक्त्या युध्यमानाः अपराङ्मुखाः अनिवृत्ताः स्वर्गं यान्ति ॥ २०९ ॥

भर्त्तुरिति । यः शूरः वीरः भर्त्तुः स्वामिनः अर्थे निमित्तं वाहिनीमुखे सेनासम्मुखे विक्रमेत् भयात् न निवर्त्तेत च, तस्य अनन्तकः अक्षयः स्वर्गः हिशब्दश्चावधारणार्थकः ॥ २१० ॥

आहवे इति । आहवे युद्धे निहतं शूरं कदाचन न शोचेत, यतः सः सर्वपापेभ्यः निर्मुक्तः इत्यकर्मणेतिभावः अतएव पूतःसन् सलोकतां पुण्यवतां लोकमित्यर्थः याति प्राप्नोति ॥ २११ ॥

वरेति । वराणां श्रेष्ठानां अप्सरसां सहस्राणि त्वरमाणाः सत्वराः सत्यः आयोधने युद्धे हतं शूरं अयं मम भर्त्ता भवेदिति प्रधावन्ति ॥ २१२ ॥

मुनिभिरिति । मुनिभिः दीर्घेण महता तपसा यत् महत् पदं प्राप्यते, तत् युद्धाभिमुखनिहतैः युद्धे अभिमुखं यथा तथा निहतैः शूरैः द्राक् झटिति अवाप्यते प्राप्यते ॥ २१३ ॥

एतदिति । यः युद्धे न पलायते, तस्य एतत् युद्धादपलायनमित्यर्थः

न हि शौर्य्यात् परं किञ्चित् त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति शूरे सर्वं प्रतिष्ठितम् ॥ २१५ ॥
चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥ २१६ ॥
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तो यो रणे चाभिमुखं हतः ॥ २१७ ॥
आत्मानं गोपयेच्छक्तो वधेनाप्याततायिनः ।
सुविद्यब्राह्मणगुरोर्युद्धे श्रुतिनिदर्शनात् ॥ २१८ ॥

---

तपः तपश्चरणं पुण्यं सनातनः नित्यः धर्मः तथा चत्वारः आश्रमाः आतुराश्रयजनितधर्मानुष्ठान मित्यर्थः ॥ २१४ ॥

नेति । त्रिषु लोकेषु शौर्य्यात् परं किञ्चित् न हि विद्यते, यतः शूरः सर्वं जनं पालयति, शूरे च सर्वं प्रतिष्ठितम् ॥ २१५ ॥

चराणामिति । चराणां गोमनुष्यादीनां अचराः व्रीहियवादयः अन्नं दंष्ट्रिणां व्याघ्रादीनां अदंष्ट्राः गवादयः अन्नं पाणिमतां हस्तवतां अपाणयः पाणिरहिताः अन्नं तथा शूरस्य वीरस्य कातराः दुर्बलाः अन्नम् ॥ २१६ ॥

द्वाविति । यः योगयुक्तः योगी परिव्राट् चतुर्थाश्रमी यश्च रणे अभिमुखं हतः, इमौ द्वौ पुरुषौ लोके जगति सूर्य्यमण्डलभेदिनौ भवतः सूर्य्यलोकादपि उत्कृष्टं लोकं प्राप्नुत इत्यर्थः ॥ २१७ ॥

आत्मानमिति । श्रुतिनिदर्शनात् वेदवचनात् शक्तः सामर्थ्यवान् जनः युद्धे आततायिनः वधोद्यतस्य आततायी वधोद्यत इत्यमरः । सुविद्यस्य ब्राह्मणस्य गुरोरपि वधेन आत्मानं गोपयेत् रक्षेत् उक्तञ्च मनुना गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतं आततायिनमायान्तं हन्यादेवाविचारयन् । इति । आततायिनश्च उक्ताः यथा अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिन इति ॥२१८

अपसरति यो युद्धाज्जीवितार्थी नराधमः ।
जीवन्नेव मृतः सोऽपि भुङ्क्ते राष्ट्रकृतं त्वघम् ॥ २२८ ॥
मित्रं वा स्वामिनं त्यक्त्वा निर्गच्छति रणाच्च यः ।
सोऽन्ते नरकमाप्नोति सजीवो निन्द्यतेऽखिलैः ॥ २२९ ॥
मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः ।
अकीर्त्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥ २३० ॥
विश्रम्भाच्छरणं प्राप्तं यः सन्त्यजति दुर्मतिः ।
स याति नरके घोरे यावदिन्द्राश्चतुर्दश ॥ २३१ ॥
सुदुर्वृत्तं यदा क्षत्रं नाशयेयुस्तु ब्राह्मणाः ।
युद्धं कृत्वापि शस्त्रास्त्रैर्न तदा पापभागिनः ॥ २३२ ॥

---

अपसरतीति । यः नराधमः जीवितार्थी सन् युद्धात् अपसरति सः जीवन्नेव मृतः सन् राष्ट्रे राज्ये कृतं अघं पापं भुङ्क्ते ॥ २२८ ॥

मित्रमिति । यः मित्रं वा स्वामिनं त्यक्त्वा रणात् निर्गच्छति पलायते, सः अन्ते देहावसाने नरकं आप्नोति, सजीवः जीवन् अखिलैः सकलैः लोकैः निन्द्यते च ॥ २२९ ॥

मित्रमिति । यः मित्रं आपद्गतं विपन्नं दृष्ट्वा सहायं साहाय्यं न करोति, सः अत्र इहलोके अकीर्त्तिं लभते, मृतश्च नरकं आप्नोति ॥ २३० ॥

विश्रम्भादिति । यः दुर्मतिः विश्रम्भात् विश्वासात् शरणं प्राप्तं जनं सन्त्यजति सः यावत् चतुर्दश इन्द्राः तिष्ठन्ति इति शेषः तावत् कालमित्यर्थः घोरे नरके याति गच्छति ॥ २३१ ॥

सुदुर्वृत्तमिति । यदा तु ब्राह्मणाः शस्त्रास्त्रैः युद्धं कृत्वा सुदुर्वृत्तं अतिदुराचारं क्षत्रं क्षत्रियं नाशयेयुः तदा ते पापभागिनः न भवन्तीत्यर्थः ॥ २३२ ॥

हीनं यदा क्षत्रकुलं नीचैर्लोकैः प्रपीड्यते ।
तदापि ब्राह्मणा युद्धे नाशयेयुस्तु तान् द्रुतम् ॥ २२३ ॥
उत्तमं मान्त्रिकास्त्रेण नालिकास्त्रेण मध्यमम् ।
शस्त्रैः कनिष्ठं युद्धन्तु बाहुयुद्धं ततोऽधमम् ॥ २२४ ॥
मन्त्रेरितमहाशक्तिबाणाद्यैः शत्रुनाशनम् ।
मान्त्रिकास्त्रेण तद्युद्धं सर्वयुद्धोत्तमं स्मृतम् ॥ २२५ ॥
नालाग्निचूर्णसंयोगाल्लक्ष्ये गोलनिपातनम् ।
नालिकास्त्रेण तद्युद्धं महाह्रासकरं रिपोः ॥ २२६ ॥
कुन्तादिशस्त्रसङ्घातैर्नाशनं रिपुणाञ्च यत् ।
शस्त्रयुद्धन्तु तज्ज्ञेयं नालास्त्राभावतः सदा ॥ २२७ ॥

---

हीनमिति । यदा तु हीनं क्षत्रकुलं नीचैः अधमैः लोकैः प्रपीड्यते अभिभूयते, तदापि ब्राह्मणाः युद्धे तान् नीचान् लोकान् द्रुतं शीघ्रं नाशयेयुः ॥ २२३ ॥

उत्तममिति । मान्त्रिकास्त्रेण मन्त्रविशिष्टेन अस्त्रेण युद्धं उत्तमं नालिकास्त्रेण मध्यमं शस्त्रैः कनिष्ठं अधमं बाहुयुद्धन्तु ततः अधमादपि अधमम् ॥ २२४ ॥

मन्त्रयुद्धमाह मन्त्रेति । मन्त्रेण ईरितैः महाशक्ति बाणाद्यैः यत् शत्रूणां नाशनं तत् मान्त्रिकास्त्रेण युद्धं तच्च सर्वेषु युद्धेषु उत्तमं श्रेष्ठं स्मृतम् ॥ २२५ ॥

नालयुद्धमाह । नालेति । नालेन अग्निचूर्णसंयोगात् लक्ष्ये लक्षणीये शत्रौ यत् गोलनिपातनं गोलाकारलौहपिण्डनिक्षेपणं तत् नालिकास्त्रेण युद्धं तच्च रिपोः शत्रोः महाह्रासकरं अतिशयक्षयकर-मित्यर्थः ॥ २२६ ॥

शस्त्रयुद्धमाह कुन्तेति । कुन्तादीनां शस्त्राणां सङ्घातैः समूहैः

कर्षणैः सन्धिमर्माणां प्रतिलोमानुलोमतः ।
बन्धनैर्घातनं शत्रोर्युक्त्या तद् बाहुयुद्धकम् ॥ २३८ ॥
वामपाणिककक्षोत्पीड़ा भूमौ निक्षेपणं बलात् ।
मूर्ध्नि पादप्रहरणं जानुनोदरपीड़नम् ॥ २३९ ॥
मालूराकारया मुष्ट्या कपोले दृढ़ताड़नम् ।
कफोणिपातोऽप्यसकृत् सर्वतस्तलताड़नम् ।
आवेन युद्धे भ्रमणं नियुद्धं स्मृतमष्टधा ॥ २४० ॥
चतुर्भिः क्षत्रियं हन्यात् पञ्चभिः क्षत्रियाधमम् ।

---

यत् रिपुणां रिपूणामित्यर्थः ( दीर्घाभाव आर्षः ) नाशनं तत् शस्त्रयुद्धं यदा नानास्त्राणां अभावात् एवं नानास्त्राद्यभावे करेण योद्धव्यमिति भावः ॥ २३७ ॥

बाहुयुद्धमाह कर्षणैरिति । युक्त्या कौशलेन शत्रोः सन्धिमर्माणां सन्धीनां शरीरग्रन्थीनां मर्माणाञ्च कर्षणैः प्रपीड़नैः प्रतिलोमानुलोमतः प्रतिलोमेन अस्वाभाविकरीत्या अनुलोमतः स्वाभावतया च तथा बन्धनैः बाहुभिरिति शेषः यत् घातनं नाशनं तत् बाहुयुद्धकम् ॥ २३८ ॥

नियुद्धं निरूपयति वामेत्यादि । नियुद्धं अष्टधा अष्टप्रकारं स्मृतम् । यथा वामपाणिना वामहस्तेन कक्षायां बाहुमूले उत्पीड़ा उत्पीड़नं भवत्वित्यर्थः १ बलात् भूमौ निक्षेपणं दूरणं २ मूर्ध्नि शिरसि पाद प्रहरणं पदाघातः ३ जानुना उदरपीड़नं ४ मालूरः श्रीफलं तस्येव आकारः यस्याः तादृश्या मुष्ट्या कपोले गण्डे दृढ़ताड़नं कठिन प्रहारः ५ असकृत् पुनः पुनः कफोण्योः कूर्परयोः पातः भूतले बलात् पातनं ६ सर्वतः सर्वैः प्रकारैः तलेन चपेटेन ताड़नं प्रहारः ७ तथा आवेन आपद्गेन शत्रूणां रक्षार्थितयेति शेषः युद्धे भ्रमणम् ८ ॥२३९॥२४०॥

चतुर्भिरिति । चतुर्भिः नियुद्धप्रकारैरिति अर्थः शेषः क्षत्रियं

षड्भिर्वैश्यं सप्तभिस्तु शूद्रं सङ्करमष्टभिः ।
अत्रष्वेतानि युञ्जीत न मित्रेषु कदाचन ॥ २४१ ॥
नालास्त्राणि पुरस्कृत्य लघूनि च महान्ति च ।
तत् पृष्ठगांश्च पादातान् गजाश्वान् पार्श्वयोः स्थितान् ।
कृत्वा युद्धं प्रारभेत भिन्नामात्यबलारिणा ॥ २४२ ॥
साम्मुख्येन प्रपातेन पार्श्वाभ्यामपयानतः ।
युद्धानुकूलभूमेस्तु यावल्लाभस्तथाविधम् ।
सैन्यार्द्धांशेन प्रथमं सेनपैर्युद्धमीरितम् ॥ २४३ ॥
अमात्यगोपितैः पश्चादमात्यैः सह तद्भवेत् ।
नृपसङ्गोपितैः पश्चात् स्वतः प्राणात्यये च तत् ॥ २४४ ॥

---

पञ्चभिः क्षत्रियाधमं अधमक्षत्रियं, षड्भिः वैश्यं सप्तभिः शूद्रं अष्टाभिस्तु सङ्करं सङ्कीर्णजातिं अम्बष्ठादिकं हन्यात् । एतानि अष्टविधानि नियुद्धानि शत्रुषु युञ्जीत प्रयुञ्ज्यात् मित्रेषु कदाचन न ॥ २४१ ॥

नालास्त्राणीति । लघूनि च महान्ति च नालास्त्राणि पूर्वोक्तानि पुरस्कृत्य अग्रे कृत्य पादातान् पदातिवर्गान् तत् पृष्ठगान् तेषां नाला-स्त्राणां पृष्ठगामिनः तथा गजाश्वान् गजबलानि अश्वबलानि च पार्श्वयोः स्थितान् कृत्वा भिन्नानि, भेदं गतानि अमात्या बलानि च यस्य तादृशेन अरिणा शत्रुणा सह युद्धं प्रारभेत ॥ २४२ ॥

साम्मुख्येनेति । युद्धानुकूलभूमेः संग्रामोपयोगिस्थानस्य यावल्लाभः यादृशः लाभः, तथाविधं तादृशं तथा यथा साम्मुख्येन पार्श्वाभ्यां वा प्रपातेन अपयानतः अपसरणेन च सेनपैः सेनापतिभिः सैन्यानां अर्द्धांशेन सह प्रथमं युद्धं ईरितं कथितम् ॥ २४३ ॥

अमात्यगोपितैरिति । पश्चात् अमात्यैः गोपितैः रक्षितैः सैन्यैः अमात्यैः शत्रुणामितिशेषः सह तत् युद्धं भवेत् । पश्चात् अमात्यनाशे

दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमम् ।
व्याधिदुर्भिक्षमरकैः पीडितं दस्युविद्रुतम् ॥ २४५ ॥
पङ्कपांशुजलस्कन्नं व्यस्तं श्वासातुरं तथा ।
प्रसुप्तं भोजने व्यग्रमभूमिष्ठमसंस्थितम् ॥ २४६ ॥
चोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ।
एवमादिषु जातेषु व्यसनेषु समाकुलम् ।
स्वसैन्यं साधु रक्षेत्तु परसैन्यं विनाशयेत् ॥ २४७ ॥
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषान्तु पापिष्ठो विदुषां मतः ॥ २४८ ॥

---

दूरस्थैः स्वपक्षपोषितैः राजरक्षितैः तैः सैन्यैः युद्धं भवेत् ततश्च प्राणात्यये प्राणनाशसङ्कटे सतः स्वयं सैन्येन आयुधैरपीत्यर्थः तत् युद्धं भवेत् ॥ २४४ ॥

दीर्घाध्वनीत्यादि । दीर्घाध्वनि दीर्घे मार्गे परिश्रान्तं क्लान्तं क्षुधा पिपासया च आहितः जनितः श्रमः क्लान्तिर्येन तादृशं व्याधिभिः पीडाभिः दुर्भिक्षैः अकालैः मरकैः विसूचिकादिभिश्च पीडितं दस्युभिः विद्रुतं आक्रान्तं पङ्कैः कर्दमैः पांशुभिः रजोभिः जलैश्च स्कन्नं क्लिन्नं व्यस्तं उद्विग्नं श्वासातुरं श्वासेन रोगेण आतुरं कातरं प्रसुप्तं निद्रितं भोजने व्यग्रं क्षुधितमित्यर्थः अभूमिष्ठं उच्चाद्युच्चस्थानमित्यर्थः असंस्थितं दुर्गतं चञ्चलं वा चोरेभ्यः भीषणेन अग्निभयेन वित्रस्तं भीतं वृष्टिभिर्वातैश्च समाहतं आकुलितं एवमादिषु जातेषु घटनासु व्यसनैः विपद्भिः समाकुलं स्वसैन्यं साधु सम्यक् रक्षेत् परसैन्यन्तु विनाशयेत् ॥ २४५ ॥ ॥ २४६ ॥ २४७ ॥

बलस्येति । मनीषिभिः विद्वद्भिः इह लोके यानि बलस्य व्यसनानि दोषाः उक्तानि, तेषां मध्ये तेषां भेदः परस्परं विच्छेदः मुख्यः श्रेष्ठः, विदुषां पण्डितानां पापिष्ठः अतिपापः मतश्च ॥ २४८ ॥

भिन्ना हि सेना नृपतेर्दुःसहेहा भवत्युत।
मौला हि पुरुषव्याघ्र! किमु नानासमुत्थिता॥ २४९॥
उपायान् षड्गुणं मन्त्रं शत्रोः स्वस्यापि चिन्तयेत्।
धर्मयुद्धैः कूटयुद्धैर्हन्यादेव रिपुं सदा॥ २५०॥
याने सपादभृत्या तु स्वभृत्यान् वर्धयन् नृपः।
स्वदेहं गोपयेत् युद्धे चर्मणा कवचेन च॥ २५१॥
पाययित्वा मदं सम्यक् सैनिकान् शौर्यवर्धनम्।
उत्तेजितांश्च निर्द्वैधान् मल्लान् युद्धे नियोजयेत्॥ २५२॥
नालिकास्त्रेण खड्गाद्यैः सैनिकैः पातयेदरीन्।
कुन्तेन सादी बाणेन रथगो गजगोऽपि च॥ २५३॥

---

भिन्नेति। हे पुरुषव्याघ्र! नृपतेः नानासमुत्थिता विविधप्रकारेण समागता सेना भिन्ना भेदं गता सती इह दुःसहा भवति, मौला सेना किमुत? दुःसहेति किं वक्तव्यमित्यर्थः॥ २४९॥

उपायानिति। शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् षड्गुणान् सन्ध्यादीन् मन्त्रञ्च चिन्तयेत् तथा धर्मयुद्धैः कूटयुद्धैर्वा सदा रिपुं हन्यादेव॥ २५०॥

याने इति। नृपः याने युद्धयात्रायां स्वभृत्यान् सपादभृत्या चतुर्थांशाधिकया भृत्या वेतनेन वर्धयन् रञ्जयन् युद्धे चर्मणा ढाल इति भाषा प्रसिद्धेन कवचेन शरीरत्राणेन परिच्छदविशेषेण स्वदेहं गोपयेत् रक्षेत्॥ २५१॥

पाययित्वेति। सैनिकान् शौर्यवर्धनं वीर्यवृद्धिकरं मदं सम्यक् पाययित्वा उत्तेजितान् [illegible] तथा निर्द्वैधान् निःसंशयान् मल्लान् युद्धे नियोजयेत्॥ २५२॥

नालिकास्त्रेणेति। सैनिकः पदातिः नालिकास्त्रेण खड्गाद्यैश्च,

वृद्धो बालो न हन्तव्यो नैव स्त्री केवलो नृपः ।
यथायोग्यं तु संयोज्य निघ्नन् धर्मो न हीयते ॥ २५८ ॥
धर्मयुद्धे तु कूटे वै न सन्ति नियमा अमी ।
न युद्धं कूटसदृशं नाशनं बलवद्रिपोः ॥ २५९ ॥
रामकृष्णेन्द्रादिदेवैः कूटमेवादृतं पुरा ।
कूटेन निहतो बालिर्यवनो नमुचिस्तथा ॥ २६० ॥
प्रफुल्लवदनेनैव तथा कोमलया गिरा ।
अङ्गीकृतापराधेन सेवादानप्रणतिस्तवैः ॥ २६१ ॥
उपकारैः स्वाश्रयेण दिव्यैर्विश्वासयेत् परम् ।
क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत् ॥ २६२ ॥

---

वृद्ध इति । वृद्धः बालः शिशुश्च न, तथा स्त्री स्त्रीलोकः तथा केवलः निःसहायः नृपश्च न हन्तव्यः । यथायोग्यं संयोज्य वीरभावेन मिलित्वा निघ्नन् जनः धर्मात् न हीयते ॥ २५८ ॥

धर्मयुद्धे इति । धर्मयुद्धे तु पूर्वोक्तनियमः बोद्धव्य इति शेषः, कूटे कपटमये तु युद्धे अमी नियमाः न सन्ति । बलवतः रिपोः शत्रोः कूटयुद्धसदृशं नाशनं नाशोपायः न अस्तीति शेषः ॥ २५९ ॥

रामेति । पुरा पूर्वस्मिन् काले रामेण कृष्णेन इन्द्रादिदेवैश्च कूटमेव आदृतं यथा कूटेन कपटेन युद्धेन बालिः निहतः रामेणेति शेषः यवनः निहतः कृष्णेनेति शेषः, नमुचिः निहतः इन्द्रेणेति शेषः ॥ २६० ॥

प्रफुल्लेति । उपकारैरिति । प्रफुल्लेन प्रसन्नेन वदनेन, कोमलया गिरा वाचा, अङ्गीकृतेन स्वीकृतेन अपराधेन दोषेण, सेवया दानेन तथा प्रणामेन स्तवेन गुणकीर्तनेन उपकारैः हिताचरणैः स्वाश्रयेण स्वभावेन आश्रयेण तथा दिव्यैः शपथैः परं शत्रुं विश्वासयेत् परन्तु क्षुरधारेण मनसा रिपोः शत्रोः छिद्रं दोषं सुलक्षयेत् ॥ २६१ ॥ २६२ ॥

अवमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यं साधयेत् प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ २६३

सभासीनः शतानीकः सेनाकार्यं विचिन्तयेत् ।
सहैव व्यूहसङ्केतवाद्यभाषान्ववर्तिनः ॥ २६४ ॥

अचरेयुः सैनिकाश्च राजराष्ट्रहितैषिणः ।
भेदितां शत्रुणा दृष्ट्वा स्वसेनां घातयेच्च ताम् ॥ २६५

प्रत्यये कर्मणि कृते योधेर्दद्याद्धनं च तान् ।
पारितोष्याधिकारं क्रमतोऽर्हं नृपः सदा ॥ २६६ ॥

जलान्नशस्त्रसंरोधैः शत्रून् सम्पीड्य यत्नतः ।
पुरस्ताद्विषमे देशे पश्चाद्धन्यात् तु वेगवान् ॥ २६७ ॥

---

अवमानमिति । प्राज्ञः पण्डितः जनः अवमानं पुरस्कृत्य अग्रे कृत्वा स्वीकृत्येत्यर्थः पृष्ठतः पश्चात् मानं कृत्वा मानमविगणय्य इत्यर्थः स्वकार्यं साधयेत् हि यतः कार्यध्वंस एव मूर्खता भवति ॥२६२॥

सभेति । अचरेयुरिति । सभासीनः पर्यङ्कगतः शतानीकः शत-संख्यकसेनापरिवृतः राजा सेनाकार्यं सेनानां कार्यं अनुरागाप-रागजनितमित्यर्थः विचिन्तयेत् । राजराष्ट्रहितैषिणः सैनिकाः सुवि-नीता इति भावः व्यूहसङ्केतवाद्यभाषाः तत्र आलये वर्त्तिनः तदनुचारिण इत्यर्थः सदा अचरेयुः अपरक्तैर्निजकार्यानुसन्धानाग्र-णिति भावः ततश्च शत्रुणा भेदितां स्वसेनां दृष्ट्वा तां स्वसेनां घात-येच्च नाशयेदपि ॥ २६४ ॥ २६५ ॥

प्रत्यये इति । योधैः प्रत्यये अभिमते कर्मणि कृते सति नृपः सदा तान् योधान् तान् इति कर्मविवक्षया द्वितीया तेभ्यः इत्यर्थः क्रमतः यथाक्रमम् अर्हं योग्यं पारितोष्यं धनम् अधिकारञ्च दद्यात् ॥२६६॥

जलेति । वेगवान् त्वरावान् सन् पुरस्तात् अग्रतः शत्रूणां

कूटस्वर्णमहादानैर्भेदयित्वा द्विषद्बलम् ।
नित्यविस्रम्भसंसुप्तं प्रजागरकृतश्रमम् ॥ २६८ ॥
विलोभ्यापि परानीकमप्रमत्तो विनाशयेत् ।
तत्सहायबलं नैव व्यसनार्त्तमपि क्वचित् ॥ २६९ ॥
स्वसमीपतरं राज्यं नाभ्यस्माद् प्रहरेत् क्वचित् ॥२७०॥
क्षणं युद्धाय सज्जेत क्षणं चापसरेत् पुनः ।
अकस्मान्निपतेद् दूराद्दस्युवत् परितः सदा ॥ २७१ ॥
रूप्यं हेम च कुप्यञ्च यो यज्जयति तस्य तत् ।
दद्यात् कार्य्यानुरूपञ्च हृष्टो योधान् प्रहर्षयन् ॥ २७२ ॥

---

आसाराणां रक्षणानाञ्च संरोधैः सम्यक् निरोधैः शत्रुतः शत्रून् संपीड्य घातयेत् विषमे देशे रणभूमौ इत्यर्थः हन्यात् ॥ २६७ ॥

कूटेति । विलोभ्येति । कूटानां स्वर्णानां महादानैः बहुलवित्तसम्प्रदानैरित्यर्थः द्विषतां शत्रूणां बलं विलोभ्य विशेषेण लोभयित्वा अप्रमत्तः स्वयं सावधानः सन् भेदयित्वा शत्रुतः विच्छिद्य नित्यविस्रम्भेण विश्वासेन संसुप्तं प्रजागरेण कृतः श्रमः येन तं शत्रुभयात् निद्रारहितं परस्य शत्रोः अनीकं सैन्यं विनाशयेत् । व्यसनार्त्तं कामादिव्यसनार्त्तं अपि तस्य सहायबलं क्वचित् कदाचित् नैव विनाशयेदित्यर्थः ॥ २६८ ॥ २६९ ॥

स्वेति । अभ्यस्मात् शत्रोरिति कर्मणि पञ्चमी आर्षी इति बोध्या क्वचित् कदाचित् स्वस्य आत्मनः समीपतरं निकटस्थं राज्यं न प्राहरेत् तथात्वे शत्रोर्निकटवर्त्तितया महानर्थसम्भव इति भावः ॥ २७० ॥

क्षणमिति । क्षणं युद्धाय सज्जेत उद्युञ्जीत, क्षणञ्च पुनः अपसरेत् रणादिति शेषः, तथा अकस्मात् सहसा दूरात् परितः समन्तात् दस्युवत् सदा निपतेच्च ॥ २७१ ॥

रूप्यमिति । यः पुरुषः रूप्यं रजतं हेम स्वर्णं तथा कुप्यं

पश्चाद्राज्ञे तु तैः सार्द्धं युवराजो निवेदयेत् ।
राजा संश्रावयेदादौ युवराजं ततस्तु सः ॥ २७७ ॥
युवराजो मन्त्रिगणान् राजार्थे तेऽधिकारिणः ।
सदसत् कर्म राजानं बोधयेत्तु पुरोहितः ॥ २७८ ॥
ग्रामाद्बहिः समीपे तु सैनिकान् धारयेत् सदा ।
ग्राम्यसैनिकयोर्न स्यादुत्तमर्णाधमर्णता ॥ २७९ ॥
सैनिकार्थन्तु पण्यानि सैन्ये सन्धारयेत् पृथक् ।
नैकत्र वासयेत् सैन्यं वत्सरन्तु कदाचन ॥ २८० ॥
सेनासहस्रं सज्जं स्यात् क्षणात् संश्रावयेत् तथा ।
संश्रावयेत् स्वनियमान् सैनिकानष्टमे दिने ॥ २८१ ॥

---

पश्चादिति । युवराज इति । पश्चात् युवराजः तैः मन्त्र्यादिषु अधिकृतैः पुरुषैः सार्द्धं सह राज्ञे निवेदयेत् मन्त्रितविषयमिति शेषः । राजा आदौ अग्रतः युवराजं, ततः सः युवराजः मन्त्रिगणान् संश्रावयेत् सम्यक् उपदिशेत् । ते च अधिकारिणः राजार्थे राजसमीपे सत् असच्च कर्म बोधयेयुरिति शेषः, ततः पुरोहितः राजानं बोधयेत् सर्वमिति शेषः ॥ २७७ ॥ २७८ ॥

ग्रामादिति । ग्रामात् बहिः बाह्यप्रदेशे समीपे वा सदा सैनिकान् धारयेत् रक्षेत् । ग्राम्यसैनिकयोः ग्रामवासिजनसैनिकपुरुषयोः उत्तमर्णाधमर्णता ऋणदानव्यवहारः न स्यात् तथात्वे प्रधाननिष्पातः स्यादिति भावः ॥ २७९ ॥

सैनिकार्थमिति । सैनिकार्थं सेनानां निमित्तं पण्यानि विक्रयद्रव्याणि सैन्ये सेनानिवेशे पृथक् सन्धारयेत् स्थापयेत् ग्रामवासिसाधारणयोः सर्वदा विसंवादसम्भावनादिति भावः । तथा वत्सरं व्याप्य सैन्यम् एकत्र एकस्मिन् स्थाने न वासयेत् ॥ २८० ॥

सेनेति । यथा सेनासहस्रं क्षणात् सज्जं स्यात् तथा संश्रावयेत्

चण्डत्वमाततायित्वं राजकार्य्ये विलम्बनम् ।
अनिष्टोपेक्षणं राज्ञः स्वधर्मपरिवर्जनम् ॥ ३८२ ॥
त्यजन्तु सैनिका नित्यं संलापमपि वा परैः ।
नृपाज्ञया विना ग्रामं न विशेयुः कदाचन ॥ ३८३ ॥
स्वाधिकारिगणस्यापि ह्यपराधं दिशन्तु नः ।
मित्रभावेन वर्त्तध्वं स्वामिकृत्ये सदाखिलैः ॥ ३८४ ॥
सूज्ज्वलानि च रक्षन्तु शस्त्रास्त्रवसनानि च ।
अन्नं जलं प्रस्थमात्रं पात्रं बह्वन्नसाधकम् ॥ ३८५ ॥
शासनादन्यथाचारान् विनेष्यामि यमालयम् ।
भेदयिता रिपुधनं गृहीत्वा दर्शयन्तु माम् ॥ ३८६ ॥

---

सम्यक् शिक्षयेत् । तथा अष्टमे दिने दिवसस्य अष्टमे भागे पूर्व्वः अपराह्णसमये इति यावत् सैनिकान् स्वस्य नियमान् संश्रावयेत् सम्यक् उपदिशेच ॥ ३८१ ॥

संश्रावनान्याह चण्डत्वमित्यादि । सैनिकाः नित्यं सततं चण्डत्वम् उग्रत्वम् आततायित्वं राजकार्य्यविलम्बनं राज्ञः अनिष्टस्य उपेक्षणं स्वधर्मस्य परिवर्जनं परित्यागम् अपिवा अथवा परैः शत्रुभिः संलापं वार्त्तालापं त्यजन्तु । नृपस्य आज्ञया विना कदाचन ग्रामं न विशेयुः प्रविशेयुः । स्वाधिकारगणस्य येनाधिकारे नियुक्तस्य अपराधं दोषं नः अस्मभ्यं दिशन्तु । अखिलैः समस्तैः सैन्यैः स्वामिनः कृत्ये कार्य्ये मित्रभावेन वर्त्तध्वं यूयमिति शेषः । सूज्ज्वलानि अत्युज्ज्वलानि शस्त्राणि अस्त्राणि वसनानि वस्त्राणि च तथा शासनात् मम आज्ञया दत्तैः अन्नं जलं प्रस्थमात्रं प्रस्थपरिमितं बहूनाम् अन्नानां साधकं पात्रं स्वकीभिस्सर्वैः रक्षन्तु । अन्यथाचारान् ये अन्यथा आचरन्ति तान् सर्वान् यमालयं विनेष्यामि प्रापयिष्यामि । भेदयिता भेदं

सैनिकैरभ्यसेन्नित्यं व्यूहाद्यनुकृतिं नृपः ।
तथायनेऽयने लक्ष्यमस्त्रपातैर्विभेदयेत् ॥ १८७ ॥
सायं प्रातः सैनिकानां कुर्य्यात् सङ्गणनं नृपः ।
जात्याकृतिवयोदेशग्रामवासान् विमृश्य च ॥ १८८ ॥
कालं भृत्यवधिं देयं दत्तं भृत्यस्य लेखयेत् ।
कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकम् ।
तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकम् ॥ १८९ ॥
सैनिकाः शिक्षिता ये ये तेषु पूर्णा भृतिः स्मृता ।
व्यूहाभ्यासे नियुक्ता ये तेष्वर्द्धां भृतिमावहेत् ॥ १९० ॥

---

प्रापिताः यत्नतः विच्छिन्ना इत्यर्थः यत्नु सैनिकाः रिपुधनं मां दर्श-यन्तु ॥ १८२ ॥ १८३ ॥ १८४ ॥ १८५ ॥ १८६ ॥

सैनिकैरिति । नृपः सैनिकैः व्यूहादीनाम् अनुकृतिं नित्यम् अभ्यसेत् तथा अयने अयने प्रति मासमासमित्यर्थः अथवा गतिविशेषे गतिविशेषे, अस्त्राणां पातैः लक्ष्यं विभेदयेत् ॥ १८७ ॥

सायमिति । नृपः सायं प्रातः सैनिकानां जातिम् आकृतिं वयः, देशं ग्रामं वासं वासस्थानञ्च विमृश्य विविच्य संगणनं संख्यां कुर्य्यात् ॥ १८८ ॥

कालमिति । भृत्यस्य भृतेः अवधिं सीमाकृतं कालं तथा भृत्येभ्यः देयं, दत्तं, कति दत्तं पारितोषिकञ्च इति एतत् सर्वं लेखयेत् । वेतनदानकाले तेषां प्राप्तिपत्रं गृह्णीयात् वेतनपत्रञ्च दद्यात् ॥ १८९ ॥

सैनिका इति । ये ये सैनिकाः शिक्षिताः तेषु भृत्येषु पूर्णा भृतिः वेतनं स्मृता तें पूर्णवेतनमर्हन्तीत्यर्थः । ये व्यूहानाम् अभ्यासे शिक्षायां नियुक्ताः तेषु अर्द्धां भृतिम् आवहेत् दद्यात् ते सैनिकाः पूर्णभृतेरर्द्धमर्हन्तीत्यर्थः ॥ १९० ॥

असत्कार्यार्थितं सैन्यं नाशयेच्छत्रुयोगतः ॥ २८१ ॥
नृपस्यासद्गुणरताः के गुणद्वेषिणो नराः ।
असद्गुणोदासीनाः के हन्यात् तान् विमृशन् नृपः ।
गुणासक्तांस्त्यजेद् भृत्यान् गुणिनोऽपि नृपः सदा ॥२८२
गुणान्तलोकविश्वस्ता योज्यास्त्वन्तःपुरादिषु ।
धार्य्याः गुणान्तविश्वस्ता धनादिव्ययकर्म्मणि ॥ २८३ ॥
तथा हि लोकविश्वस्तो बाह्यकृत्ये नियुज्यते ।
अन्यथा योजितास्ते तु परिवादाय केवलम् ॥ २८४ ॥
शत्रुसम्बन्धिनो ये ये भिन्ना मन्त्रिगणादयः ।
नृपदुर्गुणतो नित्यं हृतमाना मखाधिकाः ।
स्वकार्य्यसाधका ये तु सुभृत्या पोषयेच्च तान् ॥ २८५ ॥

---

असदिति । असत्कम् अभद्रं कर्तारं कार्यिणम् कार्यितं सैन्यं शत्रुयोगतः शत्रुयोगेन नाशयेत् प्रभुरिति शेषः ॥ २८१ ॥

नृपस्येति । के नराः असद्गुणेषु रताः के वा नृपस्य गुणद्वेषिणः, के च असद्गुणेषु उदासीनाः उपेक्षमाणाः, नृपः विमृशन् विचारयन् तान् हन्यात् । किञ्च नृपः गुणिनोऽपि भृत्यान् सदा गुणेषु आसक्तान् त्यजेत् ॥ २८२ ॥

गुणान्तेति । गुणान्ताः सदन्तःकरणाः लोकेषु जगत्सु विश्वस्ता जनाः अन्तःपुरादिषु योज्याः नियोक्तव्याः । तथा गुणान्ताः विश्वस्ताश्च जनाः धनादीनां व्ययकर्म्मणि धार्य्याः नियोज्याः ॥ २८३ ॥

तथेति । तथा । लोकेषु विश्वस्तो जनः बाह्यकृत्ये बहिःकार्य्ये नियुज्यते हि नियुज्यत एव । ते तु अन्तःपुरधनादिव्ययकर्म्मसु योजिताः जनाः केवलं परिवादाय निन्दायै भवन्तीति भावः ॥ २८४ ॥

शत्रुसम्बन्धिन इति । ये ये शत्रुसम्बन्धिनः मन्त्रिगणादयः ये च मखाधिकाः दक्षिणाः नृपस्य मतो दुर्गुणतः दोषेण नित्यं हृतं

लोभेनासेवमानित्रास्तेभ्योऽर्द्धां भृतिमावहेत्।
अवृत्यकान् सुगुणिनः सुभृत्या पालयेत् नृपः ॥ २९६ ॥
परराष्ट्रे हृते दद्याद् भृतिं भित्रावधिं तथा।
दद्यादर्द्धां तस्य पुत्रे स्त्रियै पादमितां किल ॥ २९७ ॥
हृतराज्यस्य पुत्रादौ सद्गुणे पादसम्मितम्।
दद्याद्वा तद्राज्यतस्तु द्वात्रिंशांशं प्रकल्पयेत् ॥ २९८ ॥
हृतराज्यस्य निचितं कोशं भोगार्थमाहरेत् ॥ २९९ ॥
कौसीदं वा तद्धनस्य पूर्वोक्तार्द्धं प्रकल्पयेत्।

---

हृतमानाः मानभ्रष्टा अतएव भिन्नाः विच्छेदं गताः, अथच स्वस्य, आत्मनः कार्य्यसाधकाः, तान् सुभृत्या उत्कृष्टवेतनेन पोषयेत् ॥ २९५ ॥

लोभेनेति। ये च लोभेन अधिकप्राप्त्याशया असेवनात् सेवायाम् उपेक्षयाऽदित्यर्थः भिन्नाः शत्रुतः विच्छिन्नाः नृपः तेषु अर्द्धां भृतिं पूर्वभृतेरर्द्धमित्यर्थः आवहेत् दद्यात्। तथा शत्रुतस्तस्मात् अथच सुगुणिनः जनान् सुभृत्या सुवेतनेन पालयेत् ॥ २९६ ॥

परराष्ट्रे इति। परराष्ट्रे शत्रुराज्ये हृते आत्मसात्कृते सति भिन्नावधिं राज्यहरणदिवसावधिं भृतिं भरणोपयोगिधनं दद्यात् तथा तस्य पुत्रे अर्द्धां स्त्रियै पादमितां चतुर्थभागरूपां भृतिं किल निश्चितं दद्यात् ॥ २९७ ॥

हृतेति। हृतं राज्यं यस्य तस्य शत्रोः सद्गुणे सगुणशालिनि पुत्रादौ तस्य राज्यतः राज्यस्य पादसम्मितं चतुर्थभागमित्यर्थः दद्यात् वा एव वाशब्दः अवधारणार्थः अगुणशालिनि तु द्वात्रिंशांशं प्रकल्पयेत् दद्यादित्यर्थः ॥ २९८ ॥

हृतेति। हृतराज्यस्य शत्रोः निचितं सञ्चितं कोशं धनं स्वस्य भोगार्थम् आहरेत् गृह्णीयात् ॥ २९९ ॥

कौसीदमिति। वा अथवा तद्धनस्य तस्य निचितकोशस्य इत्यर्थः

तद्धनं द्विगुणं यावत् तदूर्ध्वं न कदाचन ॥ ४०० ॥
स्वमहत्त्वद्योतनार्थं हृतराज्यान् प्रधारयेत् ।
प्राङ्मानैर्यदि सद्वृत्तान् दुर्वृत्तांस्तु प्रपीड़येत् ॥४०१॥
अष्टधा दशधा वापि कुर्याद्द्वादशधापि वा ।
यामिकार्थमहोरात्रं यामिकान् वीक्ष्य साम्यया ॥४०२ ॥
आद्यौ प्रकल्पितानंशान् भजेयुर्यामिकास्तथा ।
आद्यः पुनस्त्वन्तिमांशं स्वपूर्वांशं ततोऽपरे ॥ ४०३॥
पुनर्वा योजयेत्तद्वदाद्येऽन्त्यं चान्तिमे ततः ।
स्वपूर्वांशं द्वितीयेऽह्नि द्वितीयादिक्रमागतम् ॥ ४०४ ॥

---

कौसीदं द्विगुणं पूर्वोक्तं धनं यावत् तत् धनं द्विगुणं भवेत् तावत्कालपर्यन्तं कल्पयेत् कदाचन तस्मात् ऊर्ध्वं न, द्वैगुण्यादधिकं नेत्यर्थः ॥ ४०० ॥

स्वेति । हृतराज्यान् यान् यदि सद्वृत्तान् सदाचारान् स्वस्य माहात्म्यद्योतनार्थं निजमहिमप्रकटनार्थं प्राङ्मानैः पूर्ववत् राजोचितैः मानैः सम्मानैः धारयेत् स्थापयेत् दुर्वृत्तांस्तु प्रपीड़येत् ॥ ४०१ ॥

अष्टेति । यामिकान् प्रहरिणः वीक्ष्य विचार्य यामिकार्थं प्रहरिणां निमित्तं अहोरात्रं अष्टधा दशधा अथवा द्वादशधा कुर्यात् विभजेदित्यर्थः अन्यथा न, यामिकानामेव दिवसविभागस्य आवश्यकत्वादिति भावः ॥ ४०२ ॥

आद्याविति । यामिकाः प्रहरिणः आद्यौ प्रथमः तथा तेन प्रकारेण प्रकल्पितान् निर्दिष्टान् अंशान् भजेयुः आश्रयेयुः । किन्तु आद्यः प्रथमः यामिकः अन्तिमांशं शेषभागं ततः आद्यात् अपरे अन्ये यामिकाः स्व पूर्वांशं निज निज पूर्वभागं भजेयुरिति शेषः ॥ ४०३ ॥

पुनरिति । पुनश्च आद्ये यामिके अन्त्यं तद्वत् तथा अन्तिमे शेषे

चतुष्कं स्वधिकान् नित्यं यामिकान् योजयेद्दिने ।
युगपद्योजयेद् दृष्ट्वा बहून् वा कार्य्यगौरवम् ॥ ४०५ ॥
चतुरूनान् यामिकांस्तु कदा नैव नियोजयेत् ॥ ४०६ ॥
यद्रक्ष्यमुपदेश्यं यदादेश्यं यामिकाय तत् ।
तत् समक्षं हि सर्वं स्याद्यामिकोऽपि च तत्तथा ॥ ४०७
कीलकोष्ठे तु स्वर्णादि रक्षेन्नियमितावधि ।
स्वांशान्ते दर्शयेदन्ययामिकन्तु यथार्थकम् ॥ ४०८ ॥
क्षणे क्षणे यामिकानां कार्य्यं दूरात् सुबोधनम् ॥ ४०९

---

यामिके वा कार्य्ये तथा द्वितीये चांशे द्वितीयादिक्रमागतं स्वं पूर्वांशं योजयेत् ॥ ४०४ ॥

चतुष्कमिति । दिने चतुष्कं: अधिकान् यामिकान् नित्यं प्रत्यहं योजयेत् नियुञ्ज्यात्, वा अथवा कार्य्यगौरवं दृष्ट्वा युगपत् एककालं बहून् यामिकान् योजयेत् ॥ ४०५ ॥

चतुरूनानिति । कदापि चतुरूनान् चतुर्भ्यः हीनान् एकं द्वौ त्रीन् वेत्यर्थः यामिकान् नैव नियोजयेत् ॥ ४०६ ॥

यदिति । यत् रक्ष्यं रक्षणीयं यच्च उपदेश्यं शिक्षणीयं तत् यामिकाय आदेश्यं उपदेष्टव्यं हि यतः सर्वं प्रजानां कार्य्यं तत् समक्षं तस्य यामिकस्य समक्षं प्रत्यक्षं स्यात् तस्मात् यामिकोऽपि तत् सर्वं तथा विचेतेतिशेषः ॥ ४०७ ॥

कीलेति । यामिकः नियमितावधि निर्द्धारितकालं यावत् स्वर्णादि यत् अस्वामिकं वा सस्वामिकं चोरितादि प्राप्तमितिभावः कीलकोष्ठे कीलस्य आश्रयस्तम्भस्य कोष्ठे मध्ये रक्षेत् । ततः स्वस्य अंशान्ते प्रहरिकालस्य अंशावसाने अन्यं यामिकं स्वपदे उपस्थित मितिशेषः यथार्थकं तत् सर्वं दर्शयेत् दर्शयित्वा बोधयेत् इत्यर्थः ॥ ४०८ ॥

क्षणे इति । क्षणे क्षणे दूरात् सुबोधनं प्रजानां सतर्कतासम्पादनं यामिकानां कार्य्यम् ॥ ४०९ ॥

सत्कृतान् नियमान् सर्वान् यदा सम्पादयेन् नृपः ।
तदैव नृपतिः पूज्यो भवेत् सर्वेषु नान्यथा ॥ ४१० ॥
यस्यास्ति नियतं कर्म नियतः सद्ग्रहो यदि ।
नियतोऽसद्ग्रहत्यागो नृपत्वं सोऽश्नुते चिरम् ॥ ४११ ॥
यस्यानियमितं कर्म साधुत्वं वचनं त्वपि ।
सदैव कुटिलः सख्युः स्वपदाद् द्राग्विनश्यति ॥ ४१२ ॥
नापि व्याघ्रगजाः शक्ता मृगेन्द्रं शासितुं यथा ।
न तथा मन्त्रिणः सर्वे नृपं स्वच्छन्दगामिनम् ॥ ४१३ ॥
निभृताधिकृतास्तेन निःसारत्वं हि तेष्वतः ।
गजो निबध्यते नैव तूलभारसहस्रकैः ॥ ४१४ ॥

---

सत्कृतानिति । नृपः यदा सत्कृतान् शोभनान् सर्वान् नियमान् सम्पादयेत् तदैव नृपतिः सर्वेषु जगत्सु पूज्यः भवेत् अन्यथा न ॥ ४१० ॥

यस्येति । यस्य नियतं सततं कर्म कार्याभिनिवेशः तथा यदि नियतः सत्सु विषयेषु ग्रहः आदरः, तथा असत्सु विषयेषु अग्रहत्यागः अनादरः नियतः, सः चिरं नृपत्वं राजत्वं अश्नुते प्राप्नोति ॥ ४११ ॥

यस्येति । यस्य कर्म साधुत्वं तथा वचनं अनियमितं अस्थिरं सदैव कुटिलः सः सख्युः सुहृदः स्वपदात् द्राक् झटिति विनश्यति भ्रश्यति तस्य बन्धुविच्छेदो राज्यनाशश्च स्यादितिभावः ॥ ४१२ ॥

नापीति । यथा व्याघ्रा गजाश्च मृगेन्द्रं सिंहं शासितुं न शक्ताः, तथा तेन नृपेण निभृतेषु निर्जनेषु अधिकृताः अपि सर्वे मन्त्रिणः स्वच्छन्दगामिनं स्वेच्छाचारिणं तं नृपं शासितुं न शक्ता इत्यर्थः । अतः अस्मात् कारणात् तेषु मन्त्रिषु निःसारत्वं अक्षमत्वमित्यर्थः राज्ञः स्वेच्छाचारित्वात् मन्त्रिणां अक्षमत्वं सुतरामायातमिति भावः । तूलानां कार्पासानां भारसहस्रकैः सहस्रैरपि भारैरित्यर्थः गजः नैव निबध्यते ॥ ४१२ ॥ ४१४ ॥

उद्धर्तुं द्रागजः शक्तः पङ्कलग्नं गजं बली ।
नीतिभ्रष्टनृपं त्वन्यनृप उद्धरणाक्षमः ॥ ४१५ ॥
बलवन्नृपभृत्येऽल्पेऽपि श्रीस्तेजो यथा भवेत् ।
न तथा हीननृपतौ तन्मन्त्रिष्वपि नो तथा ॥ ४१६ ॥
बहूनामैकमत्यं हि नृपतेर्बलवत्तरम् ।
बहुसूत्रकृतो रज्जुः सिंहाद्याकर्षणक्षमः ॥ ४१७ ॥
हीनराज्यो रिपुभृत्यो न सैन्यं धारयेद्बहु ।
कोशवृद्धिं सदा कुर्य्यात् स्वपुत्राद्यभिवृद्धये ॥ ४१८ ॥
क्षुधया निद्रया सर्वमशनं शयनं शुभम् ।
भवेद्यथा तथा कुर्य्यादन्यथाशु दरिद्रकृत् ॥ ४१९ ॥

---

उद्धर्त्तुमिति । बली प्रबलः गजः पङ्कलग्नं कर्द्दमपतितं गजं द्राक् झटिति उद्धर्त्तुं शक्तः । तु तथेत्यर्थः अन्यान्नृपः नीतिभ्रष्टं नृपं उद्धरणाक्षमः अत्र नृपमिति तद्धयोगे षष्ठ्यभाव आर्षः ॥ ४१५ ॥

बलवदिति । बलवतः नृपस्य भृत्ये अल्पे क्षुद्रेऽपि यथा श्रीः तेजश्च भवेत् हीने नृपतौ दुर्बले राजनि तथा न तस्य मन्त्रिषु अपि तथा नो भवेदित्यर्थः ॥ ४१६ ॥

बहूनामिति । बहूनां ऐकमत्यं नृपतेः राज्ञः अपि बलवत्तरं अधिकबलवत् हि । तथाहि बहुसूत्रकृतः बहुभिः सूत्रैः निर्मितः रज्जुः सिंहादीनां आकर्षणे क्षमः समर्थः ॥ ४१७ ॥

हीनेति । हीनं राज्यं यस्य सः तथा रिपुः शत्रुः भृत्यः यस्य तादृशः नृपः बहु सैन्यं न धारयेत् स्वस्य आत्मनः पुत्रादीनां अभिवृद्धये अभ्युदयाय सदा कोशवृद्धिं धनसञ्चयं कुर्य्यात् ॥ ४१८ ॥

क्षुधयेति । सर्वं अशनं भोजनं शयनञ्च यथा शुभं भवेत् तथा कुर्य्यात् अन्यथा मार्गं क्षुधया निद्रया च आशु शीघ्रं दरिद्रकृत् दारिद्र्यजनकं भवेदित्यर्थः ॥ ४१९ ॥

द्विधानया व्ययं कुर्य्यान् नृपो नित्यं न चान्यथा ।
धर्म्मनीतिविहीना ये दुर्बला अपि वै नृपाः ।
सुधर्म्मबलयुग्राज्ञा दण्ड्यास्ते चौरवत् सदा ॥ ४२० ॥
सर्व्वधर्म्मावनान्नीचनृपोऽपि श्रेष्ठतामियात् ।
उत्तमोऽपि नृपो धर्म्मनाशनान्नीचतामियात् ॥ ४२१ ॥
धर्म्माधर्म्मप्रवृत्तौ तु नृप एव हि कारणम् ।
स हि श्रेष्ठतमो लोके नृपत्वं यः समाप्नुयात् ॥ ४२२ ॥
मन्वाद्यैरादृतो योऽर्थस्तदर्थो भार्गवेण वै ।
द्वाविंशतिशतं श्लोका नीतिसारे प्रकीर्त्तिताः ॥ ४२३ ॥
शुक्रोक्तनीतिसारं यश्चिन्तयेदनिशं सदा ।
व्यवहारधुरं वोढुं स शक्तो नृपतिर्भवेत् ॥ ४२४ ॥

---

द्विधेति । नृपः अनया द्विधा रीत्या नित्यं व्ययं कुर्य्यात् अन्यथा न । ये नृपाः दुर्बलाः तथा धर्मेण नीत्या च विहीनाः ते सुधर्मबलयुक्तराज्ञा सदा चौरवत् दण्ड्याः । अपि वै शब्दः पादपूरणार्थे ॥ ४२० ॥

सर्वेति । नीचनृपोऽपि सर्वेषां धर्माणां अवनात् रक्षणात् श्रेष्ठतां इयात् प्राप्नुयात् तथा उत्तमोऽपि नृपः धर्मनाशनात् नीचतां इयात् ॥ ४२१ ॥

धर्मेति । नृप एव धर्मस्य अधर्मस्य च प्रवृत्तौ कारणं हि । यः नृपत्वं समाप्नुयात् लोके जगति स हि स एव श्रेष्ठतमः ॥ ४२२ ॥

मन्वाद्यैरिति । यः अर्थः विषयः मन्वाद्यैः मनुप्रभृतिभिः आदृतः भार्गवेण भृगुणा च तदर्थः तस्य मानवधर्मस्य अर्थः आदृतः, तदर्थसङ्कलिताः, द्वाविंशतिशतं श्लोकाः नीतिसारे प्रकीर्त्तिताः निबद्धाः मयेति शेषः ॥ ४२२ ॥

शुक्रेति । यः नृपतिः शुक्रेण उक्तं नीतिसारं अनिशं चिन्तयेत् सः सदा व्यवहारधुरं राजकार्यभारं वोढुं शक्तः भवेत् ॥ ४२४ ॥

न कवेः सदृशी नीतिस्त्रिषु लोकेषु विद्यते।
काव्यैव नीतिरन्या तु कुनीतिर्व्यवहारिणाम् ॥ ४२५ ॥
नाश्रयन्ति च ये नीतिं मन्दभाग्यास्तु ते नृपाः।
कातर्य्याद्धनलोभाद्वा स्युर्वै नरकभाजनाः ॥ ४२६ ॥

इति शुक्रनीतौ चतुर्थाध्यायस्य सेनानिरूपणं
नाम सप्तमं प्रकरणम्।

इति चतुर्थोऽध्यायः समाप्तः।

---

## अथ पञ्चमोऽध्यायः।

नीतिशेषं खिले वक्ष्ये ह्यखिलं शास्त्रसम्मतम्।
सप्ताङ्गानान्तु राज्यस्य हितं सर्व्वजनेषु वै ॥ १ ॥

---

नेति। त्रिषु लोकेषु कवेः शुक्रस्य सदृशी नीतिः न विद्यते, तस्मात् काव्यैव कविकृतैव शुक्रकृतैव इत्यर्थः नीतिः। अन्या तु तद्भिन्ना तु व्यवहारिणां कुनीतिः ॥ ४२५ ॥

नेति। ये नृपाः कातर्य्यात् अक्षमत्वात् धनलोभाद्वा नीतिं न आश्रयन्ति ते मन्दभाग्याः नरकभाजनाः स्युः वैशब्दः अवधारणार्थः निश्चितं नरकं गच्छन्तीत्यर्थः ॥ ४२६ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चतुर्थाध्यायस्य सप्तमप्रकरणव्याख्या
समाप्ता।

---

नीतिशेषमिति। खिले परिशिष्टे अंशे राज्यस्य सप्तानां अङ्गानां सर्व्वजनेषु च विषयेषु हितं हितकरं शास्त्रसम्मतं अखिलं समस्तं संक्षिप्तमित्यर्थः नीतिशेषं अवशिष्टां नीतिं वक्ष्ये कथयिष्यामि ॥ १ ॥

शतसंवत्सरान्तेऽपि करिष्याम्यात्मसाद्रिपुम् ।
इति संचिन्त्य मनसा रिपोश्छिद्राणि लक्षयेत् ॥ २ ॥
राष्ट्रभृत्यविपक्षी स्याद्धीनमन्त्रबलो रिपुः ।
युक्त्या तथा प्रकुर्वीत सुमन्त्रबलयुक् स्वयम् ॥ ३ ॥
सेवया वा वणिग्वृत्त्या रिपुराष्ट्रं विमृश्य च ।
दत्ताभयं सावधानो व्यसनासक्तचेतसम् ॥ ४ ॥
मार्जारलुब्धबकवत् सन्तिष्ठन् नाशयेदरिम् ॥ ५ ॥
सेनां युद्धे नियुञ्जीत प्रत्यनीकविनाशिनीम् ।
न युञ्ज्याद्रिपुराष्ट्रस्थां मिथः स्वद्वेषिणीं न च ॥ ६ ॥

---

शतेति । शतसंवत्सराणां अन्तेऽपि कदाचिदपीत्यर्थः रिपुं शत्रुं आत्मसात् करिष्यामि इति मनसा सञ्चिन्त्य रिपोः शत्रोः छिद्राणि लक्षयेत् ॥ २ ॥

राष्ट्रेति । स्वयं सुमन्त्रबलयुक् नृपः यथा रिपुः राष्ट्रेषु भृत्येषु च विपक्षी अन्यद्वेषवान् तथा हीनं मन्त्रः बलञ्च यस्य तादृशः स्यात् युक्त्या कौशलेन तथा प्रकुर्वीत ॥ ३ ॥

सेवयेति । मार्जारेति । सावधानः नृपः सेवया आनुगत्येन वा वणिग्वृत्त्या वाणिज्यव्याजेन रिपोः शत्रोः राष्ट्रं विमृश्य समीक्ष्य मार्जारः विडालः तद्वत् लुब्धबकवत् सन्तिष्ठन् दत्ताभयं दत्तं अभयं यस्मै तादृशं पूर्वं अभयं दत्त्वा इत्यर्थः व्यसनेषु कामादिषु आसक्तचेतसं आक्रान्तचित्तं निर्भयत्वात् राज्यरक्षणे अव्यग्रतया भोगरतमितिभावः । अरिं शत्रुं नाशयेत् ॥ ४ ॥ ५ ॥

सेनामिति । प्रत्यनीकविनाशिनीं शत्रुसैन्यनाशिनीं सेनां युद्धे नियुञ्जीत, रिपुराष्ट्रस्थां शत्रुराज्यवासिनीं सेनां न, मिथः रहसि स्वस्य आत्मनः द्वेषिणीं विद्वेषकारिणीञ्च सेनां न युञ्ज्यात् ॥ ६ ॥

न नाशयेत् स्वसैन्यन्तु सहसा युद्धकामुकः ।
दानमानैर्वियुक्तोऽपि न भृत्यो भूपतिं त्यजेत् ।
समये प्रत्युतान्नैव गच्छेज्जीवधनाशया ॥ ७ ॥
मेघोदकैस्तु या पुष्टिः सा किं नद्यादिवारितः ।
प्रजापुष्टिर्नृपद्रव्यैस्तथा किं धनिनां धनात् ॥ ८ ॥
दर्शयन् मार्दवं नित्यं महावीर्य्यबलोऽपि च ।
रिपुराष्ट्रे प्रविश्यादौ तत्कार्य्यं साधको भवेत् ॥ ९ ॥
सञ्जातबद्धमूलस्तु तद्राज्यमखिलं हरेत् ।
अथ तद्द्विष्टदायादान् सैन्यपानप्रदानतः ।
तद्राज्यस्थं वशीकुर्य्यान् मूलमुन्मूलयन् बलात् ॥ १० ॥

---

नेति युद्धकामुकः रणप्रियः सन् सहसा स्वस्य आत्मनः सेनां न नाशयेत् तथा भृत्यः दानेन मानेन च वियुक्तः विरहितः अपि भूपतिं स्वामिनं न त्यजेत् । तथा जीवधनाशया जीवनोपयोगि धन प्रत्याशया प्रत्युतात् नैव गच्छेत् यतोऽधीनो न भवेदित्यर्थः ॥ ७ ॥

मेघोदकैरिति । मेघोदकैः वारिदजलैः या पुष्टिः शस्यानामिति शेषः, सा नद्यादीनां वारितः जलैः किं स्यात् नैवेत्यर्थः । यथा नृपस्य द्रव्यैः राजप्रसादैर्व्ययैरिति भावः प्रजानां पुष्टिः, धनिनां धनात् तथा पुष्टिः किं नैवेत्यर्थः ॥ ८ ॥

दर्शयन्निति । महावीर्य्यबलः अपि नित्यं सततं मार्दवं मृदुतां दर्शयन् रिपुराष्ट्रे शत्रुराज्ये प्रविश्य आदौ प्रथमं तस्य रिपोः कार्य्यसाधकः कार्य्यनिर्वाहकः भवेत् ॥ ९ ॥

सञ्जातेति । अथ सञ्जातम् उत्पन्नं बद्धं दृढं मूलं यस्य तादृशः तत्र विश्वासेन प्रतिपन्नः इत्यर्थः बलात् मूलम् उन्मूलयन् निरस्यन् अखिलं समस्तं तस्य राज्यं हरेत्, तथा तस्य रिपोः द्विष्टान् विद्वे-

तरोः सञ्जीवमूलस्य शाखाः शुष्यन्ति वै यथा ।
सद्यः केचिच्च कालेन सेनपाद्याः पतिं विना ॥ ११ ॥
राज्यवृक्षस्य नृपतिर्मूलं स्कन्धाश्च मन्त्रिणः ।
शाखाः सेनाधिपाः सेनाः पल्लवाः कुसुमानि च ।
प्रजाः फलानि भूभागा बीजं भूमिः प्रकल्पिता ॥१२॥
विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।
नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥ १३ ॥
स्ववेशरूपसदृशान् निकटे रक्षयेत् सदा ।
विशिष्टचिह्नगुप्तः स्यात् समयेऽन्यादृशो भवेत् ॥ १४ ॥

---

मिथः दायादान् ज्ञातीन् सेनपान् सेनापतींश्च तद्राज्यस्य अंशप्रदानतः अंशप्रदानेन वशीकुर्य्यात् ॥ १० ॥

तरोरिति । यथा संक्षीणमूलस्य शुष्कमूलस्य तरोः शाखाः शुष्यन्ति वै शोषं प्राप्नुवन्त्येव तथा सेनपाद्याः सेनापतिप्रभृतयः पतिं स्वामिनं विना सद्यः तत्क्षणात्, केचिच्च कालेन शुष्यन्तीत्यर्थः ॥११॥

राज्यवृक्षस्येति । नृपतिः राज्यवृक्षस्य मूलं, मन्त्रिणः स्कन्धाः, सेनाधिपाः शाखाः, सेनाः पल्लवाः, प्रजाः कुसुमानि, भूभागाः फलानि, भूमिः बीजं प्रकल्पिता कथिता ॥ १२ ॥

विश्वस्तेति । विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात् शत्रौ नृपे नैव विश्वसेदित्यर्थः । तस्य प्रति नृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् ॥ १२ ॥

स्वेति । सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत् तथात्वे व्यक्तिग्रहो न स्यादिति भावः, स्वयं विशिष्टम् अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः गुप्तं यस्य तथाभूतः स्यात् तथा समये समयविशेषे इत्यर्थः अन्यादृशः सामान्यजनसदृशः भवेत् ॥ १४ ॥

वेश्याभिश्च नटैर्मद्यैर्गायकैर्मोहयेदरिम् ॥ १५ ॥
सुवस्त्राभरणैर्नैव न कुटुम्बेन संयुतः ।
विशिष्टचिह्नितो भीतो युद्धे गच्छेन्न वै क्वचित् ॥ १६ ॥
क्षणं नासावधानः स्याद् भृत्यस्त्रीपुत्रशत्रुषु ।
जीवन् सन् स्वामिता पुत्रे नदेयाप्यखिला क्वचित् ॥ १७
स्वभावसद्गुणे यस्मान्महानर्थमदावहा ।
विष्ण्वाद्यैरपि नो दत्ता स्वपुत्रे स्वाधिकारता ॥ १८ ॥
स्वायुषः स्वल्पशेषे तु सत्पुत्रे स्वाम्यमादिशेत् ।
नाराजकं क्षणमपि राष्ट्रं धर्त्तुं क्षमाः किल ।
युवराजादयः स्वाम्यलोभचापलगौरवात् ॥ १९ ॥

---

वेश्याभिरिति । वेश्याभिः नटैः नर्त्तकैः मद्यैः सुराभिः गायकैश्च अरिं शत्रुं मोहयेत् मुग्धं कुर्य्यात् ॥ १५ ॥

सुवस्त्रेति । सुवस्त्राभरणैः शोभनवसनालङ्कारैः तथा कुटुम्बेन परिवारेण संयुतः न, विशिष्टचिह्नितः विशिष्टं अन्यविलक्षणं यत् चिह्नं तदस्य जातमिति तथाभूतः न, भीतश्च न क्वचित् कदाचित् युद्धे गच्छेत् ॥ १६ ॥

क्षणमिति । स्वभावेति । जीवन् सन् इत्यर्थः सन् क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात् । किञ्च स्वभावसद्गुणेऽपि पुत्रे क्वचित् कदाचित् अखिला सम्पूर्णा स्वामिता प्रभुता न देया, यस्मात् सा महानर्थमदावहा महान्तम् अनर्थं मदञ्च आवहतीति तथोक्ता महानर्थकारिणी मदवर्द्धिनी च । तस्मात् विष्ण्वाद्यैः विष्णुप्रभृतिभिरपि स्वपुत्रे स्वाधिकारता स्वस्य अधिकारः सो तस्य भावः स्वस्वाम्यं दत्ता ॥ १७ ॥ १८ ॥

स्वेति । स्वस्य आत्मनः आयुषः जीवनकालस्य स्वल्पशेषे अत्यल्पावशिष्टे सति सत्पुत्रे सुपुत्रे स्वाम्यं आदिशेत् अर्पयेत् । युवराजादयः

प्राप्योत्तमं पदं पुत्रः सुनीत्या पालयन् प्रजाः ।
पूर्वामात्येषु पितृवद्गौरवं सम्प्रधारयेत् ॥ २० ॥
तस्यापि शासनं तैस्तु प्रधार्य्यं पूर्वतोऽधिकम् ।
युक्तं चेदन्यथा कार्य्यं निषेध्यं कालसम्भवैः ॥ २१ ॥
तदनीत्या न वर्त्तेयुस्तेन साकं धनाशया ।
वर्त्तन्ति यदनीत्या ते तेन साकं पतन्त्यरात् ॥ २२ ॥
कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनम् ।
स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते ॥ २३ ॥

---

अर्थलोभेन यत् यत् चापलं चाञ्चल्यं तस्य गौरवात् आतिशय्यात् अराजकं राजरहितं राष्ट्रं क्षणमपि धर्त्तुं ग्रहीतुं शासितुमित्यर्थः न शक्ता नैव क्षमाः शक्ताः भवन्ति ॥ १९ ॥

प्राप्येति । पुत्रः उत्तमं पदं राजपदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पुरातनेषु अमात्येषु पितृवत् गौरवं गुरुभावं भक्तिमित्यर्थः सम्प्रधारयेत् सम्यक् कुर्य्यादित्यर्थः ॥ २० ॥

तस्येति । तैः पूर्वैः अमात्यैः तस्य राजपुत्रस्यापि शासनं चेत् यदि युक्तं तदा पूर्वतः पूर्वस्मात् अधिकं यथा तथा प्रधार्य्यं प्रतिपालनीयं, अन्यथा अयुक्तत्वे इत्यर्थः कालसम्भवैः कालान्वयिभिः वाक्यैः समयान्तरे एतत्प्रतिपालनीयमिति वादिभिरित्यर्थः कार्य्यं राजशासनीयं कर्म निषेध्यं निवारणीयम् ॥ २१ ॥

तदिति । धनाशया अर्थलोभेन तेन नवेन राज्ञा साकं सह तस्य अनीत्या दुर्नयेन न वर्त्तेयुः न तिष्ठेयुः ते इति शेषः । यत् यदि ते अनीत्या वर्त्तन्ति तदा तेन राज्ञा साकं सह अरात् शीघ्रं पतन्ति ॥ २२ ॥

कुलभक्तानिति । यः कुलभक्तान् कुलक्रमेण अनुरक्तान् भृत्यान् द्वेष्टि, नवीनं जनं भजते च स राजा शत्रुसात् गच्छेत् शत्रोरधीनो भवेत् धनप्राणैः वियुज्यते च ॥ २३ ॥

गुणी सुनीतिर्नव्योऽपि परिपाल्यस्तु पूर्ववत् ।
प्राचीनैः सह तं कार्य्ये ह्यनुभूय नियोजयेत् ॥ २४ ॥
अतिमृदुस्तुतिनतिसेवादानप्रियोक्तिभिः ।
मायिकैः सेव्यते यावत् कार्य्यं नित्यन्तु साधुभिः ॥२५॥
प्रत्यक्षं वा परोक्षं वा सत्यवाग्भिर्नृपोऽपि च ।
याथार्थ्यं तस्तयोरीदृगन्तरं खभुवोर्यथा ॥ २६ ॥
मायाया जनका धूर्त्ता जारचोरबहुश्रुताः ।
प्रतिष्ठितो यथा धूर्त्तो न तथा तु बहुश्रुताः ॥ २७ ॥
परस्वहरणे लोके जारचोरौ तु निन्दितौ ।
सावप्रत्यक्षं हरतः प्रत्यक्षं धूर्त्त एव हि ॥ २८ ॥

---

गुणीति । नव्योऽपि नवीनः अपि जनः गुणी गुणवान् तथा सुनीतिः सुनयसम्पन्नश्चेत् पूर्ववत् प्राचीनवत् परिपाल्यस्तु प्रतिपालनीय एव, अनुभूय तच्चरित्रं परीक्ष्य इत्यर्थः प्राचीनैः पुरातनैः भृत्यैः सह कार्य्ये नियोजयेत् ॥ २४ ॥

अतीति । प्रत्यक्षमिति । मायिकैः कापटिकैः जनैः यावत् कार्य्यं आत्मन इतिशेषः तावत् । अतिमृदुभिः स्तुतिभिः नतिभिः सेवाभिः, दानैः प्रियोक्तिभिः प्रियवचनैश्च नृपः सेव्यते, सत्यवाग्भिः सत्यवादिभिः, साधुभिस्तु नित्यं सततं आत्मकार्य्याभावेऽपीत्यर्थः प्रत्यक्षं वा परोक्षं वा याथार्थ्यतः तत्त्वतः सेव्यते इत्यर्थः खभुवो यथा आकाशभूम्योरिव तयोः मायिक साध्वोः ईदृक् अन्तरं प्रभेदः ॥ २५ ॥ २६ ॥

मायाया इति । जारः उपपतिः, चोरस्तस्करः बहुश्रुतः बहुशास्त्रज्ञः ते मायायाः कापट्यस्य जनकाः धूर्त्ताः । यथा धूर्त्तः प्रतिष्ठितः प्रतिपन्नः, तथा बहुश्रुता न ॥ २७ ॥

परस्वेति । लोके जगति जारचोरौ परस्वस्य परधनस्य हरणे

हितं त्वहितवच्चान्ते अहितं हितवत् सदा ।
धूर्त्ताः सन्दर्शयित्वाग्रे स्वकार्य्यं साधयन्ति ते ॥ २९ ॥
विश्रम्भयित्वा चात्यर्थं मायया घातयन्ति ते ॥ ३० ॥
यस्य चाप्रियमन्विच्छेत् तस्य कुर्य्यात् सदा प्रियम् ।
व्याधो मृगवधं कर्त्तुं गीतं गायति सुस्वरम् ॥ ३१ ॥
मायां विना महाद्रव्यं द्राक् न सम्पाद्यते जनैः ।
विना परस्वहरणान्न कश्चित् स्यात् महाधनः ।
मायया तु विना तद्धि न साध्यं स्वार्थेप्सितम् ॥ ३२ ॥
स्वधर्मं परमं मत्वा परस्वहरणं नृपाः ।
परस्परं महायुद्धं कृत्वा प्राणांस्त्यजन्त्यपि ॥ ३३ ॥

---

विषये निन्दितौ, किन्तु तौ अप्रत्यक्षं यथा तथा हरतः परस्वमिति भावः, धूर्त्तस्तु प्रत्यक्षमेव हरतीत्यर्थः ॥ २८ ॥

हितमिति । ते धूर्त्ता जनाः अग्रे जनं हितं अहितवत् तथा अहितं हितवत् दर्शयित्वा अन्ते अनन्तरं सदा स्वकार्य्यं साधयन्ति॥२९

विश्रम्भयित्वेति । ते धूर्त्ताः अत्यर्थं विश्रम्भयित्वा विश्वास्य पश्चात् मायया छद्मना घातयन्ति ॥ ३० ॥

यस्येति । यस्य अप्रियं अन्विच्छेत् अभिलषेत् सदा तस्य प्रियं कुर्य्यात् । व्याधः मृगवधं कर्त्तुं सुस्वरं गीतं गायति सुमधुरगीतेन मृगं आनन्दयतीत्यर्थः ॥ ३१ ॥

मायामिति । जनैः मायां कापट्यं विना द्राक् झटिति महाद्रव्यं बहुधनं न सम्पाद्यते न सञ्चीयते, परस्वहरणात् विना कश्चित् जनः महाधनः न स्यात् मायया विना यथा यत् ईप्सितं तत् न हि नैव साध्यम् ॥ ३२ ॥

स्वधर्ममिति । नृपाः परस्वहरणं परधनहरणं परमं उत्कृष्टं स्वधर्मं मत्वा परस्परं महायुद्धं कृत्वा प्राणानपि त्यजन्ति ॥ ३३ ॥

राज्ञो यदि न पापं स्याद्दस्यूनामपि नो भवेत्।
सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः॥ २४॥
बहुभिर्यः स्तुतो धर्मो निन्दितोऽधर्म एव सः।
धर्मतत्त्वं हि गहनं ज्ञातुं केनापि नोचितम्॥ २५॥
अतिदानतपःसत्ययोगो दारिद्र्यकृत् त्विह।
धर्मार्थौ यत्र न स्यातां तद्वाक् कामं निरर्थकम्॥२६॥
अर्थे वा यदि वा धर्मे समर्थो देशकालवित्।
निःसंशयो नरः पूज्यो नेष्टः संशयिता सदा॥ २७॥
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।

---

राज्ञ इति। यदि राज्ञः पापं न स्यात् तदा दस्यूनामपि पापं नो स्यात्। आश्रयस्य भेदतः भेदात् सर्वं पापं धर्मरूपं स्थितं दस्यूनां परस्वहरणं पापं परं राजनि धर्म एवेति आश्रय भेद इति भावः॥२४॥

बहुभिरिति। यः व्यापारः बहुभिः स्तुतः प्रशंसितः सः धर्म एव, यस्तु बहुभिः निन्दितः सः अधर्म एव। धर्मतत्त्वं गहनं दुर्ज्ञेयमित्यर्थः हि शब्दः अवधारणार्थः, केनापि ज्ञातुं न उचितं न शक्य मित्यर्थः॥२५॥

अतीति। इह जगति अतिदानं तपः सत्ययोगश्च दारिद्र्यकृत् अतिदानेन दारिद्र्यं प्रसिद्धं तपसा धर्मानुष्ठानरूपेण अर्थव्ययात् धनागमस्य मायासाध्यत्वात् सत्ययोगे तदभावाच्च दारिद्र्यमित्यनुसन्धेयम्। अत्र यस्यां वाचि धर्मार्थौ धर्मः अर्थश्च न स्यातां तद्वाक् सा वाणी कामं सम्यक् निरर्थिका निष्फला॥ २६॥

अर्थे इति। अर्थे वा धर्मे वा समर्थः धर्मानुसारेण अर्थागम-कौशलश्च इत्यर्थः देशकालवित् स्थानसमयानुसारेण कार्यज्ञ इत्यर्थः निःसंशयः संशयरहितश्च नरः पूज्यः, सदा संशयिता संशयवान् नरः न इष्टः न सम्मतः॥ २७॥

अर्थस्येति। पुरुषः अर्थस्य दासः, अर्थस्तु न कस्यचित् दासः,

ब्राह्मणाग्निजलैः सर्वैर्धनवान् भक्ष्यते सदा।
स सुखी मोदते नित्यमन्यथा दुःखमश्नुते ॥ ४३ ॥
दर्पस्तु परह्रासेच्छा मानोऽहं सर्वतोऽधिकः।
कार्पण्यन्तु व्यये दैन्यं भयं स्वोच्छेदशङ्कनम्।
मानसस्यानवस्थानमुद्वेगः परिकीर्त्तितः ॥ ४४ ॥
लघोरप्यपमानस्तु महावैराय जायते।
दानमानसत्यशौर्य्यमार्दवं सुसुहृत्करम् ॥ ४५ ॥
सर्वानापदि सहसि समाहूय बुधान् गुरून्।
भ्रातॄन् बन्धूंश्च भृत्यांश्च ज्ञातीन् सभ्यान् पृथक् पृथक्।

---

त्यक्त्वा स्वार्थसिद्धये स्वकार्य्यसिद्धये विशेषक्षतिनः विशिष्टया भृत्या तथा प्रेम्णा मानेन अधिकारतः अधिकारप्रदानेन नित्यं सततं भृत्यं कुर्वीत नियुञ्ज्यात् अन्यथा स्वार्थसिद्धये इत्यर्थः च ॥ ४२ ॥

ब्राह्मणेति। धनवान् जनः सर्वैः ब्राह्मणाग्निजलैः सदा भक्ष्यते, ब्राह्मणेभ्यः दानात् अग्निसाध्य यज्ञानुष्ठानात् पथिकानां श्रान्तिनिवारणार्थं पानीयप्रपाविधानात् धनक्षयादिति भावः। सः ब्राह्मणाग्निजलसात् कृत धन इत्यर्थः सुखी सन् नित्यं मोदते आनन्दमनुभवति, अन्यथा दुःखं अश्नुते लभते ॥ ४३ ॥

दर्प इति। परस्य ह्रासेच्छा खर्व्वीकरणाशयः दर्पः, अहं सर्वतः सर्वेभ्यः अधिकः इत्येवं बुद्धिः मानः, व्यये दैन्यं कातर्य्यं कार्पण्यं स्वस्य आत्मनः उच्छेदशङ्कनं उच्छेदाशङ्का भयम्। तथा मानस्य चित्तस्य अनवस्थानं अस्थिरता चाञ्चल्यमित्यर्थः उद्वेगः परिकीर्त्तितः ॥ ४४ ॥

लघोरिति लघोः। क्षुद्रस्यापि जनस्य अपमानः मानहानिः महावैराय जायते प्रभवति। दानं मानः सत्यं शौर्य्यं मार्द्दवञ्च सुसुहृत्करं लोकानां मित्रतासाधकं भवति ॥ ४५ ॥

सर्वानिति। नृपः विनतः विनीतः सन् आपदि सहसि सभायां

यथार्हं पूज्य विनतः स्वाभीष्टं याचयेन्नृपः ॥ ४६ ॥
आपदं प्रतरिष्यामो यूयं युक्त्या वदिष्यथ ।
भवन्तो मम मित्राणि भवत्सु नास्ति भृत्यता ॥ ४७ ॥
न भवत्सदृशास्त्वन्ये सहाया: सन्ति मे ह्यतः ।
तृतीयांशं भृतेर्ग्राह्यमर्द्धं वा भोजनार्थकम् ।
दास्याम्यापत् समुत्तीर्णः शेषं प्रत्युपकारवित् ॥ ४८ ॥
भृतिं विना स्वामिकार्य्यं भृत्यः कुर्य्यात् समाष्टकम् ।
षोड़शाब्दधनी यः स्यादितरोऽर्थानुरूपतः ॥ ४९ ॥

---

सर्वान् बुधान् पण्डितान् गुरून् भ्रातॄन् बन्धून् भृत्यान् ज्ञातीन् तथा सभ्यान् सभानियुक्तान् पुरुषान् समाहूय पृथक् पृथक् यथार्हं पूज्य पूजयित्वा पूज्येति यप् प्रत्यय आर्षः । स्वस्य अभीष्टं याचयेत् प्रार्थयेत ॥ ४६ ॥

याच्ञाप्रकारमाह । आपदमिति आपदं प्रतरिष्यामः यथेति शेषः यूयं तथा युक्त्या वदिष्यथ उपदेक्ष्यथ, भवन्तः मम मित्राणि सुहृदः भवत्सु भृत्यता किङ्करता नास्ति ॥ ४७ ॥

नेति । भवतां सदृशाः अन्ये मम सहाया न सन्ति हि नैव विद्यन्ते इत्यर्थः । अतः इदानीं भृतेः वृत्तिरूपस्य वेतनस्य तृतीयांशं वा अर्द्धं भोजनार्थकं अन्नार्थं ग्राह्यं भवद्भिरितिशेषः आपत्सु वस्तु-व्ययबाहुल्यात् सम्प्रदाने असामर्थ्यादितिभावः । अतः आपदः समुत्तीर्णः अतएव प्रत्युपकारवित् कृतज्ञः सन्नित्यर्थः, शेषं अवशिष्टं दास्यामि ॥ ४८ ॥

भृतिमिति । यः भृत्यः षोड़शाब्दधनी षोड़शवर्षव्ययोपयोगि धनसम्पन्नः स्यात् सः भृतिं विना समाष्टकं अष्टौ वत्सरान् स्वामिकार्य्यं कुर्य्यात् । इतरः तद्भिन्नस्तु अर्थानुरूपतः यावदर्थमित्यर्थः; स्वामिकार्य्यं कुर्य्यादिति शेषः ॥ ४९ ॥

निर्धनैरन्नवस्त्रन्तु नृपाद्ग्राह्यं न चान्यथा ।
यतो भुक्तं सुखं सम्यक् तद्दुःखैर्दुःखितो न चेत् ।
विनिन्दति कृतघ्नन्तु स्वामी भृत्योऽन्य एव वा ॥ ५० ॥
सकृत् सुभुक्तं यस्यापि तदर्थं जीवितं त्यजेत् ।
भृत्यः स एव सुश्लोको नापत्तौ स्वामिनं त्यजेत् ।
स्वामी स एव विज्ञेयो भृत्यार्थं जीवितं त्यजेत् ॥ ५१ ॥
न रामसदृशो राजा पृथिव्यां नीतिमानभूत् ।
सुभृत्यता तु यन्नीत्या वानरैरपि स्वीकृता ॥ ५२ ॥
अपि राष्ट्रविनाशाय चौराणामेकचित्तता ।
शक्ता भवेन्न किं शत्रुनाशाय नृपभृत्ययोः ॥ ५३ ॥

---

निर्धनैरिति । निर्धनैः दरिद्रैः भृत्यैः नृपात् तथा विपन्नादितिभावः अन्नवस्त्रं ग्राह्यं अन्यथा सधनत्वे न, यतः नृपात् सम्यक् सुखं भुक्तं चेत् यदि तस्य दुःखैः दुरवस्थाभिः दुःखितः न भवेत् तदा स्वामी वा अन्यः कृतज्ञः भृत्यः कृतघ्नम् अकृतज्ञं तादृशं भृत्यं विनिन्दति ॥५०॥

सकृदिति । यस्य अन्नं सकृत् एकवारमपि सुभुक्तं भृत्यः तदर्थं जीवितं त्यजेत् स एव भृत्यः सुश्लोकः पुण्यकीर्त्तिः यः आपत्तौ आपदि स्वामिनं न त्यजेत् । तथा स एव स्वामी विज्ञेयः यः भृत्यार्थं भृत्यनिमित्तं जीवितं त्यजेत् । स्वामिभृत्याभ्यां परस्परानुरक्ताभ्यां भवितव्यमितिभावः ॥ ५१ ॥

नेति । पृथिव्यां रामेण सदृशः नीतिमान् राजा न अभूत् । यस्य नीत्या सुनयेन वानरैरपि सुभृत्यता स्वीकृता ॥ ५२ ॥

अपीति । चौराणां तस्कराणामपि एकचित्तता ऐकमत्यं राष्ट्रस्य विनाशाय उच्छेदाय शक्ता समर्था भवेत् शत्रुनाशाय नृपभृत्ययोः सा किं न भवेत् ? अपितु भवेदेवेत्यर्थः ॥ ५३ ॥

न कूटनीतिरभवच्छ्रीकृष्णसदृशो नृपः ।
अर्जुनाद्ग्राहिता स्वस्य सुभद्रा भगिनी छलात् ॥५४॥
नीतिमतान्तु सा युक्तिर्या हि स्वश्रेयसेऽखिला ॥ ५५ ॥
आदौ तद्धितकृत्स्नेहं कार्य्यं स्नेहमनन्तरम् ।
कृत्वा सधर्म्मवादञ्च मध्यस्थः साधयेद्धितम् ॥ ५६ ॥
परस्परं भवेत् प्रीतिस्तथा तद्गुणवर्णनम् ।
दृष्टान्नधनवसनैर्लोभनं कार्य्यसिद्धिदम् ॥ ५७ ॥
छिद्रावलम्बनं मिथ्यासल्लापं धैर्य्यवर्द्धनम् ।
इमे उपाया मध्यस्थकुट्टिनीकारिणां मताः ॥ ५८ ॥
नात्मसङ्गोपने युक्तिं चिन्तयेत् स पशोर्जडः ।

---

नेति । कश्चिदपि नृपः श्रीकृष्णेन सदृशः कूटनीतिः कपटनीतिमान् न अभवत् । येन स्वस्य भगिनी सुभद्रा छलात् अर्जुनं ग्राहिता प्रापिता ॥ ५४ ॥

नीतिमतामिति । नीतिमतां नीतिज्ञानां सा युक्तिः हि सैव युक्तिरित्यर्थः, या अखिला समग्रा स्वस्य आत्मनः श्रेयसे भवतीति शेषः ॥५५॥

आदाविति । मध्यस्थः उदासीनः जनः आदौ प्रथमतः तस्य आत्मनः हितकृति हितकारिणि मित्रे इत्यर्थः स्नेहं अनन्तरं कार्य्यं कर्त्तव्यं धर्म्मवादसहितं धर्म्मवचनसमन्वितं स्नेहञ्च कृत्वा हितं साधयेत् ॥ ५६ ॥

परस्परमिति । परस्परं यथा प्रीतिः भवेत् तथा तस्य प्रणयस्य गुणवर्णनं दृष्टेन अभिलषितेन अन्नेन धनेन वसनेन च लोभनं लोभप्रदर्शनं कार्य्यमिति शेषः । तदेव कार्य्यसिद्धिदं कार्य्यसाधकं भवतीत्यर्थः ॥५७॥

छिद्रेति । मध्यस्थानां कुट्टिनी प्रभृतीनां कारिणां कार्य्यसाधकानामित्यर्थः छिद्रस्य रन्ध्रस्य अवलम्बनं मिथ्यासल्लापः असत्यमिष्टालापः धैर्य्यवर्द्धनं सन्तोषहिंकरणञ्च इमे उपायाः मताः इष्टाः ॥५८॥

नेति । आत्मनः सङ्गोपने युक्तिं न चिन्तयेत् यः आत्मगोपनार्थं

जारसङ्गोपने छद्म संश्रयन्ति स्त्रियोऽपि च ॥ ५९ ॥
युक्तिश्छलात्मिका प्रायस्तथान्या योजनात्मिका ।
यश्छद्मचारी भवति तेन छद्म समाचरेत् ॥ ६० ॥
अन्यथा शीलनाशाय महतामपि जायते ।
अस्ति बुद्धिमतां श्रेणिर्न त्वेको बुद्धिमानतः ॥ ६१ ॥
देशे काले च पुरुषे नीतिं युक्तिमनेकधा ।
कल्पयन्ति च तद्विद्या दृष्ट्वा दृष्टान्तु प्राक्तनाम् ॥ ६२ ॥
मन्त्रौषधिपृथग्वेशकालवागर्थसंश्रयात् ।
छद्म सञ्जनयन्तीह तद्विद्याकुशला जनाः ॥ ६३ ॥

---

त्यर्थः पशोः पशुमपेक्ष्य जडः पश्वपेक्षयापि अज्ञ इत्यर्थः । स्त्रियः अपि (अत्रापि शब्द एवार्थः) स्त्रिय एव इत्यर्थः जारस्य उपपतेः सङ्गोपने छद्म छलं संश्रयन्ति ॥ ५९ ॥

युक्तिरिति । युक्तिः द्विधा प्रायः बाहुल्येन छलात्मिका कपटरूपा, अन्या अपरा योजनात्मिका घटनरूपा इत्यर्थः । तेन हेतुना यः छद्मचारी कपटाचारः भवति सः छद्म कपटं समाचरेत् ॥ ६० ॥

अन्यथेति । देशे इति । अन्यथा उक्तवैपरीत्ये छद्म समाचरणं महतामपि शीलनाशाय चरित्रविनाशाय जायते । किन्तु बुद्धिमतां श्रेणिः समूहः अस्ति न तु एक एव बुद्धिमान् अस्तीत्यर्थः, अतः अस्मात् कारणात् तद्विद्याः तदभिज्ञा जनाः प्राक्तनां पूर्वजन्मार्जितां युक्तिं दृष्टां व्यक्तीकृतां अफलामित्यर्थः दृष्ट्वा देशे काले पुरुषे पात्रे इत्यर्थः च अनेकधा बहुविधां नीतिं युक्तिञ्च कल्पयन्ति ॥ ६१ ॥ ६२ ॥

मन्त्रेति । इह जगति तद्विद्याकुशलाः तासु विद्यासु मायासु कुशला जनाः मन्त्राणां ओषधीनां पृथक् विभिन्नानां वेशानां परिच्छदानां कालानां वाचां अर्थानाञ्च संश्रयात् छद्म छलं संजनयन्ति उत्पादयन्ति ॥ ६३ ॥

लोकेऽधिकारिप्रत्यक्षं विक्रीतं दत्तमेव वा ।
वस्त्रभाण्डादिकं क्रीतं स्वचिह्नै रङ्कयेच्चिरम् ॥ ६४ ॥
स्तेनकूटनिवृत्त्यर्थं राजज्ञातं समाचरेत् ।
जडान्धबालद्रव्याणां दद्याद्वृद्धिं नृपः सदा ॥ ६५ ॥
स्वीया तथा च सामान्या परकीया तु स्त्री यथा ।
त्रिविधो भृतकस्तद्वदुत्तमो मध्यमोऽधमः ॥ ६६ ॥
स्वामिन्येवानुरक्तो यो भृतकस्तूत्तमः स्मृतः ।
सेवते पुष्टभृतिदं प्रकरं स च मध्यमः ।
पुष्टोऽपि स्वामिना व्यक्तं भजतेऽन्यं स चाधमः ॥ ६७ ॥

---

लोके इति । लोके जगति विक्रीतं दत्तं वा क्रीतं वस्त्रभाण्डादिकं वसनं पात्रादिवस्तु च अधिकारिणां विक्रेतृणां दातृणां क्रेतृणाञ्च प्रत्यक्षं स्वचिह्नैः आत्मचिह्नैः चिरं स्थायिरूपं तथा तथा अङ्कयेत् अङ्कितं कुर्य्यात् भाविविसंवादनिराकरणार्थमिति भावः ॥ ६४ ॥

स्तेनेति । स्तेनानां चौराणां कूटस्य कपटस्य निवृत्त्यर्थं निवारणाय सर्वं क्रीतादिकं राजज्ञातं समाचरेत् राज्ञः ज्ञातसारेण क्रीतादिकं कुर्य्यादित्यर्थः । नृपः जडानां अन्धानां बालानां शिशूनाञ्च यानि द्रव्याणि धनानि राजनि न्यस्तानीति भावः तेषां सदा वृद्धिं दद्यात् ॥ ६५

स्वीयेति । यथा स्त्री स्वीया, सामान्या साधारणी, परकीया चेति त्रिविधा, तथा भृतकः उत्तमः, मध्यमः अधमश्चेति त्रिविधः ॥ ६६ ॥

स्वामिनीति । यः भृतकः स्वामिनि एव अनुरक्तः सः उत्तमः स्मृतः । यः पुष्टभृतिदं यथोपयुक्तवेतनदायिनं प्रकरं अधिकारिणं स्वामिनमित्यर्थः सेवते यथोपयुक्तवेतनलोभेन न त्वनुरागेणेति भावः सः मध्यमः । यश्च स्वामिना पुष्टोऽपि सम्यक् पालितोऽपि अव्यक्तं गूढं अन्यं भजते स अधमः ॥ ६७ ॥

उपकरोत्यपकृतो यस्तूत्तमोऽप्यन्यथाधमः।
मध्यमः साम्यमन्विच्छेदपरः स्वार्थतत्परः॥ ६८॥
नोपदेशं विना सम्यक् प्रमाणैर्ज्ञायतेऽखिलम्।
बाल्यं वाप्यथ तारुण्यं प्रारब्धितसमाप्तिदम्॥ ६९॥
प्रायो बुद्धिमतो ज्ञेयं न वार्द्धक्यं कदाचन।
आरम्भं तस्य कुर्य्याद्धि यत् समाप्तिं सुखं व्रजेत्॥ ७०॥
नारम्भो बहुकार्य्याणामेकदैव सुखावहः।
नारब्धितसमाप्तिन्तु विना चान्यं समाचरेत्॥ ७१॥
सम्पाद्यते न पूर्वं हि नापरं लभ्यते यतः।
कृती तत् कुरुते नित्यं यत् समाप्तिं व्रजेत् सुखम्॥ ७२॥

---

उपकरोतीति। यः अपकृतोऽपि उपकरोति स हि स एव उत्तमः। अन्यथा अधमः। मध्यमः कृतकः साम्यं अन्विच्छेत् आप्तुमभिलषेत् अपरः अधमः स्वार्थेषु स्वकार्य्येषु तत्परः॥ ६८॥

नेति। प्राय इति। उपदेशं विना प्रमाणैः अखिलं समस्तं सम्यक् न ज्ञायते। बुद्धिमतः विदुषः बाल्यं वा तारुण्यं यौवनं प्रारब्धित-समाप्तिदं ज्ञेयं बाल्ये यौवने वा यत् प्रारभ्यते तत् समाप्यते इत्यर्थः, कदाचन वार्द्धक्यं न प्रारब्धित समाप्तिदं वार्द्धक्ये यत् प्रारभ्यते तत् न समाप्यते इत्यर्थः। तस्मात् तस्य कार्य्यस्य आरम्भं कुर्य्यात् यत् सुखं अक्लेशं यथा तथा समाप्तिं व्रजेत् गच्छेत् समाप्तं भवतीत्यर्थः॥ ६९॥ ७०॥

नेति। एकदैव युगपदेव बहूनां कार्य्याणां आरम्भः न सुखावहः, तस्मात् आरब्धितस्य आरब्धस्य कार्य्यस्य समाप्तिं विना अन्यत् कार्य्यं न समाचरेत् आश्रयेत्॥ ७१॥

सम्पाद्यते इति। यतः युगपद्बहुकार्य्यारम्भात् पूर्वं प्रथममारब्ध-मित्यर्थः हि अपि अत्र हि शब्दोऽप्यर्थः। न सम्पाद्यते न निष्पाद्यते

यदि सिध्यति येनार्थः कलहेन वरन्तु सः।
अन्यथायुर्धनसुहृद्यशोधर्महरः सदा ॥ ७३ ॥
ईर्षा लोभो मदः प्रीतिः क्रोधो भीतिश्च साहसम्।
प्रवृत्तिच्छिद्रहेतूनि कार्य्ये सप्त बुधा जगुः ॥ ७४ ॥
यथाच्छिद्रं भवेत् कार्य्यं तथैव हि समाचरेत्।
अविसंवादि विद्वद्भिः कालेऽतीतेऽपि चापदि ॥ ७५ ॥
दशग्रामी शतानीकः परिचारकसंयुतौ।
अश्वस्थौ विचरेयातां ग्रामपा अपि चाश्वगाः ॥ ७६ ॥
साहस्रिकः शतग्रामी एकाश्वरथवाहनौ।

---

अपरं द्वितीयञ्च न लभ्यते न समाप्यते तत् तस्मात् अतो कार्य्यकुशलः जनः सततं तत् कुर्य्यात् यत् सुखं यथा तथा समाप्तिं व्रजेत् ॥ ७२ ॥

यदीति। येन कलहेन यदि अर्थः सिध्यति, सः कलहः वरः श्रेष्ठः, अन्यथा अर्थासिद्धौ इत्यर्थः आयुषः धनस्य सुहृदः धर्मस्य च हरः नाशकः भवति ॥ ७२ ॥

ईर्ष्येति। ईर्षा विद्वेषः लोभः लालसा, मदः गर्वः, प्रीतिः प्रणयः, क्रोधः कोपः, भीतिर्भयं, साहसं निर्भीकता च एतानि सप्त कार्य्ये प्रवृत्तेः छिद्रस्य दोषस्य च हेतूनि सर्व्वशास्त्रदर्शिनः बुधाः पण्डिताः जगुः गायन्तिस्म ॥ ७४ ॥

यथेति। यथा कार्य्यं अच्छिद्रं छिद्ररहितं निर्दोषमित्यर्थः भवेत् विद्वद्भिः अविसंवादि विसंवादरहितं अविरुद्ध मित्यर्थः तथैव कार्य्यं कालेऽतीतेऽपि आपदि अपि समाचरेत् कुर्य्यात् ॥ ७५ ॥

दशेति। दशग्रामी दशग्रामाधिपः शतानीकः शतसैन्याधिपश्च परिचारकैः भृत्यैः संयुतौ परिवृतौ तथा अश्वस्थौ अश्वारूढ़ौ सन्तौ विचरेयाताम्। ग्रामपा एकग्रामाधिपतयः अपि अश्वगा अश्वारूढ़ाः विचरेयुरित्यर्थः ॥ ७६ ॥

साहस्रिक इति। सहस्रसैन्याधिपतिः शतग्रामी शतग्रामाधिपतिश्च

दशभस्त्रास्त्रिभिर्युक्तौ गच्छेतां वाश्वसङ्गतौ ॥ ७७ ॥
सहस्रग्रामपो नित्यं नराश्वद्व्यश्वयानगः।
आयुतिको विंशतिभिः सेवकैर्हस्तिना व्रजेत् ॥ ७८ ॥
अयुतग्रामपः सर्वयानैश्च चतुरश्वगः।
पञ्चायुती सेनपोऽपि सञ्चरेद् बहुसेवकः ॥ ७९ ॥
यथाधिकाधिपत्यन्तु कीर्त्याधिक्यं प्रकल्पयेत्।
कल्पयेच्च यथाधिक्यं धनिकेषु गुणिष्वपि ॥ ८० ॥
श्रेष्ठो न मानहीनः स्यान्न्यूनो मानाधिकोऽपि न।
राष्ट्रे नित्यं प्रकुर्वीत श्रेयोऽर्थी नृपतिस्तथा ॥ ८१ ॥

---

दशयस्त्रास्त्रिभिः दशभिः शस्त्रिभिः अस्त्रिभिश्च युक्तौ एकाश्वरथवाहनौ एकाश्वयुतरथारूढौ वा अश्वसङ्गतौ अश्वारूढौ गच्छेत ॥ ७७ ॥

सहस्रेति। सहस्रग्रामपः सहस्रग्रामाधिपतिः आयुतिकः दशसहस्रसैन्याध्यक्षश्च विंशतिभिः सेवकैः युतः तथा नराश्वद्व्यश्वयानगः नरयानं शिविका तद्गामी अश्वगामी वा द्व्यश्वयानगः अश्वद्वययुतरथगामी वा हस्तिना गजारूढः सन्नित्यर्थः व्रजेत् गच्छेत् ॥ ७८ ॥

अयुतेति। अयुतग्रामपः दश सहस्रग्रामाधिपः पञ्चायुतसेनपः अपि बहु सेवकः बहुभृत्यपरिवृतः चतुरश्वगः अश्वचतुष्टययुतरथारूढः सन् सञ्चरेत् ॥ ७९ ॥

यथेति। यथाधिकाधिपत्यं कीर्त्या आधिक्यं सम्मानाधिक्यं प्रकल्पयेत्। तथा धनिकेषु धनवत्सु गुणिष्वपि यथाधिक्यं आधिक्यानुसारेण कल्पयेत् सम्मान मिति भावः ॥ ८० ॥

श्रेष्ठ इति। यथा श्रेष्ठः मानहीनः न स्यात्, न्यूनः निकृष्टश्च मानाधिकः अधिकमानयुतः न स्यात् श्रेयोऽर्थी मङ्गलार्थी नृपतिः राष्ट्रे राज्ये तथा नित्यं प्रकुर्वीत ॥ ८१ ॥

हीनमध्योत्तमानान्तु ग्रामे भूमिं प्रकल्पयेत् ।
कुटुम्बिनां गृहार्थन्तु पत्तनेऽपि नृपः सदा ॥ ८२ ॥
द्वात्रिंशत् प्रमितैर्हस्तैर्दीर्घावार्द्धैर्विस्तृताधमे ।
उत्तमा द्विगुणा मध्या सार्द्धमाना यथार्हतः ।
कुटुम्बसंस्थितिसमा न न्यूना वाधिकापि न ॥ ८३ ॥
ग्रामाद्बहिर्वसेयुस्ते ये ये त्वधिकृता नृपैः ।
नृपकार्य्यं विना कश्चिन्न ग्रामं सैनिको विशेत् ॥ ८४ ॥
तथा न पीड़येत् कुत्र कदापि ग्रामवासिनः ।
सैनिकैर्न व्यवहरेन्नित्यं ग्राम्यजनोऽपि च ॥ ८५ ॥

---

हीनेति । नृपः ग्रामे हीनानां मध्यानां उत्तमानाञ्च तथा कुटुम्बिनां स्वजनानां गृहार्थं पत्तनेऽपि नगरेऽपि भूमिं वासस्थानं प्रकल्पयेत् ॥ ८२ ॥

वासभूमेर्मानमाह द्वात्रिंशदिति । अधमा वासभूमिः द्वात्रिंशत्-प्रमितैः हस्तैः दीर्घा, विस्तृतैः अर्द्धैः तदर्द्धैः षोड़शहस्तपरिमिता इत्यर्थः । उत्तमा वासभूमिः यथार्हतः यथायोग्यं द्विगुणा अधमद्विगुणा चतुःषष्टि-हस्तदीर्घा द्वात्रिंशद्धस्तविस्तृता इत्यर्थः । मध्या वासभूमिः सार्द्धमाना अर्द्धसहिताधमा इत्यर्थः अष्टचत्वारिंशद्धस्तदीर्घा चतुर्विंशति हस्त-विस्तृतेति यावत् कुटुम्बानां संस्थितौ यथा सर्वेषां कुटुम्बानां समाना वासभूमिः कार्य्या, न्यूना न, अधिकापि च न ॥ ८३ ॥

ग्रामादिति । ये ये नृपैः अधिकृताः कार्य्ये नियुक्ताः ते ग्रामात् बहिः वसेयुः । कश्चित् सैनिकः नृपकार्य्यं विना ग्रामं न विशेत् ॥ ८४ ॥

तथेति । तथा सैनिकः कुत्र कस्मिन्नपि स्थाने कदापि ग्रामवासिनः जनान् न पीड़येत्, ग्राम्यजनोऽपि नित्यं सततं सैनिकैः न व्य-हरेत् ॥ ८५ ॥

श्रावयेत् सैनिकान् नित्यं धर्मं शौर्य्यविवर्द्धनम् ।
सुवाद्यनृत्यगीतानि शौर्य्यवृद्धिकराण्यपि ॥ ८६ ॥
युद्धक्रियां विना सैन्यं योजयेन्नान्यकर्मणि ॥ ८७ ॥
सत्याचारास्तु धनिका व्यवहारे हता यदि ।
राजा समुद्धरेत्तांस्तु तथान्यांश्च कृषीवलान् ॥ ८८ ॥
ये सैन्यधनिकास्तेभ्यो यथार्हां भृतिमावहेत् ।
पारदेश्यञ्च त्रिंशांशमधिकं तद्धनव्ययात् ॥ ८९ ॥
धनं संरक्षयेत्तेषां यत्नतः स्वात्मकोषवत् ।
संहरेद्धनिकात् सर्वं मिथ्याचाराद्धनं नृपः ॥ ९० ॥

---

श्रावयेदिति । नित्यं सततं सैनिकान् शौर्य्यविवर्द्धनं शौर्य्यवृद्धिकरं धर्मं युद्धधर्मं तथा शौर्य्यवृद्धिकराणि सुवाद्यानि नृत्यानि गीतानि च श्रावयेत् ॥ ८६ ॥

युद्धक्रियामिति । सैन्यं युद्धक्रियां सांग्रामिकव्यापारं विना अन्यकर्मणि न योजयेत् न नियुक्तं कुर्य्यात् ॥ ८७ ॥

सत्याचारा इति । सत्याचाराः सत्यपथावलम्बिनः धनिकाः यदि व्यवहारे वाणिज्यादौ हताः विनष्टाः क्षतिग्रस्ता इत्यर्थः भवेयुः तदा राजा तान् तथा अन्यान् तथाविधान् कृषीवलान् कृषिजीविनश्च समुद्धरेत् ॥ ८८ ॥

ये इति । ये जनाः सैन्येषु मध्ये धनिकाः, तेभ्यः यथार्हां यथायोग्यां भृतिं तथा तद्धनव्ययात् अधिकं पारदेश्यं परदेशगमनार्थं त्रिंशांशञ्च आवहेत् दद्यात् ॥ ८९ ॥

धनमिति । स्वात्मकोषवत् निजधनमिव तेषां धनिकसैन्यानां धनं यत्नतः यत्नेन संरक्षेत्। किन्तु नृपः मिथ्याचारात् मायाव्यवहारिणः धनिकात् सर्वं धनं संहरेत् ॥ ९० ॥

यदा चतुर्गुणा वृद्धिर्गृहीता धनिकेन च ।
अधमर्णान्न दातव्यं धनिने तु धनं तदा ॥ ९१ ॥

इति शुक्रनीतौ खिलनीतिनिरूपणं नाम
पञ्चमोऽध्यायः ।

---

शुक्रनीतिः समाप्ता ।

---

यदेति । यदा धनिकेन उत्तमर्णेन अधमर्णात् चतुर्गुणा वृद्धिः गृहीता, तदा धनिने तस्मै उत्तमर्णाय धनं मूलमित्यर्थः न दातव्यं अधमर्णेनेति शेषः ॥ ९१ ॥

इति शुक्रनीतौ खिलनीतिनिरूपणं नाम पञ्चमोऽध्यायः ।

समाप्तश्च ग्रन्थः ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता शुक्रनीति-
व्याख्या समाप्ता ।

तैत्तिरीय ... ऐतरेय श्वेताश्वतर
निषदः ...) सभाष्य सटीक २
... बृहदारण्यक सटीक सभाष्य १०
... सुश्रुत वैद्यक ४
... शार्ङ्गधर (वैद्यक) १
...२ वेतालपञ्चविंशति ।।।०
...३ पातञ्जलदर्शन (सभाष्यसटीक) ४
...४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
...५ मुक्तिकोपनिषत् ।
...६ उपमान चिन्तामणि ।०
...७ नागानन्द नाटक १
...८ पूर्णप्रज्ञ दर्शनम् सभाष्य २
...९ चन्द्रशेखरचम्पूकाव्य २
७० सामवेदस्य मन्त्र ब्राह्मणम्
(भाष्य सहितम्) २
७१ सामवेदस्य आरण्यसंहिता
सायणाचार्य कृत भाष्यसहिता १
...२ विद्धशालभञ्जिकानाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कारसटीक २
७५ प्रियदर्शिका नाटिका सटीक ॥
७६ सारस्वत व्याकरण सटीक
पूर्वार्द्धम् १।
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत) पुष्पबाण-
विलास काव्य सटीक ॥
७९ महिम्न शतकम्, पदारविन्द
शतकम्, स्तुतिशतकम्, मन्द-
स्मितशतकम्, कटाक्षशतकम् १
८० मनुसंहिता टीका सहित ५
८१ नैषधचरितम् टीका सहित १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक (मुरारिकृत) २
८७ दैवतब्राह्मणसभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसा परिभाषा ॥०
९० अर्थसंग्रह (लौगाक्षीमीमांसा) ॥
९१ रघुवंश सटीक १॥०
९२ मेघदूत सटीक ।॥०
९३ ईश्वरनिरूपणम् १
९४ ईश्वरानुमानचिन्तामणि
(शङ्करोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २॥०
९६ सटीक वाल्मीकिरामायण
बालकाण्डस्य प्रथमावधि
सप्तषष्टि सर्गपर्य्यन्तम् १
९७ सटीक वाल्मीकिरामायण
बालकाण्डस्य अष्टषष्टि सर्गावधि
सप्तसप्तति सर्ग पर्य्यन्तम् २
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः/
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः।
१०१ साहित्यदर्पणम् (अलङ्कार) १॥०
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ॥०
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत
शारीरकभाष्य तथा गोविन्दा-

नन्द कृत टीका सहित १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसार सटीक १

१०७ सटीक निदान (वैद्यक) ४

१०८ कामन्दकी नीतिसार १

१०९ मल्लिकामारुतप्रकरण सटीक २

११० अत्रि विष्णु, हारीत, याज्ञ-
वल्क्य उशना अङ्गिरा यम आप-
स्तम्ब संवर्त्त कात्यायन बृहस्पति
पराशर व्यास शङ्ख लिखित दक्ष-
गौतम शातातप व... प्रणीत
संहिता (धर्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता (वैद्यक) सम्पूर्ण १०

११३ रसेन्द्रचिन्तामणि तथा रस-
रत्नाकर (वैद्यक) ६

११४ भगवद्गीता शाङ्करभाष्य आनन्द
गिरिकृतटीकातथासुबोधिनीसमेत ५

११५ शब्दशक्ति प्रकाशिका १

११६ मालतीमाधव सटीक १॥

११७ सटीक भट्टिकाव्य ४

११८ सटीक काव्यप्रकाश ४

११९ सभाष्यशाण्डिल्यसूत्र ॥

१२० लघुकौमुदीव्याकरणम् ॥०

१२१ महानाटकम् (हनुमन्नाटक) १

१२२ दशरूपकम् (अलङ्कार)

१२३ भोजचम्पू (भोजकृत
चम्पूरामायणम्)

१२४ भारत चम्पू सटीक

१२५ मार्कण्डेयपुराणम्

१२६ गोलाध्यायः

१२७ गणिताध्याय

१२८ पञ्चदशी (सटीक)

१२९ पातञ्जलदर्शनस्य भोजवृत्तिः

१३० शकुन्तलानाटक टीकासहि...

१३१ शब्दरूपदर्श

१३२ बृहत्संहिता
वा वाराहीसंहिता ४

१३३ तर्कामृत (जगदीशकृत)

१३४ द्वात्रिंशत्पुत्तलिका

१३५ उत्तररामचरित सटीक १

१३६ शङ्करविजय १

१३७ मृच्छकटिकप्रकरण सटीक

१३८ काव्यादर्शसटीक (अलङ्कार)

१३९ अष्टाङ्गहृदय संहिता (वाग-
भट्टकृतवैद्यक)

१४० शुक्रनीति सटीक २

१४१ गीतगोविन्द सटीक ॥

१४२ अग्निपुराणम् ७

१४३ विष्णुपुराणम् ५

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि।

